आनिषिद्ध्यतइतिप्रसिद्धतीर्थवैषम्यं तथाविपर्ययशून्यत्वंचध्वन्यतइतिध्वनिश्लेषयोरंगांगिभावेनसंकरः । भंगशब्देनतरंगाभि
धानांत्तद्राहित्योक्त्याप्रसिद्धतीर्थवैषम्यं तथापराभवशून्यत्वंचध्वन्यते । अजडमित्यनेन जलात्मतापर्युदस्यतइतितद्वैषम्यं ।
तथालंडयोरभेदात्पूर्णज्ञानात्मताचध्वन्यते । विमलमित्यनेनवर्षानिमित्तकालुष्यराहित्यमुच्यते तथासत्वरजस्तमोलक्षणगुण
त्रयरूपमलराहित्यंचध्वन्यते । तापत्रयापहमित्येकतापनिवारकजलाशयाद्वैषम्यं । अद्य "प्थवेक्लेशतमसो" रित्यनेनाऽपपूर्वा
द्धंतेक्लेशतमसोःकर्मणोरुपपदयोर्डप्रत्ययउक्तः । तथापि "ब्रह्मभ्रूणे" त्यादिवदुपपदनियमस्यानाश्रितत्वाड्डुप्रत्ययोपपत्तिः ।
"सूत्रारंभस्त्वनाशीरर्थ" इतिकाशिकायांवृत्तावेवोक्तं ॥ जयतीर्थवाक्स्तुतिव्याजेनजयतीर्थंस्तौति ॥ [३।३] चित्रैरिति ॥ चित्रैः
पदैः । गंभीरैःवाक्यैः । अखंडितैःमानैः । पदानांचित्रत्वंनामान्वयबोधहेतुतावच्छेदकावच्छिन्नपदार्थोपस्थितिजनकतावच्छे
दकावच्छिन्नत्वं । वाक्यानांगंभीरत्वंनाम समासादिवृत्तिमत्त्वं । प्रतिपन्नपराहतिशून्यत्वंमानानामखंडितत्वं । एतेनपदवा
क्यप्रमाणनिर्णायकव्याकरणमीमांसान्यायविद्यावैदग्ध्यमुक्तं ॥ स्वस्यसंन्यासगुरुंब्रह्मण्यतीर्थंसेवते ॥ [३।४] संस्मुत्सार्येति ॥ चश
ब्दोऽपिशब्दार्थः । सदासर्वावस्थास्वपि । तदुक्तं "अत्यशक्येतुनिद्रादौपुनरेवसमभ्यसे" दितितमस्तोमनिवृत्तिसन्मार्गप्रका
शनरूपप्रयोजननिर्वृत्त्यनंतरमपि विष्णुपदासक्तमित्युक्त्यास्वाभाविकं विष्णुपदैकसंश्रयत्वमुक्तं ॥ विद्योपदेष्टॄन्गुरून्नमति ॥
[३।५] ज्ञानेति ॥ ज्ञानेत्यादिनाविद्योपदेशहेतुत्वंव्यवस्थापितं ॥ ग्रंथाभिधानमाह ॥ [३।६] श्रीमध्वेति ॥ स्वकृतस्यनिबंधस्यावांतरप्रच्छे
जनवत्त्वमाह ॥ [४।१] विद्विषेति ॥ आर्थ्योर्थ्यात् पदेः साधूक्तार्थस्यन्यायतोऽवधारणरूपमननस्यावधार्यमाणार्थविपरीतनिरसनवत् अ

ध्यत्वात्परपक्षंप्रतिक्षेप्तुमुपक्षिपति ॥ ननु न्विति [illegible] त्रविशेषणसंगतेनैवकारेण शंखःपांडुरएवेतिवद्विशेष्यतावच्छेदकाव
च्छेदेनसर्वस्मिन्विशेषणसंबंधबोधनात् सत्याशेषविश्वस्यकारणमित्यनेनसूचितस्यस्वपक्षस्यविपरीतस्यनिर्देशःकृतः । प्रतिवाद्यवधा
नाय परोमिथ्यैवविश्वमितिस्वपक्षस्यप्रामाणिकत्वंजानीहीत्याह ॥ ४।३ तथाहीति ॥ ननुमिथ्यैवविश्वमितिपरपक्षोपक्षेपोनसंभव
ति । ब्रह्मादिष्वबाधीद्यापत्तेरित्याशंकामपनेतुंविवादांगंविप्रतिपत्तिजन्मानंसंशयंचवक्तुमाह ॥ ४।३ तत्रेति ॥ प्रवर्त्स्यत्यांमिथ्या
त्वकथायांविप्रतिपत्तिःपूर्वंमध्यस्थंपरिदर्शितास्तीतिशेषः । तथाचविप्रतिपत्तौपक्षत्वेननिर्दिष्टस्यैवविश्वशब्देनग्रहणान्नब्रह्मा
बाधादीतिभावः । विप्रतिपत्तिस्वरूपमाह ॥ ५।१ ब्रह्मप्रमेत्यादिना ॥ अत्रविश्वस्यधर्मित्वेब्रह्मणिबाधासिद्धीस्यातां अ
ब्रह्मान्यदित्युक्तं । ननुपक्षतावच्छेदकैक्येतन्नदूषणं । समानप्रकारकविरहज्ञानस्यैवप्रतिबंधकतयाब्रह्मत्वावच्छेदेनसा
हेत्वभावनिश्चयेपिविश्वत्वावच्छेदेनतदनिश्चयादितिचेत्न । एवमपितत्रतज्ज्ञानस्यभ्रमत्वेनतत्वनिर्णयाभावेनवादकथया
निर्णयसिद्धयेतदुपादानस्यसर्वसिद्धत्वात् तुच्छेबाधासिद्धीमाभूतामित्यसद्विलक्षणत्वेसतीति ॥ सि० "पक्षतावच्छेदकसा
मानाधिकरण्येनसाध्यसिद्धेरुद्देश्यत्वेपक्षैकदेशेसाध्यसिद्धावपि सिद्धसाधनमितिमते शुक्तिरूप्येसिद्धसाधनवारणायबाध्यत्वे
सतीतिविशेषणं । यदिपुनःपक्षतावच्छेदकावच्छेदेनैवसाध्यसिद्धिरुद्देश्यातदैकदेशेसाध्यसिद्धावपिसिद्धसाधनाभावात्तद्व्यर्थकं
विशेषणमनुपादेयं" । परमतेवियदादेरपिबाध्यत्वात्पक्षालाभोमाभूदितिब्रह्मप्रमाबाध्येनेत्यबाध्यत्वविशेषणं । ननुब्रह्मण्यारोपित ॥
स्यक्षणिकत्वादेरधिष्ठानब्रह्मप्रमामात्रनिवर्त्यत्वात्तत्रसिद्धसाधनं । शुक्तिज्ञानादेरपिब्रह्मज्ञानत्वात्तद्बाध्यरजतादौचसिद्धसाध

नं । शुद्धंब्रह्मवृत्तिव्याप्यमपिनेतिमतेवियदादेरपिब्रह्मप्रमान्यबाध्यत्वात्पक्षालाभश्चेत्यनुशयेनसप्रकारकेणेत्यबाध्यत्वविशेषणं । इदंचविप्रतिपत्तिस्वरूपंतार्किकादिरीत्यैवेत्यनुपदमेववक्ष्यति । तेनस्वमतेतुच्छस्यापिनिषेधप्रतियोगित्वात्तत्रबाधाभावेनतद्वारणायासद्विलक्षणत्वेसतीतिविशेषणमसंगतं शुक्तिरूप्यादेरसत्त्वेनासद्विलक्षणत्वेसतीत्यनेनैवतद्वारणात्तत्रसिद्धसाधनवारणार्थं द्वंविकल्पितंविशेषणद्वयंचव्यर्थमित्यादिदूषणमनवकाशंवेदितव्यं । सिंहमाणवकयोरिवममशरीरमितिदेहात्मनोःस्पष्टतरभेदावभासेनदेहात्मैक्यारोपासंभवइतिमताश्रयणात् नदेहात्मैक्येसिद्धसाधनं । नभोनैल्यचंद्रपरिमाणभ्रमयोःसप्रकारकबाधार्हत्वात् नतत्रापिसिद्धसाधनं । नन्वियंविप्रतिपत्तिःतार्किकादेर्मायावादिनावा तत्ववादिनोमायावादिनावा तदुभयेषांमायावादिनावा । नाद्यः । तार्किकादिमतेआपणस्थरूप्यातिरिक्तस्यशुक्तिरूप्यस्याभावेन तत्रसिद्धसाधनवारणार्थोपात्ताबाध्यत्वविशेषणानुपपत्तेः । नचापणस्थरूप्यएवतन्मतेसिद्धसाधनवारणायतद्विशेषणमितिवाच्यं । प्रतिपन्नोपाधावित्यत्रसाध्येसर्वस्मिन्नित्यस्यविशेषणस्यावश्यकतयारूप्येसिद्धसाधनानवकाशात् । अन्यथावियदादेरपिकिंचिदधिकरणेभ्रमसंभवेनभ्रमप्रतिपन्नाधिकरणनिष्ठात्यंताभावप्रतियोगित्वस्यसत्त्वपक्षेपिसंभवेनसर्वत्रैवसिद्धसाधनापातात् । तार्किकमतेशुक्तिरूप्यज्ञानस्यैवभ्रमत्वख्यापनरूपबाधविषयतयारजतस्याबाध्यतयातद्विशेषणेनतंदवारणाच्च । मायावादिमते शुक्तिरूप्येसिद्धसाधनसंभवेपिसाध्यनिर्देष्टारंस्वंप्रतिस्वस्यसिद्धसाधनोद्भावनस्यासंभवदुक्तिकत्वात् । नापिद्वितीयः । असद्विलक्षणत्वेसतीत्यनेनैवशुक्तिरूप्यव्यवच्छेदेतद्व्यावृत्त्यर्थंविशेषणांतरोपादानवैयर्थ्यात् । अ साध्यं नतृतीयः । पक्षद्वयोक्तदोषात् । एकदाऽनेकैर्विवादायोगाच्चेतिचेत् अ

त्रोच्यते तृतीयपक्षेदोषाभावात् । शुक्तिरूप्यंता[illegible]कमुत्पन्नंतत्रैवसदितिभास्करादिमतेशुक्तिरूप्येसिद्धसाधनवारणाया
त्यंतंविशेषणं । भास्करादिभिरपिप्रमाभ्रमविभागायरजतस्यघटादिवैलक्षण्यमंगीकृतमेवेति तन्मतेपितस्यंपक्षवहिर्भावस्या
वाच्यत्वात् । तार्किकादिमतेस्वमतेचतदुपरक्तेसाध्यसिद्धिःप्रयोजनमितिसर्वमतेपिसप्रयोजनंविशेषणं । विशेषणत्वेप्रयोजन
वत्त्वंतंत्रं नतुविशेषणप्रयोजनस्यसर्वसिद्धत्वमपि । सत्यत्ववाद्यनेकमतानुसारिणःकुशलस्यैकस्यमिथ्यात्ववादिनाकथासंभवादि
तिसर्वमनवद्यं ॥ प्रतिपन्नेति ॥ अत्रत्रैकालिकनिषेधेत्यनेनात्यंताभावएवविवक्षितः । तथाचान्योन्याभावमादायसिद्धसाध
नंतद्वारणायनिषेधपदस्यात्यंताभावपरत्वेचत्रैकालिकेतिव्यर्थमितिशंकानवकाशः । प्रतिपन्नेतिच घटादावत्यंताभावप्रतियोगि
त्वमितिमतेघटादावेवसिद्धसाधनवारणाय । प्रतिपन्नत्वंचप्रतीतत्वमात्रं । अतःप्रमाप्रतिपन्नत्वंभ्रमप्रतिपन्नत्वंवादायनविरोध
सिद्धसाधने । यावत्त्वंचविवक्षितमतोभ्रमप्रतिपन्नाधिकरणनिष्ठात्यंताभावप्रतियोगित्वमादायसत्त्वपक्षेनसिद्धसाधनं । ननुस्वा
धिकरणाभिमतयावन्निष्ठात्यंताभावप्रतियोगित्वमितिपर्यवसितेऽर्थेकेवलान्वय्यत्यंताभावप्रतियोगिगगनादिषुसिद्धसाधनं । य
दधिकरणेयत्सत् तत्तन्निष्ठात्यंताभावप्रतियोगीतिकृतेविरोधः । कथंचिद्विरोधपरिहारेपिसंयोगादिसंबंधेनघटाद्यधिकरणेस
मवायसंबंधेन घटाद्यत्यंताभावसत्त्वेनघटादौसिद्धसाधनं । येनसंबंधेनयद्यस्याधिकरणंतेनसंबंधेन तत्तन्निष्ठात्यंताभावप्रतियो
गीतिविवक्षायामव्याप्यवृत्तिषुसंयोगादिषुसिद्धसाधनमितिचेत् मैवं । यत्संबंधावच्छेदकविशेषाभ्यांयत्रयस्यप्रतीतिर्भवितुमर्ह
तितत्संबंधावच्छेदकविशेषाभ्यांतस्यैवतन्निष्ठात्यंताभावप्रतियोगित्वमितिविवक्षितं । आकाशादेरपिसंयोगादिसंबंधेनास्त्येववृ

त्तिरितिनोक्तदोषः । यदिपुनर्घटादेर्नात्यंताभावप्रतियोगित्वंनवास्वात्यंताभावसामानाधिकरण्यं । लाघवेनघटात्यंताभावत्वे
नैवघटसामानाधिकरण्यविरोधित्वंकल्पनात् । संवंधविशेषप्रवेशेचगौरवात् । घटसंबंधाभावमात्रविषयतयाचाभावप्रतीत्युप
पत्तेः । आधाराधेयभावस्यप्रत्यक्षसिद्धत्वेनघटस्यावृत्तित्वशंकानुदयात् । एवंसंयोगादेरपिनाव्याप्यवृत्तितेतिपक्षस्तदाऽत्यंत
ताभावप्रतियोगित्वमेवविवक्षितं ॥ ननुमूलग्रंथेषुविप्रतिपत्तेःक्वाप्यदर्शनान्नतस्याआवश्यकत्वमित्यतआह ॥ इदंचेति ॥ ता
किंकैःस्वग्रंथेषुविप्रतिपत्तिःप्रदर्शितास्तीत्यत्रापिसाप्रदर्शिता । नतुतस्याअवश्यंप्रदर्शनीयतयाप्रदर्शनमित्यर्थः । ननुविप्रतिपत्ति
रवश्यंप्रदर्शनीयैव । प्रयोजनवत्त्वात् । मूलग्रंथेषुतदप्रदर्शनंतुशिष्यैरेवसोत्प्रेक्ष्यतामित्यभिप्रायेणभविष्यतीत्यतआह ॥ तत्प
क्षेपीति ॥ यैरपिकथातःपूर्वंविप्रतिपत्तिर्मध्यस्थादिनाऽवश्यंप्रदर्शनीयाप्रयोजनवत्त्वादित्यभिधीयते तैरपितस्याःपक्षपरिग्रह
स्वसाधनीयकोटिपरिग्रहएकएवप्रयोजनंवाच्यमित्यर्थः । ननुस्थापनीयकोटिरूपपक्षपरिग्रहार्थमेवतार्किकादीनामिवभवताम
पिसाऽवश्यंप्रदर्शनीयेत्यतआह ॥ तस्यचेति ॥ तस्य पक्षपरिग्रहस्य । वादिवाक्येनवामध्यस्थकल्पितविषयस्वीकारेणवासि
द्धौविप्रतिपत्तिवाक्यस्यवैयर्थ्यादित्यन्वयः । कथावाह्येनेत्यादिधादिवाक्यविशेषणं । तथाचपक्षपरिग्रहरूपप्रयोजनस्यान्यथा
सिद्धत्वात् तर्किकादिभिरपिविप्रतिपत्तिर्नावश्यंप्रदर्शनीयेतिभावः । तार्किकमतेविप्रतिपत्तिवाक्यस्यपक्षपरिग्रहैकफलवत्त्वंव
क्तुंप्रयोजनांतरंनिरस्यति ॥ नचेति ॥ विप्रतिपत्तिवाक्यस्यसमयबंधादिनाव्यवहितत्वेनहेत्वभिधानप्रयोजकाकांक्षाजनकसाध्यो
पस्थित्यहेतुत्वमित्यर्थः । ननुविप्रतिपत्तिवाक्यस्यसाध्योपस्थित्यहेतुत्वेकथंसाध्योपस्थितिस्स्यादतआह ॥ प्रतिज्ञयैवेति ॥

विप्रतिपत्तिवाक्यस्यसमयबंधादिनाव्यवहितत्वेनतदुत्तरमवश्यंवक्तव्यतयाप्रतिज्ञयैवहेत्वभिधानप्रयोजकाकांक्षाजनकसाध्योपस्थितिसंभवादित्यर्थः । विप्रतिपत्तिवाक्यस्यपक्षपरिग्रहैकफलत्वंपरिशेषयितुंतस्यसंशयार्थत्वंनिरस्यति ॥ नचेति ॥ तदिति ॥ विप्रतिपत्तिवाक्यं ॥ वादिप्रतिवादिनोरिति ॥ तथाचविशेषादर्शनरूपहेत्वभावात् विप्रतिपत्तिवाक्यस्यनवाद्यादिषुसंशयाधायकत्वमित्यर्थः । ननुविशेषदर्शनेसत्यपिविप्रतिपत्तिवाक्याद्वाद्यादीनामाहार्यसंशयोभविष्यति तस्यविशेषदर्शनाप्रतिबध्यत्वादित्यतआह ॥ आहार्येति ॥ अनुमित्युत्तरकालमस्याहार्यसंशयस्यसत्त्वेन सिषाधयिषाविरहदशायामपि पक्षतापत्त्याऽतिप्रसंगेनेत्यर्थः ॥ विप्रतिपत्तीति ॥ तथाचव्यभिचारान्नाहार्यसंशयंप्रतिविप्रतिपत्तिवाक्यस्यहेतुत्वमित्यर्थः । ननुवाद्यादीनांविशेषदर्शनवत्त्वेनसंशयासिद्धौपक्षत्वासिद्ध्याकथंन्यायावतारःस्यादित्यतआह ॥ संशयंविनेति ॥ ननुविप्रतिपत्तिवाक्यस्यवाद्यादिषुसंशयाजनकत्वेपिपरिषदादिषुसंशयजनकत्वमस्त्येव । तेषांविशेषदर्शनविरहात् । नचान्यदीयसंशयस्यपक्षत्वाप्रयोजकत्वेनानुमानांगत्वंनेतिवाच्यं । तस्यानुमानानंगत्वेपिव्युदसनीयतयाविचारांगत्वमस्त्येव । वाद्यादिषुसंशयंप्रतिविप्रतिपत्तेर्निश्चयादिनाप्रतिबंधादजनकत्वेपिस्वरूपयोग्यत्वात् । समयबंधादिवत्स्वकर्तव्यनिर्वाहायमध्यस्थेनविप्रतिपत्तिःप्रदर्शनीयैव । "वाद्यादीनांनिश्चयवत्त्वनियमाभावान्निश्चितौहिवादंकुरुतइत्याभिमानिकनिश्चयाभिप्रायं । परपक्षमालंब्यापिह्यहंकारिणोविपरीतनिश्चयवतोजल्पादौप्रवृत्तिदर्शनादि" ति । उच्यते । वाद्यादीनांनिश्चयवत्त्वध्रौव्येणविप्रतिपत्तेःक्वचिदपिवाद्यादिनिष्ठसंशयानुपधायकत्वेनतादृशसंशयंप्रतितस्याःस्वरूपयोग्यत्वस्याप्यकल्पनात् । क्वचित्फलोपहितजातीयस्यैवस्वरूपयोग्यत्वात् । वाद्यादीनां

निश्चयवत्त्वस्यकथातःपूर्वसमविद्यत्वज्ञापकपरीक्षादिनासिद्धत्वात् । अहंकारिणःपरपक्षमालंब्यख्यात्याद्यर्थंजल्पादिप्रवृत्तिसंभ
वाच्च । व्युदसनीयतयाविचारांगस्यापिपारिषद्येषुसंशयस्यविप्रतिपत्तिंविनापिवादिप्रतिवादिसन्नाहादिनाकोट्युपस्थितौविशेषा
दर्शनेसतिसंभवेनविप्रतिपत्तिवाक्यस्यानावश्यकत्वादित्यभिप्रायः । एवंविप्रतिपत्तिवाक्यस्यप्रयोजनाभावेनानावश्यकत्वमभि
धायपरपक्षमुत्थापयति ॥ प्रमाणंचेति ॥ ननुमिथ्यात्वेअनुमानंप्रमाणमितिभवताकथमवगतमित्यतआह ॥ विमतमित्या
दि ॥ इत्यानंदवोधोक्तेः हेतोरवगतमित्यर्थः । एवमग्रेपि । ननुविप्रतिपत्तौधर्मितेवानुमितौपक्षतापिब्रह्मप्रमान्येनेत्यादिनैवाव
च्छिद्यतां । अतएवाग्रेप्रपंचसत्यत्वानुमानेषु तस्यैवपक्षतावच्छेदकत्वमभिहितं । नचब्रह्मप्रमान्येनेत्यस्यनानापदार्थघटितत्वेन
गुरुत्वाल्लघ्वीविमतिरेवपक्षतावच्छेदिकेतिवाच्यं । तस्याःलघुत्वेपितुच्छब्रह्मव्यावृत्तिवियदाद्यनुगतिरूपनियतविषयत्वायोक्ताव
च्छेदकसापेक्षत्वेनोक्तस्यैवपक्षतावच्छेदकत्वमुचितं । नतुविमतेस्तद्ग्रहाधीनग्रहायाइत्याशंक्यनिरवकरोति ॥ यद्यपीति ॥ सत्यं
विमतिरनुगतावच्छेदकसापेक्षेति । तथाप्यनुमानेलघ्व्याविमत्यैवपक्षतावच्छेदउचितः । प्रमाणोपन्यासेनलघुभूतस्यैवादरणी
यत्वात् । सावयवत्वेनगुरुणागृहीतस्यलघुनःकार्यत्वस्यहेतुत्ववदित्यर्थः । सत्यत्वानुमानेषुतस्यतत्त्वेनोपादानंतुशिष्यान्प्रतिप्र
योगवैचित्र्योपपादनायेत्यदोषः ॥ स्वनियामकेति ॥ विप्रतिपत्त्यंतर्गतेनब्रह्मप्रमेत्यादिनानियामकेनेत्यर्थः ॥ विप्रतिपत्त्ये
ति ॥ विमत्येत्यर्थः ॥ यद्वेति ॥ आत्मत्वेतरपृथिवीत्वाद्यभावत्वांतचतुर्दशधर्मावच्छिन्नविशेष्यताकंचतुर्दशविप्रतिपत्तिप्रयु
क्ताविमतिःपक्षतावच्छेदिकेत्यन्वयः । नन्वननुगतविप्रतिपत्तिप्रयुक्तायाःविमतेरननुगतत्वात्कथंपक्षतावच्छेदकत्वमतआह ॥

[१०।५]अनुगतेति ॥ अनेकविशेष्यतावच्छेदकावच्छिन्नापि तावत्स्वेकासमूहालंबनरूपाविमतिरनुगतावातद्विषयत्वंवानुगतंसंभवती तिसैवपक्षतावच्छेदिकेत्यर्थः । अस्मिन्पक्षेविप्रतिपत्तौधर्मितावच्छेदकमेवानुमानेपि पक्षतावच्छेदकमस्त्विति शंकैवनोदेति । विप्रतिपत्त्यवच्छेदकानामननुगतत्वादित्यभिप्रेत्योक्तं अननुगतधर्माश्रयेति ॥ [१०।५]विप्रतिपत्तिरिति ॥ विमतिरित्यर्थः । पृथिव्यादौपृथिवीत्वादिप्रत्येकधर्मावच्छेदेन जातायामपिविप्रतिपत्तौविमतत्वंतावत्स्वनुगतमस्तीतिलघुभूतंतदेवपक्षतावच्छेदकमितिभावः ॥ [११।७]यद्यपिविमतिरिति ॥ पक्षतावच्छेदकधर्मसामानाधिकरण्येनसाध्यसिद्धिरूपानुमित्यनुरोधेनानुमितिकालेसतएवधर्मस्यपक्षतावच्छेदकत्वमुचितं । विमतेःसमयबंधसभ्यानुविधेयसंवरणादिनाव्यवहितत्वात्तद्घटितंविमतिविषयत्वमपिनानुमानकालेस्तीत्यर्थः ॥ [११।८]सैवेति ॥ विमतिविषयत्वेत्यर्थः । विमतेरनुमानकालेऽसत्त्वेपिपाकरक्तःश्यामइतिवद्विमतंमिथ्येत्यनुमितिरप्रत्यूहैव । ननुपक्षतावच्छेदकाभावेपक्षतावच्छेदकविशिष्टेहेतुज्ञानरूपपक्षधर्मताज्ञानंनस्यादितिचेत् न । स्वरूपसत्पक्षतावद्धर्मताज्ञानस्यैवपक्षधर्मताज्ञानत्वात् । नचपक्षतावच्छेदकासत्त्वेपक्षतापिकथंवर्ततामितिवाच्यं । विषयजन्यंज्ञानंप्रत्यक्षमितिलक्षणेविषयत्वेनाभिमतेघटादौस्वज्ञानात्पूर्वंज्ञानविषयत्वाभावेऽपिविषयत्वेनावच्छेद्यायाःस्वज्ञानंप्रतिजनकतायाःसत्त्वमिवोपपत्तेरितिभावः । ननूत्सर्गतोविशेषणत्वावगाहित्वरूपप्रमाणस्वभावबाधएवात्रदोषःप्राप्नोति । अतएवरूपप्रागभावावच्छिन्नोघटोरूपवानित्यत्रबाधउक्तः । उपलक्षणत्वेतदसंभवादित्यरुच्यापक्षतावच्छेदकस्यविशेषणत्वमेवाह ॥ [११।३]तज्ज्ञानंवेति ॥ विमतिविषयत्वज्ञानंवेत्यर्थः । न्यायवाक्यप्रयोज्यपरामर्शपूर्वक्षणेविमतिज्ञानं तदुत्तरक्षणेचपरामर्शः तदुत्तरक्षणेत्वनुमितिरितिभावः ।

विमतेःपक्षतावच्छेदकत्वेउपष्टंभकमाह ॥ [११।३] अतएवेति ॥ प्राचामित्यत्रपूज्यत्वंनविवक्षितं । अतोनांचेःपूजायामितिनलो
पनिषेधाभावः । विमतेःपक्षतावच्छेदकत्वसिद्ध्यर्थमवच्छेदकांतराणिपरिसंचष्टे ॥ [११।३] नतुवियदादीत्येवेत्यादिना ॥
[११।३] पक्षेऽन्यत्रेति ॥ एतच्चदार्ष्टांतिकेविशेषणं । नतुदृष्टांतेपि । निश्चितसाध्याभाववतिहेतुसंदेहस्यसर्वत्रापिदोषत्वात् ।
यद्वा दृष्टांतेपितद्विशेषणं । व्याप्यत्वासिद्धीतरदोषांतरासंकीर्णस्यानैकांत्यस्यलक्ष्यत्वमभिप्रेत्य । पक्षेतुतस्यबाधसंक
रात् । [११।३] निश्चितहेतुमतीति ॥ तथाचवियन्मात्रस्यपक्षत्वेघटादौसंदिग्धानैकांत्यंस्यादेवेत्यर्थः । ननुनिश्चितहेतुमतिसर्वत्रसा
ध्यसंदेहोनदोषः । अनुमानमात्रोच्छेदापत्तेः । किंतुपक्षातिरिक्ते । घटादिस्तुनपक्षातिरिक्तइतिनतत्रसंदिग्धानैकांत्यंदोषः ।
नचप्रतिज्ञाविषयत्वरूपंपक्षत्वंघटेनास्तीतिसपक्षातिरिक्तइतिवाच्यं । प्रतिज्ञाविषयत्वंनपक्षत्वं । स्वार्थेऽनुमानेशब्दप्रयोगरूपप्रति
ज्ञाविरहेणपक्षत्वाभावापत्तेः । किंतुसाधकबाधकप्रमाणाभाववत्त्वंपक्षत्वंस्वार्थानुमानपरार्थानुमानसाधारणं । तच्चघटेप्यस्तीति
नसपक्षातिरिक्तइतिनघटेसंदिग्धानैकांत्यंदोषइतिवियदित्येवपक्षनिर्देशोस्त्वित्यतआह ॥ [११।३] प्रतिज्ञाप्रत्ययविषयेपीति ॥ [११।३] एवंपक्षनि
र्देशस्येति ॥ यद्यपिवियन्मात्रस्यपक्षत्वेप्युक्तविधयानघटेसंदिग्धानैकांत्यं तथापिघटादिसाधारण्यामेकस्यामनेकस्यांवाविप्रति
पत्तौसत्यां घटादिबहिर्भावेनवियन्मात्रपक्षनिर्देशस्यानाकांक्षिताभिधानत्वेनाप्राप्तकालत्वादित्यर्थः । नन्वनुमानेपक्षतावच्छेदि
केव लघ्वीविमतिरेवविप्रतिपत्तावपिधर्मितावच्छेदिकास्तु । किंब्रह्मप्रमान्येनेत्याद्युक्तकुसृष्टियुक्तधर्मितावच्छेदकाश्रयणेनेत्यत
आह ॥ [११।४] विप्रतिपत्ताविति ॥ विमतिः विप्रतिपन्नत्वं । विप्रतिपत्तौ विमतेर्धर्मितावच्छेदकत्वे । मिथ्यानवेत्यादिविप्रतिपन्न

त्वंमिथ्यानवेत्यादिविप्रतिपत्तिःस्यात् । तथाचात्माश्रयःस्यात् । तस्माद्ब्रह्मप्रमान्येनेत्याद्यनुगतंवा पृथिवीत्वादिकमननुगतंवा विप्रतिपत्तौधर्मितावच्छेदकमुपादातव्यमित्यर्थः ॥ [१३।३]तत्ववृत्तित्वादिति ॥ तथाचतत्रैवव्यभिचारवारणायानादीतिविशेषणमित्यर्थः ॥ [१३।३]विमतमिति ॥ स्वसमानाधिकरणेत्यादिसाध्यवत्त्वतदभावाभ्यांविमतमित्यर्थः । संयोगादौतूक्तरूपविमतेरभावान्नतंत्रसिद्धसाधनं । ननुविमतेर्धर्मितावच्छेदकमस्तिनवा । अंत्येऽपर्यवसानं । आद्येपिसंयोगादिव्यावृत्तंनवा । नाद्यः । तस्यानुक्तत्वात् । द्वितीयेसंयोगादेरपिपक्षत्वमवर्जनीयमेवेत्यनुशयेनाह ॥ [१३।३]ब्रह्मप्रमेति ॥ संयोगादौसिद्धसाधनवारणायाव्याप्यवृत्तित्वानधिकरणमितिपक्षविशेषणं ॥ [१३।५]पक्षधर्मताबलादिति ॥ अव्याप्यवृत्तित्वानधिकरणमितिपक्षविशेषणबलादव्याप्यवृत्तित्वेनपक्षेसाध्योपसंहाराभावेनस्वसमानाधिकरणव्याप्यवृत्त्यत्यंताभावप्रतियोगित्वरूपंमिथ्यात्वंपक्षेसिद्ध्यतीत्यर्थः । नित्यद्रव्यान्यदितिपक्षविशेषणंवृत्तिमदित्यर्थः । एतच्चनित्यद्रव्येषुसिद्धसाधनवारणाय । संयोगादिभिन्नत्वमपिपक्षविशेषणं । तेनसंयोगादिकमादायनसिद्धसाधनं । नन्वात्मनोमिथ्यात्वात्तत्रव्यभिचारइत्यतआह ॥ [१३।८]अतएवेति ॥ आत्मनिसाध्यसत्त्वान्नव्यभिचारइत्यर्थः । अत्यंताभावप्रतियोगित्वंमिथ्यात्वंपक्षधर्मताबलात्सिद्ध्यतीत्याह ॥ [१३।८]मिथ्यात्वसिद्धिस्त्विति ॥ वृत्तिमत्त्वार्थकनित्यद्रव्यान्यत्वविशेषणादवृत्तित्वमादायपक्षेसाध्योपसंहाराभावेसतिमिथ्यात्वसिद्धिर्भवतीत्यर्थः ॥ [१४।१]आत्मत्वावच्छिन्नेति ॥ शुक्तिरूप्यप्रतियोगिकेआत्मानात्मधर्मिकेभेदेसिद्धसाधनवारणायआत्मत्वावच्छिन्नेति ॥ [१४।१]अनात्ममात्रेति ॥ आत्मानात्मप्रतियोगिकेशुक्तिरूप्यधर्मिकेभेदेव्यभिचारवारणायमात्रेति । अनात्ममात्रप्रतियोगिकसादृश्यादेःपक्षसमत्वान्नतत्रव्यभिचारः ॥

[१।४।३]मिथ्यात्वंचेति ॥ यद्यपीत्यस्यव्यवहितेनाग्रेतनेनतथापीत्यनेनसंबंधः ॥ [१।४।३]अपसिद्धांतादिति ॥ मिथ्यात्ववादिभिरपिप्रपंचस्यासद्वैलक्षण्यांगीकारादित्यर्थः ॥ [१।४।४]अप्रसिद्धेरिति ॥ सत्यत्ववादिनाशुक्तिरूप्यादेरप्यनिर्वाच्यत्वानभ्युपगमात् तार्किकाभिमतान्यथाख्यातिपक्षेरूप्यस्यापिसत्यत्वात् सिद्धांत्यभिमतान्यथाख्यातिपक्षेशुक्तेरेवात्यंतासद्रूप्यात्मनाभानांगीकारेणरूप्यस्यसदसद्वैलक्षण्यरूपानिर्वाच्यत्वस्याप्रसिद्धिरित्यर्थः ॥ [१।४।४]सतोपीति ॥ सद्विशेषभेदस्यसत्यपिसंभवादित्यर्थः ॥ [१।४।४]निर्धर्मिकइति ॥ तथाचसत्त्वानधिकरणत्वेपिब्रह्मवत्सद्रूपत्वेनाप्यमिथ्यात्वोपपत्तेरित्यर्थः ॥ [१।४।५]नचेति ॥ सत्त्ववत्सत्त्वानधिकरणत्वमपिधर्मोब्रह्मणिनास्तीत्यर्थः ॥ [१।४।५]निर्धर्मकत्वहेतोरिति ॥ निर्धर्मकत्वरूपहेतोःपक्षेसत्त्वेनिर्धर्मिकत्वरूपधर्मस्यब्रह्मणिसत्त्वेन तत्रनिर्धर्मकत्वस्यव्याघातः । अथनिर्धर्मकत्वंहेतुःपक्षेनास्ति । तथापिब्रह्मणोननिर्धर्मकत्वं । सधर्मकत्वस्यैवप्राप्तेः । एवंसत्त्वानधिकरणत्वाभावरूपसाध्यस्यपक्षेसत्त्वेतादृशसाध्यरूपधर्मलाभेननिर्धर्मकत्वरूपहेतुव्याघातः । अथसत्त्वानधिकरणत्वाभावरूपसाध्यंपक्षेनास्ति । तथापिसत्त्वानधिकरणत्वरूपधर्मलाभेननिर्धर्मकत्वरूपहेतोःतेनव्याघातः । सत्त्वानधिकरणत्वाभावरूपसाध्येनचव्याघातइत्यर्थः ॥ [१।४।६]अभावरूपेति ॥ तथाचब्रह्मणोपिसत्त्वानधिकरणत्वेनातिव्याप्त्यापत्त्यानतन्मिथ्यात्वलक्षणमित्यर्थः । ब्रह्मण्यभावरूपधर्मानंगीकारेबाधकमाह ॥ [१।४।६]अन्यथेति ॥ अनिर्वाच्यलक्षणइति [१।४।७] ॥ सदसत्त्वानधिकरणत्वरूपांऽनिर्वाच्यलक्षणइत्यर्थः । नन्वदृश्यत्वेनप्रमित्यविषयेब्रह्मण्यतिव्याप्तिरित्यतआह ॥ [१।४।८]ब्रह्मत्विति ॥ ब्रह्मणोवृत्तिव्याप्यत्वेपिचिदविषयत्वाददृश्यत्वोपपत्तिरितिभावः ॥ [१।५।१]शुक्तिरूप्यादेरिति ॥ प्रमित्यविषयत्वंवासाक्षात्प्रमित्यविषयत्वंवामिथ्यात्वंशुक्तिरूप्यादौनास्तीति

दृष्टांतःसाध्यविकलइत्यर्थः ॥ [१५।२] आवश्यकत्वादिति ॥ उपलक्षणमेतत् । स्वाभावसत्त्वप्रकारकप्रमारूपबाधकज्ञानंप्रतिसाक्षाद्विषयेरूप्यादौसाध्यवैकल्यंचद्रष्टव्यं ॥ [१५।३] ब्रह्मणोपीति ॥ तस्यजगद्भ्रमाधिष्ठानत्वेनपरैरंगीकारादित्यर्थः ॥ [१५।४] उक्तरीत्येति ॥ अनुव्यवसायादिरूपप्रमाविषयत्वेनेत्यर्थः ॥ [१५।५] विशेष्येति ॥ अध्यस्तत्वमेवतल्लक्षणमस्त्वित्यर्थः । ननुतावदेवतल्लक्षणमस्त्वित्यतआह ॥ [१५।५] विशेषणेति ॥ अध्यस्तत्वस्यलक्ष्यत्वेनलक्षणत्वायोगादित्यर्थः ॥ [१५।६] तद्धीति ॥ बाध्यत्वं ॥ [१५।७] ब्रह्मणीति ॥ क्षणिकत्वबाधकस्थायित्वज्ञानविषयतयाप्रपंचस्यसिद्धसाधनदोषोपिबोध्यः ॥ [१६।१] नापीति ॥ नास्तीत्यादिप्रकारत्रयेणबोध्यमानोयोनिषेधः कालत्रयसंसृष्टइतियावत् तत्प्रतियोगित्वमित्यर्थः ॥ [१६।१] मन्मतइति ॥ मिथ्यात्वंनिर्वक्तुर्मायावादिनोममतेआपणस्थरूप्यस्यैव तादृशनिषेधप्रतियोगित्वं । नशुक्तिरूप्यस्य । तस्यधीकालेशुक्त्यादौसत्त्वेनतत्रतस्यतादृशनिषेधानंगीकारात् । तथाचशुक्तिरूप्यादौसाध्यवैकल्यमित्यर्थः । उपलक्षणमेतत् । बाध्यत्वेनानंगीकृतेतुच्छेतदापत्तिश्चबोध्या ॥ [१६।२] उक्तरेति ॥ तथाचज्ञानादौपक्षैकदेशेसिद्धसाधनं घटादावर्थांतरंचेतिभावः ॥ [१६।२] नापिस्वेति ॥ बाध्यत्वस्याननुषंगायपुनर्मिथ्यात्वोक्तिः ॥ [१६।३] अव्याप्यवृत्तीति ॥ तथाचपूर्ववत्सिद्धसाधनार्थांतरतेइतिभावः ॥ [१६।४] नाप्यव्याप्येति ॥ संयोगात्यंताभावस्यापिगुणकर्मावच्छेदेनव्याप्यवृत्तित्वाधिकरणतयातत्प्रतियोगिनिसंयोगादौसिद्धसाधनतावारणायाव्याप्यवृत्तित्वानाश्रयेतिनिषेधद्वयांतर्भावः । नन्वारोपितसंयोगस्यात्यंताभावोपिसंयोगात्यंताभावत्वादव्याप्यवृत्तित्वाश्रयएवेतितदनाश्रयात्यंताभावप्रतियोगित्वंमिथ्याभूतेआरोपितेसंयोगेऽव्या

समित्यतआह ॥ आरोपितस्येति ॥ शुक्तिरूप्यादाविति ॥ नेदंरजतमितिनिषेधंप्रत्यापणस्थरूप्यस्यैवप्रतियोगित्वयाशुक्ति
रूप्यादेःस्वसमानाधिकरणनिषेधायोगादित्यर्थः ॥ नाप्यविद्येति ॥ प्रत्येकाव्याप्तिवारणायान्यतरत्वांतर्भावः ॥ अनादाववि
ति ॥ तदुक्तंवार्तिके । "जीवईशोविशुद्धाचिद्भेदस्तस्यास्तयोर्द्वयोः । अविद्यातच्चितोर्योगःषडस्माकमनादय" इति ॥ परंमत
इति ॥ सत्यत्ववादिमते । अज्ञानस्यभ्रमप्रागभावरूपस्यतत्कार्यभ्रांत्यादेश्चप्रागभावरूपाविद्यातत्कार्यान्यतरत्वेपिसत्यतयात
द्वद्घटादेरपिसत्यत्वेनाप्युक्तसाध्योपपत्त्याअर्थांतरत्वमित्यर्थः । भ्रमप्रागभावभ्रमादौसिद्धसाधनतापिद्रष्टव्या । नन्वनिर्वा
च्याविद्यातत्कार्यान्यतरत्वंलक्षणार्थोऽतोनोक्तदोषइत्यतआह ॥ शुक्तिरूप्यादाविति ॥ तथाचाप्रसिद्धिरित्यर्थः ॥ नचापी
ति ॥ एतस्ययद्यपीत्यनेनपूर्वेणसंबंधः । पूर्वोक्तामप्रसिद्धिंनिराकरोति ॥ तत्प्रसिद्धिश्चेति ॥ सत्त्वमसत्त्वात्यंताभावसमाना
धिकरणात्यंताभावप्रतियोगि । व्यतिरेकिधर्मत्वात् । गोत्ववत् । प्रमेयत्वादेरप्यत्यंताभावप्रतियोगित्वपक्षेधर्मत्वादित्येवहेतुः ।
नचघटावृत्तित्वमुपाधिः । घटत्वेसाध्याव्याप्तेः । नचघटेतरवृत्तित्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकंघटमात्रावृत्तित्वमुपाधिः ।
पक्षेपिसत्त्वादित्यादिवक्ष्यतइत्यर्थः । ननुसत्त्वविशिष्टस्यासत्त्वस्याभावःसदसत्त्वानधिकरणत्वं । तच्चविशेष्याभावात्सत्यत्वप
क्षेपिसिद्धमतःसिद्धसाधनमित्यतआह ॥ यद्वेति ॥ तच्चेति ॥ बाध्यत्वमित्यर्थः । तुच्छेऽतिव्याप्तिवारणायप्रतिपन्नोपाधाविति
विशेषणं । तुच्छस्यप्रतीत्यभावेननप्रतिपन्नोपाधिरित्यभिप्रायः । शुक्तिरूप्यादौदृष्टांतेसाध्यवैकल्यपरिहारायतस्यात्यंताभावप्र

तियोगित्वमुपपादयितुमुक्तंरूप्यादिरेवेत्यादिमतइत्यंतं ॥ तत्त्वमस्यादीति ॥ मात्रशब्देनज्ञानस्याज्ञाननिवर्तकतायामितरनिरपेक्षत्वमुक्तं । नासीदित्यस्यनञोननिवृत्तिरर्थः । किंतुसंसर्गाभावमात्रं । तस्यचासीदित्यादिनाकालत्रयसंबंधबोधनेनत्रैकालिकत्वसिद्धिरितिनिरुक्तमिथ्यात्वेसंमतित्वसिद्धिः । ननुप्रतिपन्नोपाधिस्थलेनिषेधस्यब्रह्मभिन्नस्यतात्त्विकत्वेऽद्वैतहानिः व्यावहारिकत्वेविरोधः प्रातिभासिकत्वेसिद्धसाधनमित्यतःपक्षांतरमाह ॥ मतांतरेत्विति ॥ रूप्योपादानमज्ञानंस्वकार्येणवर्तमानेन विलीनेनवासहाधिष्ठानसाक्षात्कारान्निवर्तते । तत्तद्भ्रमोपादानाज्ञानानांभेदाभ्युपगमादितिनदृष्टांतेसाध्यवैकल्यं । मुद्गरपातानंतरंघटोनास्तीतिप्रतीतिवदधिष्ठानज्ञानानंतरंशुक्त्यज्ञानंतद्गतंचरूप्यंनास्तीतिप्रतीतेःसर्वसंमतत्वादितिमतेइदंलक्षणमुच्यतइत्यभिप्रेत्योक्तं ॥ मतांतरेत्विति ॥ प्रविलीनेनेति ॥ मुद्गरपातानंतरंघटस्यनात्यंतिकीनिवृत्तिःकिंतुप्रविलयमात्रमित्यभ्युपगमादतीतघटादेरपिज्ञानादेवनिवृत्तिरित्यर्थः । उत्तरज्ञाननिवर्त्येपूर्वज्ञानादौसिद्धसाधनतांवारयति ॥ अनुमितिंप्रतीति ॥ ननुज्ञाननिवर्त्यत्वं ज्ञानजन्यनिवृत्तिप्रतियोगित्वं । तच्चनरूप्येस्ति । शुक्तिज्ञानानंतरंरूप्यंनास्तीतिप्रतीतावपिरूप्यंनिवृत्तमित्यप्रतीतेः । तथाचसाध्यवैकल्यमित्यतःपक्षांतरमाह ॥ अथवेति ॥ स्वसमानाधिकरणेति ॥ स्वाधिकरणाधिकरणकेत्यर्थः । संयोगादौसिद्धसाधनतांवियदादौचार्थांतरतांवारयति ॥ संयोगेति ॥ बाधान्नाव्याप्यवृत्तित्वसिद्धिरितिभावः । रूप्यादौसाध्यवैकल्यशंकांवारयति ॥ शुक्तिरूप्यादेरिति ॥ आविद्यकतयाविद्यमानमपिरूप्यंपारमार्थिकत्वेनव्यधिकरणेनधर्मेणस्वसमानाधिकरणनिषेधप्रतियोगीतिनतत्रसाध्यवैकल्यमित्यर्थः ॥ स्वात्यंताभावाधिकरणएवेति ॥ एतेनप्रतिपन्नोपाधौत्रैकालि

कनिषेधप्रतियोगित्वंमिथ्यात्वमित्यनेनपूर्वोक्तेनास्यपुनरुक्तिरपिपरिहृता । नन्वेवमत्यंतासत्त्वापत्तिः । नचात्यंतासतःप्रतीयमानत्वंनेतिवाच्यं । शशविषाणमित्यादिशब्दाभासादिनातस्यापिप्रतीतेरित्यतोलक्षणांतरमाह ॥ [२०।४] यद्वेति ॥ सतोपिसदंतरविविक्तत्वात्सिद्धसाधनमित्यतआह ॥ [२०।४] तद्वेति ॥ निर्धर्मकेब्रह्मणिसद्रूपत्वरूपधर्माभावादतिव्याप्तिरित्यतआह ॥ [२०।५] ब्रह्मचेति ॥ साध्यंविविच्यहेतुंविविनक्ति ॥ दृश्यत्वंचेति ॥ [२०।५] दृग्विषयत्वमिति ॥ ज्ञानविषयत्वमित्यर्थः । आत्माचवृत्तिविषयोपिनेतिभावः । अतएवाग्रेआत्मनोज्ञानविषयत्वमभ्युपेत्यपक्षांतरंवक्ष्यति तथाचात्मनोज्ञानविषयत्वेपीत्यादिना ॥ [२०।६] नन्विति ॥ मिथ्यात्वस्यव्यतिरेकिधर्मत्वेनकिंचिदधिकरणनिष्ठात्यंताभावप्रतियोगित्वेनिश्चितेतदधिकरणेहेतुव्यतिरेकस्याग्रहेतत्रहेतुसंशयसंभवात्संदिग्धानैकांत्यमित्यर्थः ॥ [२१।१] ब्रह्मापिदृश्यमिति ॥ तथाचब्रह्मणिव्यभिचारइतिभावः ॥ [२१।२] व्यतिरेकावच्छिन्नस्यादृश्यत्वादिति ॥ शुद्धेब्रह्मस्वरूपेसाध्यसाधनयोर्व्यतिरेकोस्ति । मिथ्यात्वदृश्यत्वव्यतिरेकावच्छिन्नेचदृश्यत्वमप्यस्तीतिसाध्यसाधनव्यतिरेकयोःसहचारग्रहोभवति । व्यतिरेकावच्छिन्नस्यदृश्यस्यमिथ्यात्वाद्व्यभिचारोपिनेतिभावः । नन्वदृश्यस्यकथंदृश्यत्वमित्यतःसदृष्टांतमुपपादयितुमुक्तमाकाशस्येति । आकाशस्यापरिच्छेदपरिच्छेदाविवब्रह्मणोप्यदृश्यत्वदृश्यत्वेउपपन्ने । स्वाभाविकत्वास्वाभाविकत्वाभ्यांच तद्वदेवाविरोधइतिभावः । ननुव्यतिरेकावच्छिन्नस्यविशिष्टस्यदृश्यत्वेविशिष्टानुगतविशेष्यस्यदृश्यत्वमवर्जनीयं । विशिष्टज्ञानस्यविशेष्येपिसंशयादिनिवर्तकत्वात् । अन्यथादंडीदेवदत्तइतिज्ञानानंतरंदेवदत्तेकदाचित्संश

यादिःस्यात् । तथाचव्यभिचारइत्यतआह ॥ स्वव्यवहारइति ॥ अद्वितीयत्वादिप्रकारकेआत्मगोचरेव्यवहारेस्वातिरिक्तवृत्तिरूपसंविदपेक्षास्तीतिआत्मनिदृश्यत्वंमाप्रसाक्षीदितिनियतिग्रहणं । अद्वितीयत्वादिरूपेआत्मव्यवहारेतदपेक्षायामपिस्फुरणरूपेनित्यसिद्धेआत्मव्यवहारेतदभावात्तत्रनियमोनास्तीत्यर्थः । आत्मनोवृत्तिविषयत्वमपिनास्तीतिन्यायदीपावलिरीत्यादृश्यत्वंव्याख्यातं । आनंदबोधोक्तरीत्यातुशुद्धात्मनोवृत्तिविषयत्वेपिस्वव्यवहारेपिस्वातिरिक्तसंविदपेक्षानियतिरूपंदृश्यत्वंशुद्धात्मनिनास्तीत्याह ॥ तथाचेति ॥ नन्वात्मनःस्फुरणव्यवहारेउपनायकप्रमाणापेक्षायाविरहेप्यद्वितीयत्वादिविशिष्टव्यवहारेविशेषणोपनायकप्रमाणापेक्षानियमोस्त्येवेतिव्यभिचारस्तदवस्थइत्यतआह ॥ अस्वप्रकाशत्वंवेति ॥ घटादाविति ॥ घटादेःफलव्याप्यतयाफलाव्याप्यत्वरूपंविशेषणंघटादौनास्तीत्यर्थः ॥ धर्मादौत्विति ॥ अपरोक्षव्यवहारयोग्यत्वंविशेष्यंधर्मादौनास्तीत्यर्थः । ननुजडत्वंनाज्ञानत्वं । वृत्तिभागेऽसिद्ध्यापत्तेः । किंत्वस्वप्रकाशत्वमेववाच्यं । तथाचदृश्यत्वजडत्वयोःपूर्वोक्तयोर्हेत्वोरभेदापत्तिरित्यतआह ॥ अस्मिंश्चेति ॥ असंविद्रूपत्वं अचिद्रूपत्वं । तच्चवृत्तिरूपेज्ञानेस्तीतिभावः ॥ श्रुतिश्चेति ॥ एकमेवाद्वितीयमित्यादिकेत्यर्थः । ननुब्रह्माद्वितीयंचेत्प्रथमंतृतीयंवास्यात् । बहुव्रीहिपक्षेपिसप्रथमंसतृतीयंवास्यात् । तथाचनेष्टसिद्धिरित्यतःश्रुतिंव्याख्याति ॥ एकमेवेति ॥ अद्वितीयादिशब्दैःकंठतोद्वितीयनिषेधेद्वितीयनिरूपिततृतीयादेरपिनिषेधोर्थतोभवतीतिद्वितीयस्यात्यंताभावप्रतियोगित्वरूपंमिथ्यात्वंश्रुत्यासिद्ध्यतीत्यर्थः ॥ नचेति ॥ सन्घटइत्यादिसत्त्वग्राहकप्रत्यक्षबाधादित्यर्थः । अमानं अग्न्यनौष्ण्यानुमानवदितिशेषः । अमुख्यार्था यजमानःप्रस्तरइत्यादिश्रुतिवदितिशेषः । नचागमानु

मानाभ्यामेवप्रत्यक्षंबाध्यतामितिवाच्यं । प्रत्यक्षस्यागमाद्यगृहीतरेखोपरेखादिग्राहकत्वेन तदनिवर्तितदिङ्मोहादिभ्रमनिवर्तकत्वेनं जात्याशब्देस्वरूपधर्म्यादिग्राहकत्वेनोपजीव्यतयाऽऽगमाद्यपेक्षयाप्राबल्यादित्यर्थः । प्रत्यक्षस्यभिन्नविषयत्वान्नतेनागमादीनांविरोधइत्याह ॥ [२३।४] प्रत्यक्षेणेति ॥ [२३।५] अनुमानादिभिरिति ॥ प्रत्यक्षगृहीतव्यावहारिकसत्त्वानुपमर्देनैवप्रत्यक्षागृहीतपारमार्थिकसत्यत्वस्यनिषेधादित्यर्थः । नचमिथ्यात्वश्रुतेरप्रसक्तप्रतिषेधतापातः । अर्थक्रियादिरूपानुमानाभासेनवा आरोपितपारमार्थिकसत्यत्वतात्पर्यकेणप्रत्यक्षगृहीतव्यावहारिकसत्यत्वानुवादकेन विश्वंसत्यमित्याद्यागमेनवा पारमार्थिकसत्यत्वप्रसक्तेर्वियदादिषुसंभवादितिभावः । ननुमिथ्यात्वश्रुत्यानिषिध्यमानमेवपारमार्थिकसत्त्वंप्रत्यक्षेणगृह्यतइति नप्रत्यक्षस्यभिन्नविषयतेत्यतआह ॥ [२३।५] नहीति ॥ अतीतानागतादिभिःसंनिकर्षाभावात्प्रत्यक्षस्यनोक्तरूपसत्यत्वग्राहकतेतिभावः । नन्वेवंभिन्नविषयतयाप्रत्यक्षाविरोधोपपादने अग्न्यनौष्ण्यानुमानेपिनप्रत्यक्षविरोधःस्यात् । तथाचकालात्ययापदिष्टदोषोच्छेदःस्यादित्यतआह ॥ वह्निरनुष्णइत्यत्रेति ॥ [२३।६] अतात्विकविश्वांतर्गतजलादिस्वभावानौष्ण्येनसमस्वभावमनौष्ण्यमग्नावनुमीयतेयदा तदैवप्रत्यक्षेणबाधः । अनीदृशंतुमिथ्यात्वस्यैवनामांतरमितिनाग्न्यनौष्ण्यानुमानेपिप्रत्यक्षबाधइत्यर्थः । ननुश्रुत्याप्रत्यक्षगृहीतव्यावहारिकसत्यत्वानुपमर्देनतदगृहीतपारमार्थिकसत्यत्वनिषेधेप्रत्यक्षगृहीतसत्यत्वस्यनमिथ्यात्वसिद्धिः । नचव्यावहारिकसत्यत्वेपिघटवत्पारमार्थिकसत्यत्वंनिषिध्यतइतितत्रतत्सिद्धिरितिवाच्यं । व्यावहारिकसत्यत्वे यद्व्यावहारिकसत्यत्वंतत्रैवमपिव्यावहारिकसत्त्वानुपमर्देन तन्मिथ्यात्वासिद्धेः । तत्राप्युक्तन्यायेऽनवस्थेतिसत्यत्वग्राहिप्रत्यक्षप्राबल्येऽरुचिमभिसंधायापौरुषेयत्वेनानाशं

कितदोषतयाश्रुतेस्तदनुगृहीतत्वाच्चानुमानस्यसंभावितदोषप्रत्यक्षापेक्षयाप्राबल्यात्प्रत्यक्षगृहीतमपिसत्यत्वमनुमानागमाभ्यांनिषिध्यतइतिवक्तुंप्रत्यक्षस्यागमादिबाध्यत्वंदृष्टमस्तीत्याह ॥ दृश्यतेचेति ॥ सिद्धांताभिधानंप्रतिजानीते ॥ उच्यतइति ॥ पंचधेति ॥ सदसत्त्वानधिकरणत्वंवा सर्वस्मिन्प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वंवा ज्ञानत्वेनज्ञाननिवर्त्यत्वंवा स्वात्यंताभावाधिकरणएवप्रतीयमानत्वंवा सद्रूपत्वाभावोवेतिपंचप्रकारैर्मिथ्यात्वंलक्षितमित्यर्थः ॥ तत्राद्यइति ॥ सदसत्त्वानधिकरणत्वमित्यत्रसच्छब्दःसत्त्वपरः तत्रसत्त्वंकिमसत्त्वविशेषणंवा सत्त्वासत्त्वेप्रत्येकमनधिकरणत्वस्यविशेषणंवा सच्छब्दात्परतोऽनधिकरणत्वशब्दरूपमध्यमपदलोपिसमासाश्रयणेनसत्त्वानधिकरणत्वस्यविशेषणंवाभिप्रेतमितिप्रश्नवाक्यार्थः ॥ मन्मतेपीति ॥ विशेष्याभावीयत्तोविशिष्टाभावोस्तीत्यर्थः ॥ व्याहतेरिति ॥ सत्त्वाभावसाधनेऽसत्त्वस्यप्राप्त्यापुनरसत्त्वाभावसाधनेव्याहतिरित्यर्थः । "सि० ननुनव्याहतिः । साहि तयोःपरस्परविरहव्यापकतया परस्परविरहव्याप्यतयावा परस्परविरहरूपतयावा । नाद्यः । सत्त्वाभाववतिशुक्तिरूप्येबाध्यत्वरूपासत्त्वस्यविद्यमानत्वेपिक्वचिदप्युपाधौसत्त्वेनप्रतीयमानत्वानधिकरणत्वरूपासत्त्वव्यतिरेकस्यविद्यमानत्वेनव्यभिचारितयासत्त्वव्यतिरेकंप्रत्यसत्त्वस्यव्यापकत्वाभावात् । निर्धर्मकेब्रह्मण्युभयस्याप्यव्यभिचाराच्च । नद्वितीयः । तस्यव्याघाताप्रयोजकत्वात् । गोत्वाश्वत्वयोःपरस्परविरहव्याप्यत्वेपितदभावयोरुष्ट्रादावेकत्रसहोपलंभात् । नतृतीयः । सत्त्वासत्त्वयोःपरस्परविरहरूपत्वानंगीकारात् । तथाहि । अत्रत्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेकोनासत्त्वं । किंतुक्वचिदप्युपाधौसत्त्वेनप्रतीयमानत्वानधिकरणत्वं । तद्व्यतिरेकश्चसाध्यत्वेनविवक्षितः ।० तथाचत्रि

कालाबाध्यविलक्षणत्वेसति क्वचिदप्युपाधौसत्त्वेनप्रतीयमानत्वरूपंसाध्यंपर्यवसितं । तथाचनव्याहति" रितिचेन्मैवं । अस
च्चेन्नप्रतीयेतेतिवदतात्वयाऽक्ताप्रतीतिंप्रतिप्रयोजकस्यप्रतीत्यनुपाधिकस्यसत्त्वविरोधिनोसत्त्वस्यवक्तव्यत्वात् । असत्त्वाभावः
सत्त्वेनंप्रतीयमानत्वेपर्यवसन्नइतितत्साधनस्यव्यर्थत्वात् । नचासद्वैलक्षण्यसिद्ध्यर्थंतत्साधनमितिवाच्यं । प्रतीयमानत्वस्यासं
त्साधारणत्वात् । "तद्धैकआहुः । असदेवेदमग्रआसी" दित्यसतःसत्त्वेनप्रतीतेःश्रुत्यानूदितत्वात् । नचासतइवप्रतीतेरनुवा
दोनप्रतीतिसत्तामापादयतीतिवाच्यं । असतःसत्त्वेनप्रतीतिमंतएकइत्यसत्प्रतीतेःसत्त्वस्यैवोक्तेः । नचतद्धैकआहुरितिश्रुत्या
सदेवसोम्येदमग्रआसीदितिश्रुत्यर्थस्याभावएवप्रतिपाद्यतेनिषेधायेतिवाच्यं । सदेवसोम्येदमितिश्रुत्यर्थाभावस्यासत्त्वेनासतः
सत्त्वप्रतीत्यनिवारणात् । अत्रेदमालोचनीयं । सत्त्वासत्त्वयोःपरस्परप्रागभावादिरूपतयापरस्परविरहरूपत्वासंभवेनात्यंता
भावरूपतयैवपरस्परविरहरूपतावाच्या । तत्रापित्रिकालसर्वदेशीयनिषेधप्रतियोगित्वादिरूपस्यासत्त्वस्याभावरूपतयाऽसत्त्वा
त्यंताभावःसत्त्वमितिवाच्यं । तथासतिसिद्धांतेअत्यंताभावस्यासन्मात्रप्रतियोगित्वस्वीकारेणासत्त्वस्यात्यंतासत्त्वापत्तिः । नच
तार्किकादिमतेनतयोःपरस्परविरहरूपत्वाभिधानमितिवाच्यं । स्वमतेव्याहत्युक्तेरसंभवापत्तेः । सिद्धांतेप्यसत्त्वाभावएवसत्त्व
मितिस्वीकारश्च । यद्वक्ष्यति "मयालाघवादावश्यकत्वादसत्त्वाभावएवसत्त्वमितिस्वीकारात् । द्वौनञौप्रकृतमर्थंसातिशयं
गमयतइतिन्यायेनैकतरनिषेधस्यान्यतरविधिरूपत्वात् । मातावंध्येतिवद्व्याघात" इति । "मयात्रिकालसर्वदेशीयनिषेधाप्रति
योगित्वप्रतियोगित्वेसत्त्वासत्त्वेइतिस्वीकारा" दितिच "सत्त्वासत्त्वे एकधर्मिनिष्ठात्यंताभावप्रतियोगिनीन । परस्परात्यंता

भावरूपत्वात्घटत्वाघटत्वव" दितिच । ननुघटादिसत्त्वंनशशशृंगादिगतासत्त्वस्यात्यंताभावरूपं । येनतस्यतुच्छत्वंस्यात् । किंतुघटादौभ्रांतिप्रतिपन्नासत्त्वस्येतिचेत्न । सत्त्वस्ययदसत्त्वंप्रत्यत्यंताभावरूपत्वं तत्प्रत्यसत्त्वस्यात्यंताभावरूपत्वानुपपत्तेः । निस्स्वरूपत्वात् । घटादिगतसत्त्वस्यशशशृंगादिगतासत्त्वस्यचविरहयोरेकत्रोक्तौबाधकाभावाच्च । तयोःपरस्परविरहरूपत्वाभावस्यत्वयैवोक्तेः । अत्रब्रूमः । समानसत्ताकयोःपरस्परविरहयोर्व्याप्यत्वेसतिव्यापकत्वंपरस्परविरहरूपत्वं । तादृशयोरभावेनैकत्रसंभवक्तः । घटादौसत्त्वेसत्यपिशशशृंगादिगतासत्त्वस्यात्यंताभावोनेतिव्यभिचारवारणायसमानसत्ताकेतिविरहविशेषणं । अभेदेपिव्याप्यव्यापकभावोस्त्येव । एवंचनशशशृंगादिगतासत्त्वस्यासत्त्वापत्तिरिति ॥ निर्धर्मकेति ॥ उभयाभावसाधनेपिब्रह्मवत्सद्रूपत्वानुपमर्दादित्यर्थः । नन्वेकेनैवसर्वानुगतेनसर्वत्रसत्प्रतीत्युपपत्तौब्रह्मवत्प्रत्येकंप्रपंचस्यसत्स्वभावित्वकल्पनेमानाभावात् अनुगतव्यवहाराभावप्रसंगाच्च सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयंवासाध्यं । तथाचोभयात्मकत्वेअन्यतरात्मकत्वेवाताहृग्भेदाभावेनताभ्यामर्थांतरानवकाशइति । मैवं । रजतंविनापिशुक्तौरजतप्रतीतिव्यवहारादिदर्शनात्सत्पदार्थंविनापिसत्प्रतीत्यादेरुपपत्तावतिलाघवमितिब्रह्मापिसद्रूपंनसिध्येत् । प्रमितत्वाद्ब्रह्मसद्रूपमितितुजगत्यपितुल्यं । एतेनानेकसत्कल्पनरूपबाधकतर्कसहकृतसत्त्वाभावानुमानमेवसद्रूपत्वाभावेपिपर्यवस्यतीतिनसद्रूपत्वेनार्थांतरमितिनिरस्तं । तर्कस्यप्रमितसद्रूपत्वानपवादकत्वात् । अन्यथासत्वाभावानुमानस्यलाघवेनप्रातीतिकसत्वाभावेपिपर्यवसानेनजगच्छून्यमेवस्यादितिसाधुक्तंमर्थांतराच्चेति । सदसदुभयान्योन्याभावस्यसाध्यतायांतुव्याहतिसाध्यवैकल्यादिर्दोषोस्त्येव ॥ त्रयोदशेति ॥ अभावमनंत

र्भान्यत्रयोदशत्वंवोध्यं ॥ कथंचिदिति ॥ अनुमितिविषयस्योभयाभावरूपस्यसाध्यस्यैकस्मिन्नधिकरणेप्रसिद्ध्यभावेपिप्रत्येका
धिकरणेउभयाभावप्रसिद्धिरस्तीत्यर्थः ॥ असत्त्वात्यंताभावांशइति ॥ यथापक्षतावच्छेदकनानात्वेक्कचिदधिकरणेपक्षताव
च्छेदकावच्छेदेनसाध्यसिद्धेर्जातत्वाच्चत्पक्षांशेसिद्धसाधनंतथासाध्यतावच्छेदकनानात्वेपिसिद्धसाध्यांशेसिद्धसाधनमेव । सां
ध्यतावच्छेदकावच्छिन्नस्यपक्षतावच्छेदकावच्छेदेनसिद्धिरूपस्यसिद्धसाधनवीजस्योभयत्रापितुल्यत्वादित्यर्थः । ननुसाध्यताव
च्छेदकनानात्वेप्युभयाभावगोचरसमूहालंवनरूपैकानुमित्युद्देशे नांशतःसिद्धसाधनं । असत्त्वात्यंताभावांशेप्युद्देश्यायाःसमू
हालंवनरूपायाःसिद्धेरजातत्वात् । अनुमितिद्वयोद्देशेचसिद्धसाधनमेव । नांशतःसिद्धसाधनंनचैवंपक्षतावच्छेदकनानात्वेपि
उक्तविधयानांशतःसिद्धसाधनमितिवाच्यं । इष्टापत्तिरितिचेत्सत्यं । समूहालंवनानुमित्युद्देश्यत्वएवतस्याअसत्वाभवांशेपक्षता
वच्छेदकावच्छेदेनसिद्धंयत्साध्यतावच्छेकावच्छिन्नंसाध्यंतद्विषयसिद्धिरूपत्वेनसिद्धसाधनत्वाभिधानमित्यदोषः । ननुअपेक्षा
बुद्धिविषयत्वादेःव्यासज्यवृत्तिधर्मस्यसाध्यतावच्छेदकतायांनांशतस्सिद्धसाधनं । अतएवानुपदमेववक्ष्यतिसाध्यतावच्छेदकै
क्यान्नांशेसिद्धसाधनमितीतिचेत् । सत्यं । तत्रव्याहत्यादिरेवदोषोवोध्यः । ननुसाध्यकोटिनिविष्टस्यासत्त्वात्यंताभावस्यपक्षे
सिद्धौयदिसिद्धसाधनंतदापृथिवीतरभिन्नेत्यत्रत्रयोदशान्योन्याभावानामपिघटोनजलादिरितिप्रतीत्याघटादौसिद्धेःसुतरांसिद्ध
साधनंस्यादित्यतआह ॥ पृथिवीति ॥ पृथिवीत्वोपहितइति ॥ घटादिभिन्नपृथिवीत्वोपहितइत्यर्थः । यथाश्रुतेत्रयोदशा
न्योन्याभावानांपृथिवीत्वसामानाधिकरण्यस्यापिघटादौसिद्ध्योक्तदोषतादवस्थ्यात् ॥ दृष्टांतस्येति ॥ असत्त्वाभावस्यसाध्य

तावच्छेदकावच्छिन्नस्य शुक्तिरूप्यादावभावादित्यर्थः । ननुबाध्यत्वरूपासत्त्वव्यतिरेकस्यतत्राभावेपिक्वचिदप्युपाधौसत्त्वेनप्रतीयमानत्वानधिकरणत्वरूपासत्त्वव्यतिरेकोरूप्यादावप्यस्त्येव । तस्यतत्त्वेनप्रतीयमानत्वात् । मैवं । सत्त्वेनप्रतीयमानत्वरूपस्यासत्त्वव्यतिरेकस्यसाधनंव्यर्थमित्युक्तत्वेनबाध्यत्वरूपासत्त्वव्यतिरेकस्यैवसाधयितुमुचितत्वेनसाध्यवैकल्यापरिहारात् । नन्वभावद्वयस्यसाध्यतायांरूप्येसत्त्वाभावस्यसत्त्वेपि असत्त्वाभावाभावेनयदिसाध्यवैकल्यंतर्हिपृथिवीतरभिन्नेत्यत्रजलेतेजःप्रभृतिद्वादशभेदानांसत्त्वेपिजलभेदस्याभावेनसाध्यवैकल्यंएवंतेजःप्रभृतिष्वपिस्वस्वेतरप्रतियोगिकद्वादशभेदसत्त्वेपिस्वस्वभेदाभावात्साध्यवैकल्यमेवस्यादित्याशंक्याह ॥ पृथिवीत्वहेतुस्तुव्यतिरेकीति ॥ तथाचनंतत्रदृष्टांतापेक्षेतिनतत्रयुक्तसाध्यवैकल्यादिदोषावकाशइतिभावः । ननुपृथिवीत्वहेतौदृष्टांतानपेक्षणेसाध्यप्रसिद्ध्यभावेनसाध्यव्यतिरेकनिरूपणं नस्यादित्यतआह ॥ त्रयोदशेति ॥ साध्यतावच्छेदकावच्छिन्नानांत्रयोदशान्योन्याभावानांस्वस्वाधिकरणेविद्यमानानांज्ञानेसतिसाध्यव्यतिरेकनिरूपणंस्यादित्यर्थः । नन्वेवमेकैकान्योन्याभावाधिकरणस्यापिसाध्यतावच्छेदकावच्छिन्नसाध्याधिकरणतयातद्व्यावृत्तस्यहेतोरसाधारण्यंस्यादित्याशंकापरिहारायोक्तं ॥ समूहालंबनैकज्ञानोपारूढत्वमात्रेणेति ॥ एकैकान्योन्याभावस्यनसाध्यतावच्छेदकावच्छिन्नत्वं । साध्यतावच्छेदकस्यसमूहालंबनैकज्ञानोपारूढत्वस्यव्यासज्यवृत्तेर्धर्मस्यप्रत्येकाभावेष्वपर्याप्तेः । तथाचप्रत्येकाभावाधिकरणस्यनसपक्षत्वंसाध्यतावच्छेदकावच्छिन्नसाध्यरहितत्वात् । तदुक्तं । तावदभावयोगीह्यत्रसपक्षोभवति नतुतदेकदेशकतिपयाभाववान् । साध्यतायास्तावतिपर्याप्तेरिति । सत्त्वात्यंताभावादेस्तुप्रत्येकंसाध्यतावच्छेदकावच्छिन्नत्वेपि

नासाधारण्यं दृष्टांतस्यसत्त्वादितिभावः । नन्वतएवेत्यतिदिष्टाव्याहतिरनुपपन्ना । एकत्रविरुद्धोभयप्रतियोगिकात्यंताभावसाधनेहिसास्यात् । नचात्रोभयात्यंताभावौसाध्यावित्यतआह ॥ [२५।४] अव्याहतेरिति ॥ उभयात्यंताभावयोस्सामानाधिकरण्योक्तावव्याहतिवत् उभयात्यंताभावयोःसामानाधिकरण्येनसंबंधेनविशेषणविशेष्यभावोक्तावपिव्याहतिरित्यर्थः ॥ [२५।४] किंचेति ॥ यद्यपिनांशतःसिद्धसाधनंनापिव्यर्थविशेष्यत्वं तथाप्यप्रसिद्धविशेषणत्वमित्यन्वयः ॥ [२५।४] पक्षतावच्छेदकनानात्वेनेति ॥ यद्यपिपक्षतावच्छेदकनानात्वेप्युक्तविधयानांशतःसिद्धसाधनं । तथापिमतांतरेणेदंबोध्यं ॥ [२५।५] पक्षतावच्छेदकैक्यादिति ॥ पक्षतावच्छेदकैक्येऽशतःसिद्धसाधनंनभवत्येव । तथाहिपक्षतावच्छेदकधर्मसामानाधिकरण्येनसाध्यसिद्धौहिसिद्धसाधनमेवनांशतस्सिद्धसाधनंतादृशसिद्धेरेवानुमानसाध्यत्वात् । तदसिद्धौचतच्छंकैवनास्ति । नहिपक्षेसाध्यसिद्धिमात्रेणतत् । किंतुपक्षतावच्छेदकधर्मसामानाधिकरण्येनसाध्यसिद्ध्या । अन्यथाधूमवत्त्वेनपर्वतेवह्निनिश्चयेपिसिद्धसाधनप्रसंगादित्यर्थः ॥ [२५।६] साध्यतावच्छेदकैक्यादिति ॥ साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धेरभावादित्यर्थः ॥ नापिव्यर्थविशेष्यत्वमिति ॥ यथेश्वरानुमानेकृतिमज्जन्यमितिसाध्यकरणमात्रेणापीश्वरसिद्धावपिचिकीर्षादेर्विशेषणस्यनवैयर्थ्यं व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वात् । यथाभेदाभेदंवादिनातार्किकंप्रतिप्रयुक्तेभिन्नाभिन्नमितिसाध्येभिन्नत्वविशेषणस्यतार्किकेणांगीकृतत्वेपि नवैयर्थ्यंतत्प्रतीतेरुद्देश्यत्वात् । तथेहापिसद्विलक्षणत्वेसत्यसद्विलक्षणत्वमितिप्रतीतेरुद्देश्यत्वात् नव्यर्थविशेष्यत्वमित्यर्थः ॥ [२६।२] समानाधिकृतत्वादिति ॥ शुक्लःपटइतिसामानाधिकरण्यवत्त्वादित्यर्थः ॥ [२६।२] व्यापकविशेषणानामिति ॥ नचव्यतिरेकव्याप्तौसाध्याभावस्यव्या

प्यतयातत्रविशेषणंव्यर्थमितिवाच्यं । विशिष्टाविशिष्टभेदेनैकस्मिन्व्याप्यतावच्छेदकद्वयप्रवेशाभावेनतद्बीजाभावादित्यर्थः । नन्वीश्वरानुमानेज्ञानादिघटितंसाध्यत्रयमेवाभिप्रेतमितिनतद्दृष्टांतः भेदाभेदानुमानेत्वंप्रयोजकत्वपरिहारायभिन्नत्वविशेषणस्योद्देश्यतेत्याशंक्यप्रकृतेपितथेत्याह ॥ [२६।४] यदिचेति ॥ गुणादिकंगुण्यादिनाऽभिन्नंसमानाधिकृतत्वादित्येवकृतेअभेदरूपसाध्यवत्यपिघटकलशादावविद्यमानस्यसमानाधिकृतत्वस्याभेदरूपसाध्यंप्रत्यप्रयोजकत्वंस्यात् । तदुक्तं "तस्मिन्सत्यभवतस्तेनविनापिभवतस्तदप्रयोजकत्वा" दिति । अतोप्रयोजकत्वमित्यर्थः ॥ [२६।५] तर्हीति ॥ सत्त्वाभावमात्रस्यसाध्यत्वेसत्त्वाभाववतितुच्छेअविद्यमानस्यदृश्यत्वस्याप्यप्रयोजकत्वंमाभूदित्यसत्त्वाभावोपिसाध्यकोटौनिवेशितइतिनव्यर्थविशेष्यत्वमित्यर्थः ॥ [२६।५] स्वममिति ॥ तुच्छेदृश्यत्वाभाववतिविशिष्टंसाध्यमपिनास्तीतिनाप्रयोजकत्वमित्यर्थः ॥ [२६।५] तथाप्यप्रसिद्धविशेषणत्वमिति ॥ विशिष्टसाध्यस्यासत्यसतिचाप्रसिद्धत्वादित्यर्थः । नचशुक्तिरूप्यएवोभयाभावप्रसिद्धिरस्तीतिवाच्यं । तत्रसत्त्वेनप्रतीयमानत्वानधिकरणत्वरूपासत्त्वस्याभावेविद्यमानेपिबाध्यत्वरूपस्यासत्त्वस्यव्यतिरेकोनास्तीतिप्रागवोचाम । ननुयदिसत्त्वाभावविशेषितासत्त्वाभावरूपविशिष्टसाध्याप्रसिद्ध्याप्रसिद्धविशेषणत्वं तदाजलादिद्वादशान्योन्याभावविशेषितसमवायान्योन्याभावरूपविशिष्टसाध्यस्याप्यप्रसिद्धत्वेनप्रत्येकान्योन्याभावानांप्रसिद्ध्यासाध्यप्रसिद्ध्युपवर्णनंविरुध्येतेत्यतआह ॥ [२७।१] पृथिवीति ॥ पृथिवीतरभिन्नेत्यत्रजलादिद्वादशभेदविशेषितसमवायभेदरूपंविशिष्टंनसाध्यं नवात्रयोदशभेदानामैकाधिकरण्यंसाध्यतावच्छेदकं येनाप्रसिद्धवि

शेषणत्वंस्यात् । किंतुस्वस्वाधिकरणेविद्यमानानांत्रयोदशान्योन्याभावानामपेक्षाबुद्धिविषयत्वसमूहालंबनैकज्ञानोपारूढत्वादि रूपव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यताकानांसाध्यत्वं । तथाचनाप्रसिद्धिर्नवाऽसाधारण्यमित्युक्तमितिभावः । ननुसत्त्वाभा वासत्त्वाभावयोर्विशेषणविशेष्ययोःप्रसिद्ध्यातद्विशिष्टमपिप्रसिद्धमेव । विशिष्टस्यविशेषणविशेष्याभ्यामनतिरेकात् । अन्यथातत्क्षणिकत्वापत्तेरित्यतआह ॥ अन्यथेति ॥ प्रत्येकप्रसिद्ध्यायदिविशिष्टप्रसिद्धिस्तदेत्यर्थः । विशिष्टंतुत्वन्मतेप्यतिरिक्तमेवेतिभा वः । सर्वस्मिन्प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वमितिद्वितीयपक्षंदूषयति ॥ नद्वितीयइति ॥ अद्वैतहानेरिति ॥ उपल क्षणमेतत् । तवमतेरूप्यमिथ्यात्वस्यव्यावहारिकत्वपक्षेतात्विकात्यंताभावप्रतियोगित्वस्यरूप्येऽभावात्साध्यवैकल्यंच । रूप्यमि थ्यात्वस्यतात्विकत्वेतद्बोधकस्यप्रत्यक्षादेःतत्वावेदकत्वापत्तिरितिचबोध्यं । ननुप्रपंचनिषेधाधिकरणीभूतब्रह्ममात्रत्वात्प्रपंचनिषेध स्यतात्विकत्वेपिनाद्वैतहानिकरत्वंइतिचेत् । मैवं । प्रपंचभ्रमार्थमधिष्ठानब्रह्मस्फुरणस्यावश्यकतयाब्रह्माभिन्नप्रपंचनिषेधस्यापिप्र काशेप्रपंचभ्रमासंभवात् । नचेदंत्वाधिष्ठानप्रकाशेपिप्रपंचनिषेधत्वादिना नप्रकाशइतिवाच्यं । तवमतेप्रपंचनिषेधत्वादेरपिब्रह्म मात्रत्वात् । अन्यथानिर्विशेषत्वहानिप्रसंगादिति ॥ सिद्धसाधनादिति ॥ अत्रसाध्यवैकल्यमपिबोध्यं ॥ व्यावहारिकत्वेपी ति ॥ घटादितुल्यतयाप्रपंचनिषेधस्यापिबाध्यत्वं । अन्यथादृश्यत्वादेस्तत्रैवव्यभिचारःस्यादित्यर्थः । अत्रवदंति । "सि०अ तात्विकएवनिषेधोयंअतात्विकत्वेपिंनप्रातिभासिकःकिंतुव्यावहारिकः । नचतर्हिनिषेधस्यबाध्यत्वेनतात्विकसत्त्वाविरोधित्वाद र्थांतरमितिवाच्यं । स्वाप्नार्थस्यस्वाप्ननिषेधेनबाधदर्शनान्निषेधस्यबाध्यत्वंपारमार्थिकसत्त्वाविरोधित्वेनतंत्रं । किंतुनिषेध्यापेक्ष

यान्यूनसत्ताकत्वं । प्रकृतेतुल्यसत्ताकत्वात्कथंनविरोधित्वं । नचनिषेधस्यनिषेधेप्रतियोगिसत्त्वापत्तिरितिवाच्यं । तत्रहिनिषेधनिषेधेप्रतियोगिसत्त्वमायाति । यत्रनिषेधस्यनिषेधबुद्ध्याप्रतियोगिसत्त्वंव्यवस्थाप्यतेननिषेधमात्रेंनिषिद्ध्यंते । यथारजतेनेदंरजतमितिज्ञानानंतरमिदंनारजतमितिज्ञानेनरजतंव्यवस्थाप्यते । यत्रतुप्रतियोगिनिषेधयोरपिनिषेधस्तत्रनप्रतियोगिसत्त्वं । यथाध्वंससमयेप्रागभावप्रतियोगिनोरुभयोरपिनिषेधे । एवंचप्रकृतेपिनिषेधबाधकेनप्रतियोगिनःप्रपंचस्यतन्निषेधस्यचबाधनान्निषेधस्यबाध्यत्वेपिनप्रपंचस्यतात्विकत्वं । उभयोरपिनिषेध्यतावच्छेदकस्यदृश्यत्वादेस्तुल्यत्वादिति" । अत्रब्रूमः । स्वप्नदृष्टार्थभावस्यजाग्रत्यबाधानुभवान्नतस्यबाध्यत्वं । नहिस्वप्नेदृष्टमात्रेणबाध्यत्वं । आत्मादेरपिबाधापत्तेः । यच्चोक्तंप्रकृतेप्रतियोगिनिषेधयोस्तुल्यसत्ताकत्वमिति । तदपि न । निषेधस्यबाध्यत्वेप्रतियोगितदभावयोस्तुल्यसत्तायाएवासिद्धेः । यच्चोक्तंनिषेधस्यनिषेधेपिनप्रतियोगिनःसत्त्वापत्तिरिति । तदपिन । त्रैकालिकनिषेधस्यबाध्यत्वेप्रतियोगिसत्त्वापत्तेर्दुर्वारत्वात् । यथोदाहृतेरजतादौ । यत्रहिप्रतियोगिसत्त्वंविनानिषेधस्यनिषेधोनुपपन्नस्तत्रनिषेधस्यनिषेधेप्रतियोगिनःसत्त्वं । तृतीयप्रकाराभावात् । प्रागभावादौतुनैवमितिनप्रागभावाभावेप्रतियोगिनःसत्त्वं । तृतीयप्रकारस्यध्वंसस्यापिसंभवात् । तस्माद्युक्तमत्यंताभावस्यबाध्यत्वेप्रतियोगिनःपारमार्थिकत्वापत्तिरिति ॥ अर्थांतरादिति ॥ व्यावहारिकप्रतियोगिमति व्यावहारिकतदत्यंताभावसाधनेबाधोपिबोध्यः । तवमतेजलादिसाधारणाग्न्यनौष्ण्यानुमानएवबाधः । अन्यथात्वग्न्यनौष्ण्यानुमानमप्यद्वैतस्यैवनामांतरमित्युक्तत्वादितिभावः ॥अद्वैतश्रुतेरिति ॥ नचब्रह्मभिन्नंप्रपंचतन्निषेधादिकमतात्विकत्वेनबोधयंत्याःश्रुतेर्नाप्रामाण्यमितिवा

च्यं । प्रतियोगितदभावयोरतात्त्विकबोधनस्यविरुद्धत्वात् । वस्तुतोमानस्यस्वार्थसत्तानिश्चायकत्वेनजगदभावग्राहकमानस्यापितथात्वात्तदभावस्यबाध्यत्वांगीकारेश्रुतेरतत्वावेदकत्वंदुर्वारं ॥ तत्प्रतियोगिनइति ॥ व्यावहारिकात्यंताभावप्रतियोगिन इत्यर्थः । अत्रचान्वयदृष्टांताभावेपिशुक्तिरूप्यादिरेवव्यतिरेकदृष्टांतः । रूप्यादौपारमार्थिकत्वात्यंताभाववतिव्यावहारिकात्यंताभावप्रतियोगित्वस्यसत्त्वेनव्यतिरेकव्याप्तौव्यभिचारवारणायाप्रातिभासिकस्येतिविशेषणं । तदर्थश्चोभयसिद्धमिथ्यात्वकभिन्नत्वं । मिथ्यात्वंचसद्विविक्तत्वं । अतस्तुच्छेपिनव्यभिचारः । नापिपक्षेहेत्वसिद्धिः । रूप्यादौतूक्ताप्रातिभासिकत्वरूपविशेषणविरहप्रयुक्तोविशिष्टव्यतिरेकोस्त्येवेतिनव्यभिचारइत्यर्थः । नचसाध्यवतिब्रह्मणिहेतोरभावादसाधारण्यमितिवाच्यं । वास्तवासाधारण्यस्याप्रतिबंधकत्वात् । नचसाध्यवद्व्यावृत्तत्वमात्रेणासाधारणत्वं । किंतुसर्वनिश्चितसाध्यवद्व्यावृत्तत्वेनहेतोर्ज्ञानात् । ब्रह्मणस्त्वन्मतेऽज्ञेयत्वेनसाध्यवत्तयाऽनिश्चयादिति ॥ किंचेति ॥ वायौरूपात्यंताभाववत्स्वरूपेणैवब्रह्मणिप्रपंचस्यपुरोवर्तिनिचरजतस्यात्यंताभावोवाघटेवाच्यत्वस्यसत्त्वेपिसमवेतत्वेनवाच्यत्वात्यंताभाववत्पारमार्थिकत्वेनव्यधिकरणेनधर्मेणतत्रतस्यात्यंताभावोवाप्रपंचस्यरजतस्यवामिथ्यात्वमितिविकल्पार्थः । ननुप्रपंचस्यरजतादेश्चस्वरूपानुपमर्देननिषेधइत्यनुपपन्नं । मिथ्यावस्तुनःस्वरूपस्यैवाभावात् । अतउक्तमसद्विलक्षणेति ॥ असतोनिरुपाख्यस्यपरंस्वरूपंनास्ति । प्रपंचोरूप्यंचासद्विलक्षण । अतस्तस्यकिंचित्स्वरूपमस्त्येवेतिभावः ॥ श्रुत्यादिसिद्धोत्पत्त्यादिकस्येति ॥ आद्यंविशेषणद्वयंवियदादेस्तृतीयचतुर्थेवियदादेः रूप्यादेश्च । असद्विलक्षणरूपेणेतीत्थंभूतलक्षणेतृतीया । श्रुत्यादिसिद्धोत्पत्तिकस्यधीकालेविद्यमानस्यासद्विलक्षणस्वरूपस्यत्रै

कालिकनिषेधोनभवति । उत्पत्त्याद्यसंभवापातादित्यर्थः ॥ [२७।८]त्रैकालिकेति ॥ तथांचापसिद्धांतंइत्यर्थः । अत्रवदंति । [१]“सि० स्वरूपेणैवत्रैकालिकनिषेधप्रतियोगित्वंप्रपंचेरूप्येचांगीकुर्मः । तथाहि । शुक्तौरजंतभ्रमानंतरमधिष्ठानतत्त्वसाक्षात्कारेणरूप्यंनास्तिनासीन्नभविष्यतीतिस्वरूपेणैवनेहनानेतिश्रुत्याप्रपंचस्यस्वरूपेणैवनिषेधःप्रतीयते । नचतत्रलौकिकपरमार्थरजतमेवंस्वरूपेणनिषेधप्रतियोगीतिवाच्यं । भ्रमबाधयोर्वैयधिकरण्यापत्तेः । अप्रसक्तप्रतिषेधापत्तेश्च । नचतर्ह्युत्पत्त्याद्यसंभवः । नह्यनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वेतंत्रं । परैरनिषिद्धस्वरूपत्वेनांगीकृतस्यापिवियदादेरुत्पत्त्याद्यनंगीकारात् । किंतुवस्तुस्वभावादिकमन्यदेवकिंचित्प्रयोजकंवक्तव्यं । तस्यमयापिकल्पितस्यस्वीकारात् । नचत्रैकालिकनिषेधंप्रतिस्वरूपेणापणस्थरूप्यंपारमार्थिकत्वाकारेणप्रातिभासिकंवाप्रतियोगीतिमतहानिःस्यादितिवाच्यं” । अस्यवचसोलौकिकपारमार्थिकरजततादात्म्येनप्रतीतंप्रातिभासिकमेवरजतंप्रतियोगीत्यर्थः । तत्रस्वरूपेणपारमार्थिकत्वेनवेत्यनास्थायांवाशब्दः । एतावदुक्तिश्चपुरोवर्तितादात्म्येनैवरजंतंप्रतीयतइतिमतनिरासार्थं । लौकिकपारमार्थिकरजततादात्म्येनापिप्रतीयतइतिप्रतिपादयितुंवा । तदुक्तंतत्वप्रदीपिकायां । [२]“तस्माल्लौकिकपरमार्थरजतमेवनेदंरजंतमितिनिषेधप्रतियोगीतिपूर्वाचार्याणांवाचोयुक्तिरपिपुरोवर्तिनिरजतार्थिनःप्रवृत्तिदर्शनाल्लौकिकपरमार्थरजतत्वेनापरोक्षतयाप्रतीतस्यकालत्रयेपिलौकिकपरमार्थरजतमिदंनभवतीतिनिषेधप्रतियोगितामंगीकृत्यनेतव्ये” ति । अयमभिप्रायः । एकविभक्त्यंतपदोपस्थापितेधर्मिणिप्रतियोगिनिचनञोन्योन्याभावबोधकत्वनियमस्यव्युत्पत्तिबलसिद्धत्वाद्घटःपटोनभवतीतिवाक्यवदिदंरजतंनभवतीतिवाक्यस्यान्योन्याभावबोधकत्वेस्थिते अ

भिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेर्नेदं रजतमितिवाक्याभिलप्यप्रतीतेरन्योन्याभावविषयत्वमेव । तथाचइदंशब्द निर्दिष्टपुरोवर्तिप्रातीतिकरजतेरजतंशब्दनिर्दिष्टव्यावहारिकरजतान्योन्याभावप्रतीतेरार्थिकंमिथ्यात्वं । नात्ररजतमितिवाक्या भिलप्यमानाप्रतीतिरत्यंताभावविषया । भिन्नविभक्त्यंतपदोपस्थापितयोरेवधर्मिप्रतियोगिनोर्नञःसंसर्गाभावबोधकत्वनियमात् । साचपुरोवर्तिप्रतीतस्यैवव्यावहारिकमत्यंताभावंविषयीकरोतीतिकंठोक्तमेवमिथ्यात्वं । अतोनापसिद्धांतोनान्यथाख्यात्यापत्तिर्नवाग्रंथविरोधइति" । अत्रोच्यते । प्रातिभासिकरजतस्यलौकिकपरमार्थरजततादात्म्येनत्वन्मतेप्रतीतिर्नयुक्ता । प्रातिभासिकरूप्यस्यलौकिकपारमार्थिकरजताज्ञानाकार्यत्वात् । प्रातिभासिकस्यस्वोपादानाज्ञाननिवर्तकज्ञानविषयेणैवतादात्म्य प्रतीतेश्च । नहिपुरोवर्तितत्वाज्ञानेपिलौकिकपरमार्थरजततत्वज्ञानमात्रात्प्रातिभासिकरजतनिवृत्तिरस्ति । शुक्तःपटइतितुशुक्ल पटयोरेकाज्ञानकार्यत्वात् एकत्राध्यासाच्च । नचैवंघटपटयोरपितादात्म्यप्रतीत्यापत्तिः । तादृशप्रतीतौसत्यामेतस्यनिमित्तत्वं कल्प्यते । आरोपेसतिनिमित्तानुसरणंनतुनिमित्तमस्तीत्यारोपइतिन्यायात् । लौकिकपरमार्थरजतसन्निकर्षादिरूपसामग्रीविरहाच्च । अतएवत्वयाऽन्यथाख्यातिःप्रत्याख्याता । तस्माल्लौकिकपरमार्थरजतमेवेदंपदास्पदेस्वरूपेणनिषिध्यतइत्येवत्वत्प्राचामाचार्याणांवाचामर्थः । तत्रभ्रमबाधवैयधिकरण्यादिदोषस्तुदंडापूपन्यायेनममानुकूलएव । तस्माद्दुष्परिहरोपसिद्धांतादिदोषइति । रूप्यस्यवियदादेश्चस्वरूपेणत्रैकालिकनिषेधप्रतियोगित्वेदूषणांतरमाह ॥ अत्यंतासत्त्वापाताच्चेति ॥ अन्यथेति ॥ मिथ्यात्वानुमानकालेपटादेस्तंत्वन्यत्रासत्त्वासंमतौपटादेस्तंतुभिन्नदेशेसत्त्वापत्त्याअर्थांतरतास्यादित्यर्थः । पटादेस्तंत्वन्यत्रसत्ता

त्वयापिनांगीक्रियतेइत्याह ॥ नहीति ॥ रूप्यादेरसद्वैलक्षण्यनिरासायासत्त्वंविविनक्ति ॥ नचतेषामिति ॥ निरुपाख्यत्वंशब्दशक्त्यविषयत्वंप्रमित्यविषयत्वंवा । आद्येआह ॥ निरुपाख्येति ॥ तथाचासत्त्वेनसंप्रतिपन्नस्याप्यसत्त्वंनस्यादित्यर्थः । द्वितीयेदोषमाह ॥ असतइति ॥ असद्वैलक्षण्यज्ञानार्थमसतःप्रतियोगिनोऽवश्यंज्ञेयत्वात् । असत्प्रतीतिंनिरासार्थमसत्प्रतीतेःप्रसक्त्यपेक्षा । साचासदवच्छिन्नप्रतीतिंविषयैव । प्रेक्षावत्कृतस्यशब्दप्रयोगस्यशब्दार्थज्ञानपूर्वकत्वात् । असत्पदप्रयोगार्थमसतोज्ञानस्यावश्यकत्वादित्यर्थः ॥ जगतीति ॥ शून्यवाद्यनंगीकृतस्यासद्वैलक्षण्यस्यरूप्यादौत्वयास्वीकार्यत्वात् । अन्यथारूप्यादौजगतिंचासद्वैलक्षण्यप्रतिपादनफलंनस्यादित्यर्थः ॥ त्वयापीति ॥ अन्यथाआपाद्यापादकयोर्वैशिष्ट्यंस्यादित्यर्थः ॥ ब्रह्मणीति ॥ सत्त्वासत्त्वयोःपरस्परविरहरूपत्वेनैवप्रतीतेरित्यर्थः ॥ अन्यथेति ॥ सत्त्वासत्त्वयोःपरस्परविरहरूपत्वेस्थितेसत्त्वेनाप्रतीयमानत्वमसत्त्वंचेत्तदभावःसत्त्वेनप्रतीयमानत्वंसत्त्वंब्रह्मणिस्यादित्यर्थः ॥ येनपुंसेति ॥ नह्यत्रजबगडदशित्यादिनिरर्थकेष्विवपदार्थधीरेववाकुंडमजाजिनमित्याद्यपार्थकेष्विवान्वयधीर्वानास्ति । विपरीतबोधकेषुयोग्यताभावेपियोग्यताभ्रमेणाकांक्षाज्ञानेनचवाक्यार्थज्ञानोत्पत्तेरनुभवात् । अन्यथाप्रवृत्त्यादेरयोगात् । तथाचसत्त्वेनाप्रतीयमानत्वंशशशृंगादावसिद्धमित्यर्थः । ननुशशशृंगमस्तीतिवाक्याभासाच्छशेअनिर्वचनीयशृंगविषयकोभ्रमउत्पद्यते नत्वसद्विषयकःसंइत्यतआह ॥ त्वन्मतेपीति ॥ अनिर्वाच्यवादिनस्तवमतेपितत्राध्यस्तस्यास्तित्वस्यानिर्वाच्यत्वेपिशशशृंगमसदितिवाक्यइवशशशृंगमस्तीतिवाक्येपिशशशृंगशब्देनासतएवप्रतीतेरित्यर्थः । ननुशशशृंगादिशब्दात्विकल्पमात्रंजायते । तदुक्तं । "शब्दज्ञानानुपातीवस्तुशून्यो

विकल्प" इति । एवंचशशश्रृंगादिशब्दान्नासतःप्रतीतिरित्यतआह ॥ वक्ष्यतेचैतदिति ॥ विकल्पस्येच्छादिवत् ज्ञानान्यवृ
त्त्यंतरत्वेअनुभवविरोधः । प्रवृत्त्यांद्ययोगश्च । नहिशशश्रृंगस्यासत्त्वाज्ञानदशायांतदस्तित्वज्ञानस्यगोश्रृंगास्तित्वज्ञानात्मात्र
यापिविशेषोनुभूयते । असतिवृत्त्यंतरत्वज्ज्ञानस्यैवोपपत्तेश्च । अन्यथाशुक्तिरूप्यादेरपिविकल्पमात्रंनतुप्रतीतिरितिस्यात् । विं
कल्पस्यज्ञानविशेषत्वेत्विष्टापत्तिः । वस्तुशून्यइतिचकोऽर्थः । किंमप्यनुल्लिखन्निनितिवाऽसदेवोल्लिखन्निनितिवा । आद्येअनुभववि
रोधः । व्यवहाराद्यनुपपत्तिश्च । नह्ययंघटादिवत्किंमप्यनुल्लिखन्ननुभूयते । द्वितीयेसिद्धंनःसमीहितं । इत्यादिवक्ष्यतइत्यर्थः ॥
तच्चैकइति ॥ असदासीदित्यसत्प्रतीतेरनुवादमुखेनोक्तेरित्यर्थः ॥ अनिर्वाच्यत्वस्येति ॥ असद्विलक्षणत्वात्तस्येत्यर्थः ॥
लाघवेनेति ॥ सदन्यत्वमेवासत्त्वंनत्वनिर्वाच्यभिन्नत्वमपितत्रप्रवेश्यं । नचानिर्वाच्यस्यासत्त्वाभावार्थंतद्विशेषणं । स्वरूपेण
निषेधेतस्यासत्त्वापरिहारादित्यर्थः ॥ अनिर्वाच्यस्यापीति ॥ तथाचासंभवइत्यर्थः ॥ निस्स्वरूपत्वस्येति ॥ मिथ्याभूतस्य
संस्वरूपत्वेतस्यस्वात्यंताभावसामानाधिकरण्यायोगादित्यर्थः ॥ नचमिथ्याभूतमिति ॥ तथाचमिथ्याभूतस्यस्वरूपेणैवस्वा
धिकरणनिष्ठात्यंताभावप्रतियोगित्वंनविरुद्धमित्यर्थः ॥ स्वदेशकालयोरिति ॥ प्रतियोगिस्वरूपसमानाधिकरणस्यात्यंताभा
वत्वंपारिभाषिकंस्यात् । तथाचतादृशाभावप्रतियोगित्वेपिस्वरूपेणाभावप्रतियोगित्वंनसिद्ध्येदित्यतस्तत्सिद्ध्यर्थंतत्ररजतादिस्व
रूपंनास्तीतिवाच्यं । एवंचासत्त्वापत्तिर्दुर्वारेत्यर्थः ॥ अन्यथेति ॥ निषेधाधिकरणेपिप्रतियोगिनःसत्त्वंइत्यर्थः ॥ अतंतुच्छव
पीति ॥ अत्यंताभावस्यप्रतियोगिनादैशिकोविरोधःसर्वसिद्धोनस्यादित्यर्थः ॥ प्रागभावादीति ॥ प्रागभावादेःप्रतियोगिना

कालिकोविरोधोनस्यादित्यर्थः ॥ [३३।२] तुच्छेपीति ॥ स्वात्यंताभावाधिकरणेपिस्वस्यप्रतीतिमात्रेणस्वरूपत्वंचेत्तर्हितुच्छेपिस्वात्यंता भावसामानाधिकरण्यसहिष्णुस्वरूपंस्यादित्यर्थः । सर्वस्मिन्नपिप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वमित्यस्यात्यंतासच्छब्दे नतुल्यार्थत्वमपीत्याह ॥ [३३।३] तत्रतदानीमिति ॥ [३३।५] नचेति ॥ मिथ्याभूतस्यस्वरूपेणनिषेधइतिपक्षेतदभावोपिनिष्प्रतियोगिकएव नतुसप्रतियोगिकः । प्रतियोगिस्वरूपस्यैवाभावात् । नापिसदासर्वत्रसद्वैलक्षण्यमात्रं । स्वरूपेणैवप्रतिषेधादित्यर्थः ॥ [३३।१] असत इति ॥ असतआत्यंतिकनिषेधप्रतियोगित्वंनास्ति । मिथ्याभूतस्यतुतदस्ति । तथाचतत्कृतमेवमिथ्याभूतस्यासद्वैलक्षण्यमि त्यर्थः ॥ [३३।१] असत्त्वस्येति ॥ असत्त्वंनात्यंताभावप्रतियोगि । असत्त्वादित्यत्रहेतूकृतमसत्त्वं अत्यंताभावप्रतियोगित्वरूपमुक्त साध्येनविरुद्धमित्यर्थः । ननुहेतूकृतमसत्त्वंनात्यंताभावप्रतियोगित्वं किंतुसदनिर्वाच्यभिन्नत्वमतोनविरोधइत्यतआह ॥ [३३।२] अस तोसत्त्ववदिति ॥ असत्त्वादीनांधर्मिसत्तानिरपेक्षाणांयथाऽसतिविद्यमानता तथोक्तनिषेधप्रतियोगित्वस्यापीत्यर्थः । ननुध र्मिसत्तानपेक्षाणांधर्माणांधर्मिणंविनाप्यवस्थानमस्तु । अत्यंताभावप्रतियोगित्वंतुनतथेत्याशंक्याह ॥ [३३।४] प्रागभावादीति ॥ [३३।४] तत्प्र तियोगित्वेति ॥ विद्यमानंप्रागभावादिप्रतियोगित्वेत्यर्थः ॥ [३३।४] प्रतियोगित्वस्येति ॥ अभावप्रतियोगित्वस्येत्यर्थः । तथाचा भावप्रतियोगित्वाविशेषाद्यथाविद्यमानंप्रागभावादिप्रतियोगित्वंधर्मिसत्तानपेक्षंतथात्यंताभावप्रतियोगित्वमपीत्यर्थः । रूपादि वदितिव्यतिरेकदृष्टांतः । ननुविद्यमानप्रागभावादिप्रतियोगित्वंनधर्मिसत्तानपेक्षंतद्धर्मिणोघटादेःप्रागभावादूर्ध्वंप्रध्वंसात्प्राक्स त्त्वादित्यतआह ॥ [३३।५] कालांतरइति ॥ यस्मिन्कालेविद्यमानप्रागभावादिप्रतियोगित्वंधर्मोवर्ततेतस्मिन्कालेतद्धर्मीनास्ति ।

अन्यदातुसत्यपिधर्मिणिविद्यमानप्रागभावादिप्रतियोगित्वरूपधर्मएवनास्ति । अतस्तादृशधर्मस्यधर्मिणंविनैवावस्थानमित्यर्थः ।
नन्वसतोनाभावप्रतियोगित्वं । तत्प्रतियोगित्वेअसद्वैलक्षण्यस्यप्रयोजकत्वात् । घटादेरप्यविद्यमानतादशायांनविद्यमानप्राग
भावप्रतियोगित्वरूपधर्मप्रत्याश्रयत्वं । किंतुप्रागभावादेरेवविद्यमानस्यघटप्रतियोगिकत्वरूपधर्मप्रत्याश्रयत्वं । एवंसद्वैलक्षण्य
मपिनासतिकिंतुसत्येवासद्वैलक्षण्यं । प्रतियोगित्वाभावोपिनासतिकिंतुप्रतियोगित्वाभावेअसदाश्रयकत्वं । एवमसज्ज्ञानव्यव
हारयोरेवासद्विषयकत्वं नत्वसतितद्विषयत्वं । एवमसद्वैलक्षण्यएवासत्प्रतियोगिकत्वंनत्वसद्वैलक्षण्यंप्रत्यसतःप्रतियोगित्वमि
त्याशंकायामाह ॥ [३३।१] शिष्टमिति ॥ यदुक्तमभावप्रतियोगित्वंप्रत्यसद्वैलक्षण्यंप्रयोजकमितितन्न । तथासतिलाघवायसत्त्वस्यैवत
त्प्रयोजकत्वापत्त्याऽनिर्वचनीयस्यसद्विलक्षणस्याभावप्रतियोगित्वंनस्यात् । तस्मात् प्रतीतत्वमात्रेणसतइवासतोप्यभावप्रतियो
गित्वमुपपद्यते । यच्चोक्तंप्रागभावादेरेवघटादिप्रतियोगिकत्वमित्यादितदपिन । घटादेःप्रागभावप्रतियोगित्वाभावेप्रागभावादि
ध्वर्पितत्प्रतियोगिकत्वंनस्यात् । एवंप्रागभावादेर्घटादिप्रतियोगिकत्वेघटादेःप्रागभावप्रतियोगित्वादिकमवर्जनीयमेवेत्यादिकंव
क्ष्यतइत्यर्थः ॥ [३३।१] असतोऽप्रसक्तेरिति ॥ प्रतियोग्यधिकरणसंसर्गज्ञानंप्रसक्तिः । तथाचनिषेधप्रतियोगित्वतदभावकृतमेवमि
थ्यासतोर्वैधर्म्यमितिभावः॥ [३३।२] ब्रह्मजगतोरिति ॥ ब्रह्मजगतोरसद्वैलक्षण्यस्यासत्तादात्म्यप्रसक्तिपूर्वकत्वादित्यर्थः ॥ [३३।२] नासदा
सीदिति ॥ नासदासीन्नोसदासीत्तदानीमितिश्रुत्यातदानींशब्दान्निर्दिष्टेअसतोज्ञानाभावेनतत्रतन्निषेधोनबोध्यतेत्यर्थः॥ [३३।२] अस
तिचेति ॥ निषेधाधिकरणेप्रतियोगिज्ञानाभावस्यात्रापिसत्त्वादित्यर्थः ॥ [३३।३] तस्यापीति ॥ निषेधप्रतियोगित्वाभावस्येत्यर्थः ।

यद्यप्यसद्वैलक्षण्यादेरपिप्रतियोगिप्रतीत्यधीनसिद्धिकत्वं तथापिपरोक्तत्वात्प्रतियोगित्वाभावस्यैवग्रहणं । निषेधाधिकरणेप्रतियोगिप्रसक्तिंतत्रप्रसक्त्यभावेपिवानिषेधइतिशंकते ॥ ननुतत्रेति ॥ परार्थेनेति ॥ परप्रवृत्तिनिवृत्तिपरेणेत्यर्थः ॥ प्रत्यक्षेणेति ॥ एतेननासदासीदितिश्रौतनिषेधोव्युदवर्तितः । स्वयंप्रकाशेब्रह्मण्यसद्वैलक्षण्यस्यप्रत्यक्षेणास्तिस्फुरणमित्यादिनाप्रतीतेः । जगतितुस्पष्टमेवासद्वैलक्षण्यंप्रत्यक्षसिद्धं । अप्रत्यक्षेप्यसतिसद्वैलक्षण्यस्यप्रतियोगित्वाभावस्यचवायौरूपाभाववत्प्रत्यक्षत्वसंभवादित्यर्थः ॥ अन्यथेति ॥ शब्दाभासादिनाप्रसक्तिर्वाऽप्रसक्तस्यैववाप्रत्यक्षेणनिषेधइत्यनंगीकारइत्यर्थः ॥ समिमिति ॥ शब्दाभासादिनाप्रसक्तौसत्यामप्रसक्तस्यैववा शशश्रृंगादेरपिनिषेधप्रतियोगित्वंभविष्यति । तथाचनिषेधप्रतियोगित्वतदभावकृतोपिनानिर्वचनीयासतोर्भेदइत्यर्थः ॥ शशश्रृंगमिति ॥ यथानुभवसिद्धायाअंगुल्यग्रेहस्तिशतंनास्तीतिप्रतीतेर्दुरपह्नवत्वात्तदुपपादकमसतःप्रसक्त्यादिकंकल्प्यते । तथाशशश्रृंगंनास्तीतिप्रतीतेर्दुरपह्नवत्वात्तदुपपादकमपिकल्पनीयमेवेत्यर्थः ॥ अबाधितेति ॥ निर्बाधसाक्षिसिद्धेत्यर्थः ॥ नचतत्रापीति ॥ शशश्रृंगंनास्तीत्यत्रनशशश्रृंगस्यासतोनिषेधः । येनतदुपपादकमसतःप्रसक्त्यादिकंकल्प्येत । किंतुशुक्तौरूप्यनिषेधइवशशेश्रृंगस्यैवनिषेधइत्यर्थः ॥ श्रृंगस्येति ॥ शशश्रृंगस्येत्यर्थः । यथाआपणस्थरूप्यसदृशस्यैवानिर्वचनीयरूप्यस्यशुक्तावारोपोनिषेधश्चतथाऽसदन्यस्यैवानिर्वचनीयस्यासदाभासस्यशशश्रृंगस्यप्रतिषेधइत्यर्थः ॥ अनाभासस्यैवेति ॥ आपणस्थरूप्यस्थानीयस्यानिर्वाच्यस्यशशश्रृंगभिन्नस्यानाभासशशश्रृंगस्यैवनिषेद्धव्यत्वादित्यर्थः। तथाचानाभासस्यासतःप्रतिषेधार्थंतद्युक्तिस्त्वयापिवाच्येत्यभिसंधिः ॥ आभासस्येति ॥ यद्यपिस्वरूपेणरूप्यादेःप्रतिषेधइ

तिप्रस्तुतेपक्षेअनाभासस्यननिषेधः । किंत्वाभासस्यैव । तथापिमतांतरस्यापित्वयाऽनुरोद्धव्यत्वादितिभावः ॥ [३।५।३] जगदादावि
ति ॥ यदिशशशृंगंनास्तीत्यत्रानिर्वचनीयमसदाभासरूपंशशशृंगंनिषिध्यते । तर्हितादृशादेवासतोवैलक्षण्यंजगद्ब्रह्मणोःसि
द्ध्येत् । तस्यैववैलक्षण्यज्ञानोपयोगिप्रतीतिविषयत्वात् । नत्वनाभासरूपादसतः । तस्यसर्वथानुपस्थितत्वेनतद्वैलक्षण्यस्यदुर्बो
धत्वादित्यर्थः । ननुस्वरूपेणत्रैकालिकनिषेधप्रतियोगित्वेपिरूप्यजगतोर्नात्यंतासत्त्वं । तार्किकादिमतेतादृशनिषेधप्रतियोगिनो
रप्यात्मादेरसत्त्वाभावादितिशंकते ॥ [३।५।५] नन्विति ॥ तथाचत्रैकालिकनिषेधप्रतियोगित्वंनासत्त्वं । किंत्वन्यदेव । तच्चनरूप्यज
गतोरित्यर्थः ॥ [३।५।६] तर्हीति ॥ तादृशनिषेधप्रतियोगित्वरूपस्यमिथ्यात्वस्यात्मन्यपिसत्त्वादित्यर्थः । नन्वात्मनःतादृशनिषेधप्रति
योगित्वेप्रतिपन्नोपाधेरभावात्तद्विशिष्टमुक्तनिषेधप्रतियोगित्वंतत्रनास्तीत्यतआह ॥ [३।५।७] तस्यापीति ॥ सएवाधस्तात्सएवोपरिष्टा
दितिभूमरूपस्यात्मनोपिअधआदिःप्रतिपन्नोपाधिरस्तीत्यर्थः ॥ [३।६।१] अर्थेति ॥ तथाचनतादृशनिषेधप्रतियोगित्वमात्मनोतोनतस्य
मिथ्यात्वमित्यर्थः ॥ [३।६।२] ततएवेति ॥ तादृशनिषेधप्रतियोगित्वाभावादेवेत्यर्थः । ननूक्तनिषेधप्रतियोगित्वरूपस्यसत्त्वस्यात्मनिप्र
संगाभावेपिदेशकालयोरस्तिप्रसंगः । नहिदेशकालौदेशकालयोर्वर्तेते । आत्माश्रयापातादित्यतआह ॥ [३।६।२] देशकालावपीति ॥
[३।६।२] सदिति ॥ सदादेशकालौसर्वत्रदेशकालावितिप्रतीत्येत्यर्थः ॥ [३।६।३] प्रमेयत्वेति ॥ नचाश्रिताश्रययोःप्रमेयत्वयोर्भेदान्नप्रमेयत्वस्यस्ववृ
त्तित्वमितिवाच्यं । नित्यस्वप्रकाशेश्वरप्रमारूपस्यप्रमेयस्यानुगतस्यसंभवेतद्भेदेमानाभावात् । गगनात्यंताभावस्यैकस्यैवस्ववृत्ते

श्च ॥ अन्योन्यवृत्तीइति ॥ उत्पत्त्याद्यंप्रतिबंधकत्वान्नात्माश्रयोऽन्योन्याश्रयोवादोषइतिभावः ॥ अन्यथेति ॥ स्वस्मिन्न
न्योन्यस्मिंश्चावृत्तित्वइत्यर्थः ॥ तदुक्तमिति ॥ अनुव्याख्यानेद्वितीयाध्यायेतृतीयपादइतिशेषः ॥ तेनैवेति ॥ इतिवदतापरे
णैवेत्यर्थः । "सि० ननुसर्वत्रत्रैकालिकनिषेधप्रतियोगित्वंयद्यपितुच्छानिर्वाच्ययोःसाधारणं । तथापिक्वचिदप्युपाधौसत्त्वेनप्र
तीत्यनर्हत्वमत्यंतासत्त्वं । तच्चशुक्तिरूप्येप्रपंचेचबाधात्पूर्वंनास्त्येवेतिनतुच्छत्वापत्तिः । नचबाधात्पूर्वंशुक्तिरूप्यंप्रपंचोवासत्त्वे
ननप्रतीयते । एतदेवसदर्थकेनोपाधिपदेनसूचितं । शून्यवादिभिःसदधिष्ठानकभ्रमानंगीकारेणक्वचिदप्युपाधौसत्त्वेनप्रतीत्य
नर्हरूपासद्वैलक्षण्यस्यक्वचिदप्युपाधौसत्त्वेनप्रतीत्यर्हत्वरूपस्यशुक्तिरूप्येप्रपंचेवानंगीकारात् । नन्वेवंसतियावत्सदधिकरणका
त्यंताभावप्रतियोगित्वंपर्यवसितं । तथाचकेवलान्वय्यत्यंताभावप्रतियोगिष्ववृत्तिगगनादिषुतार्किकाणांसिद्धसाधनं । यदधि
करणीयत्सत्तन्निष्ठात्यंताभावप्रतियोगित्वंतस्यमिथ्यात्वमितिविवक्षायामधिकरणपदेनावृत्तेर्वारणेपिसंयोगसंबंधेनसमवायसंबंधे
नवायुक्तघटाधिकरणंसमवायसंबंधेनसंयोगसंबंधेनवाघटस्यतन्निष्ठात्यंताभावप्रतियोगितयासर्वेषुवृत्तिमत्सुदुरुद्धरंसिद्धसाधनं ।
येनसंबंधेनयद्यस्याधिकरणंतेनसंबंधेनतस्यतन्निष्ठात्यंताभावप्रतियोगित्वमितिविवक्षायामव्याप्यवृत्तिषुसंयोगादिषुसिद्धसाधन
मितिचेन्न । येनरूपेणयदधिकरणतयायत्प्रतिपन्नंतेनरूपेणतन्निष्ठात्यंताभावप्रतियोगित्वस्यप्रतिपन्नपदेनसूचितत्वात् । तद्रू
पंसंबंधविशेषोवच्छेदकविशेषश्च । नहिसंबंधविशेषमंतरेणभूतलेघटाधिकरणताप्रतीयतेअवच्छेदकविशेषमंतरेणवावृक्षेकपिसं
योगाधिकरणता । तथाचयेनसंबंधविशेषेणावच्छेदकविशेषेणवायदधिकरणताप्रतीतिर्यत्रभवितुमर्हतितेनैवसंबंधविशेषेणतेनै

वावच्छेदकविशेषेणतदधिकरणात्यंताभावप्रतियोगित्वंतस्यमिथ्यात्वमितिपर्यवसितेत्वसिद्धसाधनं । यदिपुनर्ध्वंसप्रागभावप्रति योगित्वमिवात्यंताभावप्रतियोगित्वमप्याकाशादिषुनस्यात् । साधकमानाभावस्यतुल्यत्वात् । इहाकाशोनास्तीतिप्रत्यक्षप्रतीत्य संभवात् । अनुमानेचानुकूलतर्काभावात् । सामान्यतोदृष्टमात्रेणध्वंसप्रागभावप्रतियोगित्वस्यापिसिद्धिप्रसंगात् । तदन्तरें केणकस्यचित्कार्यस्यानुपपत्तेरभावाच्च । एवंसंयोगसंबंधेनघटवतिभूतलेसमवायसंबंधेनघटाभावसत्त्वेमानाभावात् । लाघवे नघटात्यंताभावत्वेनैवघटसामानाधिकरण्यविरोधित्वकल्पनात् । संबंधविशेषप्रवेशेचगौरवात् । घटस्यसमवायाद्यभावमात्रवि षयतयाप्रतीत्युपपत्तेराधाराधेयभावस्यप्रत्यक्षसिद्धत्वेनघटस्यावृत्तित्वशंकानुदयात्तदुक्तयुक्तेश्चनघटात्यंताभावसामानाधिकर ण्यं । एवंसंयोगतदत्यंताभावयोनैकाधिकरण्यं । अग्रेवृक्षःकपिसंयोगीमूलेनेतिप्रतीतेरग्रमूलयोरेवसंयोगतदत्यंताभाववत्तयोप पत्तेः । तदासन्मात्रनिष्ठात्यंताभावप्रतियोगित्वमेवमिथ्यात्वमितिमंतव्यं । नचैवंसतिभावाभावयोर्विरोधात्तज्ज्ञानयोर्बाध्यबा धकभावोनस्यादितिवाच्यं । भिन्नसत्ताकयोरविरोधेपिसमसत्ताकयोर्विरोधात् । यत्रभूतलेयस्यघटस्यात्यंताभावोव्यावहारिकः तत्रघटोनव्यावहारिकइतिनियमात् । नचैवंसतिशुक्तिरियंनरजतमितिज्ञानविषयीभूताभावस्यव्यावहारिकत्वेनपुरोवर्तिप्रतीत रजतस्यव्यावहारिकत्वापरिहारेप्रातीतिकसत्त्वानपहाराद्बाधोत्तरकालेपीदंरजतमितिप्रतीतिःस्यादितिवाच्यं । तत्रेयंशुक्तिरित्य परोक्षप्रमयाप्रातीतिकरजतोपादानाज्ञाननिवृत्तौप्रातीतिकसत्त्वास्याप्यपहारात् । शुक्त्यज्ञानस्यप्रातीतिकरजतोपादानत्वेनत दसत्त्वेप्रातीतिकरजतासत्त्वस्यावश्यकत्वात् । अतएवयत्रपरोक्षयाअधिष्ठानप्रमयानभ्रमोपादानाज्ञाननिवृत्तिः तत्रव्यावहारि

कत्वापरिहारेपिप्रातीतिकत्वानपहारांत्तिक्तोगुडइतिप्रतीतिरनुवर्तते । एवमखंडब्रह्मसाक्षात्कारात्पूर्वंपरोक्षवाधेनप्रपंचस्यव्याव हारिकत्वापरिहारेपिप्रतीतिरनुवर्ततएव । अधिष्ठानाज्ञाननिवृत्तौतुनानुवर्ततइति" । अत्रोच्यते । यदुक्तंक्वचिदप्युपाधावि त्यादि । तन्न । असच्चेत्सत्त्वेननप्रतीयेतेतिवदतातादृशाप्रतीतिंप्रतिप्रयोजकस्यासत्त्वस्यप्रतीत्यनुपाधिकस्यैववाच्यत्वात् । नि रस्तंचैतदधस्तात् । यच्चोक्तंयेनंरूपेणेत्यादि सन्मात्रनिष्ठेत्यादिच । तदुभयमपिन । लाघवेनभावाभावयोरेवसामानाधि करण्यविरोधात् । सत्ताभेदस्याद्याप्यसिद्धेश्च । मिथ्यात्वानुमानादेवचसत्ताभेदसिद्धावन्योन्याश्रयात् । श्रुतेःप्रत्यक्षबाधाच्च । त स्मात्साधूक्तमत्यंतासत्त्वंदुर्वारमिति ॥ अबाध्यत्वरूपेति[३।१३] ॥ अवाध्यत्वरूपपारमार्थिकत्वज्ञानेसतितंद्घटितमिथ्यात्वज्ञानं । बाध्यत्वरूपमिथ्यात्वज्ञानेचतदभावरूपाबाध्यत्वज्ञानमित्यन्योन्याश्रयइत्यर्थः ॥ रूप्यंनास्तीति[३।१४] ॥ अन्यथापारमार्थिकत्वेनरू प्यंनास्तिपारमार्थिकत्वेननानानास्तीतिचनिषेधोल्लेखःस्यादित्यर्थः ॥ अन्यथेति[३।१५] ॥ तथाचनृशृंगादेरपिपारमार्थिकस्वरूपाति रिक्तंकिंचित्स्वरूपमंनिषिद्धंस्यादित्यर्थः । रूप्यंनास्ति नेहनानास्तीति रूप्यप्रपंचयोःपारमार्थिकत्वेननिषेधानंतरं अपारमा र्थिकं रूप्यस्यप्रातिभासिकं प्रपंचस्यव्यावहारिकं स्वरूपमनुवर्तेत । तस्यानिषिद्धत्वात् । नचेष्टापत्तिः । मोक्षेपितदनुवृत्तौनि ष्प्रपंचताया असिद्ध्यापातादित्यपिबोद्धव्यं ॥ रूप्यवदिति[३।१६] ॥ पारमार्थिकत्वस्यापिनिषेधायबुद्धिपूर्वकारोपरूपाप्रसक्तिर्वाच्या । आरोपश्चानिर्वचनीयपारमार्थिकत्वविषयइतिपारमार्थिकत्वस्यापिनस्वरूपेणनिषेधः । किंतुपारमार्थिकत्वांतरेण तस्याप्युक्तवि धयापारमार्थिकत्वांतरेणेत्यनवस्थास्यादित्यर्थः ॥ सुखादीति[३।१७] ॥ प्रतिपन्नोपाधौपारमार्थिकत्वाकारेणनिषेधप्रतियोगित्वंब्रह्म

ण्यतिव्याप्तमित्यर्थः । निर्धर्मकतयापारमार्थिकधर्मशून्यस्यापिब्रह्मणःस्वरूपंपरमार्थसदितियदि तदाप्रपंचस्यापितथास्त्विति बोध्यं ॥ मयीति ॥ मदंशोऽधआदिश्चब्रह्मणोपिप्रतिपन्नोपाधिरस्तीत्यर्थः । ननुपारमार्थिकस्यब्रह्मणःकथंपारमार्थिकत्वेननिषेधइत्यतउक्तं ॥ निर्धर्मकत्वेनेति ॥ प्रतिपन्नोपाधिशब्देनेति ॥ तथाचब्रह्मण्यतिव्याप्तिरितिभावः । नन्वध्यस्तत्वंनमिथ्यात्वं । येनात्माश्रयः । किंतुसदसद्भ्यामन्यत्वमित्यतआह ॥ शेषेति ॥ वैयर्थ्यादित्युपलक्षणं । इष्टापत्तिरपिबोध्या । ननुप्रतिपन्नोपाधौपारमार्थिकत्वाकारेणनिषेधप्रतियोगित्वंमिथ्यात्वलक्षणंनब्रह्मण्यतिव्याप्तं । ब्रह्मणःप्रतिपन्नोपाधेरभावात् । नचमयिसुखानुभवइतिप्रत्यक्षेण सएवाधस्तादित्यादिश्रुत्याचमदंशोधआदिर्वास्तिब्रह्मणोपिप्रतिपन्नोपाधिरितिवाच्यं । ब्रह्मणःसर्वाधिष्ठानत्वेनमदंशाधआदेर्ब्रह्मण्यध्यस्तस्यब्रह्मप्रत्यधिष्ठानत्वायोगादित्यतआह ॥ ब्रह्मणइति ॥ पारमार्थिकत्वधर्मशून्ययोरपि ब्रह्मजगतोःप्रतिपन्नोपाधिविरहतत्सद्भावप्रयुक्तापरिच्छिन्नत्वपरिच्छिन्नत्वाभ्यांविशेषेऽपिनपरमार्थस्वरूपेविशेषइत्यर्थः । ननुद्रव्यत्वहीनंगुणादिकमद्रव्यमितिवत्पारमार्थिकत्वहीनंजगदपारमार्थिकमेवस्यात् । अतआह ॥ नहीति ॥ पारमार्थिकत्वहीनमपरमार्थिकंचेद्ब्रह्माप्यपारमार्थिकंस्यादित्यर्थः । ननुपारमार्थिकत्वस्यतत्वतःसत्त्वेपिनाद्वैतहानिः । तस्यब्रह्मस्वरूपत्वेनब्रह्मणइवब्रह्माद्वैताविरोधित्वादित्यतआह ॥ नचेति ॥ सोपाधिकत्वनिरुपाधिकत्वाभ्यांपारमार्थिकत्वंब्रह्मणोनैकस्वरूपत्वमितिभावः । ब्रह्मजगतोःसत्यत्वेप्यवांतरवैषम्यमाह ॥ एवंचेति ॥ ब्रह्मणःकालत्रयेऽपिसत्त्वेननित्यत्वं जगतस्तुस्वकालेकदाचिदेवस

त्त्वेनानित्यत्वमितिनित्यत्वाभ्यामेवब्रह्मजगतोर्वैषम्यं नतुसत्यत्वमिथ्यात्वाभ्यामित्यर्थः । उक्तार्थंसंगृह्णाति ॥ [३९।३] तथाचेति ॥ निषे
धोरूप्यादेरित्यन्वयः ॥ [३९।४] अतीतेति ॥ अतीतस्यज्ञानेननिवृत्तिर्नैवनिवृत्तत्वादित्यर्थः ॥ [३९।४] शुक्तिज्ञानेनेति ॥ तथाचदृष्टांतःसाध्यवि
कलइत्यर्थः ॥ [३९।५] एतावंतमिति ॥ ज्ञानत्वेनज्ञाननिवर्त्यत्वंभ्रमाज्ञानादिवत्सत्यत्वेपिप्रपंचस्योपपन्नमतोर्थांतरमितिभावः ॥ [३९।७] अप
रोक्षेति ॥ तथाचासंभवइत्यर्थः ॥ [३९।७] ज्ञानत्वव्याप्येति ॥ तथाचापरोक्षत्वेनज्ञाननिवर्त्यत्वेप्युक्तमिथ्यात्वमस्त्येवेत्यर्थः ॥[३९।८] इच्छा
द्युनिवर्त्यइति ॥ तथाचसंस्कारादेरिवप्रपंचस्यसत्यत्वेप्युपपत्तिरित्यर्थः ॥ [४०।१] अनुभवत्वेति ॥ स्मृतावनुभवत्वाव्याप्यधर्मस्या
भावादित्यर्थः ॥ [४०।२] भ्रमोचरप्रमेति ॥ अत्रप्रमात्वंयथार्थज्ञानत्वमात्रं । नत्वनुभवत्वगर्भं । तेनयथार्थस्मृतिनिवर्त्येअयथार्थस्मृ
तिविषयेनाव्याप्तिः ॥ [४०।३] अज्ञानसंस्कारइति ॥ सर्वपदार्थानांसंस्काररूपेणविद्यमानत्वस्यपरैरंगीकृतत्वादज्ञानस्यापिसंस्का
रोस्ति । सचाज्ञानेनिवृत्तेपिजीवन्मुक्त्यवस्थायांभिक्षाटनादिप्रवृत्तिहेतुरनुवर्तमानस्तत्वज्ञानसंस्कारेणनिवर्तते । अतस्तत्राव्याप्ति
रित्यर्थः ॥ [४०।३] स्वोपादानेति ॥ अज्ञानादेरनादेर्योध्यासस्तत्राप्युपादानासंभवादित्यर्थः ॥ [४०।३] लाघवेनेति ॥ अज्ञानस्यस्वंप्रत्युपा
दानत्वेस्वस्याज्ञानोपादानकत्वंफलितं तदेवलक्षणमस्त्वित्यर्थः । संगृह्णाति ॥ [४०।४] विज्ञानेति ॥ मिथ्यारूप्यादौ मिथ्यात्वेनोभय
संमतेरूप्यादौ विज्ञाननाश्यतानानुभूयते अधिष्ठानवत्सत्येरूप्याज्ञानेविज्ञाननाश्यतानुभूयते । तथाचरूप्यादावव्याप्तिः रूप्यादौ
प्याज्ञानेचातिव्याप्तिरित्यर्थः । “सि० ननुज्ञाननिवर्त्यत्वंनामज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं । अवस्थितिर्द्वेधा ।
स्वरूपेणकारणात्मनाच । सत्कार्यवादाभ्युपगमात् । तथाचमुद्गरपातेनघटस्यस्वरूपेणावस्थितिविरहेपिकारणात्मनावस्थितिवि

रहाभावाद्ब्रह्मज्ञानप्रयुक्तएवसइतिनातीतघटादावव्याप्तिः। अतएवनपूर्वज्ञानेसिद्धसाधनं। उत्तरज्ञानेनलीनस्यपूर्वज्ञानस्यस्व कारणात्मनावस्थानादवस्थितिसामान्यविरहानुपपत्तेः। शशविषाणादाववस्थितिसामान्यविरहेपितस्यज्ञानप्रयुक्तत्वाभावान्ना तिव्याप्तिः। शुक्तिरजतादेश्चापरोक्षप्रतीत्यन्यथानुपपत्त्याप्रतिभासकालेवस्थित्यंगीकारान्न बाधकंज्ञानंविनातद्विरहइतिनसा ध्यविकलता। अतएवोक्तंविवरणाचार्यैः "अज्ञानस्यस्वकार्येणप्रविलीनेनवर्तमानेनवासहज्ञानेननिवृत्तिर्बाध" इति। वार्तिक कृद्भिश्चोक्तं "तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्यासहकार्येणनासीदस्तिभविष्यतीति"। सहकार्येणनासीदि तिलीनेनकार्येणसहनिवृत्त्यभिप्रायं। रूप्योपादानमज्ञानंस्वकार्येणवर्तमानेनलीनेनवासहाधिष्ठानसाक्षात्काराान्निवर्तते। तत्त द्भ्रमोपादानाज्ञानानांभेदाभ्युपगमादितिनदृष्टांतेसाध्यवैकल्यं। मुद्गरपातानंतरंघटोनास्तीतिप्रतीतिवदधिष्ठानज्ञानानंतरंशु त्तथज्ञानंतद्गतंरूप्यंचनास्तीतिप्रतीतेःसर्वसंमतत्वात्। ज्ञानत्वव्याप्यधर्मेणज्ञाननिवर्त्यत्वमित्यप्यसाधु। उत्तरज्ञानस्यनिवर्त कत्वंचनज्ञानत्वव्याप्यधर्मेण। किंत्विच्छादिसाधारणेनोत्तरात्मविशेषगुणत्वेनेतिनसिद्धसाधनादिति। नापिइच्छाद्यनिवर्त्ये स्मृतित्वेनस्मृतिनिवर्त्येसंस्कारेतिव्याप्तिः। स्मृतेःसंस्कारनिवर्तकत्वेमानाभावात्। स्मृतौहिजातायांसंस्कारोदृढोभवतीत्यनुभ वसिद्धं। दृढत्वंचसमानविषयसंस्कारानेकत्वमित्यदोषः। वस्तुतस्तुसाक्षात्कारत्वेनज्ञाननिवर्त्यत्वंविवक्षितं। अतोनपूर्वोक्त दोषः। नापिनिश्चयत्वेनज्ञानत्वव्याप्यधर्मेणज्ञाननिवर्त्येसंशयेतिव्याप्ति" रिति॥ अत्रोच्यते। यदुक्तंज्ञानप्रयुक्तावस्थितिसा मान्यविरहप्रतियोगित्वंज्ञाननिवर्त्यत्वमिति तत्रावस्थित्यासामान्यंवाविशेष्यतेविरहोवा। आद्येअवस्थितिसामान्यंकारणात्मना

वस्थितिः कारणमितियावत् । ज्ञानप्रयुक्तव्यतिरेकप्रतियोगिकारणकत्वमित्यर्थःस्यात् । तत्रचोत्तरज्ञानंप्रयुक्तव्यतिरेकप्रतियोगिपूर्वज्ञानजन्यसंस्कारादौसिद्धसाधनं । अनाद्यविद्यादौचबाधः । कारणशब्देनाविद्योक्तौचाविद्याकारणंकत्वमेवास्तुशेषवैयर्थ्यात् । अनाद्यविद्यादौबाधश्च । नद्वितीयः । घटाद्यवस्थितिसामान्यविरहस्यज्ञानप्रयुक्तत्वंनसंभवति । विनष्टघटाद्यवस्थितिविशेषद्वयविरंहद्वयस्यज्ञानप्रयुक्तत्वाभावात् । स्वरूपेणावस्थितिविरहस्यज्ञानप्रयुक्तत्वाभावात् । विशेषाभावातिरिक्तसामान्याभावस्यत्वयैवाविद्यावादेनिरसिष्यमाणत्वात् । ज्ञानप्रयुक्तविरहप्रतियोग्यवस्थायामवस्थात्वस्यातिप्रसंगेनप्रतियोगितानवच्छेदकत्वाच्च । शुक्तिरजतादेरवस्थित्यंगीकारेस्वरूपेणनिषेधोक्त्ययोगश्च । रूप्यादेःस्वरूपेणैवनिषेधइतित्वदभ्युपगतपक्षेरूप्यादेरत्यंतासत्त्वस्यापादितत्वेनरूप्याद्यभावोपिशशविषाणाद्यभावइवज्ञानाप्रयुक्तइतिदृष्टांतस्यसाध्यवैकल्यमेव । पक्षेबाधश्च । यच्चोक्तंज्ञानत्वव्याप्येत्यादि तदपिन । तवमतेमननत्वादिनाज्ञानत्वव्याप्यधर्मेणमनननिवर्त्ये अर्थगतसंशयविशेषेऽतिव्याप्तेः । तादृशसंशयनिवर्तकत्वेनैवमननस्यसप्रयोजनत्वोक्तेश्च । उत्तरात्मविशेषगुणत्वेनेत्याद्यपिनयुक्तं । धर्माधर्मादावतिप्रसंगात् । यच्चोक्तंस्मृतेःसंस्कारनिवर्तकत्वंनेति तन्न । सुखादिकंधर्मादेरिवस्मृतेरपिस्वकारणसंस्कारनिवर्तकत्वात् । दृढसंस्कारस्तुस्मृतिजन्योन्यएव । यच्चोक्तंवस्तुतस्त्वित्यादि तदपिन । त्वयाप्रत्यक्षस्यशब्दबाध्यत्वमंगीकुर्वतानायंसर्पइत्याप्तोपदेशस्यापिसर्पादिभ्रमबाधकतायाउक्तत्वेनसाक्षात्कारत्वस्यबाधकतानवच्छेदकत्वादिति ॥ एतेनेति ॥ अत्यंतासत्वापादनादिनेत्यर्थः ॥ दोषस्योक्तत्वाच्चेति ॥ स्वरूपेणात्यंताभावप्रतियोगित्वपक्षेअत्यंतासत्त्वापसिद्धांतादेःपारमार्थिकत्वेनतत्प्रतियोगित्वपक्षेब्रह्मवत्पारमार्थिकत्वध

मशून्यस्यापिजगतोब्रह्मवदेवामिथ्यात्वोपपत्तेरित्यादेर्दोषस्योक्तत्वादित्यर्थः। संयोगिनिसमवायिनिवादेशेतदत्यंताभावासंभवः। संभवेतूपादानत्वानुपपत्तिरित्यपिबोध्यं। "सि०अत्रवदंति कालेसहसंभववद्देशेपिसहसंभवाविरोधः। प्रागभावसत्त्वेनोपादानत्वाविरोधश्च। नचात्यंताभावाधिकरणेप्रागभावस्याप्यनुपपत्तिरितिवाच्यं। कालेव्यभिचारात्। नचप्रागभावात्यंताभावयोःसामानाधिकरण्यमिदानींघटात्यंताभावइदानींघटप्रागभावइतिप्रतीतिवलादंगीकृतं। देशेतुतदुभयसामानाधिकरण्येनकिंचिदपिप्रमाणमितिवाच्यं। मिथ्यात्वानुमितेःश्रुतेश्चप्रमाणत्वात्। विषमसत्ताकयोरविरोधश्चपूर्वमुपपादितः। नचासत्यतिव्याप्तिः स्वात्यंताभावाधिकरणएवसत्त्वेनप्रतीयमानत्वस्यविवक्षितत्वात्। नन्वतद्वैकआहुरसदेवेदमग्रआसीदित्यादिश्रुत्याऽसतःसत्त्वप्रतीतेस्तत्रातिव्याप्तिर्दुरुद्धरेतिवाच्यं। सदेवेदमग्रआसीदित्यस्यार्थस्याभावएवनआप्रतिपाद्यते। नत्वसतःसत्वं। विरोधात्। अतोनातिव्याप्ति" रिति। अत्रोच्यते। यदुक्तंप्रतियोगितदत्यंताभावयोःकालइवदेशेप्यविरोधइति। तन्न। तथासतिभावाभावयोर्विरोधएवोच्छिन्नकथःस्यादितिव्यावहारिक्यपिव्यवस्थानस्यात्। द्वैताद्वैतयोरविरोधापत्तेरद्वैतज्ञानस्यद्वैतज्ञाननिवर्तकत्वंनस्यात्। यच्चोक्तंमिथ्यात्वानुमानादेरेवात्यंताभावप्रागभावयोर्देशसामानाधिकरण्येप्रमाणत्वमिति। तन्न। विरोधेनानुमानस्वरूपस्यैवालभ्यत्वात्। यदपिचोक्तंविषमसत्ताकयोस्तयोरविरोधइति। तन्न। लाघवेनात्यंताभावमात्रस्यैवप्रतियोगिसामानाधिकरण्यविरोधित्वात्। यच्चोक्तमसदेवेदमितिश्रुत्यासदेवेदमितिश्रुत्यर्थाभावमात्रंबोध्यतइति। तन्न। सदेवेदमितिश्रुत्यर्थाभावबोधकत्वेप्यसद्बोधकत्वस्यदुर्वारत्वात्। तथाहि। सदेवेत्यस्यब्रह्मसत्त्वमर्थः। तदभावस्त्वत्यंतासन्नेव। नहिब्रह्मसत्त्वा

भावःक्वचिद्देशेकालेवास्तीति । सद्विविक्तत्वमितिपक्षंदूषयति ॥ [४३।२] पंचमेपीति ॥ [४३।२] त्वन्मतेपीति ॥ तथाचासंभवः । ब्रह्मण्यति
व्याप्तिश्च ॥ [४३।३] सिद्धसाधनादिति ॥ प्रपंचब्रह्मभेदस्यमयाप्यंगीकृतत्वादित्यर्थः । सद्रूपत्वाभावइत्यस्यब्रह्मण्यतिव्याप्तिश्चेत्याह
॥ [४३।४] मन्मतइत्ति ॥ ननुब्रह्मणःसत्त्वाभावेपिनसद्रूपत्वासिद्धिः । सत्त्वेसत्त्वांतराभावेपिसद्रूपत्वमिवब्रह्मणोपितथात्वोपपत्तेरि
त्यतउक्तं [४३।५] सत्त्वस्याभिधेयत्ववत्स्वाश्रितत्वेनेति ॥ ननुसत्त्वस्यस्वाश्रितत्वेआत्माश्रयःस्यात्अभिधेयत्वेतुनात्माश्रयःअ
भिधेयत्वेप्यभिधानविषयत्वस्यप्रमितत्वादित्यतउक्तं [४३।५] अबाध्यत्वादिरूपस्येति ॥ यथाघटादावबाध्यत्वेनतादृशंसत्त्वं तथा
अबाध्यत्वस्याप्यबाधितत्वात्तादृशसत्त्ववत्त्वंप्रमितमतोनात्माश्रयदोषइतिभावः । “सि०अत्रवदंति प्रमाणसिद्धत्वमेवसत्त्वं । प्र
माणत्वंचदोषासहकृतज्ञानकरणत्वं । तेनस्वप्नादिवत्प्रमाणसिद्धभिन्नत्वेनमिथ्यात्वंसिद्ध्यति । प्रमाणसिद्धत्वंचाबाध्यत्वव्याप्य
मित्यन्यत् । अत्राप्यसतिनिर्धर्मकेब्रह्मणिचातिव्याप्तिवारणायसत्त्वेनप्रतीयमानत्वंविशेषणंदेयं । तयोःसत्त्वप्रकारकप्रतीतिविषय
त्वाभंग्वा” दिति अत्रोच्यते । प्रमाणसिद्धत्वस्यसुखादौतवमतेसत्त्वेपिघटादावसत्त्वादव्याप्तिः । यच्चोक्तंप्रमाणसिद्धत्वमबा
ध्यत्वव्याप्यमिति । तन्न । प्रमाणासिद्धस्यापिब्रह्मणोऽबाध्यत्वात् । प्रमाणसिद्धस्यापिप्रपंचस्यबाध्यत्वाच्चेति ॥ संगृह्णाति ।
[४३।६] तस्मादिति ॥ अनिर्वाच्ये सदसद्विलक्षणत्वे । प्रतीते प्रतिपन्नोपाधौ । प्रतिषेध्यता त्रैकालिकनिषेधप्रतियोगित्वं । ननुत्वन्म
तेशुक्तिरजतादेर्मिथ्यात्वात्त्वयापितन्निर्वक्तव्यमितिनममैवपर्यनुयोगइत्यतआह ॥ [४३।८] ममत्विति ॥ मदभिमतंमिथ्यात्वंतुनत्वया
प्रपंचस्येष्यतइतिभावः । मिथ्यात्वपक्षाःपंचत्वंप्रापिताःपूर्वपक्षिभिः । दूरंनिरस्तास्तेतकैरितिसंश्रृणवामहे । व्यासाद्रिसृतंतर्कौ

बुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यांमिथ्याभावोक्तिभंगएेत् ॥ ७ ॥ मिथ्यात्वनिरुक्तिभंगः ॥ १ ॥ ननुमिथ्यात्वस्या बाध्यत्वेपिनाद्वैतहानिस्तस्यब्रह्मस्वरूपत्वादित्यतआह ॥ नहीति ॥ भ्रमकालानिश्चितमिति ॥ अन्यथारूप्यभ्रमाद्रूप्यार्थि प्रवृत्तिर्नस्यादित्यर्थः ॥ अधिष्ठानेति ॥ एतच्चभ्रमकालेब्रह्मणोनिश्चयोस्तीत्यस्योपपादकं ॥ तस्येति ॥ ब्रह्मस्वरूपमात्रस्यप्र पंचमिथ्यात्वस्येत्यर्थः ॥ दृश्यत्वादेरिति ॥ ब्रह्मस्वरूपेऽबाध्येमिथ्यात्वेदृश्यत्वस्यसत्त्वादित्यर्थः । ननुसाध्याभाववत्यपिमि थ्यात्वेदृश्यत्वस्यहेतोरभावान्नव्यभिचारइत्यतआह ॥ मिथ्यात्वस्यचेति ॥ मिथ्यात्वानुमानेयदिमिथ्यात्वंनविषयस्तदामिथ्या त्वानुमानवैयर्थ्यमित्यर्थः ॥ तस्येति ॥ मिथ्यात्वानुमानस्यमांप्रतिमिथ्यात्वज्ञप्त्यर्थत्वेनत्वयाप्रयुक्तत्वादित्यर्थः ॥ अंत्यइति ॥ मिथ्यात्वस्यबाध्यत्वंइत्यर्थः ॥ सिद्धसाधनमिति ॥ अविद्यमानानतिरिक्तबाध्यत्वरूपमिथ्यात्वस्यप्रपंचेममानिष्टत्वाभावादि त्यर्थः ॥ अद्वैतश्रुतेरिति ॥ बाध्यत्वरूपमिथ्यात्वस्यातत्वस्याबेदकत्वादित्यर्थः ॥ जगदिति ॥ जगत्सत्यं मिथ्याभूतमिथ्या त्वकत्वात् आत्मवदित्यनुमानादित्यर्थः ॥ नचेति ॥ आत्मनिसत्येसाध्यव्यापकंपक्षएवसाधनाव्यापकमात्मत्वमुपाधिर्नस्यादि त्यर्थः ॥ सत्यत्वंविनेति ॥ प्रपंचसत्यत्वविषयकेस्थापनानुमानेमिथ्याभूतमिथ्यात्वकत्वस्यहेतोःसत्यत्वरूपसाध्येनव्याप्तिग्राह कोव्याघातरूपस्तर्कोस्ति । आत्मत्वस्योपाधेर्व्यतिरेकेण नात्मत्वेनक्रियमाणेस्थापनानुमानीयसाध्यस्यसत्यत्वस्यव्यतिरेकानुमा नेनुकूलतर्काद्यभावेनोपाधेरप्रयोजकत्वादित्यर्थः ॥ नचेति ॥ द्वितीयाभावोपलक्षितंब्रह्मस्वरूपंचननिरुपाधिकं नवाभ्रमकाले

निश्चितमितित्निपूर्वोक्तदोषइतिभावः ॥ [४३।२] उपलक्षणइति ॥ उपलक्षणद्वितीयाभावस्यबाध्यत्वेतद्रूपस्यमिथ्यात्वस्यबाध्यत्वात्सि
द्धसाधनादि । अवाध्यत्वेत्वद्वैतहानिरिति दूषणसहिताद्विकल्पात् नवाच्यमित्यनेनान्वयः ॥ [४३।३] द्वितीयेति ॥ अप्रसिद्धोपलक्ष्य
स्यप्रसिद्धमुपलक्षणंभवति द्वितीयाभावरूपोपलक्षणंप्रत्युपलक्ष्यस्यब्रह्मणोनित्यसिद्धत्वेननतत्प्रतितस्योपलक्षणत्वमित्यर्थः । ज्ञा
तस्यैवोपलक्षणत्वेनद्वितीयाभावस्याभावरूपोपलक्षणस्यज्ञानार्थंतदधिकरणभूतशुद्धब्रह्मज्ञानमावश्यकमित्यभिसंधायोक्तं ॥ द्वि
[४३।३] तीयाभावाधिकरणतयेति ॥ तथाचोपलक्षणंज्ञानार्थंप्रागेवज्ञातंशुद्धंब्रह्मप्रतिनद्वितीयाभावस्योपलक्षणत्वमितिभावः । सर्व
दाप्रतीयमानत्वेनांगीकृताविद्यायाःप्रतीतिस्तदधिकरणशुद्धब्रह्मसुपूरणंविनानसंभवतीतितदर्थमपिशुद्धब्रह्मज्ञानमावश्यकमित्य
भिप्रायेणोक्तम [४३।३] विद्येत्यादि ॥ ननुकाकेनगृहगतसंस्थानविशेषइवप्रकाशमानब्रह्मगतधर्मांतरमेवद्वितीयाभावेनोपलक्ष्यता
मित्यतउक्त [४३।३] मन्यस्येत्यादि ॥ उपलक्षणकालेद्वितीयमात्राभावादितिभावः । जगच्चसत्यंस्यात्मवदित्युक्तानुमानेव्यभिंचा
रशंकते ॥ [४३।४] नन्विति ॥ रूप्यगतमिथ्यात्वस्यमिथ्यात्वेनमिथ्याभूतमिथ्यात्वकत्वंहेतूरूप्येवर्तते साध्यंचसत्यत्वंनास्तीतिव्यभि
चारइतिभावः । सिद्धांतीव्यभिचारपरिहारंशंकते ॥ [४३।५] नचंतथात्वइति ॥ यदिरूप्येमिथ्यात्वंमिथ्या तर्हिमिथ्यात्वविरुद्धंसत्य
त्वंसत्वंस्यात् । यथागविगोत्वाभावस्यमिथ्यात्वेगोत्वंतद्विरुद्धंसत्यं । तथाचप्रयोगः रूप्यंमिथ्याभूतमिथ्यात्वाधिकरणंनभवति
सत्यभूततद्विरुद्धसत्यत्वानधिकरणत्वात् यत्सत्यभूततद्विरुद्धाधिकरणंनभवतितन्मिथ्याभूततदधिकरणंनभवति यथासत्यभू

तगोत्वविरुद्धगोत्वाभावानधिकरणंगौर्गोत्वाभावविरुद्धमिथ्याभूतगोत्वाधिकरणंनभवति तथाचरूप्यमिथ्यात्वस्यसत्यत्वेनरू
प्येहेतोरेवागमनान्नव्यभिचारइतिभावः । पूर्वपक्षीव्यभिचारपरिहारंदूषयति ॥ [४४।२] धर्मिणईति ॥ सत्यभूतसत्यत्वानधिकरणम
पिरूप्यं सत्यभूतमिथ्यात्वस्याधिकरणंनभवति किंतुमिथ्यात्वस्यापिमिथ्याभूतस्यैवाधिकरणं धर्मिणोरूप्यस्यमिथ्यात्वात् । त
थाचप्रयोगः रूप्यगतत्वेनोच्यमानेसत्यत्वमिथ्यात्वे मिथ्या मिथ्यात्वोपेतधर्मिकत्वात् स्वप्नप्रतीतंगजरूपवदिति । तथाचजग
च्चसत्यंस्यादित्युक्तानुमानस्यरूप्येव्यभिचारस्तदवस्थइतिभावः । ननुरूप्यमिथ्यात्वेमिथ्यात्वसाधकस्यमिथ्यात्वोपेतधर्मिकत्वस्य
हेतोःरूप्यमिथ्यात्वेमिथ्यात्वाभावसाधकेनसामान्यव्याप्तिमूलकेनानुमानेनसत्प्रतिपक्षितस्यनरूप्यमिथ्यात्वेमिथ्यात्वरूपसाध्य
ज्ञानजनकत्वमतोरूप्येमिथ्याभूतमिथ्यात्वकत्वस्यहेतोरज्ञानान्नोक्तानुमानस्यरूप्येव्यभिचारइत्यतःसिद्धांत्युक्तसामान्यव्याप्तावु
पाधिमाह ॥ [४४।२] परस्परेत्यादिना ॥ [४४।२] धर्मीसन्निति ॥ तथाचतत्रमिथ्यात्वमुपाधिः । अतस्तस्यहीनबलत्वात्तेननास्यसत्प्रतिपक्षि
तत्वं अतोरूप्येहेतुज्ञानसंभवाद्व्यभिचारस्तदवस्थइतिभावः । उक्तसामान्यव्याप्तौव्यभिचारमप्याह ॥ [४४।२] नहीति ॥ नहिसत्य
भूतस्यगौरत्वविरुद्धश्यामत्वस्यानधिकरणेवंध्यासुतेतद्विरुद्धंगौरत्वंमिथ्याभूतंनास्ति किंतुसत्यभूतंगौरत्वमस्तीतियुज्यते । किं
तुगौरत्वंतद्विरुद्धंश्यामत्वंचेत्युभयमपिवंध्यासुतेमिथ्यैव । धर्मिणएवमिथ्यात्वात् । तथाचोक्तव्याप्तौव्यभिचारइतिभावः । न
नूक्तसामान्यव्याप्तौविरुद्धत्वंनसहानवस्थितत्वादिसाधारणं । किंतुपरस्परविरहरूपत्वं । नचगौरत्वश्यामत्वेपरस्परविरहरूपे ।

अतोनोक्तोव्यभिचारइत्यतआह ॥ नवास्वप्नइति ॥ स्वप्ने स्वप्नावस्थायां । क्वचिदधिकरणइतिशेषः ॥ तत्रैवेति ॥ तदधिकरणइत्यर्थः । स्वप्नावस्थायांदृष्टेक्वचिदधिकरणेसत्यभूतगजाभावविरहरूपस्यगजस्यानधिकरणत्वंवर्तते । गजविरहरूपस्यगजाभावस्यमिथ्याभूतस्यनाधिकरणत्वं । किंतुसत्यभूतस्यैवगजाभावस्याधिकरणत्वमितिनास्ति । किंतुगजोगजाभावश्चेत्युभयमपिमिथ्यैवेतिपरस्यविरहरूपविरुद्धत्वगर्भायाअप्युक्तव्याप्तेर्व्यभिचारइतिभावः । रूप्यस्यधर्मिणोमिथ्यात्वात्तत्रसत्यत्वमिथ्यात्वे परस्परविरहरूपेअपिमिथ्यैवेत्युक्तंदूषयति ॥ प्रतिपन्नेति ॥ धर्मिसत्त्वानपेक्षधर्मस्यसत्यत्वंधर्मिमिथ्यात्वेपियुक्तं । तथाचतदुक्तहेतोरप्रयोजकत्वादस्मदुक्तहेतोर्नरूप्येव्यभिचारइतिभावः । ननुप्रतियोगित्वमपिधर्मोविनाधर्मिणंनावतिष्ठते वंध्यासुतादावपि नात्यंताभावप्रतियोगित्वं किंत्वत्यंताभावएववंध्यासुतप्रतियोगिकत्वमित्यतआह ॥ अनिर्वाच्यत्वभंगइति ॥ अत्यंताभावस्यवंध्यासुतप्रतियोगिकत्वेवंध्यासुतस्यापितत्प्रतियोगित्वमवर्जनीयमेवेत्यादिवक्ष्यतइत्यर्थः । परोक्तेमिथ्यात्वोपेतधर्मिकत्वेहेतौ धर्म्यसत्त्वप्रयुक्तसत्त्वाभाववत्त्वमुपाधिमाह ॥ धर्म्यसत्त्वइत्यादिना ॥ असत्त्वे सद्विलक्षणत्वे । असत्त्वं सद्विलक्षणत्वं ॥ धर्मिसत्त्वेति ॥ धर्म्यसत्त्वप्रयुक्तसत्त्वाभाववत्त्वमित्यर्थः । अयंचसाधनावच्छिन्नसाध्यव्यापकोवोध्यः । तेनब्रह्मण्यारोपितमिथ्यात्वादौनसाध्याव्याप्तिः । नञ्द्वयांतर्भावाच्च । वंध्यासुतश्यामत्वादौचनसाध्याव्याप्तिशंकेतिध्येयं । उक्तोपाधेःपक्षाद्व्यावृत्तिमाह ॥ मिथ्यात्वमिति ॥ मिथ्यात्वंतुधर्मिसत्त्वस्यविरहरूपं । अतोधर्मिसत्यत्वंनापेक्षते प्रत्युतधर्मिसत्यत्वंप्रतिक्षिपती

तितत्प्रतिकूलमित्यर्थः ॥ अन्यथेति ॥ सत्त्वविरहरूपातिरिक्तंब्रह्मभिन्नत्वादिकंपारिभाषिकंमिथ्यात्वंसत्यत्वपक्षेप्यविरुद्धमि त्यर्थः। अत्रवदंति "सि० मिथ्यात्वमिथ्यात्वेपिप्रपंचसत्यत्वानुपपत्तिः। तत्रहिपरस्परविरुद्धयोरेकमिथ्यात्वेपरसत्यत्वं यत्र मिथ्यात्वावच्छेदकमुभयवृत्तिनभवेत्। यथापरस्परविरहरूपयोरजततदत्यंताभावयोःशुक्तौ। यथावापरस्परविरहव्यापकयो रजतभिन्नत्वरजतत्वयोस्तत्रैव। तत्रनिषेध्यतावच्छेदकभेदनियमात्। प्रकृतेतुनिषेध्यतावच्छेदकमेवदृश्यत्वादि। यथागोत्वा श्वत्वयोरेकस्मिन्गजेनिषेधेगजत्वात्यंताभावव्याप्यत्वंनिषेध्यतावच्छेदकमुभयोस्तुल्यमितिनैकतरनिषेधेन्यतरसत्त्वंतद्वत्। य थाचसत्यत्वमिथ्यात्वयोर्नपरस्परविरहरूपत्वंनवापरस्परविरहव्यापकत्वं तथोपपादितमधस्तात्। परस्परविरहरूपत्वेपिविषम सत्ताकयोरविरोधात्। व्यावहारिकमिथ्यात्वेनव्यावहारिकसत्यत्वापहारेपिकाल्पनिकसत्यत्वानपहारात्। तार्किकमतसिद्धसं योगतदभाववत्सत्यत्वमिथ्यात्वयोःसमुच्चयाभ्युपगमाच्च। एकसाधकेनापरस्यबाध्यत्वंविषमसत्ताकत्वेप्रयोजकं। यथाशुक्ति रूप्यतदभावयोः। अस्तिचप्रपंचतन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वमतस्समसत्ताकत्वान्मिथ्यात्वंबाधकेनप्रपंचस्यापिबाधान्ना द्वैतहानिरिति। अत्रोच्यते। नतावत्परस्परविरहरूपयोरेकनिषेध्यतावच्छेदकावच्छिन्नत्वंसंभवति। क्वाप्यदर्शनात्। गोत्वा श्वत्वादौतुनपरस्परविरहरूपत्वमतोनोक्तदोषः। यथाचसत्यत्वमिथ्यात्वयोःपरस्परविरहरूपत्वंतथोपपादितमधस्तात्। उपपा दयिष्यतेच। यदपिचविषमसत्ताकयोरविरोधइत्युक्तं तदपिन। विषमसत्ताकेसत्यत्वमिथ्यात्वेकिंरूप्येंगीक्रियेते किंवाजगति। नाद्यः। त्वयारूप्यमिथ्यात्वंतात्विकमित्यग्रेउक्तत्वेनतद्विरोधात्। रूप्येमिथ्यात्वस्यव्यावहारिकत्वेबाध्यत्वापत्त्यारूप्येसत्यत्व

स्यतात्विकत्वापत्तेः । नांत्यः । विषमसत्ताकयोस्तयोःप्रपंचेत्वयानंगीकारात् । अत्रैवसत्यत्वमिथ्यात्वेप्रपंचेसमसत्ताकेइत्युक्तत्वाच्च । तथासत्यप्रातिभासिकत्वेनांगीकृतस्यप्रपंचस्यव्यावहारिकमिथ्यात्वयुक्तस्य तात्विकत्वापत्तेर्दुर्वारत्वाच्च । सत्वत्वमिथ्यात्वयोस्समुच्चयस्त्वत्यंतायुक्तः । त्वयापिसत्यत्वमिथ्यात्वयोःपरस्परसमुच्चयेविरोधाद्बिभ्यतासदसद्वैलक्षण्यस्यरूप्येंगीकाराच्च । यच्चोक्तमेकबाधकेनापरबाध्यत्वमित्यादि तदपिन । परस्परविरहरूपयोरेकबाधकबाध्यत्वस्यासिद्धेः । शुक्तिरूप्यशुक्तिभिन्नत्वयोःपरस्परविरहरूपत्वाभावात् । यच्चोक्तं प्रपंचगतसत्यत्वमिथ्यात्वयोःसमसत्ताकत्वमिति तदपिन । निरसिष्यमाणत्वात् । विरुद्धद्वयोरेकाधिकरणेसमसत्तायाअसिद्धेः । अन्यथावह्नावपिव्यावहारिकानौष्ण्यतदभावौस्यातामितिकालात्ययापदिष्टमात्रोच्छेदःस्यात् । त्वयैवव्यावहारिकौष्ण्याभावविषयत्वेनबाधव्यवस्थोक्तेश्चेतिपूर्वापरविरोधपरिहारंभवानेवंपृष्टोव्याचष्टां । तस्मात्साधूक्तं जगच्चसत्यंस्यादात्मवदिति ॥ [४५।२] संतःस्युरिति ॥ सद्ब्रह्मबंधादित्यर्थः ॥ [४५।३] रूप्याधिष्ठानेति ॥ प्रातिभासिकरूप्यसंबंधादित्यर्थः ॥ [४५।३] रूप्यइति ॥ सत्संबंधादित्यर्थः ॥ [४५।४] असद्वैलक्षण्यंचेति ॥ रूप्येप्रपंचेचेत्यनुषंगः । ब्रह्मणीतिशेषः ॥ असत्स्यादिति ॥ असत्संबंधादित्यर्थः ॥ [४५।४] असतिचेति ॥ अधिकरणत्वेनासतासंबंधादित्यर्थः ॥ [४५।५] भ्रांतीति ॥ अनिर्वचनीयरजतवादेरजतज्ञानस्यसमानाधिकरणप्रकारकतयाभ्रांतित्वासिद्ध्यापत्त्यामिथ्याभूतार्थविषयकतयाभ्रांतित्वं अमिथ्याविषयकतयाचबाधकत्वंवक्तव्यं । उभयोरपिमिथ्याविषयकत्वेभ्रांतिबाधव्यवस्थानस्यादित्यर्थः ॥ [४६।१] मिथ्यात्वेनेति ॥ मिथ्यात्वोपेतधर्मिकत्वेनेत्यर्थः ॥ [४६।१] प्रातिभासिकत्वापत्त्येति ॥ प्रातिभासिकरूप्यसंबंधादित्यर्थः ॥ [४६।२] अप्रामाण्यंचेति ॥ प्रातिभासिकविषयतयारूप्यंज्ञानवद्ब्य

वहारदशायामप्रामाण्यंस्यादित्यर्थः ॥ [४६।२]हेतूक्तस्येति ॥ रूप्यमिथ्यात्वेमिथ्यात्वसाधनायेतिशेषः ॥ [४६।२]धर्मिमिथ्यात्वस्येति ॥
मिथ्यात्वोपेतधर्मिकत्वस्येत्यर्थः । अतोनापक्षधर्मत्वं ॥ [४६।३]मिथ्यात्वे ॥ मिथ्याभूतेतिविशेषणयुक्तत्वेइत्यर्थः । यथाश्रुतेत्वसिद्धि
रेवस्यान्नव्यभिचारइतिबोद्धव्यं ॥ [४६।३]घटरूपादाविति ॥ घटरूपादेर्धर्मिणिघटादौमिथ्यात्वस्याभावेनमिथ्याभूतमिथ्यात्वोपेतध
र्मिकत्वस्यहेतोर्घटरूपादौसत्त्वान्मिथ्यात्वरूपसाध्यस्यचाभावाद्व्यभिचारइत्यर्थः ॥ [४६।३]व्यभिचाराप्रन्त्येति ॥ रूप्यमिथ्यात्वसा
धनदशायांघटरूपादेरमिथ्यात्वसंप्रतिपत्त्याव्यभिचारइत्यर्थः ॥ [४६।३]सत्यत्वेति ॥ सत्यभूतेतिविशेषणस्यावश्यंभावादित्यर्थः । य
थाश्रुतेत्वसिद्धिरेवपरिहृतास्यान्नतुवक्ष्यमाणोविरोधइतिध्येयं ॥ [४६।३]विरोधश्चेति ॥ रूप्यगतमिथ्यात्वेपक्षीकृतेसत्यभूतमिथ्यात्वोपे
तधर्मिकत्वंहेतुस्तदावर्तेत यदिमिथ्यात्वधर्मिणिरूप्येमिथ्यात्वंसत्यंस्यात् । एवंचपक्षेहेतुसिद्ध्यर्थंसत्यत्वेनांगीकृतेरूप्यमिथ्यात्वेय
दिमिथ्यात्वंसाध्यते तदापक्षेनहेतुःस्यात् । तथाचहेतुसाध्ययोःपक्षेसहानवस्थानविरोधइत्यर्थः । रूप्येप्रपंचेसत्यत्वमिथ्यात्वेउभेअ
पिनस्तइत्यत्रदूषणांतरमाह ॥ [४६।४]नचेति॥चकारोदूषणांतरसमुच्चयार्थः । रूप्यस्यप्रपंचस्यचोभयानधिकरणत्वेवंध्यासुतवन्निःस्वरू
पत्वापत्त्यात्वदनभिमतशून्यवादापातःस्यादित्यर्थः । उभयाभावस्त्वयानिःस्वरूपेंगीकृतोनतुसस्वरूपेपिसोंगीकर्तुमुचितः । त
थाचनव्यभिचारइतिभावः । ननुतथापिमिथ्याभूतमिथ्यात्वकत्वादित्यस्यहेतोः स्वप्नप्रतीतस्यगजादेस्तन्मिथ्यात्वस्यचमिथ्या
त्वात्तत्रव्यभिचारइत्यतआह ॥ [४७।१]स्वाप्नस्यापीति ॥ स्वाप्नस्यकल्पितत्वपक्षेपिस्वप्नप्रतीतस्यस्वप्नगजध्वंसादेर्मिथ्यात्वेपिगजादे
र्मिथ्यात्वंसत्यमेवेतिगजादौहेतोरगमनान्नव्यभिचारइत्यर्थः । यद्वापरस्परविरहरूपविरुद्धत्वगर्भायामप्युक्तव्याप्तौपरोदीरितंव्य

भिचारंपरिहरति ॥ [४७।१] स्वप्नस्यापीति ॥ विरहशब्देनात्यंताभावोभिप्रेतः । स्वप्नप्रतीतयोर्गजध्वंसयोस्तुनपरस्परात्यंताभावरू
पत्वं । अतउभयोरपिमिथ्यात्वेपिस्वप्नप्रतीतगजतन्मिथ्यात्वयोरुभयोरपिनमिथ्यात्वं । किंतुगजस्यैव गजमिथ्यात्वंतुगजात्यं
ताभावगर्भतयासत्यमेवेत्यर्थः । ननुप्रपंचमिथ्यात्वंनबाध्यंनवाबाध्यं । किंतुप्रपंचसमसत्ताकं । एकबाधकबाध्यत्वंहिसमसत्ता
कत्वेप्रयोजकं । यथाशुक्तिरूप्यशुक्तिभिन्नत्वयोः । अस्तिचप्रपंचतन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वमितिशंकांनिराकरोति ॥
[४७।२] नन्वेति ॥ एवंचेति ॥ मिथ्यात्वस्यव्यावहारिकत्वादित्यर्थः । परास्परात्यंताभावयोरेकबाधकबाध्यत्वस्याभावादितिभावेनाह
॥ [४७।४] मिथ्यात्वस्येति ॥ [४७।५] पारमार्थिकत्वापातादिति ॥ तथाचसिद्धसाधनमेवेतिभावः ॥ [४८।१] द्वैतेति ॥ उभयोरपिव्यावहारिकप
रत्वेनाव्यवस्थैवस्यादित्यर्थः ॥ [४८।२] तयोरिति ॥ प्रपंचतन्मिथ्यात्वयोरित्यर्थः ॥ [४८।३] अन्यथेति ॥ विरुद्धयोरेकत्रसमसत्ताकत्वेप्रपंचे
तात्त्विकेसत्यत्वमिथ्यात्वेवातात्त्विकौतदभावौवास्यातामित्यर्थः । एतेनकल्पितस्योभयस्यतात्त्विकस्योभयाभावस्यचसत्त्वादिष्टा
पत्तिरितिनिरस्तं । तथासतिरूप्येपिसत्त्वासत्त्वोभयसमुच्चयापत्त्यातदुभयवैलक्षण्यस्यानंगीकरणीयत्वात् । ख्यातिबाधावपिस
त्त्वासत्त्वाभ्यामेवोपपादनीयावितिभावः । एतेनैववृक्षेसंयोगतदत्यंताभावयोरिवप्रपंचेमिथ्यात्वसत्यत्वयोःसमुच्चयइतिनिरस्तं ।
तद्वदवच्छेदकभेदाभावात् । तत्सत्यत्वेत्विष्टापत्तेः । उक्तंचबौद्धाधिकारे सदसत्त्वस्यैकत्रविरोधेनविधिवन्निषेधस्याप्यनुपपत्ते
रिति । संगृह्णाति ॥ तथाचेति ॥ ननुसाध्यस्यमिथ्यात्वस्यसाध्यवत्त्वतदभावाभ्यांदूषणाभिधानंजात्युत्तरंस्यादित्याशंकांनि

राकरोति ॥ [४८।५] नचेति ॥ [४८।५] स्वेति ॥ जातिबीजस्यव्याघातादेरभावादित्यर्थः । प्रत्युतस्वानुगुणमेवेत्याह ॥ [४८।६] उक्तंहीति ॥ नित्य
समाजातिलक्षणाभावाच्चनंसाप्रकृतेप्रसंजतीत्याह ॥ [४८।७] किंचेति ॥ [४८।८] नचात्रेति ॥ यद्यपिमिथ्यात्वस्यमिथ्यात्वेप्रपंचस्यमिथ्यात्व
विशिष्टत्वभंगएवोच्यते तथापिमिथ्यात्वस्यसत्यत्वपक्षेसनोच्यते । किंतुमिथ्यात्वविशिष्टत्वमेव । अद्वैतहानिस्तूच्यतइत्यर्थः ।
परस्यैकजातिवादित्वमित्याह ॥ [४९।१] प्रत्युतेति ॥ सूरिभिराघोषितंचपरेषांजातिवादित्वमित्याह ॥ [४९।२] उक्तंहीति ॥ अवष्टभ्यसाध
नमालंव्य । व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यामार्ष्यसामान्यभंगऐत् ॥ ७ ॥ सामान्यतोमिथ्या
त्वभंगः ॥ २ ॥७॥ हेतुंनिराचष्टे ॥ [४९।४] दृश्यत्वेति ॥ मिथ्या मिथ्यार्थविषयकः॥ [४९।४] प्रत्ययत्वादिति ॥ मीमांसकरीत्यात्र्यंवयंवप्र
योगः । नचालयविज्ञानेशून्यंविज्ञानेचव्यभिचारः । विशिष्टप्रत्ययत्वस्यविवक्षितत्वात् । छर्दिः ष्ठीवनं ॥ [४९।६] बौद्धमतइति ॥
स्तंभादिप्रत्ययस्यासदर्थविषयकत्वरूपाप्रामाण्यंस्तंभादिप्रत्ययग्राहकेणोत्सर्गतएवगृहीतमित्यनुकूलतर्कसद्भावादुक्तानुमानेनस्तं
भादिप्रत्ययस्यमिथ्यार्थकत्वसिद्धिः । अन्यमतेतुघटादिज्ञानेप्रामाण्यस्यसदर्थकत्वस्यस्वतस्त्वादबुभुत्सितग्राह्यज्ञानग्राहकेणसा
क्षिणाप्राङ्मिथ्यात्वानुमानात्प्रामाण्यमेवगृहीतमितिपश्चात्प्रवृत्तस्यमिथ्यात्वानुमानस्यबाधिततयानस्वसाध्यसाधकत्वमित्यर्थः ।
संभावितप्रकारान्दृश्यत्वस्यदूषयितुंपृच्छति ॥ [४९।७] किंचेति ॥ [५९।७] वृत्तीति ॥ इंद्रियार्थसन्निकर्षाद्वाह्येंद्रियद्वारानिस्सृतांतःकरणप
रिणामोवृत्तिः । तद्व्याप्यत्वंतयाप्राप्यत्वं । तयासहसंवंधविशेषइत्यर्थः ॥ [४९।७] फलेति ॥ उक्तरूपायांवृत्तौप्रतिविंवितंचैतन्यंफलं ।

तेनसंबंधः तद्व्याप्यत्वमित्यर्थः ॥ साधारणमिति ॥ वृत्तिव्याप्यत्वफलव्याप्यत्वयोरनुगतंव्यवहारप्रयोजकविषयत्वंवातदन्य
तरत्वादिकंवेत्यर्थः ॥ कदाचिदिति ॥ स्वस्याविद्यमानतादशायांचिदविषयत्वेपिविद्यमानतादशायांचिद्विषयत्वंकदाचिच्चि
द्विषयत्वं । धर्मंनजानामीत्यज्ञानोपरागेणवाघटंजानामीतिज्ञानोपरागेणवाचिद्विषयत्वंकथंचिच्चिद्विषयत्वमित्यर्थः ॥ स्वव्य
वहारइति ॥ अद्वितीयत्वादिचैतन्यव्यवहारेपिस्वातिरिक्तसंविदपेक्षास्तीत्यव्यभिचारायनियतिरिति । स्वातिरिक्तसंविदपेक्षा
व्याप्यस्वव्यवहारकत्वंतदर्थः । चैतन्येतुस्वातिरिक्तसंविदंतराभावेपिसुषुप्तौनित्यसिद्धस्फुरणरूपव्यवहारदर्शनान्नतन्नियमइत्य
र्थः ॥ अस्वप्रकाशत्वंवेति ॥ पराप्रकाश्यत्वाभावइत्यर्थः ॥ आत्मनइति ॥ वेदांतजन्येनोक्तरूपमंनःपरिणामेनवृत्याआ
त्मनोपिव्याप्यमानत्वात्तत्रव्यभिचारइत्यर्थः ॥ अन्यथेति ॥ आत्मनोवृत्तिव्याप्यत्वानंगीकारइत्यर्थः । ननुनवेदांतवैयर्थ्यं ।
जपाद्यर्थवत्त्वोपपत्तेरित्यत्राह ॥ ब्रह्मपराणामिति ॥ उपक्रमादिलिंगैर्ब्रह्मप्रतीतीच्छयापूर्वपूर्वाध्यापकोच्चारितानामित्यर्थः ॥
श्रवणादिविधेश्चेत्ति ॥ फलाभावादित्यर्थः । ननुनफलाभावः । श्रवणविधेर्विश्वजिन्न्यायेनस्वर्गफलवत्त्वस्यांततःसंभवादित्य
तउक्तं ब्रह्मज्ञानार्थमिति । "आत्मावाअरेद्रष्टव्यःश्रोतव्य" इत्यत्रश्रवणेनभावयेत्किमितिफलाकांक्षायांवाक्येनदर्शनंविनि
युज्यते । ननुव्यवहितंस्वर्गादिसंबध्यंते । सन्निहितफलाभावएवव्यवहितस्यकल्पनात् । अतःश्रवणविधिर्ब्रह्मज्ञानार्थस्त्व
न्मतेव्यर्थःस्यादित्यर्थः । ननुनश्रवणविधिर्ब्रह्मज्ञानार्थः । ब्रह्मणोऽदृश्यतयासन्निहितस्यापिदर्शनशब्दस्यतदबोधकत्वात् । अ
न्यथाभावयेत्किमित्यपेक्षायांसमानपदोपात्तंश्रवणमेववाक्योपात्तदर्शनापेक्षयाऽतिसन्निहितंफलत्वेनसंबध्येत । एवंचसन्निहित

फलाभावेव्यवहितस्यापिग्राह्यतयास्वर्गाद्यर्थएवश्रवणविधिः । अतोनव्यर्थइतियोब्रूयात्तंप्रत्याह ॥ [५।१।३] ब्रह्मविचारयतोरिति ॥ ब्रह्मविचारयतोः ब्रह्मविचारयितुमुपक्रांतयोः । गुरोर्मौनंशिष्यस्यमौढ्यं । चकारःपूर्वदूषणसमुच्चये । यद्वोभयेषामुभयं । नन्वापाद्यमानंमौनंशब्दवक्तृत्वाभावोवावेदांतरूपशब्दवक्तृत्वाभावोवाब्रह्मज्ञानोद्देश्यकशब्दवक्तृत्वाभावोवा । नाद्यः । अज्ञेयत्वेपिब्रह्मणस्तद्विचारेप्रवृत्तयोर्देहनिर्वाहादिहेतुशब्दप्रयोगेविरोधाभावात् । नद्वितीयः । ब्रह्मावोधकस्यापिवेदांतरूपशब्दस्यश्रुतशस्त्राधिकरणन्यायेनवचनोपपत्तेः । नतृतीयः । इष्टापत्तेः ब्रह्मणोज्ञानाविषयत्वेनतज्ज्ञानोद्देशेनशब्दप्रयोगस्यमयानंगीकरणात् । नचैवंब्रह्मविचारेवेदांतवाक्यप्रयोगवैय्यर्थ्यमितिवाच्यं । वेदांतवाक्यैरेवब्रह्मविचारस्यविहिततयातत्प्रयोगसंभवात् । वेदांतविज्ञानसुनिश्चितार्था इतिश्रुतेरितिचेत् उच्यते । उपक्रमादिलिंगकस्यब्रह्मज्ञानेच्छापूर्वकोच्चरितत्वरूपवेदांतनिष्ठब्रह्मविषयकतात्पर्यावधारणरूपस्यविचारस्यासिद्धेर्मौनशब्दार्थत्वेनविवक्षितत्वात् । ब्रह्मणोऽज्ञेयत्वेनिरुक्तविचारस्यासंभवत्स्वरूपत्वात् । मौढ्यशब्देनब्रह्मज्ञानप्रागभावाभावोभिप्रेतइतिनकश्चिद्दोषः ॥ [५।१।३] ब्रह्मजिज्ञासेति ॥ कृदंतजिज्ञासाशब्दयोगेजिज्ञासाकर्मभूतब्रह्मगतकर्मत्वमभिदधानाद्ब्रह्मशब्दात्षष्ठी । "कर्तृकर्मणोःकृती" तिसूत्रात् । तस्याश्च "प्रतिपदविधानाषष्ठीनसमस्यत" इतिसमासनिषेधेपिकृद्योगलक्षणांषष्ठीसमस्यंतइतिप्रतिप्रसवात्समासेजाते "सुपोधातुप्रातिपदिकयो" रितिसूत्रेणषष्ठीलोपेब्रह्मजिज्ञासेतिपदंनिष्पद्यते । एवंब्रह्मज्ञानमित्यपि । एवंचब्रह्मजिज्ञासा ब्रह्मज्ञानमित्यादौकर्मत्वार्थकषष्ठ्यर्थांतर्भावेनवाक्यार्थोनस्यात् । षष्ठ्यर्थांतर्भावश्चसमासशक्त्यावापूर्वपदलक्षणयावालुप्तषष्ठीस्मृत्यावाषष्ठ्यर्थोपस्थितावित्यन्यदेतत् । ज्ञानापरप

र्यायवृत्त्यव्याप्यत्वेब्रह्मणोज्ञानक्रिययाऽऽप्तुमिष्टतमत्वरूपज्ञानकर्मत्वानुपपत्त्योक्तषष्ठ्यर्थातभावेणवाक्यार्थोननिष्पद्येतेतिभा
वः ॥ तमेवेति ॥ कर्मणीतिद्वितीयांतिकृतव्यादिषुचसंबध्यते ॥ दृशोज्ञानइति ॥ विशेषणाज्ज्ञानेविशिष्टाज्ज्ञानादित्यर्थः ।
ननुमैवदृशंज्ञांसी त्तथापिवृत्तिव्याप्यत्वरूपोक्तहेतुःसुज्ञानएव । नहिदृग्विषयत्वरूपंदृश्यत्वमत्रहेतुत्वेनाऽभिप्रेतमित्यतआह ॥
दृग्विषयत्वेति ॥ अयमर्थः ॥ नात्रप्रकृतहेतोरज्ञानमापाद्यते । किंतुमिथ्यात्वेसाध्येवृत्तिव्याप्यत्वरूपंपारिभाषिकंदृश्यत्वं
हेतूकुर्वतापिप्रकृतिप्रत्ययावगतदृग्विषयत्वरूपदृश्यत्वमपिदुरपह्नवं । परंतुतत्तत्तेनहेतुत्वेननाभिप्रेतं । एवंचहेतुत्वेनानभिमतो
पिदृग्विषयत्वरूपउपाधिर्यदिवृत्तिव्याप्यस्तदातदुपाधिविशेषणीभूतदृशोपिवृत्तिव्याप्यत्वमवर्जनीयमेव । यदिनवृत्तिव्याप्यस्त
दातदुपाधेर्नमिथ्यात्वसिद्धिर्भागासिद्धिश्चस्यादिति । ननुशब्दाजन्यवृत्तिविषयत्वमेवदृश्यत्वं । अन्यथाशशविषाणंतुच्छमित्या
दिशब्दजन्यवृत्तिविषयेतुच्छेव्यभिचारस्यदुरुद्धरत्वापातात् । एवंचसतिशुद्धस्यवेदांतजन्यवृत्तिविषयत्वेपिनतत्रव्यभिचारः ।
शुद्धतुच्छयोःशब्दाजन्यवृत्तिविषयत्वानभ्युपगमात् । यद्वासप्रकारकवृत्तिविषयत्वमेवदृश्यत्वं । प्रकारश्चसोपाख्यःकश्चिद्धर्मः ।
तेननिष्प्रकारकज्ञानविषयीभूतेशुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूतेतुच्छेचनव्यभिचारः । अभावत्वस्यापिसोपाख्यत्वा
दभावत्वप्रकारकज्ञानविषयीभूतेऽभावेनभागासिद्धिः । उपाख्यात्वस्तीतिप्रतीतिविषयत्वादीत्यन्यदेतत् । तस्मान्नोक्तोव्यभि
चारइतिचेन्न । चाक्षुषतादृशघटादिविषयकवृत्तिविषयत्वाद्ब्रह्मणस्तत्रव्यभिचारस्यदुष्परिहरत्वात् । नचघटादिप्रत्ययेषुनब्रह्म
विषयइतिवाच्यं । तथासतितवस्ववचनविरोधःस्यादित्याह ॥ सर्वप्रत्ययेति ॥ घटादिसर्वप्रत्ययविषयोब्रह्मेत्यंगीकुर्वतांस्वा

चार्याणांवचनस्यापिस्ववचनत्वात्तद्विरोधःस्यादित्यर्थः । नचविशिष्टंसर्वप्रत्ययवेद्यंनशुद्धमितिवाच्यं । "प्रपंचस्यप्रविलयःशब्दे
नप्रतिपाद्यत" इत्युत्तरार्धेनजगद्विलयाधिष्ठानत्वोक्त्यासर्वप्रत्ययवेद्यस्यशुद्धत्वात् । पूर्वार्धेपिव्यवस्थितइत्यनेनाऽनुगतत्वो
क्त्याशुद्धस्यैवप्रतीतेः ॥ दृश्यत्वंचेति ॥ वृत्तिव्याप्यत्वरूपमितिशेषः ॥ व्यावहारिकमेवेति ॥ नतुपारमार्थिकसत्ताकधर्मि
समसत्ताकमतोनव्यभिचारइत्यर्थः ॥ ब्रह्मजगतोरिति ॥ जगतोव्यावहारिकत्वेसिद्धेतन्मध्यवर्तिनोवृत्तिव्याप्यस्यहेतोःपार
मार्थिकव्यावहारिकयोर्ब्रह्मजगतोर्विद्यमानस्यापिव्यावहारिकत्वंसिध्यति । पारमार्थिकव्यावहारिकविभागश्चाद्यापिनसिद्धइ
त्यर्थः । तथाचनिश्चितसाध्याभाववतिब्रह्मणिनिरुक्तहेत्वभावस्यसंदिग्धत्वात्संदिग्धानैकांतिकतास्यादितिभावः । यदिविपक्षे
धर्मिसमसत्त्वस्यहेतोर्वृत्तिव्यभिचारस्तदागुंजापुंजारोपितवह्नौवह्नित्वस्यधर्मिसमसत्ताकस्यव्यावहारिकोष्णत्वाभावसमानाधि
करणस्योष्णत्वेनव्यभिचाराद्वह्नित्वेनोष्णत्वानुमानंव्यावहारिकवह्नावपिनस्यादित्यपिदोषोबोध्यः ॥ किंचेति ॥ दूषकतौपयि
केव्यभिचारेयदिधर्मिसमसत्ताकहेतुवृत्तिरपेक्षिता । तर्हितादृशेबाधादिकेपिधर्मिसमसत्तासाध्येऽपेक्षितास्यात् । समानन्याय
त्वात् । किंचगमकतौपयिकेरूपेचपक्षवृत्तित्वादौहेतोर्धर्मिसमसत्ताकवृत्तिरपेक्षणीयास्यादित्यर्थः । ततःकिमित्यतआह ॥ तथा
चेति ॥ आत्मास्वप्रकाशः अनुभूतित्वात् व्यतिरेकेणघटवदितित्वदुक्तानुमानेपक्षीकृतेआत्मनिधर्मिसमसत्ताकस्यसाध्यस्याभा
वोस्तीतिबाधःस्यात् । तत्रैवधर्मिसमसत्ताकस्यानुभूतित्वस्यहेतोरभावादसिद्धिश्चस्यात् । तत्रहेतुस्तात्विकधर्महीनइत्यनेनोक्त
इत्यर्थः ॥ एवमिति ॥ साध्याभाववतिसाधनाभावमात्रंनाव्यभिचारः । किंतुसाध्याभाववतिधर्मिसमसत्ताकःसाधनस्याभा

वोव्यभिचाराभावइत्यपिस्यादित्यर्थः । तत्रदोषमाह ॥ तथाचदृश्यत्वादीनामिति ॥ वृत्तिव्याप्यत्वादीनामित्यर्थः । साध्याभाववत्यात्मनिदृश्यत्वादेःसाधनस्याभावेविद्यमानेपिधर्मिसमसत्ताकत्वरूपविशेषणविशिष्टस्साधनाभावोनास्तीतिव्यभिचारएवस्यादित्यभिप्रायः ॥ तस्मादिति ॥. त्वदुक्तेस्वप्रकाशत्वानुमानेऽनुभूतित्वहेतोर्व्यावहारिकंस्यात्मनिपक्षेसत्त्वाद्यथानासिद्धिस्तथामिथ्यात्वानुमानेवृत्तिव्याप्यत्वस्यहेतोर्व्यावहारिकस्यात्मनिविपक्षेसत्त्वाद्व्यभिचारोदुरुद्धरइत्यर्थः ॥ अथधर्मीति ॥ धर्मिशब्दस्यसंबंधिशब्दतयासमभिव्याहृतपरत्वेनघटादिधर्मिसमसत्त्वरूपविशेषणविशिष्टस्यहेतोःपक्षेसत्त्वान्नासिद्धिः। उक्तन्यायेनैवात्मपरतयाधर्मिशब्दस्यविपक्षेआत्मनितत्समसत्त्वस्यहेतोरभावान्नव्यभिचारोपीत्यर्थः । व्यभिचारलक्षणांतर्गतहेतौधर्मिसमसत्वंविशेषणंप्रागभिहितं संप्रतितुन्यायवाक्यांतर्गतहेत्ववयवार्थेप्रकृतेहेतौधर्मिसमसत्त्वंविशेषणमुच्यतइतिभेदः ॥तर्हीति ॥ विषयत्वापरपर्यायकर्मत्वार्थककृत्यप्रत्ययांतेनवृत्तिव्याप्यत्वहेत्वंतर्गतेनव्याप्यशब्देनवृत्तिविषयत्वमभिहितं । तथाचधर्मिसमसत्ताकत्वरूपविशेषणविशिष्टंविषयत्वमेवहेतुरस्तु । तात्विकधर्महीनेचब्रह्मणिधर्मिसमसत्ताकस्यकस्यचिद्धर्मस्याभावाद्व्यभिचाराभावेनवृत्तीत्यस्यविशेषणस्यवैयर्थ्यमितिभावः ॥ ममेति ॥ ब्रह्मणितात्विकधर्मान्अंगीकर्तुः ॥ दृष्टांतेति ॥ व्यावहारिकदृश्यत्वाधिकरणेशुक्तिरूप्येधर्मिसमसत्त्वस्यदृश्यत्वस्याभावादित्यर्थः । व्यभिचाराभावंशंकते ॥ नन्विति ॥ साध्याभाववतिशुद्धेहेतोरप्यभावः । हेतुमतिचविशिष्टेसाध्यमप्यस्ति । अतोनव्यभिचारइत्यर्थः । उक्तंचसंक्षेपशारीरके “बहुनिगद्यकिमंत्रव

दाम्यहंशृणुतसंग्रहमद्वयआत्मनि । सकलवाङ्मनसातिगताचितिःसकलवाङ्मनसव्यवहारभा" गिति ॥ [५३।३] स्वतइति ॥ शुद्धेवृत्तिव्याप्यत्वरूपहेत्वभावेशुद्धासिद्धिप्रसंगादित्यर्थः ॥ [५३।४] अज्ञातइति ॥ अन्यथाशुद्धंनदृश्यमितिज्ञानाविषयत्वाविशेषाच्छुद्धेतरस्मिन्नपिदृश्यत्वाभावसिद्धिःस्यादित्यर्थः ॥ [५३।४] दृश्यत्वनिषेधायेति (॥ दृश्यत्वंनिषेधतेति ॥) वृत्तिव्याप्यत्वनिषेधायेत्यर्थः । नन्वभावबुद्धावधिकरणोपस्थितिरपेक्षिता । नत्वभावग्राहकप्रमाणजन्याधिकरणोपस्थितिःप्रमाणजन्यातदुपस्थितिर्वा । आद्येपायौरूपात्यंताभावश्चाक्षुषोनस्यात् । द्वितीयेगौरवं । अधिकरणोपस्थितिश्चस्वतःस्फुरणरूपास्तीतिसुबोधःशुद्धेवृत्तिव्याप्यत्वरूपहेतोर्व्यतिरेकइतिशंकते ॥ [५३।५] नचेति ॥ [५३।५] दृश्यत्वेति ॥ वृत्तिव्याप्यत्वरूपेत्यर्थः ॥ [५३।६] शुद्धंस्वप्रकाशमिति ॥ विधिनिषेधयोरविषयस्यविधिनिषेधाभाजनत्वात् । अन्यथातिप्रसंगादित्यर्थः ॥ [५३।७] लाघवेनेति ॥ ब्रह्मण्यमिथ्यात्वसिद्ध्यर्थंवृत्तिव्याप्यत्वंरूपंदृश्यत्वंब्रह्मण्यनभिप्रेतंमिथ्यात्वेप्रयोजकमभिहितंपरेण । नचैतावतापिपरेष्टसिद्धिः । लाघवेनस्फुरणमेवमिथ्यात्वेतंत्रं । नतूक्तदृश्यत्वं । एवंचादृश्यमपिब्रह्मस्वतःस्फुरदपिस्फुरणरूपमिथ्यात्वप्रयोजकवत्त्वान्मिथ्यैव । नतुपरतःस्फुरद्रूप्यादिमात्रमित्यपिस्यादित्यर्थः । ननुनलघुनोपिस्फुरणस्यमिथ्यात्वप्रयोजकत्वं । किंतर्हिगुरुणोप्युक्तदृश्यत्वस्यैव । अन्यथाब्रह्मणोपिमिथ्यात्वापत्तौतत्सत्यतापराणां "सत्यंज्ञानं तत्सत्य" मित्यादिश्रुतीनामुपरोधःस्यादतउक्तं ॥ [५४।१] तत्सत्यत्वश्रुतिस्त्विति ॥ [५४।२] तत्प्रयोगवैयर्थ्याच्चेति ॥ वाक्यस्थानांपदानांसंभूयैकार्थप्रतिपादकत्वरूपमेकवाक्यत्वंनस्यादित्यर्थः ॥ [५४।३] व्यतिरेकेति ॥ व्यतिरेकसहचारज्ञानस्यापिव्याप्तिग्रहहेतुत्वादित्यर्थः । "सि० अत्रवदंति । "वृत्तिकालेवृत्तिरूपेणधर्मेणशुद्धत्वासंभवाच्छुद्धस्यवृत्तिविषयत्वं

नसंभवति । अतःशुद्धंस्वप्रकाशमितिवाक्यस्यलक्षणयाऽशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः । तथाचाशुद्धत्वव्यावृत्त्याशुद्धे
स्वप्रकाशतापर्यवस्यति । यथाभेदनिषेधादभिन्नत्वं । नचशुद्धपदेनाभिधयालक्षणयावाशुद्धाप्रकाशेतत्प्रयोगवैयर्थ्यमितिवाच्यं ।
पर्य्यवसितार्थमादायसार्थकत्वोपपत्तेः । एवंचशुद्धंनदृश्यंनमिथ्येत्यस्याप्यशुद्धत्वदृश्यत्वमिथ्यात्वयोर्व्यापकमित्येतत्परत्वेनशुद्धे
दृश्यत्वमिथ्यात्वयोर्व्यतिरेकःपर्यवस्यती" ति । अत्रब्रूमः । नतावदस्वप्रकाशत्वाशुद्धत्वयोर्व्याप्यव्यापकभावग्रहमात्रेणशुद्धे
स्वप्रकाशतापर्यवस्यति । किंतुशुद्धेऽस्वप्रकाशंत्वव्यापकस्याशुद्धत्वस्यव्यावृत्तौज्ञातायामेव । तथाचव्यापकव्यतिरेकग्रहार्थमा
वश्यकंशुद्धज्ञानं । किंचास्वप्रकाशत्वाशुद्धत्वयोर्व्याप्यव्यापकभावग्रहोपितदुभयव्यतिरेकयोःशुद्धत्वंस्वप्रकाशत्वयोःशुद्धेसह
चारग्रहेसत्येवेतिघट्टकुटीप्रभातवृत्तांतः । ननुनमिथ्यात्वदृश्यत्वव्यतिरेकयोःसहचारग्रहापेक्षा । साहिनिश्चितसाध्याभाववति
साधनग्रहेणव्यभिचार(संशये)ज्ञानेसतिस्यात् । नचात्रसाध्याभावनिश्चयःशुद्धेसंभवति । नवातत्रहेतुग्रहःसंभवति । शुद्धस्या
ज्ञेयत्वादित्यतआह ॥ विशिष्टज्ञानइति[५४।३] ॥ माभूत्केवलस्यशुद्धस्यज्ञानं । तथापिशुद्धेव्यभिचारएव । अशुद्धस्यविशिष्टस्यज्ञे
यत्वेनैवंतदनुगतस्यशुद्धस्यविशेष्यस्यज्ञेयत्वादित्यर्थः ॥ नचविष्णावइति[५४।५] ॥ तथाचविशेष्येशुद्धेहेत्वगमनान्नव्यभिचारइत्यर्थः
॥ देवतात्ववदेवेति[५४।६] ॥ विशेषणस्यमिथ्यात्वासिद्धिश्चेत्यपिद्रष्टव्यं ॥ घटत्वादीति[५४।६] ॥ तथाचविशेष्यस्यघटस्यनमिथ्यात्वंस्या
दित्यर्थः । दृश्यत्वं वृत्तिव्याप्यत्वरूपं ॥ विशिष्टइति[५४।७] ॥ तथाचविशेष्यांशेयदज्ञानविरोधितदेवविशिष्टज्ञानमावश्यकमित्य
र्थः । ननुविशिष्टज्ञानानंतरमव्यवधानेनविशेष्यज्ञानमुत्पद्यते ततएवविशेष्यविषयकाज्ञानादिनिवृत्तिः नतुविशिष्टज्ञानादि

त्यतआह ॥ दंडीति ॥ तथाचाव्यवहितविशेष्यज्ञानकल्पनमप्रामाणिकमितिभावः । एतेनेत्यस्यविवरणमनुभवविरोधादिनै वेति । विशिष्टज्ञानेनैवविशेष्यमपिज्ञातमित्यनुभवेनज्ञातत्वरूपविषयत्वस्यविशेष्येपिसत्त्वादित्यर्थः ॥ अतएवेति ॥ विशिष्ट स्यदृश्यत्वेविशेष्यस्यदृश्यत्वादेवेत्यर्थः ॥ साकल्येनेति ॥ प्रतीतार्थासंभवादित्यर्थः । श्रुतेरांतरानुपपत्तिंचाह ॥ अन्यथेति ॥ यत्सदादिनाशुद्धस्यब्रह्मणोप्रतिपादनेशुद्धेब्रह्मण्यदृश्यत्वंनसिध्येदित्यर्थः ॥ एतेनेति ॥ उपहितस्यदृश्यत्वेशुद्धस्यतद्रूपधेयस्या पिदृश्यत्वमवर्जनीयमेव । तस्यचमिथ्यात्वाभावाद्व्यभिचारएवेत्यर्थः । चरमवृत्तेर्ब्रह्मेतराविषयकत्वेसतिब्रह्मविषयिकायाःपरि शेषेणापिशुद्धविषयकत्वंवाच्यमित्याह ॥ चरमवृत्तेरिति ॥ यद्वाअस्त्वेतद्यथातथा द्विशिष्टविषयकवृत्तौविशेष्यस्यशुद्धात्मनो विषयत्वात्तत्रव्यभिचारइति । अविशिष्टविषयचरमवृत्तिविषयत्वाच्छुद्धात्मनिस्पष्टोव्यभिचारः । ननुचरमवृत्तिरपिविशिष्टवि षयैवेतिकस्यचित्समाधानमाशंक्यनिराकरोति ॥ एतेनेति ॥ चरमवृत्तेर्विशिष्टविषयत्वेनवक्ष्यमाणेनेत्यर्थः । तदेवाह ॥ चरमवृत्तेरिति ॥ स्वं चरमवृत्तिः ॥ स्वप्रकाशत्वस्येति ॥ स्वस्मिन्स्वस्यविषयत्वांगीकारादित्यर्थः ॥ अप्रमात्वस्यचेति ॥ मिथ्याभूतचरमवृत्तिविषयत्वादित्यर्थः । उपलक्षणमेतत् । शाब्दबोधेशब्दानुपस्थिताभाननियमेनवृत्तेःशब्दानुपस्थितायास्तत्रभा नानुपपत्तेः । नवाततोऽज्ञानतत्कार्यनिवृत्तिःस्यात् । अज्ञानतत्कार्याविषयकवृत्तेरेवतदुभयनिवर्तकत्वात् । अन्यथाऽहमज्ञोयं घटइत्यादिज्ञानानामप्युपहितविषयत्वेनाज्ञाननिवर्तकत्वप्रसंगः ॥ बहिर्भावेचेति ॥ चरमवृत्तेःस्वविषयबहिर्भावेचरमवृत्तिवि

षयस्यनिष्प्रपंचस्यसत्यत्वाद्व्यभिचारइत्यर्थः । ननुनचरमवृत्तिःस्वविषयांतर्गता । नापितद्विषयस्यसत्यत्वं । वृत्तेःशाब्दवृत्ताव भासमानायाएवोपधायकत्वाभ्युपगमात् । तदुक्तंकल्पतरौ । शुद्धंब्रह्मेतिविषयीकुर्वाणावृत्तिःस्वस्वेतरोपाधिनिवृत्तिरुदयते । स्वस्याअप्युपाधित्वाविशेषात् । एवंचनानुपहितस्यविषयता । वृत्त्युपरागोत्रसत्तयोपयुज्यते । नभास्यतयाविषयकोटौप्रवेशे नेति । अयमभिप्रायः । यथाऽज्ञानोपहितस्यसाक्षित्वेपिनाऽज्ञानंसाक्षिकोटौप्रविशति किंतुसाक्ष्यकोटावेव । एवंवृत्त्युपहितस्य विषयत्वेपिनवृत्तिर्विषयकोटौप्रविशति । स्वविषयत्वानुपपत्तेः । किंतुस्वयमविषयोपिचैतन्यस्यविषयतांसंपादयतीतिनकाप्यनु पपत्तिरिति । अत्रब्रूमः । यदिवृत्तिःस्वसन्निधिमात्रेणचैतन्यस्यस्वोपहिततांसंपाद्यस्वयमुपाध्यविषयापिसतीउपहितमिथ्याभू तार्थविषयाभवति तर्ह्यज्ञानमपिस्वसन्निधिमात्रेणचैतन्यस्यस्वोपहिततांसंपाद्याऽज्ञानाविषयकंसदज्ञेयविषयकंस्यादितिमिथ्याभू तार्थविषयकमेवाज्ञानंस्यात् नतुशुद्धचिद्विषयकं । उक्तविधयामिथ्याभूतार्थाश्रितंचस्यात् नतुशुद्धचिदाश्रितं । इष्टंचाज्ञा नस्यशुद्धचिदाश्रयविषयत्वंपरेषां । यदाहुः "आश्रयत्वविषयत्वभागिनीनिर्विशेषचितिरेवकेवला । पूर्वसिद्धतमसोहिपश्चिमोना श्रयोभवतिनापिगोचर" इति । तथाचापसिद्धांतः । नन्वज्ञानमपिस्वोपधानदशायामेवब्रह्मविषयीकरोति स्वानुपधानदशा यांस्वस्यैवाभावात् । तथाचज्ञानाज्ञानयोरुभयोरप्युपाध्यविषयत्वेसत्युपहितविषयत्वात्समानविषयत्वमपि । अतएवोपाधिवि षयज्ञानानिनाज्ञाननिवर्तकानि अज्ञानस्योपाध्यविषयत्वेनसमानविषयत्वाभावात् । समानविषयत्वेनैवतयोर्निवर्त्यनिवर्तक भावात् । मैवं । शुद्धचिदाश्रयविषयमज्ञानमितिसिद्धांतभंगप्रसंगात् । अन्योन्याश्रयाच्च । तथाहि । लब्धेउपहितेविषयेऽज्ञान

स्वरूपसिद्धिः अज्ञानस्वरूपेचसिद्धेतदुपहितरूपविषयसिद्धिरिति । एवमुपहिताश्रयत्वेऽप्यन्योन्याश्रयः । किंचवृत्तेरप्यन्यो
न्याश्रयादेवनोपहितविषयत्वं । तथाहि । अनुपहितस्यशुद्धस्यवृत्त्यविषयत्वेनचैतन्यस्यचरमवृत्तिविषयत्वायतटस्थयाप्युत्पन्न
यावृत्त्याउपहितत्वं उपहितेसतिचैतन्येतद्विषयकवृत्त्युत्पत्तिः । निर्विषयकवृत्तेरनुत्पादात् । एवंचचैतन्यस्यविषयत्वेतद्विषयं
कवृत्त्युत्पत्तिः वृत्त्युत्पत्तौचचैतन्यस्यवृत्त्यधीनविषयत्वमित्यन्योन्याश्रयः । तस्माच्छुद्धस्यैवचैतन्यस्यचरमवृत्तिविषयता । त
स्यचाऽमिथ्यात्वाद्व्यभिचारएवेतिसाधूक्तंव्यभिचारानुद्धारादिति ॥ नचस्वरूपेणेति ॥ विशिष्टाविषयकवृत्तिव्याप्यत्वमेवेत्यर्थः
॥ ब्रह्मत्विति ॥ विशिष्टविषयवृत्तिव्याप्यमेवेत्यर्थः ॥ निर्विकल्पकेति ॥ निर्विकल्पकाभावपक्षेविशिष्टाविषयवृत्तेरभावाद्घ
टादौसर्वत्रहेत्वसिद्धिः । निर्विकल्पकसद्भावपक्षेनित्यातींद्रियस्यविशिष्टमात्रविषयकानुमित्यादिविषयत्वात्तत्रभागासिद्धिः ॥
वह्नीति ॥ लिंगादिविशेषदर्शनस्यविशिष्टज्ञानसामग्रीत्वात्ततोनानुमितिरूपानिर्विकल्पकधीरित्यर्थः । ननुस्वाभिन्नेतरविशेषण
प्रयुक्तविशिष्टाविषयकवृत्तिव्याप्यत्वमुक्तहेत्वर्थः । तथाचनिर्विकल्पकाभावपक्षेपिघटादौनासिद्धिः । घटोयमितिवृत्तिमादायनि
रुक्तहेतोस्तत्रसत्त्वात् । इदंतादेरपिस्वाभिन्नत्वात् । नित्यातींद्रियस्यापितत्तत्पदजन्यतत्तदर्थमात्रगोचरस्मृतिविषयत्वेनतत्रापिना
सिद्धिः । ऐंद्रियकेघटादावतींद्रियेधर्मादौचघटत्वादेर्धर्मत्वादेश्चविशेषणस्यघटादिधर्म्याद्यभिन्नत्वात् । धर्मधर्मिणोरभेदात् । स्वा
भिन्नेतरद्यद्विशेषणं पटत्वादि तत्प्रयुक्तंयद्विशिष्टं पटादि तदविषयकंयद्विशिष्टंज्ञानं घटोयमितिप्रत्यक्षं धर्मपदजन्याधर्मइतिस्मृ
तिः । तद्विषयत्वाद्घटादेर्धर्मादेश्चनतत्रहेत्वसिद्धिः । ब्रह्मणस्तुस्वाभिन्नंयदानंदादि तदितरत्घटादि । तत्प्रयुक्तंविशिष्टं घटादिविशि

ष्टभूतलादि तद्विषयकएवज्ञानेभानं। सर्वस्यापिब्रह्मविषयकप्रत्ययस्यान्यनिबंधनविशिष्टविषयकत्वात् । एवंचब्रह्मणिहेत्वाभावादे वनव्यभिचारइतिचेन्मैवं। ब्रह्ममात्रविषयकवेदांतजन्यनिरुक्तवृत्तिमादायव्यभिचारतादवस्थ्यात् । ननुवेदांतजन्यावृत्तिरपिवि शिष्टविषयैवेत्तिंनव्यभिचारइतिचेन्मैवं। तद्विशिष्टमकल्पितंकल्पितंवा। नाद्यः । ब्रह्मणोखंडार्थत्वहानिप्रसंगात्। नद्वितीयइत्याह ॥वेदांतानामिति॥कल्पितविशिष्टपरत्वादित्यर्थः॥तरंतीति॥शोकरूपाज्ञानस्यतरणरूपनिवृत्तिंप्रतिसाधनत्वेनोक्ताया आत्मवि दोनुवावदात्मविषयकभ्रमत्वंयुक्तं। भ्रमस्याज्ञानानिवर्तकत्वात्। किंतुसाप्रमैव। प्रमात्वंचतस्याःकल्पितविशिष्टाविषयत्वेनैव। त स्माद्वेदांतानांकल्पितविशेषविनिर्मुक्तशुद्धब्रह्मज्ञानजनकत्वमेवेतितत्रव्यभिचारइतिभावः । मोक्षसाधनेतिप्रमाविशेषणं। (किंचे ति॥मौनंमौढ्यमित्यत्रमौढ्यशब्देनब्रह्मज्ञानप्रागभावाभावआपादितइतिनात्रपुनरुक्तिः )॥ज्ञानस्येति ॥ नचमूलाज्ञानमपिस्वो पहितज्ञेयब्रह्मविषयकमेवेतिसमानविषयताज्ञानाज्ञानयोरितिवाच्यं । अज्ञानस्यशुद्धचिदाश्रयविषयकत्वसिद्धांतभंगस्यान्यो न्याश्रयादेश्चोक्तत्वात् । किंचैतावतापिनज्ञानाज्ञानयोःसमानविषयत्वं। तथाहि। अज्ञानंहिस्वरूपसदज्ञानोपहितब्रह्मविषयं। वृत्तिस्तुस्वरूपसद्वृत्त्युपहितब्रह्मविषया। अन्यथावृत्तेर्मिथ्याभूतार्थविषयकत्वंत्वदभिमतंनस्यादिति । ननुनज्ञानस्याज्ञानसमा नविषयकत्वेनाज्ञाननिवर्तकता । किंत्वज्ञानविषयान्याविषयकज्ञानत्वेन घटादिज्ञानेतथैवकल्पनात् । एवंचब्रह्मज्ञानमप्य ज्ञानविषयब्रह्मान्याविषयकमितिभवतिब्रह्माज्ञाननिवर्तकमित्याशंक्यनिराकरोति ॥ नचेति ॥ दीपेच्छेदाविति ॥ तथाच समानविषयकत्वेनैवज्ञानस्याज्ञाननिवर्तकता। नतूक्तरूपेण। तस्यगुरुतयातेनरूपेणाज्ञाननिवर्तकतायाःक्वाप्यदर्शनादित्यर्थः।

॥ ३३

उक्तरूपस्याव्याप्तिमप्याह ॥ घटंपटावितीति ॥ ब्रह्मज्ञानस्येति ॥ वेदांतजन्यवृत्त्यव्याप्यत्वेब्रह्मणस्तज्ज्ञानस्यब्रह्मेतराविषयकस्यब्रह्माविषयकतयानिर्विषयत्वापत्तौघटवज्ज्ञानत्वानुपपत्तिस्वपराविषकंब्रह्मरूपंज्ञानंअसंभवीतिवक्ष्यमाणन्यायेनवृत्तेरपितथात्वस्यवक्ष्यमाणप्रायत्वादित्यर्थः । केचित्तु वक्ष्यमाणत्वादित्येतद्ग्रंथस्वारस्याद्ब्रह्मरूपज्ञानपरतयैतद्ग्रंथंव्याचक्षतेतत्तुपूर्वोत्तरासंगतत्वादुपेक्षणीयं ॥ वक्ष्यमाणत्वादिति ॥ जडत्वहेतुभंगे । अज्ञानेनसमानविषयत्वाभावेपिब्रह्मज्ञानस्यतन्निवर्तकत्वमस्तु तांवतानोक्तंव्यभिचारइतिशंकते ॥ अथेति ॥ अन्यत्रज्ञानस्याज्ञानसमानविषयकत्वेनतन्निवर्तकत्वेपिब्रह्मज्ञानस्यब्रह्माकारत्वमात्रेणब्रह्माज्ञाननिवर्तकत्वमस्त्वित्यर्थः ॥ तच्चेति ॥ शशश्रृंगादिज्ञानस्यशशश्रृंगादिसन्निकर्षाजन्यत्वान्नतस्यतद्विषयत्वमित्यर्थः ॥ सएवेति ॥ आत्मैवाकारोज्ञानस्येतिवा आत्मातिरिक्तआत्माकारएवज्ञानस्याकारइतिवा आत्मतदाकाराभ्यामन्यआत्माकारसदृशआकारोज्ञानस्येतिवेत्यर्थः ॥ वृत्त्यनाश्रितस्येति ॥ आकारोह्याकारिणमाश्रयते । नचब्रह्मवृत्तिरूपमाकारिणमाश्रयति । अतोनब्रह्मवृत्तेराकारइत्यर्थः ॥ साकारवादापातादिति ॥ ज्ञानस्येतिशेषः ॥ जडाद्याकारेति ॥ जडानानंदपरिच्छिन्नानृतरूपाकारयुक्तायावृत्तेर्ब्रह्मसंबंधिज्ञानानंदापरिच्छिन्नसत्यरूपाकारयुक्तत्वंनसंभवतीत्यर्थः । ननुनासाधारणोज्ञानानंदादिरात्माकारोवृत्तेराकारइतिब्रूमः अपितुसाधारणसत्तादीतितत्राह ॥ सत्तयेति ॥ ननुसाधारणासाधारणाकाराभ्यामतिरिक्तोऽन्यएवसंस्थानविशेषादिरात्माकारोवृत्तेराकारइत्यतआह ॥ आत्मनोनिराकारत्वाच्चेति ॥ संस्थानाद्याकाररहितत्वाच्चेत्यर्थः । अतएवेत्युक्तमेवहेतुंविशदयति ॥ ज्ञानानंदादिनेति ॥ तस्मादिति ॥ ब्रह्मज्ञानस्यापीतिशेषः ।

अन्यस्यतदाकारत्वस्यासंभवादित्यर्थः ॥ अनिर्वचनीयत्वादिकमिति ॥ आदिपदेनज्ञाननिवर्त्यत्वादिकं । प्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वादिरूपमिथ्यात्वस्यसाध्यस्यतुच्छेपिसत्वात्तत्रनव्यभिचारइत्यर्थः । तुच्छेसाध्याभाववतिहेतुमुपपादयति ॥ असत्वैलक्षण्येति ॥ दृग्विषयत्वमात्रमिति ॥ वृत्तिव्याप्यत्वमित्यर्थः ॥ तदभिव्यक्तमिति ॥ वृत्त्यावावृत्तिप्रतिफलितचैतन्येनवाऽभिव्यक्तं घटादिविषयाधिष्ठानचैतन्यं फलंतदेवघटादेर्भासकमित्यर्थः । समुदितोऽभिलपनंप्रवृत्तिरादानात्माव्यवहारःफलंवा यथासंभवंवा आद्यंआह ॥ हानादेरिति ॥ एकदेशाभावात्समुदायोगगनादावसिद्धइत्यर्थः । द्वितीयंआह ॥ अभिलापस्यचेति ॥ अभिज्ञाभिलापरूपव्यवहारव्याप्यत्वरूपंफलव्याप्यत्वंहेतुरात्मनिव्यभिचारीत्यर्थः ॥ नित्यातींद्रियइति ॥ अपरोक्षैकरसचैतन्यरूपफलव्याप्यत्वेनित्यातींद्रियस्याप्यपरोक्षत्वंस्यादित्यतोनतत्रहेतुरस्तीतिभावः । नित्यातींद्रियस्याप्यपरोक्षत्वमस्तीतिशंकते ॥ तदपीति ॥ तथाचनासिद्धिरितिभावः ॥ योगिप्रत्यक्षगम्यतयेति ॥ "यत्राप्यतिशयोदृष्टःसस्वार्थानतिलंघना" दितिन्यायेनयोगिनोयोगप्रभावेनदूरादपिपश्यंतिशृण्वंतिचेत्येव नपुनश्चक्षुषापिशृण्वंतिश्रोत्रेणापिपश्यंति अतींद्रियमप्यैंद्रियंकुर्वंति स्वभावातिक्रमापातादित्यर्थः ॥ पक्षैकदेशइति ॥ ननुसाक्षिवेद्यंतःकरणवृत्तेरनंगीकारेप्यविद्यावृत्तेःपरैरंगीकारादविद्यावृत्तिप्रतिफलितचिदपिसाध्यत्वात्फलमित्यविद्यादिशुक्तिरूप्याद्यपिफलव्याप्यमेवेतिचेन्न । तथाप्यविद्यावृत्त्यादावसिद्धिरेवअन्योन्याश्रयादेः । अविद्यावृत्तौमानाभावाच्चेत्यर्थः ॥ नित्यातींद्रियमिति ॥ नित्यातींद्रियवद्ब्रह्मणोपिज्ञातत्वेनवाऽज्ञातत्वेनवासाक्षिविषयत्वस्यत्वयाप्यंगीकार्यत्वाद्ब्रह्मणिव्यभिचारइत्यर्थः । ननुनचिद्रूपस्यशुद्धब्रह्म

णश्चिद्विषयत्वं । भेदाभावादित्याशंक्यनिराकरोति ॥ [६।१२] तद्व्यवहारजनइति ॥ तदविषयत्वेतद्विषयकव्यवहाराजनकत्वमेवप्रयो
जकंनतुतदभिन्नत्वं । अभिधेयत्वरूपाभिधानविषयेअभिधानेव्यभिचारात् । तथाचभेदाभावरूपहेतौतद्विषयकव्यवहाराजन
कमुपाधिरित्यर्थः । असिद्धिमप्याह ॥ [६।१३] कल्पितभेदेनेति ॥ कल्पितभेदस्यसत्त्वाद्भेदाभावरूपहेतुरसिद्धइत्यर्थः । ननुकल्पितं
भेदोनभेदकार्यक्षमइत्यतउक्तं लिंगलिंगिभाववज्ज्ञातृज्ञेयभाववच्चेतिच । ननुविषयविषयिणोःकल्पितभेदस्याप्यभावेकथंविषय
विषयिभावइत्यतउक्तं स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वसंभवाच्चेति । वृत्तिप्रतिफलितचितःशुद्धात्मनःसकाशात्कल्पितभेद
वत्त्वेनविषयित्वंसंभवतीत्यर्थः । यद्वापूर्वोदाहृतानुभवबलाच्चिद्रूपस्याप्यात्मनश्चिद्विषयत्वमज्ञातत्वादिनानित्यातींद्रियत्वंपरैरं
गीकर्तव्यमित्येवन । अपितुघटादिवदात्मनःस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमपिस्वीकर्तव्यमेव । तथाचपूर्वोक्तस्यफलव्या
प्यत्वस्यहेतोरपिशुद्धेब्रह्मणिव्यभिचारश्चेत्यभिप्रायेणस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वसंभवाच्चेत्युक्तं. । अन्यथाचिद्विषयत्वे
त्येवावक्ष्यत् । नन्वाऽऽत्माकारवृत्तौचितःप्रतिफलनेपिनात्मनःस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमस्ति । प्रयोजनाभावादिति
नोक्तहेतोर्व्यभिचारइत्यतआह ॥ [६।१५] अन्यथेति ॥ तयास्वाकारवृत्तिप्रतिफलितचिता घटादाविवात्मन्यप्यस्त्येवस्वाकारवृत्तिप्र
तिफलितचिद्विषयत्वस्यप्रयोजनंस्वविषयकाज्ञाननिवृत्तिरित्यर्थः । नन्वात्मनश्चिद्विषयत्वंविनाप्यात्माकारवृत्तेरेवात्माज्ञाननि
वर्तकत्वमस्त्वित्यतआह ॥ [६।१५] तदाकारवृत्त्यैवचेति ॥ घटादेरपिस्वाज्ञाननिवर्तकस्वाकारवृत्तिविषयत्वमात्रमेवनतुचिद्विषयत्व
मित्यापातेनासिद्धिरित्यर्थः । ननुघटाकारवृत्तौचित्प्रतिफलनंविनानाज्ञाननिवृत्तिः । वृत्तिमात्रस्याज्ञानानिवर्तकत्वात् । आत्मा

कारवृत्तौतुचित्प्रतिफलनंविनापिवृत्तिमात्रेणात्मस्वरूपस्फुरणसहितेनाज्ञाननिवृत्त्युपपत्ति . रतोनात्मनिव्यभिचारोनवाघटादाव सिद्धिरित्यतआह ॥ अज्ञानाविरोधीति ॥ घटाकारवृत्तौचित्प्रतिफलनंविनापिवृत्तिमात्रेणघटस्वरूपस्फुरणसहितेनाज्ञाननिवृत्तिरित्यस्यापिवक्तुंसुवचत्वेनासिद्धिस्तदवस्थेत्यर्थः । घटोनस्फुरणरूपः तस्मिन्सत्यप्यज्ञानदर्शनादितियदि. तदाऽऽत्मापिन स्फुरणरूपः तस्मिन्सत्यप्यज्ञानदर्शनादितितुल्यं । केवलआत्मास्फुरणरूपोपिनाज्ञानविरोधी किंतुवृत्तिसहितइतियदि तदा स्फुरणरूपोपिघटःकेवलोनाज्ञानविरोधी । किंतुवृत्तिसहितइत्यपितुल्यमित्यभिप्रायेणोक्तमज्ञानाविरोधिस्फुरणरूपत्वस्यचेति । तथाचासिद्धिभयेनघटाकारवृत्ताविवात्माकारवृत्तावपिचित्प्रतिफलनमवश्यमंगीकरणीयं । एवंचात्मापिघटादिरिवस्वाकारवृत्तिप्रतिबिंबितचिद्विषयइतिशुद्धात्मनिनिरुक्तहेतोर्व्यभिचारइत्यर्थः । एतावताघटादौस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमभ्युपेत्यतन्न्यायेनैवशुद्धात्मनोपिस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमापाद्यशुद्धात्मनिव्यभिचारआपादितः संप्रत्यात्मनीवघटादावपिस्वाकारवृत्तिप्रतिफलितचिद्विषयत्वंनास्ति तथाचासिद्धिरितिवक्तुंघटादौस्वाकारेंद्रियजन्यवृत्त्यतिरिक्तंस्वाकारवृत्तिप्रतिबिंबितचैतन्यरूपंवा तादृशवृत्त्यभिव्यक्तचैतन्यरूपंवाज्ञानांतरंनास्ति प्रयोजनाभावादित्याह ॥ अस्फुरणरूपेष्वित्यादिना ॥ तादृशवृत्तिरूपंज्ञानातिरिक्तंतादृशचैतन्यरूपंज्ञानंकिंवृत्तिविषयेघटादौव्यवहारार्थंवा कल्प्यते अनुभवबलाद्वा श्रुतिबलाद्वा आपरोक्ष्यार्थंवा । नाद्यइत्याह । अस्फुरणरूपेष्विति । इंद्रियजन्यांतःकरणवृत्तावेवचित्प्रतिफलनं नत्वनुमित्यादिरूपांतःकरणवृत्तावितिपरसिद्धांतः । तथाचयथानुमित्यादिविषयेवृत्तिप्रतिफलितचिद्विषयत्वाद्यभावेपिवन्ह्यादौप्रवृत्तिरूपव्यवहारस्तथैंद्रियकेष्वपि

द्रियजन्यवृत्तिप्रतिफलितचिद्विषयत्वादिकंविनापिस्वाकारेंद्रियजन्यवृत्तिमात्राद्धटादिषुव्यवहारोस्तु । एवंचवृत्तिप्रतिफलितचिद्विषयत्वादिकंघटादावसिद्धमित्यर्थः । ननुविज्ञानादिश्रुतेःस्फुरणरूपात्मनिवृत्तिमात्रान्मयाव्यवहारस्यांगीकारेप्यनेवंविधेघटादौनतद्युक्तमतउक्तमस्फुरणेत्यादि । ऐंद्रियवदतींद्रियस्याप्यस्फुरणरूपत्वाविशेषादित्यर्थः । अनुभवबलादिंद्रियजन्यवृत्त्यतिरिक्तंनिरुक्तचैतन्यरूपंज्ञानंकल्प्यतइतिद्वितीयपक्षंनिराकरोति ॥ घटादाविति ॥ घटादौनिरुक्तचैतन्यरूपज्ञानस्याननुभवात् । ननुघटादावज्ञाननिवृत्तिःसहेतुका निवृत्तित्वात् घटनिवृत्तिवदित्यनुमानेनेतरपरिशेषसहितेननिरुक्तचैतन्यरूपंज्ञानमज्ञाननिवर्तकत्वेनघटादौसिद्धमनुभूयतइतिचेन्न । विषयाकारेंद्रियजन्यवृत्तिप्रतिबिंबितचैतन्यरूपस्यविशिष्टस्याज्ञाननिवर्तकत्वं किंविशेष्यभूतचैतन्यस्याज्ञाननिवर्तकत्वेनवा विशेषणीभूततादृशवृत्तेरज्ञाननिवर्तकत्वेनवा मिलितस्योभयस्यतथात्वेनंवा नाद्यः । चैतन्यमात्रस्यत्वन्मतेऽज्ञानस्फोरकत्वेनाज्ञानाविरोधित्वात् । नद्वितीयः । परिशेषासिद्धेः । नतृतीयः । आवश्यकवृत्तेरेवाज्ञानविरोधित्वेनाज्ञाननिवर्तकत्वात् । तथाचघटादौनिरुक्तचैतन्यरूपज्ञानस्योक्तविधयाऽज्ञानविरोधित्वाभावान्नोक्तानुमानेनतादृशचैतन्यरूपस्यज्ञानस्यानुभवइतिभावेनोक्तमज्ञानाविरोधीति ॥ अन्यथेति ॥ अन्यथोपपन्नाज्ञाननिवृत्तिरूपकार्यकं अज्ञाननिवृत्तिरूपकार्याजनकमिंद्रियजन्यवृत्तिव्यतिरिक्तं तत्प्रतिफलितचैतन्यरूपंवातद्व्यंग्यचैतन्यरूपंवाज्ञानंयदिघटादौकल्प्येत तदाऽन्यथोपपन्नद्वेषेच्छादिनिवृत्तिकार्यकंद्वेषेच्छादिनिवृत्तिरूपकार्याजनकमिच्छाद्याकारांतःकरणवृत्तिप्रतिफलितं तद्व्यंग्यंवा इच्छाद्वेषादिकंकल्प्यंस्यात् । तथाऽन्यथोपपन्नवन्ह्यादिप्रवृत्तिरूपकार्यकंवन्ह्यादिप्रवृत्तिरूपकार्याजनकंवन्ह्यादिपरो

क्षवृत्तिप्रतिफलितंतद्व्यंग्यंवावन्ह्यादिविषयकपरोक्षवृत्त्यंतरमभ्युपेयंस्यात् । तथान्यथोपपन्नांधकारनिवृत्तिकार्यकं अंधकारनिवृत्तिरूपकार्याजनकं तमोनिवर्तकत्वेनप्रतीयमानप्रभाप्रतिफलितंतद्व्यंग्यंवाप्रभांतरंवाकल्प्यंस्यात् । द्वेषाविरोधीच्छावा इच्छाद्यविरोधिद्वेषादिकंवा वन्ह्यादिव्यवहाराहेतुर्वन्ह्यादिपरोक्षज्ञानंवा अंधकाराविरोधिप्रभावानास्ति । अननुभवादितियदि तदाऽज्ञनाविरोधिज्ञानमपिनास्ति अननुभवात् । एवंचवृत्तिप्रतिफलितचिद्विषयत्वंनघटादीनामितितत्रासिद्धिर्दुरुद्धरेत्यर्थः । ननु तमेवभांतमित्यादिश्रुतिबलात्ताद्दशचैतन्यरूपज्ञानंसिद्धिरितितृतीयंपक्षंनिराकरोति ॥ [६२।६] तमेवभांतमिति ॥ आपरोक्ष्यार्थंनिरुक्तचैतन्यरूपज्ञानकल्पनमितिचतुर्थपक्षेप्यापरोक्ष्यंकिंपरोक्षज्ञानभिन्नज्ञानत्वादिकंज्ञानगतंवा आहोस्वित्साक्षात्कृतत्वादिकमर्थगतंवा । नाद्यइत्याह ॥ [६३।७] चैतन्याविषयस्यापीति ॥ ज्ञानस्येतिशेषः । चैतन्यं अविषयः अप्रतिविंवितं यस्मिन्तस्य वृत्तिप्रतिविंबितचैतन्यभिन्नस्य । इंद्रियजन्यवृत्तिमात्रस्येतियावत् । निरुक्तचैतन्यरूपज्ञानानंगीकारेअपरोक्षज्ञानाभावापातेनपरोक्षापरोक्षज्ञानविभागोनस्यादितिनिरुक्तचैतन्यरूपज्ञानकल्पनमित्तियत् । तदपिन । निरुक्तचैतन्यरूपज्ञानानंगीकारेपींद्रियजन्यवृत्तावेवसाक्षात्कारत्वरूपविशेषेणपरोक्षज्ञानभिन्नज्ञानत्वादिरूपापरोक्ष्यस्योपपत्तेः । नद्वितीयइत्याह ॥ [६३।७] चैतन्याविषयस्यापीति ॥ घटादेरितिशेषः । चैतन्यंप्रत्यविषयःचैतन्याविषयः । तस्यचैतन्याविषयस्यापिघटादेःसाक्षात्कृतत्वरूपमापरोक्ष्यंवृत्तिगंतेनसाक्षात्कारत्वरूपविशेषेणैवोपपन्नमित्यन्वयः । विषयस्यापरोक्ष्यंपरमतेद्वेधा । बाह्येंद्रियार्थसन्निकर्षाद्बाह्येंद्रियद्वारा निःसृतांतःकरणवृत्तिप्रतिविंबितचैतन्येनघटाधिष्ठानचैतन्यावरकाज्ञाननिवृत्तौसत्यांघटाकारवृत्तिप्रतिविंबितचैतन्येनैवघटादि

॥

कंप्रकाश्यते । यथाहुः । "स्वच्छेंऽतःकरणेऽशनिप्रसृमरेनेत्रादिमार्गोद्गतेतत्तद्ग्राह्यचयात्मनापरिणतेबिंबीभवंतीचितिः । एका प्यर्थमनोविशेषकवशाद्वैतंप्रपन्नाहरत्यज्ञानंप्रकटीकरोतिविषयान्ज्ञानंमयेदंत्विती"ति । अतएवातींद्रियस्थलेनिरुक्तचैतन्यरूपज्ञानाभावादतींद्रियार्थाधिष्ठानचैतन्यावरकाज्ञाननिवृत्तिर्नास्तीत्यपरोक्षैकरसानावृतसंवित्तादात्म्येनस्फुरणविषयकत्वरूपंमापरोक्ष्यंविषयस्यनास्ति किंतुकेवलमर्थव्यवहारमात्रमिति । अस्मिन्पक्षेआध्यासिकसंबंधस्यातंत्रत्वापातेनारुच्याद्वितीयःपक्षः । सयथानिरुक्तवृत्तिप्रतिबिंबितेनचैतन्येनघटाधिष्ठानचैतन्यावरकाज्ञाननिवृत्तौसत्यांघटाद्यधिष्ठानचैतन्यस्यापरोक्षैकरसप्रमातृचैतन्येनसहैकोपाध्यवच्छेदेनतदभेदाभिव्यक्तौतच्चैतन्यस्फुरणेसतितत्राध्यस्तस्यघटादेरप्यापरोक्ष्यमिति । तदुभयमपिन । तादृशचैतन्यरूपज्ञानेप्रमाणाभावात् । वृत्त्यैवापरोक्ष्योपपत्तेः । अन्यथातवमतेप्यपरोक्षवृत्तिवत्परोक्षवृत्तौचित्प्रतिफलनंभवतु । तादृशवृत्त्याचस्वविषयधर्माद्यधिष्ठानचैतन्यावरकाज्ञाननिवृत्तिरपिभवतु । एवंचापरोक्षैकरसानावृतसंवित्तादात्म्येनस्फुरणविषयंतयैवपरोक्षवृत्तिविषयस्यधर्मादेरापरोक्ष्यमपिभवतु । तथातद्विषयकपरोक्षवृत्तेरप्यपरोक्षैकरसचैतन्यविषयतयैवापरोक्ष्यमपि भवतु । इत्याद्यापादनेकृतेइंद्रियजन्यत्वरूपविशेषाभावात्परोक्षवृत्तौनैतेदोषाः । अपरोक्षवृत्तौत्विंद्रियजन्यत्वरूपविशेषप्रयुक्त साक्षात्कारत्वरूपजातिविशेषसद्भावाच्चित्प्रतिफलनादिभवतीतिसमाधातव्यं । तदेतन्निरुक्तचैतन्यरूपज्ञानानंगीकारेवृत्तिमात्रांगीकारेपिसमानमित्यभिप्रायेणोक्तं " चैतन्याभिव्यंजकत्वार्थमावश्यकेनेति । ननुवृत्तिगतेनसाक्षात्कारत्वरूपविशेषेणचैतन्याविषयस्यापिघटादेःसाक्षात्कृतत्वरूपमापरोक्ष्यमुपपन्नमित्युक्तमयुक्तं । कार्यगतानुगतधर्मस्यानुगतकारणप्रयोज्यत्वनियमेनता

दृशकारणासंभवेतादृशधर्मस्याप्यसिद्धेरित्यतउक्तमिंद्रियजन्यत्वप्रयुक्तेनेति । इंद्रियत्वेनेंद्रियजन्यत्वेनेत्यर्थः । अनुमितौतुम नस्त्वेनमनइंद्रियजन्यत्वं । अतोनतत्रसाक्षात्कारत्वप्रसंगः । नचैवंमनस्त्वेनमनोजन्यस्मृतेर्मानसत्ववदनुमितेरपिमानसत्वाप त्तिरितिवाच्यं । व्यापारवत्कारणनिरपेक्षमनोजन्यत्वेनमानसत्वमित्याहुः । साक्षात्कृतत्वरूपविषयापरोक्षेदृष्टांतमाह ॥ इच्छा दिवृत्त्यनिष्ठेनेति ॥ चैतन्याविषयस्यापिविषयस्यापरोक्ष्यंसाक्षात्कृतत्वरूपंज्ञानगतेनसाक्षात्कारत्वरूपविशेषेणैवोपपन्नमितिपू र्वेणैवान्वयः । ननुनवृत्तावपरोक्षत्वं । प्रमाणाभावात् । किंतुचैतन्यमेवतथा । "यत्साक्षादपरोक्षाद्ब्रह्मे" तिश्रुतेः । इंद्रियज न्यवृत्तौतुचैतन्यरूपापरोक्षज्ञानसंबंधेनौपचारिकमपरोक्षत्वं । अतस्तादृशचैतन्यरूपज्ञानानंगीकारेविंषयस्यनापरोक्ष्यसिद्धिरि त्यतआह ॥ अन्यथेति ॥ इंद्रियजन्यवृत्तौस्वभावतोपरोक्षत्वानभ्युपगमे । चैतन्यविषयत्वप्रयुक्तौपचारिकापरोक्षत्वाभ्युप गमे । परोक्षत्वं ज्ञानकारणकज्ञानत्वादिकं । अपरोक्षत्वं परोक्षज्ञानभिन्नत्वादिकं । इंद्रियजन्यवृत्तावपरोक्षत्वंनास्तीतियदि तदाचैतन्येऽपरोक्षत्वमेव वृत्तौतुपरोक्षत्वमेवेति परोक्षत्वापरोक्षत्वयोर्ज्ञानत्वव्याप्यत्वंनस्यादित्यर्थः । ननुवृत्तिचैतन्ययोरुभ योर्ज्ञानत्वमस्तीतितद्व्याप्यत्वंपरोक्षत्वापरोक्षत्वयोर्भविष्यतीत्यतउक्तमेकेति । परमतेनवृत्तिचैतन्ययोरेकज्ञानत्वं । चैतन्यस्यज्ञ प्तिरूपत्वात् । वृत्तेर्ज्ञप्तिकारणत्वात् । परोक्षत्वस्यौपचारिकज्ञानत्वव्याप्यत्वं । अपरोक्षत्वस्यमुख्यज्ञानत्वव्याप्यत्वं । उभयो स्तुनैकज्ञानत्वव्याप्यत्वंस्यात् । इंद्रियजन्यवृत्तौसाक्षात्कारत्वनिबंधनस्यस्वाभाविकापरोक्षत्वस्याभ्युपगमेतुपरोक्षत्वापरोक्षत्वयो रेकवृत्तिनिष्ठज्ञानत्वेनव्याप्यत्वंसंभवतीत्यर्थः । ननुतथापिनापरोक्षत्वस्यज्ञानत्वव्याप्यत्वं । वृत्तिनिष्ठज्ञानत्वाभाववतिनिरुक्त

चैतन्यरूपज्ञानेप्यपरोक्षत्वस्यसत्त्वादितिचेन्न । इंद्रियजन्यवृत्त्यतिरिक्तेतादृशचैतन्यरूपापरोक्षज्ञानेप्रमाणाभावादित्युक्तत्वात् । स्वमतेत्वैंद्रियकवृत्तावतींद्रियविषयकवृत्तौसाक्षिरूपज्ञानेचमुख्यज्ञानत्वस्यसत्त्वात्परोक्षत्वापरोक्षत्वयोरेकज्ञानत्वव्याप्यत्वसंभवतीत्याशयः । यथाश्रुतेदोषमाह ॥ आत्मनोपीति ॥ यस्मिन् कस्मिंश्चिदात्मगोचरव्यवहारेस्वप्रकाशत्वाद्वितीयत्वादिविशिष्टविषयकेस्वातिरिक्तसंविदोविशेषणविषयिकायाःनियमेनापेक्षणादित्यर्थः । ननुस्वातिरिक्तसंविदपेक्षानिरूपितस्वव्यवहारत्वावच्छिन्नव्याप्यतकव्यवहारकत्वमुक्तलक्षणार्थः । आत्मव्यवहारेनित्यसिद्धेस्फुरणरूपेसुषुप्तिकालीनेतादृशसंविदपेक्षाऽभावेन व्यभिचारान्नात्मव्यवहारेतादृशसंविदपेक्षाव्याप्यत्वमस्ति । यद्यप्यात्मव्यवहारविशेषस्यतादृशसंविदपेक्षाव्याप्यत्वमस्ति । तथापिसाव्याप्यतात्मव्यवहारत्वेननावच्छिद्यते किंतुतत्तदात्मव्यवहारत्वेनैव । एवंचनातिव्याप्तिरितिशंकते ॥ नन्विति ॥ घटादावपीति ॥ घटादिगोचरव्यवहारेपिनिरुक्तव्याप्यताघटादिगोचरतत्तद्व्यवहारत्वेनैवावच्छिद्यते नतुघटादिगोचरव्यवहारत्वसामान्येनेत्यर्थः । ननुघटादिव्यवहारनिष्ठानिरुक्तव्याप्यता सामान्येनघटादिव्यवहारत्वेनैवावच्छिद्यते लाघवाद्व्यभिचाराभावाच्च । आत्मव्यवहारेतुसुषुप्तिकालीनेस्फुरणरूपेव्यभिचारान्निरुक्तव्याप्यतावच्छेदकत्वंगुरोरपिव्यवहारविशेषत्वस्यैवकल्प्यते तथाचनासिद्धिर्घटादौ । नवात्मनिव्यभिचारइतिशंकते ॥ ननुघटादाविति ॥ आत्मव्यवहारेपिसौषुप्तिके विशिष्टगोचरेविशेषणोपनायकमानापेक्षायाआवश्यकत्वेनात्मव्यवहारस्यापिनिरुक्तसंविदपेक्षांप्रत्यव्यभिचारात्तत्रापिसामान्यस्यात्मव्यवहारत्वस्यैवतद्व्याप्यतावच्छेदकत्वात् । तथाचाऽऽत्मनिव्यभिचारइत्याह ॥ एतावंतंकालमिति ॥ सुषुप्तौकालादिविशि

ष्टएवात्माव्यवह्रियतइत्यर्थः । ननुस्वव्यवहारेस्वांशावच्छेदेनापिस्वातिरिक्तसंविदपेक्षानियतिरितिविवक्षितोहेतुः । सुषुप्तिका लीनेआत्मगोचरकालादिविशिष्टव्यवहारेतुकालादिविशेषणांशएवमानांतरापेक्षा नत्वात्मांशेपि । अतोनात्मनिव्यभिचारइ तिशंकते ॥ नन्वात्मनीति ॥ नियतिमदेति ॥ आत्मविषयकाद्वितीयत्वादिविशिष्टव्यवहारेपिविशेषणांशएव तदपेक्षा नस्वांत्मांशेपि । अतोनियतिपदाभावेपिनात्मनिहेतुरस्तीतिनियतिपदवैयर्थ्यमित्यर्थः । ननुस्वव्यवहारेस्वांशावच्छेदेनस्वातिरि क्तसंविदपेक्षावत्त्वमेवहेतुरस्तु । अतोनवैयर्थ्यमतआह ॥ आसंसारमिति ॥ अज्ञानावृतेऽज्ञाननिवृत्तिंविना व्यवहारस्यैवा योगादित्यर्थः । नन्वज्ञानाकृतत्वकालेआत्मामैवव्यवहरिष्ट । तदनावरणकालेतुस्वातिरिक्तसंविदंविनैवव्यवह्रियतामित्यतउक्त मासंसारमिति ॥ नन्वासंसारमज्ञानावृतोप्यात्माकदाचित्स्वयमेवावरणमज्ञानंनिवर्तयिष्यति अनंतरमुक्तसंविदंविनैवव्य वह्रियतामित्यतउक्तं शुद्धस्येति । शुद्धस्यकेवलस्याऽज्ञानाविरोधित्वान्नकदाचिदपिस्वाज्ञाननिवर्तकत्वमित्यर्थः । किंचयद्या त्मव्यवहारः स्वतःस्फुरणादेव तर्हिवेदांतानांप्रकाशमानार्थप्रकाशकत्वेनानीदृशप्रामाण्यंनस्यात् । तदर्थवेदांतानामेवात्मव्यव हारहेत्वात्मज्ञानहेतुत्वंवाच्यमित्यभिप्रायेणोक्तमनधिगतार्थबोधकेति । ननुवृत्त्यन्यसंविदपेक्षानियतिमद्व्यवहारवत्त्वंविवक्षितं । अस्तिचघटादौतादृशचैतन्यरूपसंविदपेक्षेतिनतत्रासिद्धिः । चैतन्येतुनतदपेक्षेतिनव्यभिचारोपीत्यतआह ॥ वृत्त्यन्येति ॥ तवेति ॥ घटादौवृत्त्यन्यसंविदपेक्षामंगीकर्तुरपीत्यर्थः । तथाचासिद्धिरितिभावः । नन्वात्मव्यवहारेनवेदांतजन्यसंविदंतरा पेक्षा । किंत्वात्माज्ञाननिवृत्तिमात्रे । आत्मव्यवहारस्तुस्वतःस्फुरणादेवातोनात्मनिव्यभिचारः घटादौत्वस्फुरणरूपतयाव्यव ॥ ३

हारेपिस्वातिरिक्तसंविदपेक्षास्तीतिनासिद्धिरित्याशंक्यनिराकरोति ॥ [६५।३] नचघटादावपीति ॥ ननूक्तमस्फुरणतयाघटादौस्वव्य
वहारेप्रिस्वातिरिक्तसंविदपेक्षेति । सत्यमुक्तं । परंतुतत्प्रत्युक्तमपि । अज्ञानाविरोधिस्फुरणरूपत्वस्यात्मनीवघटादावपिसुवच
त्वादित्यनेनेतिभावः ॥ [६५।२] एतेनेति ॥ स्वातिरिक्तसंविन्निष्ठस्वव्यवहारहेतुतावच्छेदकरूपत्वं स्वव्यवहारेस्वावच्छिन्नसंवित्सापे
क्षत्वं । आत्मनस्तुनस्वातिरिक्तस्वव्यवहारहेतुसंविदंप्रतिविषयतयाऽवच्छेदकत्वं । आत्मविषयकंवृत्तेरात्मविषयकत्वेनव्यवहारा
हेतुत्वात् । घटादेस्तुस्वव्यवहारहेतुसंविदंप्रतिविषयतयावच्छेदकत्वं । घटादिविषयकत्वेनघटसंविदोघटव्यवहारहेतुत्वादित्यर्थः।
एतदपिघटादिविषयसंविदोप्यात्मविषयकवृत्तेरात्मविषयकत्वेनेवनघटविषयत्वेनघटादिव्यवहारहेतुता । अज्ञाननिवृत्तिमात्रा
र्थत्वादित्यादिनानिरस्तमित्यन्वयः ॥ [६५।३] घटादाविति ॥ अवेद्यत्वेसत्यपरोक्षव्यवहारयोग्यत्वंस्वप्रकाशत्वं । तत्रनिरुपाख्येऽति
व्याप्तिवारणायापरोक्षेत्यादिविशेष्यं । घटादावतिव्याप्तिवारणायसत्यंतंविशेषणं । ब्रह्मणोपिवृत्तिवेद्यतयाऽव्याप्तिर्माभूदिति
फलव्याप्यत्वाभावोवेद्यत्वंविवक्षितं । सुप्तिप्रलयादावपरोक्षव्यवहाररहिते आत्मन्यव्याप्तिवारणाययोग्यत्वंविशेषणं । एवंरू
पस्वप्रकाशत्वाभावोस्वप्रकाशत्वं । तच्चविशेष्यवतिघटादौविशेषणाभावाद्विशेषणवतिनित्यातींद्रियेविशेष्याभावादितिपरेषांमतं।
तत्रघटादौचैतन्यरूपज्ञानविषयत्वस्याऽप्रामाणिकत्वेनापरोक्षव्यवहारयोग्यत्वरूपविशेष्यवत्फलाव्याप्यत्वरूपविशेषणमपितत्रव
र्ततइत्येवस्यात् । एवंचविशेषणविशेष्ययोर्घटादौसत्त्वाद्विशिष्टाभावस्तत्रनास्तीत्यसिद्धिः । अविद्यांतःकरणशुक्तिरूप्यादौफला
व्याप्यत्वरूपविशेषणवदपरोक्षव्यवहारयोग्यत्वरूपविशेष्यस्यापिसत्त्वाद्विशिष्टव्यतिरेकरूपोहेतुस्तत्रापिनास्तीत्यसिद्धिः । साध

नविकलोदृष्टांतइत्यर्थः । नित्यातींद्रियेविशेषणस्यसत्त्वेपिविशेष्याभावाद्विशिष्टाभावरूपहेतुरस्तीतिपक्षैकदेशइत्युक्तं ॥ शुक्ति[६६।२]रूप्यादाविति ॥ शुक्तिरूप्यादेर्व्यवहारकालएवबाधितत्वात्तत्रापरोक्षव्यवहारयोग्यत्वमपिनास्तीत्यर्थः । शुक्तिरूप्यादेरापरोक्ष्याभावेपिरूप्यंसाक्षात्करोमीत्यपरोक्षव्यवहारंसमर्थयते ॥ अपरोक्ष[६६।३]व्यवहारायोग्येपीति ॥ [६६।४]साक्षिगतेति ॥ इदमाकारवृत्तिनिवृत्ताज्ञानकार्यसाक्षिभेदेइदमंशावच्छिन्नचैतन्यगतापरोक्ष्याध्यासादित्यर्थः । यथाश्रुतेतुरूप्यस्यसाक्षात्साक्षिचैतन्येअनुसंक्तेरसंगतिःस्यात् । नन्वेवमपरोक्षव्यवहारयोग्यत्वाभावोस्वप्रकाशत्वंहेतुरस्तु । नचघटादावसिद्धिरितिवाच्यं । शुक्तिरूप्यादेरिवघटादेरप्यध्वंस्तत्वेनतत्राप्यापरोक्ष्यविरहसत्त्वेनासिद्धेरभावादित्याशंक्यनिराकरोति ॥ [६६।५]यद्यपीति ॥ फलाव्याप्यत्वे सतिसप्रकारकबाधायोग्यापरोक्षव्यवहारयोग्यत्वाभावोहेतुस्तन्नसत्यंतंविनाघटादावसिद्धिःस्यादितिभावः । माभूत्तर्हिशुक्तिरूप्यादौदृष्टांतेसाधनवैकल्यं । पक्षीकृतेऽज्ञानांतःकरणादावसिद्धिस्तुस्यादेवेत्याह ॥ [६७।१]सर्वेति ॥ सर्वव्यावहारिकोपादानत्वमज्ञानविशेषणं नांतःकरणादेः ॥ [६७।२]व्यावहारिकत्वादिति ॥ सप्रकारकबाधाबाध्यत्वादित्यर्थः । तत्रहेतुर्ब्रह्मज्ञानात्प्रागबाधितइति । अस्यचासंजातबाधरूप्यादिसाधारणतयाश्रुत्यादिसिद्धेचेतिद्वितीयोहेतुः । नहिपरमतेप्रातिभासिकापरोक्षयोग्यताधिकरणंरूप्यादिश्रुत्यादिसिद्धमित्यर्थः ॥ [६७।३]व्यावहारिकइति ॥ यद्यपिव्यावहारिकेपिनित्यातींद्रियेतादृशयोग्यत्वंनव्यावहारिकं तथापि व्यावहारिकेइत्यस्यप्रत्यक्षप्रयोजकवत्तयाव्यवहारविषयइत्यर्थः । पूर्वहेत्वोरप्येतदुपस्कर्तव्यं । अतोनकश्चित्क्षुद्रोपद्रवः ॥ [६७।२]नही

ति ॥ परेषांमतेआपरोक्ष्यंनेंद्रियजन्यवृत्तिविषयत्वं । किंत्वपरोक्षैकरसानावृतसंवित्तादात्म्येनस्फुरणविषयत्वं । तच्चा
ज्ञानादौसाक्षादस्ति । तत्रप्रमाणवृत्तेरविद्यावृत्तेर्वानपेक्षणात् । घटादौतुप्रमाणवृत्तिद्वाराऽनावृतसंवित्तादात्म्येनस्फुरणवि
षयत्वमितिपरंपरयाऽऽपरोक्ष्यं । एवंचघटाद्यपेक्षयाप्यज्ञानांतःकरणादावापरोक्ष्यमुत्कृष्टमस्तीत्यपरोक्षव्यवहारयोग्यत्वाभाव
स्तत्रासिद्धइतिभावः ॥ तद्वेद्यइ[६७१३]ति ॥ ज्ञातत्वेनसाक्षिवेद्यइत्यर्थः । किंचरूप्यस्यप्रातिभासिकत्वेपितद्गतमपरोक्षव्यवहारयोग्य
त्वंसंप्रकारकबाधायोग्यमेव । रूप्यापरोक्ष्यंनास्तीत्यप्रतीतेः । तथाचसाधनवैकल्यमेव । ननुफलव्याप्यत्वमेवास्वप्रकाशत्वं ।
फलंव्याप्यत्वंचनवृत्तिप्रतिबिंबितचैतन्यविषयत्वंवावृत्त्यावातत्प्रतिबिंबितचैतन्येनवाभिव्यक्तविषयाधिष्ठानचैतन्यंप्रतिविषय
त्वंवा । घटादौवृत्तिरूपज्ञानविषयत्वातिरिक्तेनिरुक्तचैतन्यरूपेज्ञानविषयत्वेप्रमाणाभावादित्युक्तत्वात् । तथापिवृत्तिजन्यातिश
ययोगित्वंवावृत्तिप्रतिबिंबितचैतन्यजन्यातिशययोगित्वंवाफलव्याप्यत्वं। अतिशयश्चनावरणभंगः। घटादावावरणाभावेनतद्भंगा
भंगात् । नापिव्यवहारः । वृत्तिजन्यव्यवहारवत्त्वस्यात्मन्यपिसंभवेनव्यभिचारात् । घटादिषुचैतन्यरूपज्ञानानंगीकर्तृमते
घटादिव्यवहारस्यघटादिविषयवृत्तिजन्यतयानिरुक्तचैतन्याजन्यत्वेनस्वरूपासिद्ध्यापत्तेः । किंतुभग्नावरणचित्संबंधः । एतच्च
चैतन्यस्यव्यापकतयासर्वमतेप्यस्तीतिशंकांनिराकरोति ॥ शिष्टमि[६७१४]ति ॥ घटादौवृत्त्यावातत्प्रतिबिंबितचैतन्येनवाभग्नावरण
चित्संबंधेप्रमाणाभावात् । नन्वात्मनश्चिद्विषयत्वमनंगीकृत्यचित्कर्मत्वरूपास्वप्रकाशत्वंहेतूक्रियते । अतएवाज्ञानांतःकरणा
दौरूप्येवाऽसिद्धिर्नभवति । साक्षिविषयत्वात् । नापितुच्छेव्यभिचारइतिचेन्न । विषयत्वातिरिक्तस्यकर्मत्वस्याभावेनपरंपरया

ज्ञातत्वादिनाचिद्विषयत्वस्यात्मनिव्यभिचारात् । साक्षाच्चित्कर्मत्वस्यघटादावप्यसत्त्वेनासिद्धिरित्यादिस्वप्रकाशवादेवक्ष्यतइत्यर्थः ॥ किंचास्वप्रकाशत्वस्येति ॥ यद्यपिफलव्याप्यत्वभिन्नानांपंचानामपिहेतूनामविद्यानिवृत्तौव्यभिचारः । तथापितेषांदूषितत्वेनासंत्कल्पतयाप्रस्तावितदूषणस्यास्वप्रकाशत्वस्यैवग्रहणमित्यदोषः ॥ पंचमप्रकारेतिचतुर्थप्रकारसदसद्वैलक्षण्यरूपसाध्याभावोपपादनार्थं ॥ प्रातिभासिकवदिति ॥ अविद्यांतःकरणादेःप्रमाणाधीनवृत्तिविषयत्वाभावेपिवस्त्वधीनवृत्तिविषयत्वमस्तीतिनासिद्धिरित्यर्थः ॥ तज्ज्ञानस्यापीति ॥ अन्यथातुच्छज्ञानत्वेनाभिमतस्याज्ञानत्वंवाऽनित्यज्ञानत्वंवास्यादित्यर्थः ॥ धीमात्रेति ॥ रूप्यस्यधीमात्ररूपत्वेनरूप्यवृत्तेःस्वाभिन्नरूप्यानधीनत्वादित्यर्थः । नन्वेतदयुक्तंदोषसंस्कारसंप्रयोगैर्द्वेअविद्यावृत्तीजन्येते । एकारजतरूपा । अपरारजतधीरूपा । तथाचरजताधीनत्वंरजतवृत्तेःसंभवत्येव नचद्वयोर्वृत्त्योःसमकालत्वान्नपरस्परपरतंत्रतेतिवाच्यं । वस्तुव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वस्यवस्त्वधीनशब्देनविवक्षितत्वात् । एतस्यसमानकालीनवृत्त्योरपिसत्त्वादितिचेन्न । व्यतिरेकशब्देनप्रागभावोक्तौप्रागभावाप्रतियोगिप्रागभावाविद्यादावसंभवः । अभावांतरोक्तौघटादिष्वसंभवइत्याशयः ॥ ब्रह्मणीति ॥ प्रमाणाधीनवृत्तिविषयत्वस्योपपादनादित्यर्थः । संगृह्णाति ॥ नेति ॥ अन्यापेक्षेति ॥ स्वातिरिक्तसंविदपेक्षानियतव्यवहारयोगित्वमित्यर्थः ॥ अस्वप्रभत्वं ॥ अस्वप्रकाशत्वं रूप्येनास्त्यतःसाधनवैकल्यं । आत्मन्यस्तीतिव्यभिचारः । "सि०अत्रवदंतिअस्वप्रकाशत्वरूपंदृश्यत्वंहेतुः । स्वप्रकाशत्वंहिस्वापरोक्षत्वेस्वातिरिक्तानपेक्षत्वं । "यत्साक्षादपरोक्षाद्ब्रह्मे"तिश्रुतेः । तथाचान्याधीनापरोक्षत्वंपर्यवसितंतन्निरूपितभेदप्रपत्तियोगित्वंहेतुः । तच्च

नित्यापरोक्षेअन्याधीनापरोक्षेचघटादावस्तीतिनासिद्धिः । नचब्रह्मणोपिब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात्तत्रव्यभिचारः । अकल्पितभेदस्यक्काप्यसिद्धत्वादितिवाच्यं । तद्भेदस्यान्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वात् । जीवत्वेश्वरत्वादिरूपस्यान्यस्यैवधर्मस्यतन्निरूपकत्वात् । एवंचावेद्यत्वेसत्यपरोक्षव्यवहारयोग्यत्वाभावरूपंदृश्यत्वमपिहेतुः । नचफलव्याप्यत्वाभावंविशिष्टंयदपरोक्षव्यवहारयोग्यत्वं तस्यंब्रह्मणीवाविद्यांतःकरणादौशुक्तिरूप्यादौचसत्त्वेनासिद्धिसाधनवैकल्येइतिवाच्यं । अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वस्यापरोक्षव्यवहारयोग्यत्वपदेनविवक्षितत्वात् । तस्यचाविद्यादौशुक्तिरूप्यादौचासत्त्वानासिद्धिसाधनवैकल्ये । यथाचघटादेःफलव्याप्यत्वं तथाग्रेवक्ष्यते । अविद्यानिवृत्तेःपंचमप्रकारत्वाभ्युपगमपक्षेतत्रव्यभिचारवारणायाज्ञानकालवृत्तित्वंहेतुविशेषणंदेयं । तेनैवतुच्छेपिनव्यभिचारः । सद्विविक्तत्वेतुसाध्येतुच्छेपंचमप्रकाराविद्यानिवृत्तौचनव्यभिचारगंधोपी"ति ॥ अत्रंब्रूमः । अपरोक्षत्वस्यब्रह्मातिरिक्तत्वेऽविद्याधीनतयाऽनान्यानधीनत्वस्यासंभवदुक्तिकत्वात् । ब्रह्मस्वरूपत्वेतुतादृशभेदप्रतियोगितानवच्छेदकत्वेनघटादावसिद्धिः । अपरोक्षप्रतियोगिकभेदोक्तौतादृशजीवप्रतियोगिकभेदवत्त्वाद्ब्रह्मणिव्यंभिचारः । कल्पितभेदमादायब्रह्मस्वरूपस्याप्यपरोक्षत्वस्यावच्छेदकत्वेपंचमप्रकाराविद्यानिवृत्तौतुच्छेचव्यभिचारः । तदुभयव्यावृत्त्यर्थमज्ञानकालवृत्तित्वविशेषणोक्तावविद्यानिवृत्त्युत्तरकालीनेजीवन्मुक्त्यवस्थोत्पन्नेभोगादावसिद्धिः । अविद्यालेशसमकालीनत्वोक्तौघटादावसिद्धिः । अन्यंतरसमकालीनत्वोक्तावप्रयोजकं । प्रत्येकमुक्तिपक्षेपंचमप्रकाराविद्यानिवृत्तौव्यभिचारः । युगपत्सर्वमुक्तेश्चवामदेवादिमुक्तिप्रतिपादकागमविरोधेनाप्रामाणिकत्वंस्यत्वदीयैरपिकैश्चिदभिहितत्वादिति

दिक् । वस्तुतस्त्वपरोक्षत्वमपरोक्षत्वजातिमत्त्वंवाऽपरोक्षज्ञानविषयत्वंवास्यात् तृतीयप्रकाराभावात् । उभयथाप्यन्यानधीनापरोक्षभिन्नत्वाद्ब्रह्मणिव्यभिचारः । द्वितीयपक्षेअन्यानधीनापरोक्षरूपचैतन्यविषयत्वाद्घटादावसिद्धिरित्यादिबोध्यं । सद्विविक्तत्वेस्वंध्येपियथायथमेतएवदोषाबोध्याः । वृत्तिमात्रस्याज्ञानानिवर्तकतयातन्मतेघटादाविवब्रह्मण्यप्यज्ञाननिवृत्त्यर्थंवृत्तिप्रतिबिंबितचैतन्यस्यावश्यकत्वेनफलव्याप्यत्वात् विशेषणाभावप्रयुक्तविशिष्टाभावस्यघटादाविवचित्प्रतिफलनानंगीकारेवृत्तेरज्ञाननिवर्तकत्वादतींद्रियादाविवविशेष्याभावप्रयुक्तविशिष्टाभावस्यात्मन्यपिसत्त्वेनव्यभिचारस्यदुरुद्धरत्वात् । वृत्तिव्यतिरिक्तस्यचैतन्यरूपज्ञानस्यघटादिभासकस्यमयानंगीकारेणान्यतरासिद्धेश्च । घटादौफलव्याप्यत्वाभावस्योक्तत्ववक्ष्यमाणत्वाभ्यांतवमतेप्यसिद्धेरापाद्यमानत्वाच्च । तस्मान्नैतदपिसमाधानंयुक्तमितिसर्वमवदातं ॥ ७ ॥ व्यासाद्रिसृततर्काबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यांदृश्यत्वंदृश्यतांबुधैः ॥ दृश्यत्वहेतुभंगःसमाप्तः ॥ ३ ॥ ७ ॥ [६८।८] त्वन्मतइति ॥ तथाचतत्रासिद्धिरितिभावः ॥ [६८।८] शुद्धात्मनइति ॥ तथाचतत्रव्यभिचारइतिभावः ॥ [६८।९] शुद्धेपीति ॥ तथश्चशुद्धात्मनिहेतोरगमनान्नव्यभिचारइत्यर्थः ॥ [६८।९] कल्पितेनेति ॥ अयोगोलकादौकल्पितेनवन्ह्यभावेनवह्नेरपिधूमाव्यभिचारःस्यादित्यर्थः । अहमर्थेहेत्वसिद्धिर्नेतिशंकते ॥ [६९।१] कल्पितस्येति ॥ [६९।१] गौरोहमिति ॥ अहमर्थनिष्ठस्यज्ञातत्वस्यगौरेदेहेकल्पितत्वादित्यर्थः । देहादौहेतुसिद्धिंशंकते ॥ धर्मि[६९।२]समसत्त्वस्येति ॥ [६९।२] तादृशेति ॥ व्यावहारिकेत्यर्थः ॥ [६९।३] शुद्धइति ॥ शुद्धेतात्त्विकस्यधर्मिसमसत्ताकस्यज्ञातत्वस्याभा

वात्तत्रव्यभिचारइत्यर्थः ॥ वृत्तिर्ज्ञानंइति ॥ ज्ञानेज्ञानत्वस्यावश्यकत्वादित्यर्थः । ननुहेतूक्तमज्ञानत्वमज्ञप्तित्वं । तच्चवृ
त्तिरूपेज्ञानेस्तीतिनासिद्धिरितिशंकते ॥ यदिचेति ॥ सांख्यरूपाःवेदांतिनःसांख्यवेदांतिनः । बुद्धिवृत्तेर्ज्ञानभिन्नत्वमुपपाद्य
तत्रज्ञानशब्दप्रवादसमर्थनपरोविवरणग्रंथः । अज्ञप्तित्वमपिवृत्तिरूपेज्ञानेनास्तीत्यसिद्धिरेवेत्याह ॥ तर्हीति ॥ अपरोक्षवृत्तौ
चैतन्यप्रतिविंबनियमात्तस्यंचज्ञप्तित्वादज्ञाननिवृत्त्यादिभविष्यतीत्यतउक्तं परोक्षवृत्त्येति । परोक्षवृत्तौचैतन्यप्रतिफलनादेस्त
न्मतेप्यभावादज्ञाननिवृत्त्यादेर्ज्ञप्तिकार्यस्यततोदर्शनात्परोक्षवृत्तेरपिज्ञप्तित्वमवश्यमभ्युपेयमतोसिद्धिरित्यर्थः ॥ तांसामिति ॥
ज्ञप्तिकारणात्ज्ञप्तिकार्यंनदृष्टमितिभावः ॥ धर्माधर्मादिकमिति ॥ धर्मादिवृत्तौपरोक्षरूपायांज्ञप्तित्वरहितायांज्ञप्तित्वमवगा
ह्मानोनुभवःप्रमानस्यादितिशेषः ॥ किंचात्मनीति ॥ त्वदभिप्रेतेआत्मरूपेज्ञानेज्ञानत्वाभावस्याऽऽपाद्यमानत्वेनतत्राज्ञान
त्वरूपहेतोःसत्त्वेनव्यभिचारः । आत्मनिज्ञानत्वाभावंवक्तुंज्ञानत्वव्यापकसविषयत्वाभावमाह ॥ तथाहीत्यादिना ॥ आत्म
स्वरूपंज्ञानमिति ॥ ज्ञप्तिरित्यर्थः ॥ स्ववृत्तिविरोधेनेति ॥ क्रियाहिस्वविषयेकर्मणिकर्तरिवाकेनचित्संबंधविशेषेणेतरव्यावृत्ते
नवर्तते । तन्नसकर्मकक्रियाकर्मणि । यथाछिदिक्रियाछेद्ये गतिक्रियापिगम्ये केनापिसंबंधेनवर्ततएव । अकर्मकक्रियातुक
र्तरि । यथाशयनासनादिक्रियादेवदत्ते । तदत्रस्वरूपभूतज्ञानक्रियांप्रतिब्रह्मयदिविषयःस्यात्तदाकर्मकर्त्रोरन्यतरत्स्यात् । तत
श्चस्वरूपभूतज्ञानंब्रह्मस्वरूपभूतेज्ञानेवर्तेत । तच्चविरुद्धं । नहिछिदाछिदायांवर्तते । शयनंवाशयने । एवंस्ववृत्तिविरोधेन

ब्रह्मस्वरूपज्ञप्तेःस्वविषयत्वंपरैर्नांगीकृतमित्यर्थः । ननुब्रह्मस्वरूपज्ञानंप्रतिब्रह्मणोविषयत्वेपिनज्ञानंप्रतिब्रह्मणःकर्तृकर्मत्वान्यतरत्वापत्तिः । कर्तृकर्मत्वातिरिक्तस्यतज्जन्यव्यवहारयोग्यत्वरूपस्यविषयत्वस्यस्वरूपभूतज्ञानंप्रतिब्रह्मणःसत्वात् । तथाचनस्ववृत्तिविरोधइतिशंकते ॥ [७।१।२] ननुस्वकर्मत्वभावेपीति ॥ अत्रपरःस्वाचार्यसंमतिमाह ॥ [७।१।३] तत्स्वभावस्यापीति ॥ तत्रब्रह्मस्वरूपज्ञानस्य(ज्ञप्ति)ज्ञानकर्मत्वाभावेपिज्ञप्तिजन्यव्यवहारयोग्यत्वरूपंज्ञप्तिविषयत्वमस्त्येव । तथाचब्रह्मरूपंज्ञानंस्वविषयमेवेतिनज्ञानत्वंव्यापकसविषयत्वव्यावृत्तिर्ब्रह्मरूपज्ञानइति नतत्रव्यभिचारइतिभावः ॥ [७।१।१] घटादावपीति ॥ घटादौज्ञप्तिकर्मत्वज्ञप्तिविषयत्वयोरेकत्वाद्ब्रह्मणोज्ञप्तिकर्मत्वमनभ्युपेत्यज्ञप्तिविषयत्वांगीकारोविरुद्धइत्यर्थः । कर्मत्वविषयत्वयोर्भेदमाशंक्यनिराकरोति ॥ [७।१।१] नह्वीति ॥ घटाद्याकारवृत्तिंप्रतिकर्त्रादिभिन्नकारकविशेषत्वंवा घटाद्याकारवृत्तिजन्यावरणाभिभवातिशययोगित्वंवा घटाद्याकारवृत्तिप्रतिबिंबितचैतन्यंप्रतिकारकविशेषत्वंवा । घटाद्याकारवृत्तिप्रतिबिंबितचैतन्यजन्यावरणाभिभवरूपातिशययोगित्वंवा घटादीनांकर्मत्वं । विषयत्वंतुतज्जन्यव्यवहारयोग्यत्वरूपंनिरुक्तकर्मत्वाद्भिन्नमेवेत्यर्थः । निराकरणहेतुमाह ॥ [७।१।३] ज्ञातैकसतीति ॥ कर्मत्वेनसंप्रतिपन्नेसुखादौनिरुक्तकर्मत्वमव्याप्तमित्यर्थः । प्रत्यक्षयोग्यत्वेसतिस्वाधिकरणकालवृत्तिप्रागभावप्रतियोगिप्रत्यक्षविषयभिन्नत्वंज्ञातैकसत्त्वं तथाचज्ञप्त्यपेक्षयापूर्वभावित्वाभावात्सुखादेर्नज्ञप्तिकारकत्वरूपंतत्कर्मत्वं । ज्ञातैकसत्त्वात्स्वतएवावरणाभावेनज्ञप्तिजन्यावरणाभिभवरूपातिशययोगित्वरूपमपिकर्मत्वंसुखादेर्नास्तीत्यव्याप्तिरित्यर्थः । ॥ ४ उक्तकर्मलक्षणयोरतिव्याप्तिमप्याह ॥ [७।१।४] ब्रह्मणोपीति ॥ चरमवृत्तेर्ब्रह्माकारतयातांप्रतिब्रह्मणःकारकत्वात्तज्जन्यावरणाभिभवरूपाति

शययोगित्वाच्चचरमवृत्तेर्घटाद्याकारवृत्तिवच्चित्प्रतिफलनयुक्तत्वेनब्रह्माकारवृत्तिप्रतिफलितचैतन्यंप्रतिब्रह्मणोपिकारकत्वात्ताद्दशचैतन्यजन्यावरणाभिभवरूपातिशययोगित्वाच्चब्रह्मण्यतिव्याप्तिरित्यर्थः । विषयत्वातिरिक्तंकर्मत्वंनिरस्यकर्मत्वरूपमेवविषयत्वंघटादावित्याह ॥ [७।१४] किंत्विति ॥ एवंघटचैतन्ययोर्ज्ञप्तिकर्मत्वेप्यांतरालिकंभेदमाह ॥ [७।१४] इयांस्त्विति ॥ तथाचचैतन्यस्यस्वंकर्मत्वमनंगीकुर्वद्भिःस्वविषयत्वमपिनांगीकृतमेवेत्यर्थः । ब्रह्मरूपंज्ञानंपरविषयमितिद्वितीयपक्षंनिराकरोति ॥ [७।१६] नद्वितीयइति ॥ [७।१६] मोक्षइति ॥ तथाचमोक्षकालेसाक्षिणोनिर्विषयत्वंस्यादित्यर्थः । मोक्षकालेपिसाक्षिणोतीतविषयत्वंभविष्यतीत्याशंक्यतत्किमतीतंसाक्षान्मोक्षकालेसाक्षिणोविषयोज्ञानोपरागेणवेत्याशंक्यनद्वितीयोसंभवादित्यभिप्रेत्यप्रथमपक्षंदूषयति ॥ [७।२।१] त्वन्मतेचेति ॥ [७।२।१] वर्तमानस्येति ॥ योग्यस्येतिशेषः । अतीतसुखादेर्नसाक्षात्साक्षिविषयत्वमितिभावः । साक्षिणोतीतविषयत्वेदूषणांतरमाह ॥ [७।२।१] वह्निरासीदिति ॥ मोक्षेसुषुप्तौचविद्यमानेसाक्षिज्ञानेऽतीतविषयोल्लेखरूपःसंसारःस्यात् । तथाचमोक्षसुषुप्त्योर्निष्प्रपंचतानस्यात् । अतोज्ञानत्वव्यापकसविषयत्वरहितत्वान्नज्ञानमात्मेतितत्राज्ञानत्वहेतोर्व्यभिचारइत्यर्थः । ननुनज्ञानत्वस्यव्यापकंसविषयत्वं । येनतद्व्यावृत्त्याज्ञानत्वंव्यावर्तेत । किंतर्हिनिर्विषयमप्यात्मस्वरूपंज्ञानमस्तीतिद्वितीयपक्षंदूषयति ॥ [७।३।२] निर्विषयत्वइति ॥ अयमभिप्रायः नज्ञानत्वस्यव्यापकंसविषयत्वंनेति । इदंजानामीतिज्ञानानुभवेनविषयांकितस्यैवज्ञानस्यसिद्धेःसविषयत्वस्यज्ञानत्वव्यापकत्वावधारणादात्मस्वरूपस्यनिर्विषयत्वेज्ञानत्वमेवनस्यादिति । यद्यपिज्ञानत्वव्यापकसविषयत्वाभा

वोपपादनेनैवाज्ञानत्वमात्मनःसिद्ध्यति तथापिज्ञानव्यापकंसविषयत्वंनभवतीतिपरोवैय्यात्याद्वदेत् तदातंप्रतिसविषयत्वस्यज्ञानत्वव्यापकत्वोपपादनायद्वितीयविकल्पोपन्यासइत्याशयः । नन्वात्मानज्ञानंनिर्विषयत्वात्घटवदित्यनुमानेत्वदभिप्रेतेनिर्विषयत्वंकिंमवर्तमानविषयत्वंवा अत्यंतासद्विषयत्वंवा । आद्येऽतीतज्ञानेव्यभिचारः द्वितीयेतुच्छज्ञानेव्यभिचारइत्याशंकांनिराकुर्वन्हेतुस्वरूपमाह ॥ [७२।३] तद्धीति ॥ निर्विषयत्वहेतोःस्वरूपासिद्धिंशंकते ॥ [७२।४] नचेति ॥ अर्थोपलक्षितस्यैवज्ञानत्वेनमोक्षदशायामपितदनपायादित्यर्थः ॥ सप्रतियोगिकं[७२।४]इति ॥ उक्तानुमानेहेतूकृतंनिर्विषयत्वंसविषयत्वस्वभावशून्यत्वं । तच्चात्मनिकदाचिद्विषयसंबंधेप्यस्तीतिनासिद्धिरित्यभिप्रेत्य । ननूक्तसाध्यहेत्वोर्व्यतिरेकसहचारग्रहस्थलाभावात्नव्याप्तिग्रहइत्याशंक्यव्यतिरेकसहचारग्रहस्थलमुक्तं घटादिज्ञानेइति । ननुतत्स्वरूपानंतर्गतस्यविषयस्यकथंतत्स्वभावनिरूपकत्वमित्याशंक्योक्तंसप्रतियोगिकेअभावादौसविषयकेइच्छादाविति । एवंचयथाअभावादौसप्रतियोगिकत्वंस्वाभाविकं इच्छादौघटादिज्ञानेचसविषयकत्वंस्वाभाविकं तथाब्रह्मरूपज्ञानेपिसविषयकत्वंस्वाभाविकंवाच्यं । तच्चनसंभवति मोक्षेआत्मरूपज्ञानस्यसविषयकत्वांभावादित्यर्थः । अत्रवदंति "सि०ज्ञानस्यसविषयत्वंविषयसंबंधः । सचनतात्विकः किंत्वाध्यासिकः । तात्विकसंबंधस्यनिरूपयितुमशक्यत्वात् । अतोनतस्यस्वाभाविकत्वं । नहिशुक्तौरूप्यंतात्विकं । एवंचज्ञानोपाधिकस्यैवसविषयत्वस्येच्छादिष्वभ्युपगमान्नतरांतस्यस्वाभाविकत्वं । नचज्ञानवद्विषयसंबंधंविनापिकदाचिदिच्छायाःसत्त्वापत्तिरितिवाच्यं । सविषयत्वप्रयोजकोपाध्यपेक्षयाऽधिकसत्ताकत्वस्यतत्रप्रयोजकत्वात् । इच्छायाश्चतत्समानसत्ताकत्वात् । एवंचसविषयकत्वस्वभावत्वंनज्ञा

नत्वव्यापकमतस्तन्निवृत्त्यात्मनिज्ञानत्वविवृत्तिर्नेतिनज्ञानत्वस्यहेतोरात्मनिव्यभिचार" इति । अत्रब्रूमः । यदिज्ञानस्यविषये णाध्यासिकएवसंवंधस्तर्हिंचरमवृत्तौनात्माविषयःस्यात् । नचवृत्तिप्रतिविंवितचैतन्यरूपज्ञानस्यविषयेणाध्यासिकःसंवंधइति वाच्यं । चरमवृत्तावपिशुद्धात्मगोचराज्ञाननिवृत्त्यर्थं चित्प्रतिफलनस्यावश्यकत्वात् । वृत्तिमात्रस्यतत्राज्ञाननिवर्तकत्वेघटादा वपितथात्वापातेनतत्रापिचित्प्रतिफलनाभावापत्त्याघटादेर्वृत्तिव्याप्यत्वमेवस्यान्नफलव्याप्यत्वं । नचैवमात्मनोपिफलव्याप्य त्वापत्तौमिथ्यात्वापत्तिरितिवाच्यं । त्यजतर्हिंमिथ्यात्वेफलव्याप्यत्वस्यहेतुत्वं । परोक्षवृत्तेरतींद्रियार्थविषयकत्वंचनस्यात् । प रोक्षवृत्तावतींद्रियस्याध्यासाभावात् । तस्मान्नज्ञानस्याध्यासरूपःसंवंधइतिस्वाभाविकमेवज्ञानेसविषयत्वं । एवमिच्छायामपि स्वाभाविकमेवसविषयत्वं । घटंजानामीतिवद्धटमिच्छामी(चान्यो)त्यत्रोपाधिंविनासविषयत्वानुभवात् । तस्मात्साधूक्तंज्ञानेस विषयत्वादेःस्वभावत्वदर्शनादिति मोक्षेविषयानुल्लेखेब्रह्मस्वरूपज्ञानस्वभावहान्यापत्त्याज्ञानत्वाभावमुक्त्वादोषांतरमाह ॥ परस्यपुरुषार्थइति ॥ त्वयामोक्षावस्थायामात्मनोनिर्विषयत्वांगीकारादानंदाप्रकाशेतदपुमर्थत्वंस्यादित्यर्थः । नचतदाप्यानंद एवप्रकाशोनत्वानंदस्यप्रकाशइतिवाच्यं । सुखरूपतायाअपुरुषार्थत्वात् । प्रकाशमानसुखवत्तायाएवपुरुषार्थत्वात् । नन्वर्थो पलक्षितप्रकाशत्वंमोक्षेप्यस्त्येवेतिनज्ञानत्वहानिरित्यतआह ॥ अर्थप्रकाशत्वेति ॥ मोक्षेज्ञानोपलक्षणस्याप्यर्थस्ययदिप्रकाशो स्तितदातदुल्लेखरूपोपप्लवापत्तिः । यदिनप्रकाशस्तदार्थप्रकाशत्वरूपज्ञानस्वभावाभावाद्धटादिवज्ज्ञानत्वंनस्यादित्यर्थः । ननु नार्थप्रकाशात्मकत्वंज्ञानस्वभावः किंतुजडव्यावृत्तिरेव । साचास्तिमोक्षेप्यात्मनि नतुघटादावित्यतआह ॥ अर्थप्रका

शात्मकेति ॥ अर्थाप्रकाशात्मकंयज्जडंतस्माद्व्यावृत्तिरपिज्ञानस्यार्थप्रकाशात्मकत्वरूपजडवैधर्म्यादेवेत्यर्थः । ज्ञेयाभावादा
त्मानज्ञानमित्युक्त्वाज्ञात्रभावादपिस्वनज्ञानमित्याह ॥ एवंमिति ॥ नन्वात्मरूपस्यज्ञानस्यानादित्वेनाक्रियात्वान्नज्ञेयज्ञात्रपे
क्षास्तीत्याशंक्यनिराकरोति ॥ यदिचेति ॥ ननुसादेरप्यतीतादिज्ञानस्यनस्वोत्पत्त्यर्थंज्ञात्राद्यपेक्षा । किंपुनरनादेरात्मरूपज्ञा
नस्यतदनपेक्षेतिवक्तव्यं । अनादीश्वरज्ञानेज्ञात्राद्यनपेक्षायाद्दृष्टत्वाच्चेत्याशंक्यपरिहरति ॥ अतीतादीति ॥ नोत्पत्त्यर्थंज्ञात्रा
द्यपेक्षामाचक्ष्महे । किंतुज्ञाननिरूपणार्थं । तच्चातीतादिज्ञानेईश्वरज्ञानेचास्तीतिनकोपिदोषः । ज्ञानस्यज्ञेयादिनिरूप्यत्वेऽनु
भवंप्रमाणयति ॥ इदमहमिति ॥ इदमितिज्ञेयस्य अहमिति ज्ञातुरुल्लेखः ॥ ज्ञातुरिति ॥ ज्ञातुर्योर्थप्रकाशस्तज्ज्ञानमित्यर्थः
॥ संगृह्णाति ॥ तथाचेति ॥ अत्रवदंति “सि०जातेर्व्यक्तिनिरूप्यत्वेपिकदाचित्तदसंबंधवत्तदुपपत्तिः । संबंधप्रयोजकोपाध्य
पेक्षयाधिकसत्ताकत्वात् । अतएवज्ञानस्यसज्ञेयत्वंसज्ञातृत्वंचनस्वाभाविकं । तथाहि । सज्ञेयत्वंतावज्ज्ञेयजन्यत्वंवाज्ञेयव्या
प्यत्वंवा । नाद्यः । परोक्षज्ञानेईश्वरज्ञानेचाऽभावात् । नापिद्वितीयः । यदाज्ञानंतदाऽर्थइतिपूर्ववत्कालिकव्याप्तौव्यभिचा
रात् । दैशिकव्याप्तिस्तुदूरनिरस्तैव । नचयदाऽपरोक्षज्ञानंतदाऽर्थइतिकालिकव्याप्तौनास्तिव्यभिचारः । आत्माच “यत्साक्षाद
परोक्षाद्ब्रह्म”तिश्रुतेरपरोक्षज्ञानरूपइतिसोप्यर्थव्याप्तइतिवाच्यं । ईश्वरज्ञानेयोगिज्ञानेचव्यभिचारात् । यदैंद्रियकज्ञानंतदा
ऽर्थइतितुव्याप्तिःसर्वसंमता । नचात्मरूपज्ञानेऐंद्रियकत्वमस्तीतिनतयाविरोधः । ननुयदाऽपरोक्षज्ञानंतदाऽर्थइतिव्याप्त्यन
भ्युपगमेइदंरजतमित्यपरोक्षज्ञानान्यथानुपपत्त्याऽनिर्वचनीयरजतसिद्धिर्नस्यात् । अर्थंविनाप्यपरोक्षत्वोपपत्तेरितिचेन्न । इदं

रजतमहंजानामीत्यनुसंधीयमानंयज्ज्ञानविषयत्वंतस्याश्रयांतरानुपपत्त्याऽनिर्वचनीयरजतसिद्धेर्वक्ष्यमाणत्वात् । अतएवपरोक्ष भ्रमेप्यर्थसिद्धिः । जन्यापरोक्षत्वेनवाऽर्थव्याप्यता । आर्षज्ञानस्यापरोक्षतानभ्युपगमात् । तथाचनानिर्वचनीयरजतसिद्ध्यनुप पत्तिः । एवंसज्ज्ञातृत्वमपिकिंज्ञातृजन्यत्वंवाज्ञातृव्याप्यत्वंवा । आद्येईश्वरज्ञानेव्यभिचारः । ज्ञाननित्यत्वस्यसाधयिष्यमाणत्वाच्च । द्वितीयेप्यप्रयोजकता ज्ञात्रजन्यत्ववत्ज्ञात्रसमवेतत्वस्यापिसंभवात् । ज्ञानस्यगुणत्वक्रियात्वयोरनभ्युपगमेनद्रव्याश्रयत्वानुमा नायोगात् । अस्तिब्रह्मेतिचलकारोनब्रह्मसत्तांप्रतिब्रह्मणःकर्तृत्वमाह । नित्यत्वेनतदसंभवात् । किंतुसाधुत्वार्थ" इति । अत्रब्रूमः व्यक्तिंविनापिजातेःप्रलयेसत्त्वेपिव्यक्त्युपरक्तबुद्धिविषयत्वंतदाप्यक्षतमेव । ईश्वरादिज्ञानस्यैवतदातादृशत्वात् । सज्ज्ञेयत्वमपि नज्ञेयजन्यत्वज्ञेयव्याप्यत्वादि । किंतुज्ञेयोपरक्तबुद्धिविषयत्वादिकं । ज्ञेयानुपर(क्तबुद्ध्यवि)क्तापरोक्षाविषयत्वंवेतिनकोपिदोषः । अन्यथाअभावसादृश्यादेरपिसप्रतियोगिकत्वससंबंधिकत्वानुपपत्तिः । किंचैवमैक्यस्यापिजीवप्रतियोगिकत्वंनस्यात् । तद्धिजी वजन्यत्वंवाजीवव्याप्यत्वंवा । नाद्यः । ऐक्यस्यब्रह्ममात्रत्वेनजीवाजन्यत्वात् । नद्वितीयः । यदैक्यंतदाजीवइतिकालिकव्याप्तेःसर्व मुक्तौव्यभिचारात् । यत्रैक्यंतत्रजीवइतिदैशिकव्याप्तेर्जीवएवव्यभिचारात् । तथाचब्रह्मणिविद्यमानमैक्यंनजीवप्रतियोगिकमि तिसाधुसमर्थितोजीवब्रह्माद्वैतवादः । एवंसज्ज्ञातृत्वमपिज्ञात्रुपरक्तबुद्धिविषयत्वंवाज्ञात्रनुपर(क्तबुद्ध्यवि)क्तापरोक्षाविषयत्वंवेति नकश्चिद्दोषः । नचास्तिब्रह्मेत्यत्रलकारस्यसाधुत्वार्थकत्वं । योगक्षेमसाधारणक्रियासिद्धिंप्रतिस्वातंत्र्यरूपकर्तृत्वस्यंतत्रापिसत्त्वेना र्थसाधुत्वसंभवेशब्दसाधुत्वस्यानादरणीयत्वात् । तस्मात्साधूक्तंज्ञानस्यज्ञातृज्ञेयनिरूप्यस्वभावत्वादिति । ज्ञानविशेषाभ्यावहिर्भू

तत्वादपिनात्माज्ञानमित्याह ॥ [७३।८] किंचात्मेति ॥ [७३।९] तद्व्द्यस्येति ॥ प्रमायाःसदर्थकत्वनियमादित्यर्थः ॥ [७३।९] दोषाजन्यत्वादिति ॥ रूप
प्रागभावकालेपृथिवीत्वलिंगकरूपानुमितिरयथार्थपरामर्शरूपदोषाजन्यापिपक्षतावच्छेदकावच्छेदेनसाध्याभाववतिलिंगज्ञान
रूपंदोषजन्यैवं । विसंवादिशुकवाक्यजन्यज्ञानमयथार्थवक्तृवाक्यार्थज्ञानरूपदोषाजन्यमप्ययथार्थयोग्यताज्ञानरूपदोषजन्यमि
तिनभ्रमस्यदोषजन्यत्वव्यभिचारइत्यर्थः ॥ [७४।३] स्वभावतोरूपद्वयहीनश्चेदिति ॥ अत्रवदंति "सि०तार्किकेश्वरज्ञानवद्घटादिनि
र्विकल्पकवच्चस्वभावतउभयवैलक्षण्येनाप्युपपत्तिः।तत्रापीश्वरज्ञानस्यप्रमात्वेगुणजन्यत्वस्यभ्रमत्वेदोषजन्यत्वस्यचापत्तेः। निष्प्र
कारकेचनिर्विकल्पकेतद्वतितत्प्रकारकत्वस्यतदभाववतितत्प्रकारकत्वस्यचानुपपत्तेः।जन्यसविकल्पकत्वेनभ्रमप्रमान्यतरत्वनिय
मेचास्माकंक्षत्यभावात् । विलक्षणवृत्तिद्वयोपरागेणस्वभावतोभ्रमप्रमाविलक्षणस्याप्यात्मज्ञानस्यतदुभयरूपेणव्यवहारोपपत्ते"
रिति । अत्रब्रूमः । नतावत्तार्किकमतेगुणजन्यतानवच्छेदकमपिप्रमात्वंगुणजन्यत्वप्रयुक्तं । येनेश्वरज्ञानेप्रमात्वप्रयोजकस्यगुण
जन्यत्वस्याभावात्प्रमात्वंनस्यात् । किंतुतत्तत्प्रमात्वमेव । अतएवप्रमामात्रेनानुगतोगुणइतिमणिकृतोक्तं । तथाचगुणाजन्य
मपीश्वरज्ञानंदोषाजन्यत्वात्प्रमैवेतिनतस्योभयवहिर्भावः । अतएवसंवादिशुकवाक्यजन्यज्ञानेभगवद्यथार्थवाक्यार्थज्ञानस्यगु
णत्वमुक्तंनैयायिकैः । अतएवचनित्यसाक्षात्कारिप्रमायाआश्रयत्वेनेश्वरःप्रत्यक्षप्रमाणमित्युक्तमुदयनाचार्यैः । अतएवेश्वरप्र
मायाअनुगतत्वात्तद्विषयत्वरूपंप्रमेयत्वमनुगतमित्याहुर्मणिकृतः । तद्वतितत्प्रकारकज्ञानत्वेपि ननुनेदंप्रामाण्यं स्मृत्यामति
व्याप्तेः । निर्विकल्पकाव्याप्तेरित्याशंक्यनिष्कंपप्रवृत्त्यौपयिकमिदंपारिभाषिकंप्रामाण्यं नतुमुख्यमितिसमाहितंतार्किकैः ॥

अतोनिर्विकल्पकमपियथार्थानुभवत्वादिमुख्यप्रमात्वलक्षणयोगात्प्रमैवेतिनतस्याप्युभयवहिर्भावः। तस्मादीश्वरज्ञानवन्निर्विकल्पकवदात्मरूपज्ञानमप्युभयवहिर्भूतमेवेत्युक्तिरेवप्रमाणवहिर्भूतेतिसाधूक्तंस्वभावतोरूपद्वयहीनश्चेत्स्वभावतोज्ञानमेवनस्यादिति ॥ [७४।१]निरस्तत्वादिति ॥ अस्वप्रकाशत्वंदृश्यत्वमित्यत्रेतिशेषः ॥ [७४।२]आत्मनएकत्वादिति ॥ तथाचात्मत्वरूपजातिशून्यत्वादित्यस्यहेतोरात्मनिव्यभिचारइत्यर्थः ॥ [७४।२]विशिष्टात्मनामिति ॥ तथाचविशिष्टात्मनिनिरुक्तहेतुरसिद्धइतिभावः ॥ नापि [७४।३]ज्ञातृत्वंचेति ॥ आद्यस्याहमर्थेऽसिद्धिः। द्वितीयस्यवृत्तिज्ञाने। तृतीयस्यघटादावविद्यादावसिद्धिः। शुक्तिरूप्येसाधनवैकल्यंचेत्यादिनानिरस्तत्वादित्यर्थः ॥ [७४।४]जन्मादिमतीति ॥ जन्मादिमत्त्वमनात्मत्वंचवैषयिकानंदस्यपक्षत्वोपपादनाय। ननुनात्मस्वरूपातिरिक्तोवैषयिकानंदोस्ति। "विषयसंवंधेनाप्यात्मस्वरूपानंदएवाभिव्यज्यत" इतिविवरणोक्तेरित्यतआह ॥ [७४।५]तस्यापीति ॥ तथाचवैषयिकानंदस्यविपक्षत्वात्तत्रहेत्वसिद्धिर्नदोषइतिभावः ॥ [७४।५]नीरूपानजादिति ॥ तथाचतारतम्यवत्त्वाद्वैषयिकानंदस्यशब्दादिवन्नात्मरूपतेतिभावः। ननुवैषयिकानंदेतारतम्यमसिद्धमित्याशंक्यानुभवेनश्रुत्यायुक्त्याचसिद्धमित्युक्तं। आनंदतारतम्यश्रुतिरपिपरमतेवैषयिकानंदपरेतिश्रुतिग्रहणं। अग्निहोत्रवाजपेयजन्यसुखं तारतम्यवत् उत्कृष्टापकृष्टसाधनजन्यत्वात् तादृशपाकजरूपवत्। अन्यथावह्वायाससाध्येवाजपेयादौफलभूमानंविनाननुष्ठानमापद्येत. । तदुक्तमर्थवादपादे वार्तिककृता "कर्मणामल्पमहतांफलानांचस्वगोचरे। प्रवृत्तिस्थानसामान्यादविशेषेपिचोदित"इति। ननुनानंदेतारतम्यंकिंत्वभिव्यक्तितारतम्यमेवानंदउपचर्यते। उक्तानुभवादिकमपितदभिव्यक्तितारतम्येनान्यथासिद्धमित्यतआह ॥ [७४।६]अखंडइति ॥

अखंडैकरसेऽभिव्यक्त्यनभिव्यक्त्योरयोगात् । तथात्वेसखंडत्वापत्तिरित्यर्थः । ननुनानंदेस्वरूपकृतंवातदभिव्यक्तिकृतंवाता
रतम्यं । किंतुविरोधिनोदुःखस्याल्पत्वेउत्कृष्टानंदस्तस्याल्पतरत्वेउत्कृष्टतरआनंदस्तस्याल्पतमत्वेउत्कृष्टतमआनंदइति स्वरूपा
नंदेपितारतम्यंविरोधिदुःखनिबंधनंयुज्यतइत्यतआह ॥ विरोधिनइति [७५।१] ॥ विरोधिनोदुःखस्यसर्वात्मनानिवृत्तावप्यानंदेतार
तम्यानुभवात्स्वरूपानंदेचतदयोगात्तदतिरिक्तोवैषयिकानंदोस्तीतिवक्तव्यं । तथाचतत्रानानंदत्वहेतुरसिद्धइत्यर्थः । वैषयिका
नंदस्यस्वरूपानंदाभेदेनानुभूयमानत्वादपितदतिरिक्तोवैषयिकानंदोस्तीतिवक्तव्यमित्याह ॥ अंतःकरणेति [७५।१] ॥ यथास्वरूपज्ञा
नातिरिक्तमंतःकरणवृत्तिरूपंज्ञानंजानामीत्यनुभवविषयोंगीक्रियते तथाअहंसुखीत्यनुभवबलेनस्वरूपानंदातिरिक्तंवैषयिकंसु
खमप्यंगीकार्यं । अंतःकरणवृत्तिरूपसुखाभावे अंतःकरणवृत्तिरूपसुखानंगीकारे ॥ अहंसुखीत्यनुभवायोगादिति [७५।१] ॥ स्व
स्मिन्स्ववत्तायावाधितत्वादित्यर्थः । तथाचवैषयिकानंदेहेतोरसिद्धिरितिभावः ॥ अनानंदत्वस्येति [७५।१] ॥ आनंदभिन्नत्वस्येत्यर्थः
॥ आत्मनीति [७५।२] ॥ अहंकारवृत्त्यहंत्वस्याऽभावआत्मन्यस्तीतितत्रव्यभिचारइत्यर्थः ॥ उक्तादन्यस्येति [७५।३] ॥ आत्मत्वानंदत्वाहं
त्वादेःसकाशादन्यस्यप्रत्यक्त्वस्याभावादित्यर्थः ॥ निरसिष्यमाणत्वादिति [७५।३] ॥ देशकालादावसिद्धयेतिशेषः ॥अवाच्यइति [७५।४] ॥
आत्मशब्दवाच्यत्वाभावोनात्मत्वमात्मन्यप्यस्तीत्यर्थः ॥ आत्मशब्दवाच्यइति [७५।५] ॥ "किमात्मनानेनजहातियोंततः" इत्या
दिषुदेहेप्यात्मशब्दप्रयोगादित्यर्थः । ननुदेहादिविशिष्टस्यैवात्मशब्दवाच्यता । देहमात्रेतुलक्षणयापिप्रयोगसंभवः । तथाचा
त्मपदजन्यप्रतीतिविशेष्यभिन्नत्वस्यानात्मत्वस्यविवक्षितत्वात्तस्यचदेहादावपिसत्त्वान्नासिद्धिरितिचेत् तथापिलाक्षणिकस्याप्य

नुभावकत्वाल्लक्षणयाऽऽत्मपदजन्यप्रतीतिविशेष्येदेहादावसिद्धितादवस्थ्यात् ॥ इंद्रियादाविति[७५।६] ॥ लक्षणयाइंद्रियादिष्वात्म शव्दप्रयोगसंभवादित्यर्थः । किंचात्मभिन्नत्वादेःकाल्पनिकस्यब्रह्मण्यपिसत्त्वाद्व्यभिचारः । तात्विकभेदस्यचाप्रसिद्धिः । नच धर्मिसमसत्ताकतद्भेदोहेतुरितिवाच्यं । रूप्येसाधनवैकल्यात् । तत्रात्मभेदस्यव्यावहारिकत्वादिति ॥ मयेति[७५।६] ॥ ज्ञातृत्वाभा वंआत्मनिव्यभिचारी अहमर्थेसिद्धश्चेतिभावः । अनात्मत्वपक्षदूषणमुपसंहरति ॥ तस्मादिति[७५।७] ॥ मयाऽज्ञातृत्वमिति[७५।७] ॥ तथाचात्मनिव्यभिचारः । अहमर्थेऽसिद्धिश्चेतिभावः । किंचाज्ञानत्वादिचतुर्णांतुच्छेपंचमप्रकाराविद्यानिवृत्तौचव्यभिचारः । नचाज्ञानकालवृत्तित्वंहेतुविशेषणमतोनोक्तोव्यभिचारइतिवाच्यं । प्रत्येकमुक्तिपक्षेऽस्याप्यविद्यानिवृत्तौसत्त्वात् । युगपत्सर्व मुक्तेश्चवामदेवादिमुक्तिप्रतिपादकागमविरोधेनाप्रामाणिकत्वस्यपरैरपिकैश्चिदभिहितत्वात् । मिथ्यात्वंप्रत्यप्रयोजकत्वाच्चेतिस र्वंमनोहरं ॥ ७ ॥ ७ ॥ व्यासाद्रिसूततर्काबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यांजडताभंगईक्ष्यतां ॥ जडत्वहेतुभंगः ॥ ४० ॥ ७ ॥ ७ ॥ देशतइति[७६।२] ॥ अत्यंताभावप्रतियोगित्वमित्यर्थः ॥ कालतइति[७६।२] ॥ प्रध्वंसप्रतियोगित्वमित्यर्थः ॥ वस्तुत इति[७६।२] ॥ अन्योन्याभाववत्त्वमित्यर्थः । अत्यंताभावप्रतियोगित्वरूपंदेशपरिच्छिन्नत्वंसमवायसंबंधेनात्यंताभावप्रतियोगित्वंचे दात्मनिव्यभिचारि । तस्यक्काप्यसमवेतत्वात् । सर्वसंबंधित्वाभावविवक्षायांसर्वसंबंधशून्येपरमात्मनिव्यभिचारः । संयोगसं बंधेनात्यंताभावप्रतियोगित्वाभिप्रायेत्वाकाशादावसिद्धिः । एवंकालतःपरिच्छेदेप्यसिद्धिरित्याह ॥ देशकालाज्ञानेष्विति[७६।२] ॥ त्वदभिप्रेतइतिनिषेधेनसंबध्यते आकाशादिषुहेत्वभावमुपपादयति ॥ अवकाशरूपेति[७६।३] ॥ इदमग्रे अस्याग्रेइत्यनेनसर्वजग

त्सृष्टेःपूर्वं "यदासर्वेप्रलीयंतेकामायेस्यहृदिश्रिताः । अथमर्त्योमृत" इत्यविद्यातत्कार्यनिवृत्तिरूपमोक्षेपिदेशकालयोःसत्वेनाप
रिच्छेदसिद्धेरित्यर्थः । नन्वाकाशेनकालपरिच्छेदराहित्यं "तस्माद्वाएतस्मादात्मनआकाशःसंभूत" इतिश्रुतिसिद्धजन्यत्वेनध्वं
सप्रतियोगित्वरूपकालपरिच्छिन्नत्वस्याकाशेऽनुमितत्वात् । "आकाशवत्सर्वगतश्चनित्य" इत्यत्रचात्मनिदर्शनेत्वंस्वसमानका
लीनसर्वगतत्वेनाभूतंसंप्लवस्थायित्वेनचोपपन्नमित्यतआह ॥ [७६।६] आकाशःसंभूतइतिश्रुतेश्चेति ॥ वियदधिकरणसिद्धोत्पत्ति
कभूताकाशपरतयासंभूतश्रुतेःसावकाशतयानिश्चितार्थकात्मन्दिर्शनश्रुत्यातत्परतया आकाशस्यकालापरिच्छेदरूपनित्यत्वसि
द्धिरित्यर्थः । ननुभूताकाशातिरिक्तस्याकाशस्याभावात्कथंश्रुत्योर्विरोधपरिहारइत्युतआह ॥ उक्तंचेति ॥ भूताकाशोऽव्याकृ
ताकाशश्चेत्याकाशद्वैतं । ननुप्रतियोगिसमानसत्ताकात्यंताभावप्रतियोगित्वंहेतुः । अतोनात्मनिव्यभिचारः । अज्ञानाकाशा
दौचस्वसमानसत्ताकात्यंताभावप्रतियोगित्वसत्त्वेनासिद्ध्यभावात् । अविद्याकाशादेर्व्यावहारिकस्यपारमार्थिकाभावपक्षेस्वा
न्यूनसत्ताकेतिविशेषणंदेयं । अतएवप्रातिभासिकशुक्तिरूप्यादेर्व्यावहारिकाभावप्रतियोगित्वेपिनसाधनवैकल्यं । सद्विविक्त
त्वादिमिथ्यात्वप्रकाराणांचैवंरूपत्वाभावान्नसाध्याविशिष्टतेत्यतआह ॥ [६।७] अत्रदेशइति ॥ देशकालयोःसर्वदेशकालेसंसृष्टत्वे
नप्रतियोगिसंसर्गवतितदत्यंताभावासंसर्गादसिद्धिरेव । अन्यथाअत्रेदानींशब्दाभ्यांदेशकालौनिर्दिश्यपुनस्तयोर्निषेधेव्याघातः
स्यादित्यर्थः । किंचब्रह्मणोदेशकालाभ्यामपरिच्छिन्नतयैवतयोस्ताभ्यामपरिच्छेदसिद्धिरित्याह ॥ [७७।१] ब्रह्मंकुत्रचिदिति ॥ कुत्र
चित्कदाचिच्छब्दाभ्यांदेशकालौनिर्दिश्यपुनस्तौविनाब्रह्मास्तीत्यभिधानेव्याघातापत्त्याब्रह्मसर्वदेशेसर्वकालसंसृष्टमेवसर्वकालेस

वंदेशसंसृष्टमेवेतिब्रह्मणोपरिच्छेदेनिरूप्यमाणेदेशकालयोरपिदेशकालाभ्यामपरिच्छेदसिद्धिरितिभावः । देशकालयोःपरिच्छे
दनिरूपणायापिदेशकालयोरपरिच्छेदसिद्धिरित्याह ॥ देशकालयोरिति[७७।१] ॥ यदुपाधौदेशकालौवर्तेते तदुपाधौतयोर्व्यावहा
रिकन्निषेधेविरोधापत्त्यादेशकालयोर्निषेधोपाधिभूतावन्यौदेशकालौवक्तव्यौ तयोरपिदेशकालपरिच्छेदवत्त्वेपूर्ववद्देशकालांतरा
द्यपेक्षायाआवश्यकत्वेनानवस्थापत्त्याकयोश्चिद्देशकालयोर्देशकालापरिच्छेदेंऽगीकर्तव्येप्रथमयोरेवतदपरिच्छेदआवश्यकइत्य
र्थः । ननुसत्यंयदुपाधौदेशकालौवर्तेतेतदुपाधौनतयोर्व्यावहारिकोनिषेधइति । किंतुस्वस्वरूपदेशकालयोःस्वयंदेशकालौनव
र्तेते । आत्माश्रयदोषात् । अतःस्वस्वरूपयोरेवदेशकालयोर्निषेधोभविष्यतीत्याशंक्याह ॥ देशःसर्वत्रास्तीति[७७।३] ॥ नत्स्माश्र
यदोषेणदेशकालयोःस्वस्वरूपेऽवृत्तिः प्रमेयत्वादिवदभेदेनसंबंधेनस्वस्मिन्नपिवृत्तेःप्रामाणिकत्वादित्यर्थः । तथाचदेशकालयोः
परिच्छिन्नत्वमसिद्धमितिभावः । अज्ञानेहेत्वसिद्धिमुपपादयति ॥ अज्ञानस्येति[७७।४] ॥ यद्देशकालयोरज्ञानंनस्यात्तद्देशकालस्वरू
पमेवनतिष्ठेत् । तवमतेदेशकालयोरप्यज्ञानोपादानकतयोपादानाभावेउपादेयदेशकालयोरप्यभावापत्तिः । अतोनकस्मिंश्चि
द्देशेकालेवाऽज्ञानस्यपरिच्छेदःसंभवति । व्याघातापत्तेरित्यभिप्रायेणोक्तं । सर्वदेशकालोपादानत्वेनेति । आवरणंहिपटादिक
मावियमाणपुरुषाद्यन्यूनदेशादिदृष्टं । अंतोदेशाद्यपरिच्छिन्नंब्रह्मप्रतिदेशाद्यपरिच्छिन्नब्रह्मविषयकावरणमज्ञानमप्यावियमाण
ब्रह्मान्यूनदेशंवाच्यमित्यज्ञानस्यदेशकालाद्यपरिच्छेदसिद्धिरित्यभिप्रायेणोक्तं । सर्वगतंब्रह्मप्रतीत्यादि ॥ सूर्यन्यूनदेशंसूर्यावर
कच्छत्रादिव्यावर्तयितुंविषयसंबंधीत्युक्तं । पराभिप्रेतस्यप्रतिपन्नोपाधिस्थनिषेधस्यापरिच्छिन्नत्वमुपपादयति ॥ प्रतिपन्नोपाधा[७८।१]

विति ॥ यद्देशेप्रतियोगिनिषेधोत्यंताभावरूपोनास्ति तद्देशेप्रतियोगिनःसत्त्वं । यथातंतुदेशेपटस्य । यत्कालेप्रतियोगिनिषेध
उक्तरूपोनास्ति तत्कालेप्रतियोगिनःसत्त्वं । यथाप्रतियोगिनोगंधात्यंताभावस्यनिषेधोगंधरूपःप्रलयेनास्त्यतःप्रलयेगंधात्यंता
भावरूपोगंधस्यप्रतियोगीवर्त्तते । तस्माद्देशकालप्रतिपन्नोपाधिस्थनिषेधेष्वपरिच्छिन्नेषुपरिच्छिन्नत्वहेतोरसिद्धिरिति । संगृह्णा
ति ॥ [७८।३] कालादीति ॥ [७८।३] इत्यादीति ॥ आदिशब्देन “यत्रत्वस्यसर्वमात्मैवाभूत् अथसोभयंगतोभवती” तिमोक्षेयत्राथशब्दा
भ्यांदेशकालसत्त्वप्रतिपादकश्रुतिसंग्रहः ॥ [७८।३] किंचेति ॥ कालादिपरिच्छिन्नत्वंकिमेकस्मिन्देशमात्रेकालमात्रेचसत्वंवा एकस्मिन्
देशमात्रेकालमात्रेचसत्वरहितत्वेसतिएकस्मिन्देशमात्रेकालमात्रेचसत्वेनज्ञानविषयत्वंवा एकस्मिन्देशमात्रेकालमात्रेचसत्वे
नभ्रमविषयत्वंवा एकस्मिन्देशमात्रेकालमात्रेचसत्वेनज्ञानविषयत्वंवा एकस्मिन्देशमात्रेकालमात्रेचसत्वेनव्यावहारिकप्र
माविषयत्वंवा स्वदेशकालेतरकालयोरसत्वंवेतिविकल्पानभिसंधायाद्यमपवदति ॥ [७८।३] नैतावदिति ॥ एककालादिमात्रेस
त्वंनतुद्वयोस्त्रिषुकालादिषुसत्त्वमित्यर्थः ॥ [७८।४] रूप्यादाविति ॥ भमात्यंतासद्रूप्यवादिनोमतेरूप्यस्यैकस्मिन्नपिकालाद्यावसत्वा
दित्यर्थः ॥ [७८।४] तेनेति ॥ एकस्मिन्देशेकालेचसत्त्वेनसर्वदेशेपिकालत्रयेपिनिषेधेसाध्यमानेयद्देशेकालेवायस्यसत्त्वमस्ति तद्देशका
लयोरपितस्यासत्त्वंसाधितंस्यात् । तथाचतद्देशेकालेचसत्त्वेनतद्देशेकालेऽसत्त्वसाधनेविरोधइत्यर्थः । द्वितीयतृतीयौदूषयति
॥ [७८।५] प्रपंचइति ॥ मयाप्रपंचेसत्त्वाभावानंगीकारात्सत्त्वेनभ्रमानंगीकाराच्चेत्यर्थः । चतुर्थमुक्त्वादूषयति ॥ [७८।५] प्रमाभ्रमेति ॥ पंच

ममुक्त्वादूषयति ॥ व्यावहारिकेति ॥ षष्ठमपवदति ॥ नापीति ॥ दूषयति ॥ तेनेति ॥ तथाचागृह्यमाणविशेषदशा(यांसत्प्रतिपक्षः)यामाभाससाम्यं विशेषग्रहेतुबाधइत्यर्थः ॥ रूपांतरेणेति ॥ तथाचाभासांतरसाम्यरूपमप्रयोजकत्वमित्यर्थः ॥ रूप्यादेरिति ॥ रूप्यादेर्वियदादेश्चान्यकालेस्वरूपोपमर्दसत्त्वेनस्वकालेपिस्वरूपोपमर्दःस्यात् । नचेष्टापत्तिः । तथासति कालत्रयेपिरूप्यादिवियदादिस्वरूपोपमर्देनासत्त्वापत्त्याऽसद्विलक्षणस्वरूपाभावापातादित्यर्थः । तथाचासद्विलक्षणस्वरूपानुपमर्देनपारमार्थिकत्वाकारेणनिषेधइतित्वत्सिद्धांतविरोधःस्यादितिभावः ॥ एतेनेति ॥ स्वदेशकालेतरदेशकालयोरसत्वेनस्वदेशकालयोरप्यसत्वसाधनेविरोधापातेनेत्यर्थः ॥ निरस्तमिति ॥ (स्वासत्वग्राहकेणप्रमाणेनदेशकालयोःस्वसत्त्वग्राहकेणापि विरोधस्याविशिष्टतया)यत्कदाचित्कुत्रचिदसत्तत्सदासर्वत्रासदेवेतिवियदादेःस्वोपाधावप्यसत्त्वसाधनेयत्कदाचित्कुत्रचित्सत्तत्सर्वत्रसदासदेवेतिस्वोपाध्यतिरिक्तदेशादावपिवियदादेःसत्त्वंस्यादितिदोषउक्तप्रायत्वान्नोक्तः ॥ आद्ययोरिति ॥ असंगत्वात्सर्वमूर्तासंयोगित्वं निर्गुणत्वान्महत्परिमाणानधिकरणत्वंचब्रह्मणिव्यभिचारीत्यर्थः ॥ अंत्यस्येति ॥ गुणकर्मादीनांनिर्गुणत्वेनतादृशपरिमाणानधिकरणत्वाद्गुणादिषुहेत्वसिद्धिरित्यर्थः ॥ कालपरिच्छिन्नत्वमिति ॥ प्रागभावप्रतियोगित्वेसतिध्वंसप्रतियोगित्वंवा एकैकप्रतियोगित्वंवाकालपरिच्छिन्नत्वं । तच्चनित्येष्वन्योन्याभावादिषुजगत्सत्यत्ववादिनोसिद्धमित्यर्थः । परिच्छिन्नत्वहेतौकृतेषुत्रिषुविकल्पेष्वाद्यौविकल्पौनिरस्यवस्तुतःपरिच्छेदइतितृतीयंविकल्पंदूषयितुमुपक्रमते ॥ नतृतीयइति ॥

तद्धीति ॥ भेदवत्त्वमित्यर्थः । भेदवत्त्वंवस्तुतःपरिच्छेदइत्यत्रकिंतात्विकभेदवत्त्वंकल्पितभेदवत्त्वंवा धर्मिसमसत्त्वभेदवत्त्वं वा भेदवत्त्वमात्रंवा सत्यप्रतियोगिकभेदवत्त्वंवेतिविकल्पानभिप्रेत्याद्यंदूषयति ॥ तस्येति ॥ भेदस्येत्यर्थः । तथाचासिद्धिरित्यर्थः ॥ आत्मन्यपीति ॥ तथाचात्मनिव्यभिचारइत्यर्थः । द्वितीयंदूषयति ॥ कल्पितस्येति ॥ तथाचव्यभिचारइत्यर्थः । तृतीयंदूषयति ॥ धर्मीति ॥ ननुरूप्यस्यप्रातिभासिकत्वेपितत्रघटादिभेदस्यव्यावहारिकत्वेपिस्वप्रतियोगिकभेदभ्रममादायधर्मिसमसत्ताकानिर्वचनीयभेदवत्त्वंरूप्येप्यस्तीतिनतत्रसाधनवैकल्यमितिचेन्न । रूप्यस्याविद्यावृत्तिरूपस्यसाक्षिगोचरतयाविशेषदर्शनस्यसत्त्वेनतस्मिन्स्वप्रतियोगिकभेदभ्रमस्यासंभवदुक्तिकत्वादितिभावः । धर्मिसमसत्त्वस्येतिबहुव्रीहिः । तस्येत्यनुषक्तं नसंबध्यते । चतुर्थंदूषयति ॥ भिन्नत्वमात्रस्यचेति ॥ भेदवत्त्वमात्रस्यहेतोःपक्षेऽध्यस्तप्रतियोगिकभेदसत्त्वेनाप्युपपन्नतया सदसद्भेदरूपसाध्यंविनानुपपत्त्यभावेनसदसद्भेदरूपसाध्यंप्रत्यप्रयोजकत्वादध्यस्तप्रतियोगिकभेदवत्त्वसिद्धौचसत्यत्वमेवसिध्यतीत्यर्थः । भेदवत्त्वमात्रंकल्पितभेदवत्यात्मन्यनैकांतिकंचेत्यपिबोध्यं । पंचमंदूषयति ॥ सत्यभेदस्यचेति ॥ ननुस्वसमानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्यविवक्षितत्वान्नब्रह्मणितुच्छेवाव्यभिचारोनवाप्रपंचेऽसिद्धिरितिचेन्मैवं । रूप्यप्रतियोगिकघटादिनिष्ठभेदस्यव्यावहारिकतयास्वसमानसत्ताकभेदप्रतियोगित्वंरूप्येऽसिद्धमितिसाधनवैकल्यं । नचरूप्यस्यप्रातिभासिकरूप्यांतरनिष्ठभेदप्रतियोगित्वमादायतत्रहेतुःस्यादितिवाच्यं । तद्भेदस्यापिव्यावहारिकत्वात् । अन्यथातुच्छांतरनिष्ठो

यस्तुच्छभेदःप्रतीयते तत्प्रतियोगित्वेनतुच्छेव्यभिचारापत्तेः । अविद्यावृत्तिरूपस्यसाक्षिसिद्धस्यरूप्यस्यस्वप्रतियोगिकभेदवत्त्वे नज्ञानमसंभवि । येनतादृशानिर्वचनीयभेदप्रतियोगित्वमादायरूप्येहेतुसत्त्वंस्यादिति ॥ स्वानुगतेति ॥ स्वान्प्रत्यनुगतंप्रतिभासस्वरूपंयद्वस्तुतत्रकल्पिताइत्यर्थः । अत्रप्रतिभासेत्येतद्धर्मिज्ञानरूपभ्रमकारणस्यसत्वाद्भ्रमोपपत्तिरित्येवमर्थं । नतुसाध्यांसर्गतं । अतएवतदनंतर्भावेणैवयथासर्पेत्याद्युदाहरणवाक्यं । अनुगतेत्येतदप्यननुगतस्यानुगतेध्यासोयुक्तइतिप्रतिपादयितुं ॥ यथासर्पमालादिकमिति ॥ विभक्तमितिशेषः । अतोनोदाहरणेसाधनानुक्तिः ॥ सदर्थेचेति ॥ एतच्चोपनयवाक्यं । तत्रविभक्तत्वस्यहेतोरनुगतरूपावधिसापेक्षत्वादनुगतस्यसदर्थस्यब्रह्मणोनिर्देशइतिनाधिक्यंदोषः । उपनयांतैश्चतुर्भिरवयवैरस्तुमितिहेतुज्ञाननिष्पत्तेर्निगमनमनावश्यकमितिपक्षमाश्रित्यनिगमनानुक्तिरतोनन्यूनतापीत्यर्थः ॥ निरस्तत्वादिति ॥ आद्यस्वव्रस्तुपरिच्छिन्नत्वरूपहेतुनिरासेन द्वितीयतृतीययोःकालपरिच्छिन्नत्वदेशपरिच्छिन्नत्वहेतुनिरासेनेत्यर्थः ॥ सुखदुःखादीति ॥ सुखादेःसर्वदाप्रकाशमानत्वादित्यर्थः ॥ युक्तोहीति ॥ तथाचकादाचित्कप्रकाशरूपकार्येणप्रकाशसामग्र्याःकादाचित्कत्वमेवसिद्ध्यति नतुप्रकाशमानस्याप्यसत्यत्वं बीजाभावादित्यर्थः । अननुगतान्घटादीन्प्रतिचलनादीनामनात्मत्वांतानामनुगमंखपुष्पनृशृंगादीन्प्रत्यसतोऽनुगमं आत्मानंप्रतिसदर्थस्यानुगमंप्रतीत्यादर्शयति ॥ अस्तिहीति ॥ एकस्याप्यनेकेष्वारोपोदृष्टइत्येकस्यापिब्रह्मणोऽनेकेषुवियदादिष्वारोपःस्यादित्याह ॥ दृश्यतइति ॥ एतेनेति ॥ घटश्चलतिपटश्चलतिघटोरूपीपटोरू

पीत्यादिचलनरूपाद्यनुविद्धतयाप्रतीयमानस्यापिघटपटादेश्चलनादिष्वारोपादर्शनेनेत्यर्थः ॥ [८१८] कल्पितमिति ॥ स्वाभाववति प्रतीयतइत्यर्थः ॥ [८१९] तदनुविद्धत्वेनेति ॥ सूत्रेस्यूतानांनानामणीनांसूत्रानुविद्धतयायथाप्रतीतिस्तथाघटःसन्पटःसन्नितिसदर्थानुविद्धतयाप्रतीयमानत्वादित्यर्थः । दूरात्तरवोपिनिरंतरावनाकारानुविद्धाःप्रतिभासंते । नचतेतत्रकल्पिताइतिप्रत्येकमित्युक्तमितिप्रमाणमालायां । वयंतुसद्ब्रह्मेतिसदनुविद्धत्वेनप्रतीयमानेब्रह्मणिव्यभिचारवारणायप्रत्येकमिति समासवृत्त्यंतर्गतवीप्सावलेनानेकेषांतदनुविद्धतयाप्रतीयमानत्वंहेत्वर्थोलभ्यते । सद्ब्रह्मणोश्चनानेकत्वं । नचैवममेकत्वमात्रस्यैवकल्पितत्वव्याप्यतयाशेषवैय्यर्थ्यमितिवाच्यं प्रतीतिविशेषविषयत्वस्यहेतुत्वेनतत्रवैय्यर्थ्यशंकाभावात् । अतएवविज्ञानमानंदंब्रह्मेतिब्रह्मानुविद्धत्वेनप्रतीयमानानांविज्ञानादीनांनब्रह्मणिकल्पितत्वमितिव्यभिचारोनिरस्तः । विज्ञानादीनांब्रह्माभिन्नत्वेननिरुक्तहेतोस्तत्रासत्त्वात् । सद्वासद्रूपब्रह्माभिन्नत्वमेवसद्रूपेकल्पितत्वमितिनकोपिदोषइतिब्रूमः ॥ [८२०] प्रत्येकंचंद्रानुविद्धेति ॥ जलतरंगस्थचंद्रस्यगगनस्थितचंद्रानुवेधोनामतस्मिन्दृश्यमानेसतिदृश्यमानत्वमित्यादिबोध्यं । एतेनेत्युतिदिष्टदोषेसत्येवदोषांतरमाह ॥ [८२१] खंडोगौरितिति ॥ तथाचोक्तहेतोःस्वानुगतप्रतिभासेगोत्वादौव्यक्तीनामकल्पितत्वात्खंडादौव्यभिचारइत्यर्थः । उक्तहेतोःस्वरूपासिद्धिमप्याह ॥ [८२२] किंचेति ॥ रूपादिहीनमितिप्रत्येकंहेतुत्रयं । चाक्षुषत्वादिप्रयोजकहीनस्येत्याद्यहेत्वर्थः । तेनरूपरूपत्वरूपाभावादिषुनव्यभिचारः । आवृतस्यापिमेघादिनासूर्यस्यावरणापगमदशायांचाक्षुषत्वेनव्यभिचारोमाभूदितिद्वितीयहेता

वासंसारमितिविशेषणं । नचात्रदृष्टांतासिद्धिः । तुषाद्यावृतविनष्टबीजादेरेवदृष्टांतस्यसुलभत्वात् । व्यतिरेकव्याप्तौवाघटादिर्दृष्टांतः ॥ किंत्विति ॥ तथाचसन्घटइत्यत्रब्रह्मभिन्नस्यघटादिनिष्ठस्यसत्त्वस्यानित्यत्वघटत्वादिनासमानस्यप्रतिभासनान्नब्रह्मरूपसदर्थानुवेधेनघटादिप्रतिभासइतिहेतोरसिद्धिरित्यर्थः । रूपादिराहित्याद्युक्तहेतुत्रययुक्तस्यापिब्रह्मणश्चाक्षुषज्ञानेभानमस्तु । तथाव्यंजकविशेषसमवधानात् । चंद्रसंनिधौराहोरिवेत्याशंक्यनिराकरोति ॥ नचेति ॥ स्वरूपयोग्यस्यसहकारिसमवधानेफलोपधानं नतुस्वरूपायोग्यस्यसहकारिशतेनापि । योग्यताचतादृशचाक्षुषत्वरूपविशेषवत्त्वमेवेतितद्रहितंब्रह्मनचाक्षुषज्ञानयोग्यं । अतोनसहकारिसमवधानेपिचाक्षुषज्ञानेभासतइत्यभिप्रेत्ययोग्यतानादरणेदोषमाह ॥ शब्दाद्यवच्छिन्नस्येति ॥ राहोस्तुयोग्यतास्तीत्याह ॥ नीलस्येति ॥ अत्रवदंति "सि०गोत्वादिसामान्यानध्यस्तेखंडादौनताव़द्व्यभिचारः । सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात् । गोत्वाद्यभ्युपगमेपिगोत्वादिव्यंजकतावच्छेदकसामान्यानभ्युपगमात् । व्यक्तिविशेषाणामेवाननुगतानांसास्नादिमत्त्वाद्युपाध्यनुगतानांवातद्व्यंजकत्ववद्व्यक्तिविशेषविशिष्टत्वेनसत्सामान्यस्यैवतद्व्यवहारजनकत्वोपपत्तेः । यदपिचोक्तमासंसारमज्ञानावृतमित्यादि । तदपिन । यतःसदात्मनानब्रह्मणोमूलाज्ञानेनावृतत्वं किंतुघटाद्यवच्छिन्नशक्त्यज्ञानेनैव । तथाचचक्षुरादिजन्यवृत्त्यातदज्ञानेनिवृत्तेतदावरणभंगेसतिसन्घटइत्यत्रब्रह्मणःस्फुरणेवाधकाभावात् । नचरूपादिहीनतयाचाक्षुषत्वाद्यनुपपत्तिर्बाधिकेतिवाच्यं । प्रतिनियतेंद्रियग्राह्येष्वेवरूपाद्यपेक्षानियमात् । सर्वें

॥ ५१ ॥

द्रियग्राह्यंतुसद्रूपंब्रह्म । नातोरूपादिहीनत्वेपिचाक्षुषत्वाद्यनुपपत्तिः । सत्तायाःपरैरपिसर्वेंद्रियग्राह्यत्वाभ्युपगमात् । तदुक्तं वार्तिककृद्भिः "अतोनुभवएवैकोविषयोज्ञानलक्षणः । अक्षादीनांस्वतःसिद्धोयत्रतेषांप्रमाणते" ति । कालस्यचरूपादिहीनस्य सर्वेंद्रियग्राह्यत्वंमीमांसकादिभिरभ्युपगतं । नचशब्दावच्छिन्नाकाशस्यापिश्रावणत्वापत्तिरितिवाच्यं । स्वभावतोयोग्यस्यहि केनचिन्निमित्तेनप्रतिरुद्धयोग्यताकस्यावच्छेदकादिनायोग्यतासंपाद्यते । यथादूरस्थत्वदोषेणप्रतिरुद्धयोग्यताकस्यराहोश्चंद्रसं बंधेन । एवंचावरणेनप्रतिरुद्धयोग्यताकंब्रह्मघटाद्यवच्छेदेनयोग्यंभवति । नभस्तुस्वभावायोग्यमेव नप्रतिरुद्धयोग्यताकं । येनशब्दावच्छेदेनयोग्यंभवेत् । यद्वाद्रव्यग्रहेचक्षुषोरूपापेक्षा नत्वन्यग्रहे । ब्रह्मतुनद्रव्यं । अस्थूलमनण्वह्रस्वमदीर्घमिति श्रुत्याचतुर्विधपरिमाणनिषेधेनद्रव्यत्वप्रतिषेधात् । अतोनानुपपत्तिः । अस्तुवाद्रव्यं । तथाप्यध्यस्यद्रव्यत्ववतिगुणादौरूपा नपेक्षचाक्षुषत्वदर्शनेनधर्म्यनूनसत्ताकद्रव्यत्ववत्येवचक्षूरूपमपेक्षते । ब्रह्मणिचद्रव्यत्वंधर्म्यपेक्षन्यूनसत्ताकमेवेतिनतद्ग्रहेरूपा द्यपेक्षे" ति । अत्रब्रूमः । खंडोगौर्मुंडोगौरित्यनुगतव्यवहारस्यैवबाधकाभावेसतिगोत्वसामान्येप्रमाणस्यसत्त्वेनतदनभ्युपगम स्यनिर्बीजत्वात् । नचव्यक्तिविशेषविशिष्टत्वेनसत्सामान्यस्यैवतद्व्यवहारजनकत्वमितिवाच्यं । व्यक्तिविशेषाणांगोत्वादिपरि चितानांसत्सामान्यविशेषणत्वेघट्टकुटीप्रभातवृत्तांतः । तदपरिचितत्वेऽतिप्रसंगः । यच्चोक्तंसदात्मनानब्रह्मणोमूलाज्ञानेनावृ तत्वमिति । तदपिन । तवमतेसदात्मनआनंदात्मनोखंडरसत्वेनसदात्मनआवरणापगमेआनंदात्मनोप्यावरणापगमस्यावश्य कतयासत्प्रकाशवदानंदप्रकाशस्याप्यावश्यकत्वात् । नचसदाकारानंदाकारयोःपरमतेविशेषोस्ति । अखंडत्वभंगापातात् । यच्चो


॥ ५

त्तंप्रतिनियतेंद्रियग्राह्येष्वेवरूपाद्यपेक्षानियमः । ब्रह्मतुसर्वेंद्रियग्राह्यमिति । तदपिन । अत्यंतमव्यक्तस्वभावस्यब्रह्मणश्चक्षु रादिसर्वेंद्रियग्राह्यत्वेमानाभावात् । प्रत्युत "नावेदविन्मनुतेतंबृहंतं योवेदनिहितंगुहायां गुहाप्रविष्टौपरमेपरार्धे गुहाहितंगुह्यं गूळ्हमप्सु एकोदेवःसर्वभूतेषुगूढ" इत्यादिश्रुतिभिरिंद्रियाविषयत्वस्यैवासिद्धत्वात् । "हृदयंब्रह्मेतिशार्कराक्ष्याउपासत" इत्थं तरैयेसूक्ष्मार्थदर्शिभिरेवब्रह्मणोज्ञेयत्वस्यभवदीयैर्भाषितत्वाच्च । अतएव "विमेकर्णापतयतोविचक्षु" रितिकर्णादिविदूरत्वंब्र ह्मणोऽभिहितंज्योतिःसूत्रे । सत्ताद्दृष्टांतोप्ययुक्तः । तस्याइंद्रिययोग्यव्यक्तिवृत्तिजातित्वेनव्यक्तिग्राहकसामग्रीग्राह्यत्वात् । ब्रह्मंतुनद्रव्यादिवृत्तिजात्यादि । वार्तिकश्लोकोप्ययुक्तः । नहिब्रह्मण्यक्षादीनांप्रामाण्यंस्वतःसंभवति । तंत्वौपनिषदंपुरुषंपृ च्छामीत्युपनिषदेकगम्यत्वाद्ब्रह्मणः । "अथपराययातदक्षरमधिगम्यते" इतिब्रह्मावबोधकत्वेनोपनिषदांपरविद्यात्वस्यलक्षण त्वेनोक्तेश्च । अन्यथाप्रत्यक्षादिषुपरविद्यालक्षणस्यातिव्याप्त्यापत्तेः । तस्मान्नब्रह्मणःसर्वेंद्रियग्राह्यता । कालस्यापिविनोपनयं नसर्वेंद्रियग्राह्यता । वस्तुतस्तुकालःसाक्षिग्राह्यः । यच्चोक्तं अयोग्यआकाशइतिनतस्यशब्दावच्छिन्नस्यप्रत्यक्षत्वं ब्रह्मतुयोग्य स्थितिघटावच्छिन्नस्यब्रह्मणःप्रत्यक्षत्वमिति । तस्ययोग्यतावच्छेदकरूपादिमत्त्वस्योभयत्रानवधारणेपिब्रह्मणोयोग्यत्वं यथाव धृतंनाकाशस्येतिसेयंयोगसिद्धिरकारणपक्षपाता । यच्चोक्तं द्रव्यग्रहेचक्षुषोरूपापेक्षा । ब्रह्मतुनद्रव्यं । अस्थूलश्रुत्याघटादिसा धारणस्थौल्यादिनिषेधोनतुपरिमाणमात्रमितिनिषेधः । "महांतंविभुमात्मानं सवाएषमहानजआत्मा अणोरणीयान्महतोम हीयान् ततोज्यायांश्चपुरुषः एषमआत्मांतर्हृदयेज्यायान् एभ्यस्त्रिभ्योलोकेभ्यः सर्वमावृत्यतिष्ठति 'सर्वंसमाप्नोषिततोसि

सर्वः आकाशवत्सर्वगतश्चनित्यः सर्वत्रप्रसिद्धोपदेशात्" इत्यादिश्रुतिस्मृतिसूत्रैः ब्रह्मपरिमाणवत् परिमाणवदुपादानत्वादि त्यादियुक्त्याचब्रह्मणिपरिमाणसिद्धेः । अन्यथाअस्थूलादिवाक्यशेषेनतदश्चातिकश्चनेतिसर्वाव्यापनीयत्वोक्त्यालब्धेनमहत्प रिमाणवत्त्वेनविरोधात् । अद्रव्यस्यांबरादिधारकत्वानुपपत्तेश्च । नचद्रव्यत्वेज्ञानानंदाद्यात्मताविरोधः । ज्ञानादेरपिद्रव्यत्वे बाधकाभावात् । यच्चोक्तंधर्म्यन्यूनसत्ताकद्रव्यत्ववत्येवचक्षूरूपमपेक्षते । ब्रह्मणिचद्रव्यत्वंधर्म्यपेक्षयान्यूनसत्ताकमेवेति । तन्न । कल्पितत्वासिद्धौजगतोब्रह्मणिद्रव्यत्वस्यधर्म्यनूनसत्ताकत्वासिद्धेरिति । तस्मांत्साधूक्तंरूपादिहीनमासंसारमज्ञानावृतं ब्रह्मचाक्षुषादिज्ञानेननभातीति ॥ छ ॥ छ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यांपरिच्छेदच्छिदेक्ष्यतां ॥ इतिपरिच्छिन्नत्वभंगः ॥ ५ ॥ छ ॥ छ ॥ कार्यस्यकारणाभेदेनेति ॥ अत्रवदंति "सि०अभेदेकार्यकारणभावव्याहत्याक थंचिदपिभेदोऽवश्यमभ्युपेयः" । नच "तदनन्यत्वमारंभणशब्दादिभ्य" इत्यधिकरणविरोधः । उपादानव्यतिरेकेणोपादेयंना स्तीत्यस्यैवतदर्थत्वा" दिति । तन्न । कथंचिद्भेदोनामयदिमिथ्याभेदस्तदाऽभेदएवसत्यः । अधिष्ठानज्ञानाबाध्यात्यंताभावप्र तियोगित्वंहिमिथ्यात्वं अधिष्ठानज्ञानाबाध्यात्यंताभावप्रतियोगित्वस्यसत्यत्वेपिसंभवात् । भेदात्यंताभावश्चाभेदइतिभेदस्य मिथ्यात्वेकथंनाभेदःसत्यःस्यात् । व्यवहारतोपिकार्यकारणयोरभेदाच्च ॥ तर्हितत्तएवेति ॥ प्रत्यक्षबाधादेवेत्यर्थः । उक्तम प्यधिकंविवक्षयाह ॥ अपिचेति ॥ प्रामाणिकः पारमार्थिकइत्यर्थः । यथाश्रुतेत्वंतःकरणवृत्तिप्रतिबिंबितचैतन्यरूपप्रमाविष यत्वेनप्रामाणिकस्यापिघटादेःपरैर्बाध्यत्वांगीकारादद्वैतहान्यापादनासंगतेः । अप्रामाणिकः प्रातिभासिकइत्यर्थः ॥ एतेनेति ॥

प्रामाणिकत्वाद्यविशेषितात्यंताभावमात्रंसाध्यनिविष्टमित्यपिसिद्धसाधनादिदोषादेवनिरस्तमित्यर्थः ॥ अत्यंताभावोऽर्थांवहा[८३।६]रिकइतीति ॥ जगदत्यंताभावस्यप्रामाणिकत्वेपिबाध्यतयाजगत्तात्विकसत्ताऽविरोधित्वेनार्थांतरतापत्तेरित्यादिनाद्वितीयमिथ्यात्वलक्षणदूषणेनिरस्तमित्यर्थः । अत्यंताभावस्यप्रामाणिकत्वपक्षमाश्रित्यशंकते ॥ [८४।१]अभावरूपाइति ॥ अभावस्यद्वितीयस्यांगींकारेद्वितीयोभावोप्यवर्जनीयइत्याह ॥ [८४।१]अभावत्वादेरिति ॥ अभावस्यतात्विकत्वांगीकारःपरमतेविरुद्धइत्याह ॥ [८४।२]अभावरूपेति ॥ साधिकरणस्यतात्विकस्यब्रह्मारोपितजगदभावस्यब्रह्मैवाधिकरणमित्यद्वितीयशब्दप्रवृत्तिनिमित्तस्यद्वितीयाभावस्यब्रह्मणितत्वतःसंभवेनाद्वितीयपदवाच्यताब्रह्मणिस्यादित्यर्थः । तात्विकाभावेप्रमाणाभावश्चेत्याह ॥ [८४।३]अखंडेति ॥ [८४।४]श्रौतेति ॥ "सदेवसोम्येदमग्रआसीदेकमेवाद्वितीय" मित्यादौतात्विकंद्वितीयाभावंबोधयताऽद्वितीयपदेनपुनरभावनिषेधेस्वविरोधोयथातथाद्वितीयस्यभावस्यापिनिषेधेअग्रआसीदित्यादिकालसत्त्वप्रतिपादकेनस्ववाक्यांतर्गतपदेनविरोधाविशेषात्स्वतंत्रभावनिषेधपरत्वेनापिसंकोचआवश्यकइत्यर्थः ॥ [८५।१]भावस्यापीति ॥ अभावद्वैतांगीकारेभावोद्वितीयोंगीकृतःस्यादित्यर्थः । नन्वभावस्याभावाभावात्तस्यतात्विकत्वमित्यतआह ॥ [८५।१]अभेदस्येति ॥ भेदनिष्ठान्योन्याभावप्रतियोगित्वेनेत्यर्थः । अन्यथातवभेददूषणानुपपत्तेरितिभावः ॥ [८५।६]प्रतियोगिघटितत्वेनेति ॥ प्रतियोगिनिरूप्यत्वेनेत्यर्थः ॥ [८६।१]निरस्तत्वादिति ॥ नस्वरूपेण । अनंगीकारात् । नपारमार्थिकत्वेन । ब्रह्मवत्स्वरूपसत्त्वेनाप्युपपत्त्यार्थांतरादित्यर्थः । एतच्चमिथ्यात्वनिरुक्तिदूषणप्रस्तावेउक्तमप्यनुमानदूषणावसरेपुनरुच्यते । अ

तोनपौनरुक्त्यं ॥ [६६।२] अन्यासमवेतस्येति ॥ एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वव्यापकैतत्तंत्वसमवेतत्वाभावरूपैतत्तंतुसमवे
तत्वंविनाऽनुपपन्नमितिसाध्यव्यापकविरुद्धइत्यर्थः । अत्रवदंति "सि० एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वेप्येतत्तंतुसमवेतत्व
स्यसत्त्वेनांशित्वस्यसाध्येनाविरोधात् । एतन्निष्ठात्यंताभावाप्रतियोगित्वंहिएतत्समवेतत्वेप्रयोजकंनभवति । परमतेकेवलान्व
यिधर्ममात्रस्यैतत्समवेतत्वापत्तेः । किंत्वेतन्निष्ठप्रागभावप्रतियोगित्वादिकं । तच्चैतन्निष्ठात्यंताभावप्रतियोगित्वेप्यविरुद्ध" मि
ति । तन्न । तदत्यंताभाववतितत्प्रागभावस्यापिविरुद्धत्वेनैतन्निष्ठप्रागभावप्रतियोगित्वस्याप्येतत्पटेऽसत्त्वात् । अन्यथारूपा
त्यंताभाववतिवाय्वादौरूपप्रागभावस्यापिप्रसंगेनव्यावहारिक्यपिव्यवस्थानस्यात् । यच्चोक्तंकेवलान्वयीत्यादि तदपिन ।
नह्येतत्समवेतत्वंनामैतन्नित्यसंबंधवत्त्वं । किंतुयावदेतत्स्वसत्वमेतत्संबंधवत्वमात्रं । तच्चकेवलान्वयिनोप्येतत्तंतुनासहविद्य
तएव ॥ [६६।३] कस्यचित्पटस्येति ॥ अत्राहुः "सि०तत्समवेतस्यतन्निष्ठात्यंताभावप्रतियोगित्वमंगीकुर्वाणस्यतत्संयोगिनस्तन्निष्ठा
त्यंताभावप्रतियोगित्वांगीकारेणपक्षसमत्वान्नव्यभिचार" इति । तन्न । प्रतियोगिकालेतदत्यंताभावसंसर्गस्यविरुद्धत्वेनव्य
भिचारस्यसत्त्वात् । ननुसमवायसंबंधेनैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वंसाध्यं । तच्चैतत्तंतुसंयोगिनिपटेप्यस्तीतिनव्यभिचा
रइत्यतआह ॥ [६६।३] समवायवृत्त्येति ॥ तथासतिसमवायानभ्युपगमपक्षेनिरुक्तसाध्यस्यैतत्पटेपिसत्त्वेनसिद्धसाधनमर्थांतरंवास्या
दित्यर्थः ॥ [६६।४] इहतंतुष्विति ॥ अत्राहुः । "सि०इहतंतुषुपटइतिप्रत्यक्षंभ्रमसाधारणतयाचंद्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशं
कास्कंदितत्वेनाबाधक" मिति । तन्न । फलपर्यंतार्थक्रियालक्षणपरीक्षापरीक्षितप्रत्यक्षबाधस्योक्तत्वात् । चंद्रप्रादेशिकत्वप्र

त्यक्षेचाप्रामाण्यशंकैव । ननुपरीक्षिततेतिवैषम्यं । वक्ष्यतेचैतत्प्रत्यक्षबाधे ॥ [८६।६] नचेति ॥ साध्यरूपविशेषणप्रसिद्धिर्नेत्यर्थः । एतत्तंतुगतरूपादेःपक्षत्वाभिप्रायेणेदं ॥ [८६।७] संसर्गाभावेति ॥ अभिधेयत्वादिव्याप्येप्रमेयत्वादौव्यभिचारवारणायसंसर्गाभावप्रतियोगित्वेति ०। प्रमेयत्वादेस्तुघटादौसंसर्गाभावप्रतियोगित्वसामानाधिकरण्येपिसंसर्गाभावप्रतियोगित्वानधिकरणेकेवलान्वयिधर्मेपिसत्त्वेनसंसर्गाभावप्रतियोगित्वाव्याप्यत्वेनाव्यभिचारात् । संसर्गाभावप्रतियोगित्वादिस्युक्तावसिद्धिः । पक्षीकृतेएतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वेसंसर्गाभावप्रतियोगित्वस्यहेतोराधाराधेयभावेनानिश्चयात् । प्रागभावप्रध्वंसाभावप्रतियोगित्वमादायपक्षेसंसर्गाभावप्रतियोगित्वंनसंभवति । अत्यंताभावप्रतियोगित्वस्यचसाध्यत्वात् । तदादायापिपक्षेनहेतोर्निश्चयः । पक्षीकृतोपाधेर्हेतूकृतोपाधेश्चैकस्मिन्नुपधेयेवृत्तावपिगंधवत्त्वरूपवत्त्ववत्तयोर्भेदेनाभेदसंबंधेनापिसंसर्गाभावप्रतियोगित्वस्यपक्षावृतेः । व्याप्यत्वोक्तौतुनासिद्धिः । पक्षीकृतेपिसंसर्गाभावप्रतियोगित्वव्याप्यत्वसत्त्वात् । अन्योन्याभावप्रतियोगित्वमादायाभावत्वप्रतियोगित्वव्याप्येप्रमेयत्वादौव्यभिचारवारणायसंसर्गेति । ननुसाध्यप्रसिद्ध्युपपादकानुमानेनैवसत्प्रतिपक्षसिद्धेर्व्यर्थंपूर्वानुमानमित्यतआह ॥ [८६।८] सामान्यतइति ॥ विशिष्यसत्प्रतिपक्षार्थंतदनुमानमित्यर्थः । अत्रवदंति “सि०नसत्प्रतिपक्षःसंभवति यत्रैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वं तत्रैतत्तंत्वारब्धत्वाभावइतिव्यतिरेकव्याप्तावेतन्निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वेनप्रतिरोधस्यहीनबलत्वात् । एतत्तंत्वारब्धत्वाभावव्यापकस्यैतत्तंतुनिष्ठप्रागभावाप्रतियोगित्वस्यपक्षावृत्तेःपक्षवृत्तितयासंदिह्यमानैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वाव्यापकत्वात् । दृश्यत्वाद्यनुपपत्तिरूपप्रतिकूलतर्कप्रतिहतेर्वक्ष्यमाणत्वाच्चे” ति ।

अत्रब्रूमः ॥ एवंहिपृथिवीइतरभिन्नापृथिवीत्वादित्यत्रपाकजरूपाभावादिकमुपाधिःस्यात् । पृथिवीत्वाभावव्यापकस्यपाकजरूपाभावस्यपक्षावृत्तेःपक्षवृत्तितयासंदिह्यमानेतदभेदाव्यापकत्वादितितत्रापिशक्यंवक्तुं । तस्मान्नैतन्निष्ठप्रागभावाप्रतियोगित्वमुपाधिः । संयोगादिनादृश्यत्वोपपत्तेर्वक्ष्यमाणत्वान्नप्रतिकूलतर्कपराहतिरितिसुस्थःसत्प्रतिपक्षः ॥ उपाधिरेवेति ॥ यत्रैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वं तत्रैतत्तंत्वनारब्धत्वं यथाकाशादौ । यत्रैतत्तंत्वारब्धत्वं तत्रैतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वाभावः। यथैतत्तंत्वारब्धगुणादावित्यन्वयसहचारग्रहादिभिःसाध्योपाध्योर्व्याप्यव्यापकभावनिश्चयादुक्तसाध्यंप्रत्युक्तोपाधिरेवप्रयोजकः । नतुहेतुः । तस्यसाध्यवतिब्रह्मण्यविद्यमानस्यसाध्याव्यापकत्वेनसाध्यंप्रत्यप्रयोजकत्वादित्यर्थः । ननुधूमादिरप्येवमेवाप्रयोजकःस्यादितिचेत्सत्यं । तत्रकार्यकारणभावतर्केणव्याप्तिग्रहात् । प्रकृतेतथातर्काभावादितिवक्ष्यते । ननुनासावुपाधिः । तथाहि । एतत्पटस्यैवैतत्तंत्वारब्धरूपादेरप्येतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वंपरस्यसिषाधयिषितं । अंशिनः स्वांशगात्यंताभावप्रतियोगिनः ।अंशित्वादितरांशिवदित्येषैवगुणादिष्विति तत्वप्रदीपोक्तेः । तथाचोपाधिव्यतिरेकवत्येतत्तंत्वारब्धरूपादौसाध्यव्यतिरेकानिश्चयेनोक्तोपाधेःसाध्याभावाविनाभाव्यभावप्रतियोगित्वाभावादित्यतआह ॥ अनुकूलेति ॥ यद्वाप्रयोजकोधर्मउपाधिः । प्रयोजकत्वंचनन्यूनाधिकवृत्तेः । तस्मिन्सत्यभवतस्तेनविनापिभवतस्तदप्रयोजकत्वात् । एतत्तंतुनिष्ठात्यंताभावप्रतियोगित्वरूपसाध्यविरहिणिप्रमेयत्वादौविद्यमानस्यैतत्तंत्वनारब्धत्वस्योपाधेस्तेनविनापिभवतउक्तसाध्यंप्रत्यप्रयोजकत्वान्नोपाधित्वमतआह अनुकूलेति ॥ वाद्युपन्यस्तसाध्यनिरूपितव्याप्तिग्राहककार्यकारणभावाद्यनुकूलतर्काभावेव्यतिरेकहीनंस्यापिसा

ध्यव्यतिरेकव्यापकव्यतिरेकाप्रतियोगिनःसाध्यव्याप्यस्याप्युपाधित्वमार्द्रेंधनादिवदक्षतमेवेत्यर्थः । वादिहेतावनुकूलतर्काभा वमेवाह ॥ [८७।४] नहीति ॥ यत्त्वेतत्तंत्वनारब्धत्वंनोपाधिः । उपाधिव्यतिरेकेणसाध्यव्यतिरेकेसाध्यमानेव्यतिरेकव्याप्तावेतंत्तंतु निष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वादिति । तन्न । व्यतिरेक्युच्छेदापत्तेर्नैवंविधस्योपाधित्वमित्युक्तत्वात् ॥ [८७।५] आभाससा म्यमिति ॥ अप्रयोजकत्वमित्यर्थः । आभाससाम्यस्यादोषत्वात् ॥ [८८।१] यत्त्विति ॥ स्वप्नोदृष्टांतः ॥ [८८।२] सहोपलंभेति ॥ सहोप लंभः सहोपलंभनियमः । एतच्चप्रपंचितंबौद्धाधिकारे "ग्राह्यग्राहकयोरभेदेसाध्येसहोपलंभनियमोहेतुत्वेनोपादीयत" इति । एतच्चव्याख्यातंशिरोमणिना "सहोपलंभनियमोनियमेनैकवित्तिवेद्यत्वं तदविषयकज्ञानाविषयत्वंवा । तेषांमतेज्ञानस्यस्वप्रका शत्वात् । ज्ञानज्ञेययोरभेदेचज्ञानज्ञेयग्राहकाभ्यांज्ञेयज्ञानयोरपिग्रहणान्नासिद्धि" रिति ॥ [८८।४] उपलब्धीति ॥ तथाचासिद्धिरि त्यर्थः । यत्तुज्ञानव्यतिरेकेणानुपलभ्यमानत्वंनामचिदाभासेसत्येवोपलभ्यमानत्वंहेतुरिति । तन्न । घटादौवृत्त्यतिरिक्तचिदा भासंरूपज्ञानाभावस्यरूपादिरहितात्मनश्चाक्षुषादिज्ञानेप्रतिभासासंभवस्यचोक्तत्वेनचिदाभासेसत्येवोपलब्ध्याहेतोरसिद्धेः ॥ [८८।५] चित्रेति ॥ चित्रपटविशेषोऽन्यथाप्रतीयतेनिम्नमपिनिम्नतरापेक्षयाउन्नतत्वेन उन्नतमप्युन्नततरापेक्षयानिम्नत्वेनेत्यन्यथाप्रती यतइत्यर्थः ॥ [८८।६] इदानीमेवेति ॥ ब्रह्मसंपरादाद्योन्यत्रात्मनोब्रह्मवेदेतिविप्रक्षत्रप्रभृतीनामात्मव्यतिरेकविदांनिंदित्वाइदंसर्वंयदय मात्मेत्यादिश्रुत्याशेषानात्मनामात्मतयोक्तत्वादित्यर्थः ॥ [८८।७] घटादिकमिति ॥ स्फुरणस्यभारूपतयाब्रह्मत्वेनतत्संलग्नतयाघटा

देःप्रतीतेरित्यर्थः ॥ व्यर्थविशेषणतेति ॥ धीकालएवेत्यस्येत्यर्थः ॥ आद्यइति ॥ कार्यकारणयोरभेदेनकार्यस्यकारणाना श्रितत्वादित्यर्थः ॥ अवयव्यादेरिति ॥ अवयविनोऽवयववृत्तित्वानधिकरणत्वाभावादित्यर्थः ॥ बाधितत्वादिति ॥ पक्ष त्वावच्छेदकावच्छिन्नेपक्षेसाध्यानुमितेरसंभवादित्यर्थः ॥ अनात्मत्वस्येति ॥ जडत्वभंगइतिशेषः ॥ तृतीयइति ॥ केवला न्वय्यत्यंताभावप्रतियोगित्वेसाध्येधर्मावच्छेदेनपारमार्थिकत्वेनार्थांतरत्वात् । ब्रह्मवत्स्वरूपसत्तयाप्युपपत्तेः ॥ नित्यद्रव्याणा मपीति ॥ इदानीमाकाशइतिप्रतीतेरबाधितायाःसत्त्वादित्यर्थः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरं गिण्यामंशादेर्भंगईक्ष्यतां ॥ अंशित्वादिहेतुभंगः ॥ ६ ॥ ७ ॥ ७ ॥ स्वबाधकाभिमतेति ॥ दिदर्शयिषितोपाधिकमधिक रणंस्वशब्दार्थः शुक्तिरूप्यादौसाध्यवतिशुक्तिरूप्यादिबाधकत्वेनाभिमतेननेदंरजतमितिज्ञानेनाबाध्योयोदोषःसादृश्यादिस्तत्प्र युक्तभानत्वस्यतथोक्तविधयास्वबाधकाभिमताबाध्यबाधकंनेदंरजतमितिज्ञानंप्रतिनिषेध्यत्वेनविषयत्वस्यसत्त्वात्सपक्षेरूप्यादा वुपाध्योःसाध्यव्यापकता । हेतुमतिपक्षेपररीत्याऽविद्यारूपदोषप्रयुक्तभानत्वस्य तथानेतिनेतीतिवेदांतवाक्यजन्यंबाधकज्ञानं प्रतिनिषेध्यत्वेनविषयत्वस्यचसत्त्वात्साधनव्याप्तिर्माभूदितिस्वबाधकाभिमताबाध्येतिप्रथमोपाधौदोषविशेषणं । द्वितीयोपा धौबाधकज्ञानविशेषणं । एवंचाविद्यारूपोदोषोवियदादिबाधकाभिमतयाचरमवृत्त्याबाध्यएवेतिस्वबाधकाभिमताबाध्यत्वरू पविशेषणाभावाद्विशिष्टरूपोपाधिर्नास्त्येव । ममतेतुविशेष्याभावाद्विशिष्टरूपोपाधिर्नास्तीतिभवतिपक्षेसाध्याव्यापकः । ए वंद्वितीयोपाधावपियोजनीयं । साधनाव्यापकत्वमाह ॥ पक्षादिति ॥ विपक्षाद्व्यावृत्तस्येतिपाठेअनेनसाध्याभाववदवृत्तित्व

रूपसाध्यव्याप्यत्वोक्तिः ॥ व्यतिरेकव्याप्तिमतइति ॥ साध्यव्यतिरेकनिरूपितव्याप्तिमद्व्यतिरेकप्रतियोगिनइत्यर्थः । अनेनसाध्याभावव्याप्याभावप्रतियोगित्वरूपसाध्यव्यापकत्वोक्तिः । एवंचसमव्याप्तिर्लभ्यतइत्यभिसंधायोक्तंसमव्याप्तिमतइति ॥ यद्वासमव्याप्तिमत्त्वाद्व्यतिरेकव्याप्तिमतइत्यर्थः । वस्तुतस्तुपक्षाद्व्यावृत्तस्येत्येवयुक्तःपाठः । अतएवपक्षेतरत्वशंकायांतांनिराकरोति ॥ नचेति ॥ पक्षमात्रव्यावर्तकविशेषणवत्त्वं तादृशविशेषणघटितत्वं । नतुतादृशविशेषणंप्रतिविशेष्यत्वं । तथाहि । उपाधित्वेनप्रेक्ष्यमाणेविशिष्टेप्रविष्टस्यान्यत्वरूपस्यपर्वततदितरसाधारणस्यविशेष्यस्ययद्विशेषणंपर्वतावयववृत्तीतितेनान्यत्वरूपंविशेष्यंपक्षमात्राद्व्यावर्त्यते । पर्वतावयववृत्त्यन्यत्वस्यपर्वतेऽसत्त्वात् । अतःपर्वतावयववृत्तीतिविशेषणंपक्षमात्रव्यावर्तकं । तथाविधविशेषणवानन्यत्वरूपोधर्मः । एवंवह्निसामग्रीयुक्तत्वस्यविशेष्यस्यपर्वततदितरसाधारणस्ययद्विशेषणमपर्वतीयेति । तेनवह्निसामग्रीयुक्तत्वंविशेष्यंपक्षमात्राद्व्यावर्त्यतइतिपर्वतावयववृत्त्यन्यत्वमपर्वतीयवह्निसामग्रीयुक्तत्वंचपक्षमात्रव्यावर्तकविशेषणवदित्यर्थः । यथाश्रुतेन्यविशिष्टोपाधिंप्रतिपक्षमात्रव्यावर्तकविशेषणाभावेनासंगतिःस्यात् । यद्यप्यत्रपर्वतावयववृत्त्यन्यत्वस्यपर्वतावयववृत्तिरूपादिव्यावर्तकत्वान्नपक्षमात्रव्यावर्तकत्वं । एवमपर्वतीयेत्यंस्यापिपर्वतीयवह्निसामग्रीयुक्तपर्वतीयवृक्षादिव्यावर्तकतयानपक्षमात्रव्यावर्तकत्वं । तथापिसाध्यव्यापकताग्राहकानुकूलतर्कादिराहित्याद्यथापर्वतावयववृत्त्यन्यत्वाद्वेर्नोपाधित्वं तथाप्रकृतयोरपिनोपाधित्वं । साध्यव्यापकताग्राहकतर्कादेरभावादितिशंकितुरभिप्रायः । अतएववक्ष्यमाणानुकूलतर्कैःसाध्यव्यापकत्वनिश्चयादित्यनुकूलतर्केणसाध्यव्यापकत्वनिश्चयोवक्ष्यतीत्याशयः । यद्यपिप्रकृतयोःस्वबाधकाभिमता

बाध्येत्याद्युपाध्योरनुपाधितायांपर्वतेतरत्वादिकमेवनिदर्शनीयं तथापिपर्वतेतरत्वादेरनुपाधितायानपक्षमात्रव्यावर्तकविशेषणव
त्त्वंप्रयोजकं किंतुपर्वतेतरत्वस्यपक्षमात्रवृत्तिव्यतिरेकप्रतियोगितयापर्वतेतरत्वव्यतिरेकेणसाध्याभावसाधनेअसाधारण्यात्पर्व
तेतरत्वस्यनोपाधित्वं । प्रकृतयोःस्वबाधकाभिमताबाध्येत्याद्युपाध्योस्तुनपक्षमात्रवृत्तिव्यतिरेकप्रतियोगित्वं विशिष्टोपाधेर्व्य
तिरेकस्यसाध्याभाववंतिब्रह्मण्यपिसत्त्वेनोपाधिव्यतिरेकेणमिथ्यात्वरूपसाध्याभावेसाध्यमानेब्रह्मणएवसपक्षत्वसंभवादितिय
दिकश्चिद्ब्रूयात्तदास्वव्यतिरेकेणसाध्यव्यतिरेकसाधनेपर्वतावयववृत्तिरूपादिनिष्ठव्यतिरेकप्रतियोगित्वेनलब्धोदाहरणस्यापिप
र्वतावयववृत्त्यन्यत्वादेर्यथानोपाधित्वंतथाप्रकृतयोरपीत्यभिसंधायपूर्वपक्षिणापर्वतावयववृत्त्यन्यत्वादिकंनिदर्शितमित्यवधात
व्यं ॥ पक्षेतरत्वमिति ॥ पक्षेतरत्वतुल्यत्वमित्यर्थः । तत्तुल्यत्वंचानुकूलतर्करहितत्वेन ॥ प्रकृतोपाध्योःपक्षेतरत्वतुल्यत्वंप
रिहर्तुमनुकूलतर्कैःसाध्यव्यापकतास्तीत्याह ॥ वह्निनेति ॥ अयमर्थः । यथेश्वरानुमानेजन्यत्वरूपसाधनविशेषितंशरीरजन्यत्वं
नोपाधिः वह्निनाधूमेसाध्येआर्द्रेंधनप्रभववह्निमत्त्वंसाधनविशेषितमप्युपाधिः एवंचसाधनविशेषितस्योपाधित्वानुपाधित्वयोः
साध्यव्यापकताग्राहकानुकूलतर्कसहसद्भावौबीजं तथापर्वतेतरत्वस्यपक्षमात्रव्यावर्तकविशेषणवतोनोपाधित्वंप्रकृतयोःस्वबा
धकाभिमताबाध्येत्युपाध्योःपक्षमात्रव्यावर्तकविशेषणवतोरप्युपाधित्वमित्यत्रसाध्यव्यापकताग्राहकानुकूलतर्कविरहाविरहौहे
तूइति । यद्वासाधनशून्यंसर्वंपक्षीकृत्यबाधाप्रतिसंधानदशायांवह्निनाधूमेसाध्ये आर्द्रेंधनप्रभववह्निमत्त्वंपक्षमात्रव्यावर्तकवि
शेषणवदपिसाध्यव्यापकताग्राहकानुकूलतर्कसद्भावाद्यथोपाधिस्तथाप्रकृतयोरप्युपाधित्वमित्यर्थः । यथाश्रुताभिप्रायेणाहं ॥

बाधितंइति ॥ बाधेनपक्षस्यैवविपक्षतयापक्षमात्रव्यावर्तकविशेषणवत्त्वमसिद्धमितिभावः । नचब्रह्मज्ञानमात्रबाध्येदेहात्मैक्ये मिथ्याभूतेसाध्याव्याप्तिः । तस्यब्रह्मज्ञानमात्रबाध्यत्वासिद्धेः । ममदेहइति देहाद्भेदस्यसर्वैरनुभूयमानत्वेनदेहात्मैक्याध्या सासंभवस्यवक्ष्यमाणत्वेनमिथ्याभूतदेहात्मैक्यासिद्धेः । ननुयद्व्यतिरेकस्यसाध्यव्यतिरेकसाधनत्वंतस्यैवसाध्यव्यापकत्वं । इतं रांशेऽनुकूलतर्काप्रसरात् । तथाचक्षित्यादिकंकर्तृजन्यंनभवति शरीराजन्यत्वादित्यत्रयथाशरीरविशेषणवैयर्थ्यान्नशरीरजन्य त्वंकर्तृजन्यत्वव्यापकंएवंवियदादिकं नमिथ्या । स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वव्यतिरेकादित्यत्रस्वबाधका भिमताबाध्यभागस्यैवैयर्थ्यात्स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वंनमिथ्यात्वव्यापकं दोषप्रयुक्तभानत्वंतुभवतिसाध्यव्या पकं । तच्चसाधनव्यापकमपीतिनोपाधिः । दृश्यत्वादिनैवमिथ्यात्ववत्तस्यापिसाधनात् । एवंद्वितीयोपाधावपिस्वबाधकंप्रती तिविशेषणंव्यतिरेकसाधनेव्यर्थं । विशेष्यभागस्तुसाध्यसाधनयोर्व्यापकइतिनोपाधिः । मैवंविशेष्यव्यतिरेकाद्विशिष्टव्यतिरे कस्यभिन्नत्वेनतत्रवैयर्थ्यासंभवात् । तथाहि । एकस्मिन्धर्मिणिव्याप्यतावच्छेदकत्वेनप्रसक्तयोर्द्वयोर्धर्मयोर्लघुनैवतत्रव्याप्ति र्गृह्यते नतुगुरुणा । यथानीलधूमेधूमत्वनीलधूमत्वयोर्मध्येधूमत्वेन । नचेहविशिष्टाभावनिष्ठांव्याप्तिंपरिच्छेत्तुंविशेष्याभावत्वं प्रसक्तं । विशिष्टाभावविशेष्याभावत्वस्यासत्त्वात् । किंतुविशिष्टाभावत्वमेव । एवंचविशिष्टोपाधेरस्त्येवसाध्याव्यापकता । नचेश्वरानुमानेप्युक्तविधयाशरीरजन्यत्वमुपाधिःस्यादितिवाच्यं । श्रुतिबलेनक्षित्यादिकर्तुरीश्वरस्यसिद्धौपक्षएवतस्यसाध्या व्यापकत्वादनुपाधित्वं । तस्माद्युक्तावुपाधी । ननुप्रथमोपाधौस्वबाधकाभिमताबाध्येतिविशेषणंसाध्येनसमव्याप्त्यर्थं । नतुंपं

क्षमात्रव्यावृत्त्यर्थं । अतस्तत्रशंकापरिहारावसंगतौ । तथाहि । सर्वप्रत्ययवेद्यत्वेनाविद्यारूपदोषजन्येघटादिगोचरेचरमवृत्ति
रूपेवाज्ञानेब्रह्मणोविषयत्वेनोपाधिमतितस्मिन्साध्यस्याभावेनव्यभिचारात् । तद्विशेषणेतुविशिष्टस्योपाधेर्ब्रह्मण्यप्यसत्त्वान्नत
त्रसाध्याव्याप्तिरितिचेत् स्वयंप्रकाशेतस्मिन्दोषप्रयुक्तभानाभावादितिपररीत्यास्वरीत्याचोपाधेरसाध्यव्याप्यत्वमस्त्येवेतिनतद
र्थंविशेषणं । किंतुपक्षमात्रव्यावृत्त्यर्थं । अतस्तत्रापिशंकापरिहारौयुक्तौ । पक्षमात्रव्यावर्तकविशेषणवत्त्वशंकायाअप्यविषयमु
पाधिमाह ॥ [११।६] यद्वेति ॥ ननुविपरीतप्रमाविषयत्वादेरुपाधेर्नसाधनवतःपक्षाद्व्यावृत्तिः । साध्यवतिपक्षेउपाधेरपिसाध्यमानत्वा
दित्याशंकांपरिहर्तुंयथेत्याद्युक्तं ॥ [११।४] युगपदिति ॥ तथाचान्योन्यस्यासाध्यमानत्वान्नान्योन्यसाधनेऽन्योन्यस्योपाधित्वमिति
भावः ॥ [११।४।१] अर्थांतरमिति ॥ यद्यप्युभयसाधनेप्येकस्योपाधित्वमवर्जनीयमेव । मित्रातनयत्वेनशाकपाकजत्वेसाध्येश्यामत्व
स्येवसंदिग्धसाधनाव्यापकत्वसंभवात् । तथापिदूषणांतरेतात्पर्यं । नन्वत्रबाधकप्रमांप्रतिनिषेध्यत्वेविषयत्वमेवोपाधिर्वक्तव्यः।
तस्यैवपूर्वोक्तविशिष्टोपाधौविशेष्यभूतत्वात् । यथांस्वबाधकाभिमतेत्यादिविशिष्टोपाधिनिविष्टंविशेष्यंदोषप्रयुक्तभानत्वमुपाधि
त्वेनोक्तं । विपरीतप्रमाविषयत्वंत्वप्रकृतंकिमर्थमुपाधित्वेनोक्तं । नचबाध्यत्वरूपसाध्येनसंहबाधकंप्रतिनिषेध्यत्वेनविषयत्वस्यो
पाधेर्वैशिष्ट्यंस्यादतउपाध्यंतरमुक्तमितिवाच्यं । विपरीतप्रमाविषयत्वस्यापिबाध्यत्वरूपसाध्येनाभेदादित्याशंकायामाह ॥
[११।४] बाधइति ॥ आरोपपूर्वकस्वात्यंताभावप्रमांप्रतिनिषेध्यत्वेनविषयत्वंबाध्यत्वं । स्वात्यंताभावप्रमांप्रतिनिषेध्यत्वेनविषयत्वमा
त्रंविपरीतप्रमाविषयत्वमितितयोर्भेदाद्बाध्यत्वेसाध्येविपरीतप्रमाविषयत्वंभवत्युपाधिरित्यर्थः । नन्वेतयोरुपाध्योःकथंसाध्य

व्यापकत्वं । उपाधिमतितुच्छेसाध्यस्याभावादितिचेन्न । मममतेउपाधिमतितुच्छेसाध्यस्यापिसत्त्वात् । परमतेतत्रसाध्योपाध्योर्द्वयोरप्यभावात् । ननुतथापिदोषप्रयुक्तभानत्वस्योपाधेर्नसाध्याव्याप्यत्वं । सर्वप्रत्ययवेद्यत्वेनाविद्यारूपदोषप्रयुक्तंघटादिभानविषयेतादृशचरमवृत्तिविषयेवाब्रह्मणिसाध्यस्याभावेनव्यभिचारादितिचेन्न ॥ स्वयंप्रकाशत्वेनब्रह्मणोदोषप्रयुक्तभानस्याभावादित्यभिप्रायत्वात् । पक्षमात्रव्यावर्तकविशेषणवत्त्वशंकाऽविषयंसंप्रतिपन्नसाधनाव्यापकताकमुपाधिमाह ॥ अधिष्ठानेति ॥ जगदध्यासाधिष्ठानेनब्रह्मणासमानसत्ताऽविद्यारूपदोषस्यनास्तीतिविशिष्टोपाधिःपक्षेनास्तीत्यर्थः ॥ब्रह्मणोपीति॥ बौद्धकल्पितदोषस्यप्रातिभासिकत्वेनवेदरूपाधिष्ठानेनसमानसत्त्वानास्तीतिब्रह्मण्युपाध्यभावान्नोपाधेःसाध्येनव्यभिचारइत्यर्थः। ननुब्रह्मणीवब्रह्मणिकल्पितेक्षणिकत्वादावपिमिथ्याभूतेधर्मेअधिष्ठानसमसत्ताकदोषवद्धेतुजन्यज्ञानाविषयत्वादुपाधेःसाध्याव्यापकत्वमितिचेन्मैवं । अधिष्ठानसमसत्ताकेत्यनेनव्यावहारिकबाधवाध्यत्वस्यदोषविशेषणत्वेनविवक्षितत्वात् । ब्रह्मणिक्षणिकत्वादिकल्पनाहेतोर्दोषस्यवाविद्यारूपस्यवाशून्यवाद्युत्थापिततर्कादेर्व्यावहारिकबाधाबाध्यत्वेनविशिष्टोपाधिविरहस्यतत्रापिसत्त्वात् । यथाचव्यतिरेकसाधनेनवैयर्थ्यंतथोक्तं ॥ पक्षैकदेशादिति ॥ क्वचित्साधनवतिसाध्यव्यतिरेकसाधनमात्रेणापि व्यभिचारज्ञानद्वारोपाधेर्दोषत्वमित्यर्थः ॥ श्रुतितात्पर्याविषयत्वमिति ॥ श्रुतिजन्यप्रमांप्रत्यविषयत्वमित्यर्थः । तेनब्रह्मणएवश्रुतितात्पर्यविषयतयातदभावस्यसाधनव्यापकत्वमितिनिरस्तं । तथासतिधर्माद्यसिद्ध्यापत्त्यायथाकथंचिच्छ्रुतिजन्यज्ञानविषयत्वस्यब्रह्मभिन्नेप्यंगीकार्यत्वात् । उक्तंचपरैरपिदेवताधिकरणेदेवताविग्रहादिप्रमाश्रुतिभ्यः । सुखादेःपक्षैकदेशाद्व्यावृत्तमुपा

धिमाह ॥ दोषजन्येति[१३।४] ॥ सुखादिधियोप्यविद्यावृत्त्युपहितसाक्षिरूपायाअविद्यारूपदोषप्रयुक्तत्वेननोपाधेःपक्षाद्व्यावृत्तिरस्ती
तिजन्यत्वपर्यंतमुक्तं । सर्वस्मात्पक्षाद्व्यावृत्तमुपाधिंसंज्ञानीते ॥ पक्षमात्रादिति[१३।४] ॥ मात्रशब्दःकात्स्न्यार्थः ॥ प्रतिभाससमा[१३।४]
त्रशरीरत्वमिति ॥ ननुप्रतिभासमात्रशरीरत्वंनामब्रह्मज्ञानेतरबाध्यत्वमेव । तस्यचदेहात्मैक्येमिथ्याभूतेप्यसत्त्वेनोपाधेः
साध्याव्यापकतेतिचेत् । मैवं । देहात्मनोर्भेदस्यममदेहइतिसर्वानुभवसिद्धत्वेनविशेषदर्शनात्तदैक्यभ्रमस्यासिद्धतयामिथ्याभू
तेदेहात्मैक्येमानाभावेनतत्रसाध्याव्यापकत्वाभावात् । यथाचैतत्तथादेहात्म्यैक्याध्यासभंगेवक्ष्यते । दृष्टिसृष्टिपक्षेनोपाधेःप
क्षाद्व्यावृत्तिरस्तीत्यतआह ॥ नचेति[१३।५] ॥ प्रतिकर्मव्यवस्थेति[१३।५] ॥ तथाचदृष्टिसृष्टिपक्षस्याप्रामाणिकतयाऽस्त्येवोपाधेःपक्षाद्व्या
वृत्तिरितिभावः । कर्मकर्मप्रतिकर्मप्रतिकर्मव्यवस्थानियमः । ब्रह्मरूपेज्ञानेघटादीनामध्यासाद्युगपत्सर्वेषांप्रकाशप्रसक्तौयदिंद्रि
यसन्निकर्षजन्यांतःकरणवृत्त्यायदवच्छिन्नचैतन्यावरणाज्ञानशक्त्याद्यपगमस्तच्चैतन्येनप्रकाश्यतइत्येवव्यवस्थापरैरंगीक्रियते ।
साऽदृष्टिसृष्टिपक्षेनयुज्यते । अन्योन्याश्रयात् । सतिचैतन्यरूपेज्ञानेघटादिस्वरूपंतत्स्वरूपेचसतितेनेंद्रियसन्निकर्षेजातेतदव
च्छिन्नचैतन्यावरकाज्ञानशक्त्यपगमाच्चैतन्यरूपंतज्ज्ञानमिति । तस्मात्प्रतिकर्मव्यवस्थानुपपत्त्यानजगत्प्रतिभासमात्रशरीरमि
तिनोपाधेःसाधनवतःपक्षादव्यावृत्तिरिति । पररीत्याचायमनुपाधिर्द्रष्टव्यः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि ।
न्यायामृततरंगिण्यांदृश्यत्वादेरुपाधयः ॥ दृश्यत्वादेरुपाधिविवरणं ॥ ७ ॥ ७ ॥ ७ ॥ ईत्याभाससाम्यंचेति[१३।३] ॥ ननुज
गतोऽव्यावहारिकत्वेसाध्येव्यवहारानुपपत्तिः । ब्रह्मणोमिथ्यात्वेशून्यवादापत्तिश्चेतिप्रतिकूलतर्कपराघातेनतयोरसाध्यत्वं ।

प्रकृतेचप्रतिकूलतर्काभावः । किंचप्रातिभासिकत्वंब्रह्मज्ञानेतरबाध्यत्वंप्रतिभासमात्रशरीरत्वंवा । आद्येसाध्येदेहात्मैक्येव्यभिचारः । अप्रयोजकत्वंच । द्वितीयेदृष्टिसृष्टिमतेनसिद्धसाधनं । एवंब्रह्मणिमिथ्यात्वेसाध्येसोपाधिकेसिद्धसाधनं । अनुपाधिकेव्यवहारविषयत्वरूपोहेतुरसिद्धः । वेदांतजन्यवृत्तिविषयत्वाभ्युपगमेप्यप्रयोजकः । एवमसद्विलक्षणत्वमपिब्रह्मण्यसिद्धमेव । क्वचिदप्युपाधौसत्त्वेनप्रतीत्यनर्हत्वंह्यसत्त्वं । तद्विलक्षणत्वंचक्वचिदप्युपाधौसत्त्वेनप्रतीत्यर्हत्वरूपं । तच्चशुद्धेब्रह्मणिनास्त्येव । नचबाध्यत्वमसत्त्वं । तद्विलक्षणत्वमबाध्यत्वं । तच्चब्रह्मण्यस्त्येवेतिवाच्यं । अबाध्यत्वेनबाध्यत्वलक्षणमिथ्यात्वेसाध्येविरोधात् । शुक्तिरूप्यदृष्टांतस्यसाधनविकलत्वाच्च । शून्यवादस्याग्रेनिराकरिष्यमाणत्वात् । तस्मान्नदृश्यत्वादीनामाभाससाम्यमिति । अत्रोच्यते । यत्तावदुक्तंजगतोऽव्यावहारिकत्वानुमानेव्यवहारानुपपत्तिरूपप्रतिकूलतर्कपराहतिरिति । तन्न । सुखानुभवपर्यंतव्यवहारस्याप्यव्यवहारिकत्वेनाप्रतिकूलत्वात् । स्वप्नोत्थापिततर्कवत् । इहापिप्रतिकूलतर्कस्यवक्ष्यमाणत्वाच्च । यच्चोक्तंकिंचेत्यादितदपिन । देहात्मैक्येहेतोरेवाभावान्नव्यभिचारः । दृष्टिसृष्टिपक्षस्यचाप्रामाणिकत्वेनसर्वैरनंगीकारांन्नतस्मिन्साध्येसिद्धसाधनं । यच्चोक्तमनुपाधिकस्यनव्यवहारइति । तथासतितस्यासिद्ध्यापत्त्यांतद्व्यवहारस्यावश्यंवाच्यत्वात् । यच्चोक्तंब्रह्मक्वचिदप्युपाधौसत्त्वेनप्रतीत्यनर्हमिति । तदपिन । शुद्धस्यब्रह्मणोभूम्नः "सभगवःकस्मिन्प्रतिष्ठितः स्वेमहिम्नी" तिप्रश्नप्रतिवचनाभ्यांस्वोपाधावेवप्रतीत्यर्हत्वान्नासिद्धिः । एतस्यशुक्तिरूप्यादावपिसत्त्वान्नासिद्धिः । निराकरिष्यमाणशून्यवादस्यानिष्टत्वेनपरंप्रत्यापाद्यमानत्वात् । जगन्मिथ्यात्वेशून्यवादापाताच्च । मिथ्यात्वातिरिक्तस्यतुच्छत्वस्याभावादित्युक्तत्वात् ।

तस्माद्युक्तमाभाससाम्यं । नन्वाभाससाम्यंकथंदोषइतिचेद्यथायथंसर्वदोषज्ञापकतया । तथाहि । यस्मिन्नाभासेवादिप्रतिवा
दिभ्यांयोदोषोज्ञातस्तद्दोषेतरसकलतदाभासगतसाधकबाधकवत्तयाज्ञायमानायांस्थापनायां तत्रतस्यापिदोषस्योपस्थितिर्भव
तीतिताद्दृशसंकलदोषोत्थापकतयातस्यदोषत्वमितिप्रोचुः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायांमृततरंगिण्यां
मृषायुक्तीतरेसमे ॥ ७ ॥ दृश्यत्वादेराभाससाम्यं ॥ ८ ॥ प्रतिज्ञाश्रयंप्रबलप्रमाणविरोधाख्यंदोषंबाधंविवक्षुःप्रमाणज्येष्ठ
प्रत्यक्षविरोधंतावदाह ॥ [१३।५] सन्घटइतीति ॥ प्रत्यक्षगृहीतसत्त्वविरोधिमिथ्यात्वानुमानंप्रत्यक्षबाधितमग्न्यनौष्ण्यानुमानवदित्य
र्थः । ननुनमिथ्यात्वानुमानस्यप्रत्यक्षविरोधः । प्रत्यक्षगृहीतसत्त्वस्यानुमानगृहीताविरोधित्वात् । अनुमानगृहीतविरोधिस
त्त्वस्यचप्रत्यक्षेणाग्रहादित्यभिप्रायेणसत्त्वंपृच्छति ॥ [१३।५] ननुकिमिदमिति ॥ प्रत्यक्षसिद्धमनुमानविरोधीतिशेषः ॥ [१३।६] परंजाति
रिति ॥ द्रव्यत्वगुणत्वकर्मत्वव्यापिकासत्ताजातिर्वेत्यर्थः । आद्यद्वितीयतृतीयान्निराकरोति ॥ [१४।१] नाद्याइति ॥ [१४।१] सिद्धसाध
नादिति ॥ अनुमीयमानमिथ्यात्वेनाविरुद्धतयापरजात्यादिरूपस्यसत्त्वस्यमिथ्यात्ववादिनामयापिप्रत्यक्षविषयत्वस्वीकारादे
ताद्दृशसत्त्वंप्रत्यक्षविषयइतिवचनंमांप्रतिसिद्धसाधनमित्यर्थः । चतुर्थेपिस्वातंत्र्येणस्वाभावांविषयकप्रमाविषयत्वंवा यथाक
थंचित्प्रमाविषयत्वंवा साक्षात्प्रमाविषयत्वंवा सत्त्वप्रकारकप्रमाविषयत्वंवाऽसत्वाप्रकारकप्रमाविषयत्वंवेतिविकल्पानभिसं
धायाद्यंदूषयति ॥ [१४।१] असतीति ॥ असतासहसंयोगादींद्रियसन्निकर्षव्याप्त्याद्यभावेनासतिस्वातंत्र्येणप्रमाणाप्रवृत्तेःप्रमाणप्रवृ
त्यर्थंप्रमाणप्रवृत्तेःपूर्वंस्वरूपसत्यत्वंवक्तव्यं । तच्चप्रमाणप्रवृत्त्यधीनप्रमायांनिर्वक्ष्यतीतिसत्त्वप्रमयोरन्योन्यापेक्षास्यादित्यर्थः ।

ननुस्वातंत्र्येणप्रमाणप्रवृत्त्यर्थमेवसंयोगादींद्रियसन्निकर्षापेक्षा । अन्यार्थप्रवृत्तप्रमाणजन्यप्रमाविषयत्वंतुसंयोगादिसंनिकर्षादिकंविनैवभविष्यतीतिनसत्वप्रमयोरन्योन्यापेक्षेतियथाकथंचित्प्रमाविषयत्वमेवसत्त्वमस्त्वितिद्वितीयंपक्षंदूषयति ॥ [१४।३] असतोपीति ॥ तृतीयंदूषयति ॥ [१४।३] साक्षाच्चेति ॥ चतुर्थंदूषयति ॥ [१४।३] सत्त्वप्रकारकेति ॥ पंचमंदूषयति ॥ [१४।४] असत्त्वेति ॥ [१४।४] अतएवेति ॥ चतुर्थपक्षवद्विकल्प्यतद्दूषणेभ्यएवेत्यर्थः ॥ [१४।५] सतोपीति ॥ तथाचासंभवइत्यर्थः । चतुर्थपंचमषष्ठानांसत्त्वप्रकाराणांप्रमाभ्रमघटितत्वेनप्रत्यक्षायोग्यत्वमपिवोध्यं ॥ [१५।१] शुक्तिरूप्ययोरिति ॥ शुक्तेःपरिच्छिन्नत्वेप्यसत्त्वाभावाच्छून्यस्यापरिच्छिन्नत्वेपिसत्त्वाभावादव्याप्त्यतिव्याप्तिभ्यांनापरिच्छिन्नत्वंसत्त्वमित्यर्थः । शुक्तिरूप्ययोःपरिच्छिंन्नयोर्मध्येरूप्यएवासत्त्वं नतुशुक्तौ । तस्याअधिष्ठानंत्वेनासत्त्वाभावात् । ब्रह्मशून्ययोरपरिच्छिन्नयोर्मध्येब्रह्मण्येवसत्वं नतुशून्यस्येत्येवं व्यवस्थितत्वेननियतत्वेनापरिच्छिन्नत्वातिरिक्तंसत्वमन्यदेववाच्यं । तच्चभ्रमाधिष्ठानत्वेनशुक्तिकादिजगतोपिभविष्यतीतिभावः । ननुजगद्ब्रह्मणोरेकसत्त्वेजगतोसत्त्वमेवस्यात् । तथाहि । स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेवब्रह्मणःसत्त्वं । तदेवंचेज्जडस्यापिजगतस्तदारजतत्वविरोधिशुक्तिसत्तयारजतस्येवजडत्वविरोधिस्वप्रकाशसत्तयाजगतःस्वरूपतोमिथ्यात्वोपपत्तेः । चैतन्यस्यैवचावच्छिन्नाज्ञानविषयत्वेनसर्वभ्रमाधिष्ठानत्वाभ्युपगमान्नभ्रमाधिष्ठानत्वेनशुक्त्यादेःसत्त्वसिद्धिरितिचेन्मैवं । भावानववोधात् । तत्वात्मनियत्सत्वंतदेवेहममेत्यस्ययःस्वभावोब्रह्मणःसएवजगतइतिनार्थः । किंतुयादृशेनसत्त्वेनमिथ्यात्वप्रतिपक्षेणसत्यशब्दावगतेनब्रह्मणिमिथ्यात्वाभावसंप्रतिपत्तिस्तादृशेनसन्घटइतिप्रत्यक्षसमधिगम्येनघटादिगतेनघटादेरपिमिथ्यात्वाभावसंप्रत्ययइ

ति । नहिस्वप्रकाशत्वादिमिथ्यात्वप्रतिपक्षभूतं । सर्वंप्रमेयमितिज्ञानस्यस्वप्रकाशस्यापितवमतेमिथ्यात्वात् । अवेद्यत्वादिरूपस्यस्वप्रकाशत्वयुक्तस्याद्वितीयस्यशून्यस्यापिसद्विविक्तत्वादिरूपमिथ्यात्वप्रयुक्तत्वाच्च । ब्रह्मविषयकश्रौतसत्यत्वव्यवहारप्रयोजंकराहित्यंस्यैवप्रपंचेमांप्रतित्वयासिषाधयिषितंतयाब्रह्मणिसत्यत्वव्यवहारंप्रतिस्वप्रकाशत्वाद्वितीयत्वादेःप्रयोजकत्वेप्रपंचेमिथ्यात्वानुमानेनस्वप्रकाशत्वाद्वितीयत्वादिविरहस्यैवसाध्यतापत्तौसिद्धसाधनापत्तेरिति । तस्माद्युक्तं यदेवात्मनिसत्त्वंतदेवेहममेति ॥ [१६।१] तंप्रतीति ॥ त्रिकालसर्वदेशीयनिषेधंप्रतीत्यर्थः । तथाचतत्रनातिव्याप्तिरितिभावः । श्लोकंव्याचष्टे ॥ [१६।२] सर्वदेशेति ॥ [१६।२] संबंधीति ॥ संसृष्टेत्यर्थः । सर्वावच्छेदेनेत्यपिबोध्यं । अतएवसंयोगेनाव्याप्तिरित्याह ॥ [१६।२] यदवच्छिन्नइति ॥ वृक्षभिन्नेसर्वत्रदेशेविद्यमानस्यसंयोगविशेषात्यंताभावस्यवृक्षेसंयोगोनेतिप्रतीत्यावृक्षेपिसत्त्वेनसर्वदेशीयस्यापिसंयोगात्यंताभावस्यसर्वावच्छेदेन वृत्त्यभावात् । यदवच्छिन्नेसंयोगस्तदवच्छिन्नेतदत्यंताभावोनेतिनतत्राव्याप्तिः । सर्वसंसर्गकप्रतियोगिताकेत्यपिविशेषणं । तेनसर्वस्मिन्कालेसर्वस्मिन्देशेसर्वावच्छेदेनविद्यमानोयोत्यंताभावस्तत्प्रतियोगित्वेप्याकाशादौनाव्याप्तिः । आकाशादेःसमवायेनारोप्यसंबंधेनोक्तरूपात्यंताभावंप्रतिप्रतियोगित्वेप्याकाशाद्यत्यंताभावस्यसर्वसंसर्गकप्रतियोगित्वाभावात् । संयोगादिनासंबंधेनाकाशस्यविद्यमानत्वेनतेनसंबंधेनतदत्यंताभावासंभवात् । तदेवाह ॥ [१६।३] गगनादेरपीति ॥ [१६।३] केवलान्वयीनेति ॥ सर्वसंसर्गकप्रतियोगिताकोनेत्यर्थः ॥ [१६।३] उक्तत्वेनेति ॥ उक्तप्रायत्वेनेत्यर्थः । देकशालावपिसदासर्वत्रदेशकालावित्यबाधितप्रतीत्याप्रमेयत्वाभिधेयत्ववत्स्ववृत्तीअन्योन्यवृत्तीच । अन्यथात्वन्मतेपितयोःप्रातिभासिकत्वंस्यादित्यत्रेत्यर्थः । ननुसंयोगतद

त्यंताभावयोरकाधिकरण्यांगीकारेसंयोगतदत्यंताभावयोरवच्छेदकभेदेनभिन्नाश्रितत्वस्यैवानुभवेनसत्त्वपक्षेसामानाधिकरण्या
योगादित्यनेनविरोधइतिचेन्न । तार्किकादिसाधारणसत्त्वलक्षणपरैतद्ग्रंथेसंयोगतदत्यंताभावयोःसामानाधिकरण्यांगीकारस्य
मतांतरेतदनंगीकारप्रतिपादकोदाहृतग्रंथेनविरोधाभावात् । अत्रसंयोगतदत्यंताभावयोःसामानाधिकरण्यानंगीकाराभिप्रायं
त्वेयत्रसंयोगस्तत्रतदत्यंताभावोनेत्येवावक्ष्यत् । नपुनर्यदवच्छिन्नेसंयोगस्तदवच्छिन्नेतदत्यंताभावोनेतीति । सर्वकालेसर्वदेशे
सर्वावच्छेदेनसंसृष्टसर्वसंसर्गकप्रतियोगिताकाभावंप्रतिप्रतियोगित्वमसत्त्वं । तदभावःसत्त्वमितितार्किकादिसाधारणंसत्त्वल
क्षणमभिधायविशिष्यापिसत्त्वलक्षणमाह ॥ [१७]अश्वेगोत्वमिति॰ ॥ सार्वकालिकनिषेधप्रतियोगित्वंतुच्छस्यैव नपुनर्घटादेः अ
श्वेगोत्वंनास्तीत्यत्रापिगोत्वाश्वसंसर्गएवनिषिध्यते सचासन्नेव नतुगोत्वमितियेमन्यंते तेषांमतेसार्वकालिकनिषेधप्रतियोगित्व
मसत्त्वं तदभावःसत्त्वमित्येवलक्षणं । देशपदंतुनदेयं । अतस्तद्विशेषणीभूतसर्वावच्छेदेनेत्यपिनदेयं । आकाशादेरत्यंताभाव
प्रतियोगित्वाभावात्सत्त्वलक्षणेतत्राव्याप्त्यभावात्सर्वसंसर्गकप्रतियोगिताकेत्यपिनदेयमेव । अन्योन्याभावस्यभावाभावस्वरू
पत्वेननतमादायाव्याप्तिः । नचैवमत्यंताभावभिन्नेपटादावव्याप्तिरितिवाच्यं । तादृशात्यंताभावंप्रतिघटादेर्निरूपकत्वमात्रां
गीकारेणतद्विरहत्वरूपतत्प्रतियोगित्वाभावात् । "सि॰अत्रवदंति । नैतादृशंसत्त्वं चक्षुरादियोग्यं । चक्षुराद्ययोग्यानेकपदार्थ
घटितत्वेनैतादृशसत्त्वग्रहणेचक्षुरादेरसामर्थ्यात् । नंहिसर्वदेशीयत्रैकालिकनिरुक्तनिषेधप्रतियोगित्वंकस्यचित्प्रत्यक्षं । येनतद
भावःप्रत्यक्षोभवेत् । ननुस्वदेशकालवृत्तिनिषेधप्रतियोगित्वाभावेगृह्यमाणेकालत्रयमध्येवर्तमानकालस्यंसर्वदेशमध्येप्रकृतदे

शस्यापिप्रवेशेनात्रनिषेधप्रतियोगित्वाभावस्यगृहीतत्वात्तत्संवलितकालत्रयवर्तिसर्वदेशीयनिषेधप्रतियोगित्वरूपंमिथ्यात्वमनुमानेनग्रहीतुंशक्यतइतिचेन्न । स्वदेशकालवर्तिसकलनिषेधप्रतियोगित्वस्यचक्षुराद्ययोग्यत्वेनतदभावस्यसुतरांतदयोग्यत्वात् । स्वदेशकालवृत्तियत्किंचिन्निषेधाप्रतियोगित्वस्यचमिथ्यात्वाविरोधित्वात् । स्वप्रतियोगिकात्यंताभावासामानाधिकरण्यस्यच स्वप्रतियोगिकात्यंताभावाप्रसिद्ध्याकेवलान्वयिनि संवंधभेदेनघटादौचासिद्धेः । स्वात्यंताभाववद्यावदधिकरणावृत्तित्वंवास्वात्यंताभावयत्किंचिदधिकरणावृत्तित्वंवेतिविकल्पेनपूर्वोक्तदोषाच्च । तस्मात्प्रकारांतरस्यनिरूपयितुमशक्यत्वान्मिथ्यात्वाविरोधित्वाच्चस्वसमानाधिकरणयावदत्यंताभावप्रतियोगित्वाभावरूपमेवसत्त्वमुपेयं ।"तच्चनचक्षुरादियोग्यमित्युक्त" मिति । अत्र ब्रूमः । सर्वदेशकालवृत्तिनिषेधप्रतियोगित्वस्यचक्षुराद्ययोग्यत्वेपितदभावरूपसत्त्वस्यतद्योग्यत्वंसंभवति । घटेआकाशत्वाभाववत्पटेआकाशत्वसत्त्वेतस्यानेकव्यक्तिगतत्वेनजातित्वापत्त्याघटत्ववत्तदुपलंभापादनवद्घटेतादृशाभावप्रतियोगित्वोपलंभस्याप्यापादनसंभवात् । घटवृत्तिसंसर्गाभावप्रतियोगित्वस्यप्रागभावप्रतियोगित्वादिवद्योग्यत्वात् । घटादिज्ञानानंतरमयमिहैव नान्यत्रेत्यन्यनिष्ठाभावंप्रतिप्रतियोगित्वस्यानुभूयमानत्वात् । नचैवमन्यनिष्ठाभावप्रतियोगित्ववदन्यनिष्ठाभावस्यापिचक्षुरादिनाग्रहः स्यादितिवाच्यं । विशेष्यसंनिकर्षाद्यभावेननतस्यग्रहणं । प्रतियोगित्वस्यस्वरूपविशेषात्मनोयोग्यत्वेनतदुपलंभापादनसंभवात् । नचदृष्टांतासंभवः । ममतेशुक्तिरूप्यस्यैवतादृशनिषेधप्रतियोगित्वेनसाक्षिगोचरस्यदृष्टांतत्वसंभवात् । तार्किकादिमतेव्यतिरेकव्याप्तिसंभवाच्च । यद्वातादृशनिषेधप्रतियोगिभिन्नत्वंसत्त्वं । तदन्योन्याभावस्तुप्रतियोग्यप्रत्यक्षत्वेपि स्तंभेपि

शाचान्योन्याभाववत्प्रत्यक्षएवेत्यसद्भेदरूपसत्त्वप्रत्यक्षोपपत्तिरिति । स्वसमानाधिकरणयावदत्यंताभावप्रतियोगित्वाभावरूपमपिसत्त्वंचक्षुरादियोग्यमेव । तथाहि । यस्मिन्कस्मिंश्चिद्देशकालवृत्तिनिषेधेएतद्देशैतत्कालवृत्तिनिषेधत्वंज्ञात्वातेनप्रत्यासत्तिभूतेनोपस्थापितानांस्वदेशकालवृत्तिसकलनिषेधानांप्रतियोगित्वस्याभावोघटेग्राह्यइति । ननूक्तविधयासामान्यलक्षणप्रत्यासत्त्यासर्वनिषेधेषूपस्थितेष्वपितत्प्रतियोगित्वाभावश्चक्षुराद्ययोग्यएव । योग्यप्रतियोगिकएवहि संसर्गाभावोयोग्यः । नचाशेषनिषेधानांप्रतियोगित्वमतींद्रियसाधारणंचक्षुरादियोग्यमिति । मैवं घटे मनस्त्वाभावस्यजलपरमाणौपृथिवीत्वाभावस्यप्रत्यक्षत्वाप्रत्यक्षत्वानुपपत्त्याप्रतियोगिप्रत्यक्षत्वस्यसंसर्गाभावप्रत्यक्षेयोग्यतारूपत्वाभावात् । उक्तोपलंभापादनेनैवाभावस्ययोग्यत्वात् । तस्यचप्रकृतेपिसंभवादित्युक्तत्वात् । असद्भेदरूपसत्त्वप्रत्यक्षत्वस्यचप्रतियोगिप्रत्यक्षंविनाप्युपपत्तेश्चेति । अत्रकेचित् । स्वसमानाधिकरणयावदभावप्रतियोगित्वाभावरूपसत्त्वज्ञानाभावाशयाप्रतियोगिज्ञानाभावंवक्तुंसामान्यस्यप्रत्यासत्तित्वंनिराकुर्वन् । तथाहि । सामान्यंनेंद्रियप्रत्यासत्तिः । मानाभावात् । नचमहानसीयधूमेंद्रियसंयोगेनतत्रैवव्याप्तिग्रहेपर्वतीयधूमादनुमितिर्नस्यादितिसामान्यस्यधूमत्वादेःप्रत्यासत्तित्वेतस्यापिप्रत्यासन्नत्वात्तत्रव्याप्तिग्रहेततोनुमितिरितिवाच्यं । पर्वतीयधूमेंद्रियसन्निकर्षदशायां धूमत्वेनप्रकारेणगृहीतस्मृतव्याप्तेस्तत्रवैशिष्ट्यग्रहसंभवात् । सुरभिचंदनमितिवद्विशेष्येंद्रियसन्निकर्षविशेषणज्ञानतदुभयासंसर्गाग्रहरूपायाविशिष्टज्ञानसामग्र्याःसत्त्वाद्व्याप्तिस्मृतिप्रकारेणपक्षधर्मताज्ञानस्यहेतुता । महानसीयएवधूमोधूमत्वेनव्याप्तिस्मृतिविषयोभवति । धूमत्वेनपर्वतीयधूमज्ञानंवापिजातं । तच्चसामान्यलक्षणांविनैव । तावतैवानुमिति

सिद्धिः । नचसामान्यप्रत्यासत्तिंविनाधूमोवह्निव्यभिचारीनवेत्यनुभूयमानःसंशयोनस्यात् । प्रसिद्धधूमेवह्निसंबंधावगमात् । अप्रसिद्धस्यचाज्ञानादितिवाच्यं । प्रसिद्धधूमएवतत्तद्धूमत्वादिनाव्याप्तिनिश्चयेपिधूमत्वेनतत्संशयोपपत्तेः । तथाचोक्तंमणिकृताघटत्वेनेतरभेदनिश्चयेपिपृथिवीत्वादिनातत्रसंशयसिषाधयिषेभवतइति । निश्चितेप्यर्थेप्रामाण्यसंशयाहितसंशयवद्धूमत्वंवह्निव्यभिचारिवृत्तिनवेतिसंशयादपिताहशसंशयोपपत्तेश्च । एतेनवायूरूपवान्नवेतिसंशयोपिव्याख्यातः । ननुसिद्धेनेच्छा किंत्वसिद्धे साचस्वसमानविषयकज्ञानसाध्या । तच्चज्ञानंनसामान्यप्रत्यासत्तिंविना । नचसिद्धगोचरसुखत्वप्रकारकज्ञानादेवाज्ञातेसुखेभवतीच्छासमानप्रकारकत्वमात्रस्यनियामकत्वादितिवाच्यं । रजतत्वेनरजतेऽनुभूयमानेघटादौरजतत्वप्रकारकेच्छाप्रसंगात् । नचप्रकाराश्रयत्वमपिनियामकं । रजतभ्रमाच्छुक्ताविच्छानुदयप्रसंगात् । तथाचसमानप्रकारकत्वेसतिसमानविषयकत्वंतंत्रं । अतएवाख्यातिपक्षेरजतस्मरणस्यैवशुक्तौप्रवर्तकत्वमित्यपास्तमितिचेन्न । यतोरजतभ्रमाच्छुक्ताविच्छानास्त्येव । किंत्वनिर्वचनीयेरजते । प्रकाराश्रयत्वंनियामकंवदन्नख्यातिवादीम्परमेवंभाषणीयः । तथाचप्रकाराश्रयत्वस्यनियामकत्वादन्यथाख्यातिपक्षोपिनिरस्तएव । नचतर्हिंभ्रमत्वंनस्यात् । इदंरजतमितिभ्रमत्वाभिमतज्ञानस्य व्यधिकरणप्रकारकत्वानभ्युपगमादितिवाच्यं । बाधितविषयत्वेनहिभ्रमत्वं । नतुव्यधिकरणप्रकारकत्वेन । तस्यापिविषयबाधप्रयोज्यत्वाच्च । नन्वभावज्ञानस्यप्रतियोगिज्ञानजन्यत्वात्प्रौढप्रकाशयावत्तेजोविरहरूपस्यतमसःप्रत्यक्षतानस्यात् । सामान्यप्रत्यासत्तिंविनाप्रतियोग्यनुपस्थितेरितिचेन्न । अस्मन्मतेतमसोभावांतरत्वात् । नचतथापितद्व्यंजकत्वात्तदपेक्षेतिवाच्यं । स्वरूपतएवताहक्तेजोविरहस्य

तमोव्यंजकत्वंनतुज्ञातस्य मानाभावादित्यभ्युपगमात् । अन्येषांतादृक्तेजोविरहज्ञानस्यापेक्षितत्वेपिप्रतियोगितावच्छेदकप्रकार
कज्ञानादेवतत्संभवेनतदर्थंसकलप्रतियोगिज्ञानजनिकायाःसामान्यप्रत्यासत्तेरनुपयोगात् । नचगोत्वाभावज्ञानंगोत्वप्रकारक
ज्ञानजन्यं तच्चगवेतरावृत्तित्वेसतिसकलगोवृत्तित्वरूपसामान्यप्रत्यासत्तिमंतरेणनशक्यमवगंतुमितिसांप्रतं । यत्किंचिद्गोव्य
क्तेरेवगोत्वनिरूपकत्वात् । एतेनप्रागभावप्रतीतिरपिव्याख्याता । किंचानागतज्ञानस्यापेक्षितत्वेप्यनुमानादेवतद्भविष्यति ।
तथाचन्यायकुसुमांजलौ "शंकाचेदनुमास्त्येवनचेच्छंकाततस्तरां । व्याघातावधिराशंकातर्कःशंकावधिर्मत" इत्यत्रशंकोपपा
दकमनागतज्ञानमनुमानादेवेत्युक्तं । अनुमानंच वर्तमानपाकः पाकपूर्वकालीनः पाकत्वादतीतपाकवदित्यादि । नचचरम
पाकेव्यभिचारः । साध्यसिद्ध्युपजीवकस्यव्यभिचारज्ञानस्यादोषत्वात् । अन्यथासिद्ध्यसिद्धिव्याघातात् । किंचशब्दादपि
सकलधूमपाकादिगोचरज्ञानसंभवः । नचशंकादिपूर्वंशब्दस्योपस्थितिनियमाभावइतिवाच्यं । कदाचिदेवशब्दादनुभूतस्यत
दानींप्रमुष्टतत्ताकस्मृतिसंभवात् । नन्वनुमितेर्विशेषणज्ञानजन्यत्वेनसामान्यप्रत्यासत्तिसिद्धिः । नचानुमानात्तद्विशेषणज्ञानं ।
अनवस्थानादितिचेन्न । विशेषणतावच्छेदकप्रकारकज्ञानादेवसाध्यविशेषणकपक्षविशेष्यकानुमितिसंभवात् । एतेनसुरभिचं
दनमित्यादिविशिष्टज्ञानायक्लृप्तज्ञानलक्षणप्रत्यासत्तिरपिनिरस्ता । चंदनत्वेनसुरभित्वानुमोपपत्तेः । अन्यथासाध्यविशिष्ट
पक्षप्रत्यक्षोपपत्तेरनुमानमात्रोच्छेदप्रसंगात् । नचाभावसाध्यककेवलव्यतिरेकिणिसाध्यप्रसिद्धेरनंगत्वात्तत्रक्लृप्तायाअनुमिति
सामग्र्याःप्रत्यक्षसामग्रीतोबलवत्त्वमितिवाच्यं । अर्थापत्तिवादिभिरस्माभिस्तदनभ्युपगमात् । पर्वतवर्तिधूमोवह्निव्याप्यइति

परामर्शात्साध्यविशेष्यकपक्षविशेषणकानुमित्यभ्युपगमेतुनैवकाप्यनुपपत्तिः । अनुमितेःपक्षविशेष्यकत्वनियमेमानाभावात् । किंचधूमत्वसामान्यंनस्वरूपतयाप्रत्यासत्तिः । धूलीपटलेधूमभ्रमानंतरंधूमत्वेनसकलधूमनिष्ठवह्निव्याप्तिग्रहानुदयप्रसंगात् । तत्रस्वरूपतोधूमत्वाभावात् । नचेष्टापत्तिः । तदुत्तरकालमनुमित्यनुदयापत्तेः । तथाचधूमत्वज्ञानंप्रत्यासत्तिरितिवाच्यं । तच्चधूमेंद्रियसन्निकर्षदशायांधूमज्ञानात्प्राक्नास्त्येव । निर्विकल्पकेमानाभावात् । विशिष्टज्ञानत्वेनविशेषणज्ञानत्वेनकार्यकारणभावानभ्युपगमात् । अवश्यक्लृप्तकार्यकारणभावविशेषेणैवसर्वव्यवहारोपपत्तेः । नचधूमत्वेनसंनिकृष्टधूमव्यक्तिज्ञानानंतरंतत्समानाकारसन्निकृष्टधूमगोचरंज्ञानांतरमुत्पद्यतइत्यत्रमानमस्ति । धूमत्वेनपुरोवर्तिनंधूमंसाक्षात्करोमिनव्यवहितमित्यनुभवाच्च । अन्यथाजगतीगतसकलधूमव्यक्तीरहंसाक्षात्करोमीत्यनुव्यवसीयेत । नचैवमनुभवमात्रशरणैरभ्युपेयते । किंचसामान्यप्रत्यासत्त्यंगीकारे यत्प्रमेयं तदभिधेयं यत्प्रमेयवत्तदभिधेयवदित्यादिव्याप्तिपरिच्छेदेसार्वज्ञापत्तिः । नचेष्टैवसा । परज्ञानविषयोघटोनवेत्यादिसंशयानुपपत्तेः । नचघटत्वप्रकारकघटविषयकनिश्चयोघटसंशयविरोधी । प्रमेयमितिनिश्चयस्तुघटविषयकोपिनघटत्वप्रकारकइतिवाच्यं । भासमानवैशिष्ट्यप्रतियोगिनएवप्रकारत्वात् । घटस्यापिप्रमेयमितिज्ञानेभासमानवैशिष्ट्यप्रतियोगित्वात् । स्वरूपसंबंधविशेषाभ्युपगमेचानिर्वचनीयवादापत्तेरित्यादिदूषणानिबहुतरमूहनीयानि । तस्मात्सामान्यप्रत्यासत्त्यानिषेधमात्रप्रतियोगित्वोपस्थितौतदभावग्रहाद्बाधइत्यनुपपन्नमेवेति । अत्रब्रूमः । मास्तुसामान्यलक्षणा । तथाप्यनागतपाकादेरिवस्वसमानाधिकरणयावदत्यंताभावज्ञानमनुमानादिनाभविष्यति । तथाहि । घटःअत्यंताभावसमानाधि

करणः धर्मत्वादित्यनेनवा कपालं अत्यंताभाववत् वस्तुत्वादित्यनेनवाघटसमानाधिकरणयायावदत्यंताभावसिद्धिः । नचयत्किंचिदत्यंताभावेनैवानुमितेर्विषयलाभेननतस्याःयावदत्यंताभावविषयकत्वमितिवाच्यं । साध्यतावच्छेदकाक्रांतस्यपक्षेऽबाधितस्यपक्षेसर्वस्यैवभानसंभवात् । अन्यथाविनिगमनाविरहेणनैकस्यापिभानंस्यात् । अतएवानेकवह्निमतिपर्वतेजायमानायावह्न्यनुमितेर्विनिगमनाविरहेणतत्रसर्ववह्निविषयत्वं । नचघटसमानाधिकरणयावदत्यंताभावज्ञानेपितत्प्रतियोगित्वाभावोयोग्यप्रतियोगिकःकथंप्रत्यक्षविषयइतिवाच्यं । उक्तोपलंभापादनसंभवेनैवाभावस्ययोग्यत्वात् । स्वसमानाधिकरणयावदत्यंताभावप्रतियोगिभिन्नत्वरूपसत्त्वप्रत्यक्षेप्रतियोगिप्रत्यक्षत्वस्यानपेक्षणीयत्वाच्च । तस्माद्युक्तंप्रत्यक्षस्यसत्त्वग्राहकत्वमिति ॥ केचित्त्विति ॥ परमतेतुच्छेऽतिव्याप्तिवारणायपराभिप्रेतेति । परैरभिप्रेतस्यतुच्छसाधारणमिथ्यात्वस्याभावःसत्त्वमित्यर्थः । अतस्तुच्छेनातिव्याप्तिः । ननुपरांगीकृतंतुच्छसाधारणंमिथ्यात्वमत्यंताभावप्रतियोगित्वादिकमेव नतुवाध्यत्वादिकं । तथाचपौनरुक्त्यमितिचेन्मैवं । स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वेतात्पर्यादतोनकश्चिद्दोषः ॥ असद्वैलक्षण्येसतीति ॥ असतिशुक्तिरूप्येचातिव्याप्तिवारणायविशेषणविशेष्ये । नन्वनारोपितत्वमारोपाविषयत्वं । तच्चाप्रसिद्धं । सर्वस्यापिक्षणिकत्वादिनाऽऽरोपविषयत्वादितिचेन्न । अनारोपितत्वमारोपितभिन्नत्वं । तच्चमतद्वयेप्यस्तिघटादेः । मममतेऽसतएवारोपितत्वात् । तवमतेऽनिर्वचनीयस्यारोपितत्वात् । घटादेर्ब्रह्मणश्चतद्भिन्नत्वात् । नचैवंमममतेऽसद्वैलक्षण्येसतीतिव्यर्थमितिवाच्यं । मममतेतदुपरक्तबुद्धेस्तत्प्रयोजनत्वात् । परंप्रत्यतिव्याप्तिवारकत्वात् । उभयसिद्धप्रयोजनवत्त्वंविशेषणस्य

नतुप्रयोजनस्योभयसिद्धत्वमितिभावः । एतच्चलक्षणंनतार्किकादिसाधारणं अतोनतन्मतेअप्रसिद्धिदोषः ॥ अस्तित्वप्रकार[१८।३]केति ॥ अस्तित्वेनेत्यर्थः । एतच्चविषयत्वविशेषणं । नचप्रमात्वस्यार्थसत्त्वघटितत्वेनात्माश्रयइतिवाच्यं । प्रमात्वस्यजातिरूपत्वेनाभिमतत्वात् । नचारोपघटितंप्रमाघ्नटितंचसत्त्वंकथंचक्षुरादियोग्यमितिवाच्यं । उपनीतस्यापितद्योग्यत्वसंभवात् । आत्माश्रयशंकांनिराकरोति ॥ अस्तित्वंचेति[१८।३] ॥ अव्याप्तिशंकांनिराकरोति ॥ अतीतादिरपीति[१८।२] ॥ ननुवर्तमानत्वप्रकारकप्रमाविषयत्वंनमिथ्यात्वविरोधि प्रतिभासकालेअर्थसत्त्वस्यमिथ्यात्ववादेपिसत्त्वादितिचेन्न । तत्कालेस्वरूपेणविद्यमानस्यकालत्रयनिषेधप्रतियोगित्वरूपमिथ्यात्वानुपपत्तेः ॥ आरोपितंत्विति[१८।२] ॥ ननुकालसंबंधित्वंनमिथ्यात्वविरोधि शुक्तिरूप्यस्यापि प्रतिभासकालसंबंधित्वात् । बाधेनतात्विककालत्रयसंबंधनिषेधेप्यतात्विककालसंबंधस्यानिषेधात् । नापितात्विककालसंबंधित्वंतत् । तात्विकत्वस्याप्यनिरूपणात् । निरूपणेवाशेषवैयर्थ्यादितिचेन्मैवं । तात्विकातात्विकपदार्थविभागस्याद्याप्यसत्त्वेन किंचित्कालसंबंधिनःसार्वकालिकनिषेधायोगात् । अतएवस्वरूपेणनिषेधमनंगीकृत्यपारमार्थिकत्वेननिषेधःकैश्चिदुक्तइतितस्माद्युक्तःसत्वग्राहकप्रत्यक्षबाधः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षंयुगंयुजि । न्यायामृततरंगिण्यांसत्त्वलक्षणमीक्ष्यतां ॥ सत्वनिरुक्तिः ॥ ९ ॥ ७ ॥ ७ ॥ सन्घटइतिप्रत्यक्षस्यघटादौसत्त्वाग्राहकत्वेननतद्विरोधोदृश्यत्वादेरितिशंकते ॥ नन्विति[१८।३] ॥ इदंरूप्यमित्यत्ररूप्येइदंताविरहेणाधिष्ठानभूतशुक्तिकायामिदंत्वेनगृह्यमाणायांतदभिन्नरजतमपीदमितिनिर्दिश्यतेयथा तथा

सद्रूपेब्रह्मणिघटादेरध्यस्तत्वेनसद्रूपब्रह्माभिन्नत्वादधिष्ठानब्रह्माभिन्नत्वेनभाने तद्गतमेवसत्त्वंघटादौव्यवह्रियते । तथाचनघटादौसत्त्वंप्रत्यक्षविषयइत्यर्थः ॥ उक्तत्वादिति ॥ परिच्छिन्नत्वहेतुभंगइतिशेषः । नचरूपादिहीनस्यापिकालादिन्यायेनस्फुरणमस्त्वितिवाच्यं । इदानींरूपमितिकालोल्लेखवद्ब्रह्मोल्लेखाभावेनब्रह्मणस्तद्विषयत्वाभावात् ॥ नहीति ॥ एवंचयथासत्यंब्रह्मेत्यत्रब्रह्मण्येवसत्त्वंप्रतीयते नत्वधिष्ठानादिगतं तथासन्घटइत्यत्रापिघटगतमेवसत्त्वंप्रतीयतइत्यभ्युपेयमितिभावः । ननुसद्ब्रह्मणोःसामानाधिकरण्यस्यावाधितत्वात्तत्रतथास्तु नतुघटे । सन्नित्यस्यघटइत्यनेनसामानाधिकरण्यस्यवाधितत्वात् । तथाहि । सत्ताजातिस्फुरणनिबंधनंवास्वरूपसत्तानिबंधनंवाकालत्रयाबाध्यत्वनिबंधनंवासामानाधिकरण्यंस्यात् । नचाभावादिसाधारणसत्प्रतीतौजातिस्फुरणंसंभवति । अभावादिषुत्वयापितदनंगीकारात् । नचक्कचित्साक्षात्संबंधेन क्वचित्परंपरासंबंधेनसदितिप्रतीत्युपपत्तिः । विजातीयसंबंधेनसमानाकारप्रतीत्यनुपपत्तेः । अन्यथासंबंधभेदएवनसिद्ध्येत् । नचस्वरूपसत्त्वेनाभावादौतत्प्रतीतिः । अननुगमात् । अननुगतेनाप्यनुगतप्रतीतौजातिमात्रोच्छेदप्रसंगात् । अतएवनसर्वत्रापिस्वरूपसत्वेनैवसद्व्यवहारः । एकेनैवसर्वानुगतेनसर्वत्रसत्प्रतीत्युपपत्तौबहूनांतद्धेतुत्वकल्पनेमानाभावात् । नापिकालत्रयाबाध्यत्वनिबंधनंतत् । तस्यचक्षुराद्यगम्यत्वस्योक्तत्वात् । सदिदंरजतमित्यादिभ्रमेऽभावाच्च । तस्मादेकंसर्वाधिष्ठानमेवसदितिसर्वत्रानुभूयतइतियुक्तं । नीलादेस्तु घटादिसामानाधिकरण्येनास्तिकिमपिबाधकं । नचनीलादेरधिष्ठानत्वंसंभवति । प्रागसत्त्वात् । नीलपीतादिप्रातिभासिकानंताधिष्ठानकल्पनेगौरवात् । अधिष्ठेयसमानयोगक्षेमत्वात् । अधिष्ठेयविषमसत्ताकंह्यधिष्ठानंभवति ।

मिथ्यारूप्यमसन्नृशृंगमित्यादौमिथ्यात्वासत्त्वयोरधिष्ठानत्वशंकापिनास्ति । शून्यवादापत्तेः । यत्तुसत्यंज्ञानमित्यत्रापितथा स्यादिति तन्न । यतोनतत्रसत्तासंबंधेनसत्त्वं किंतुस्वरूपेणैवेत्युक्तदोषानवकाशात् । नचैवंघटादावपिस्वरूपेणैवतथात्वं । पूर्वमेवनिराकृतत्वादिति ॥ अत्रोच्यते । सन्घटइतिव्यवहारस्यसत्ताजातिस्फुरणनिबंधनत्वेबाधकाभावात् । नचाभावादिषुसत्ताविरहात्तद्व्यवहारानुपपत्तिः । तत्रापिसमवायेतरसंबंधेनसत्तासत्त्वात् । नचविजातीयसंबंधेनसमानाकारप्रतीत्यनुपपत्तिः । लोहितःस्फटिकइतिप्रतीतेरेकाकारायाःसाक्षात्परंपरासंबंधविषयत्वेऽप्रमात्वस्यप्रमात्वस्यचसर्वैरुपपादितत्वात् । नीलोघटोनीलोगुणइतिप्रतीत्योरेकाकारत्वेपिसंबंधभेदाच्च । नचसंबंधभेदासिद्धिः । असाधारण्येनतत्तत्संबंधगोचरबुद्धेरेवतत्सिद्धेः । स्वरूपसत्त्वनिबंधनाद्वासद्व्यवहारः । नचाननुगमः । तवमतेप्रमेयत्वस्याननुगमेप्यनुगतव्यवहारवदुपपत्तेः । तवमतेपिसत्यंब्रह्मेतिव्यवहारःस्वरूपसत्तया सन्घटइतिव्यवहारस्त्वधिष्ठानसत्तानुवेधेनेत्यननुगमस्यतदवस्थत्वाच्च । वस्तुतस्तुउक्तरूपसत्त्वेनैवसर्वत्रसदितिव्यवहारः । तस्यचयथाप्रत्यक्षत्वंतथोक्तं । नचनीलादेरधिष्ठेयाधिकसत्ताविरहान्नाधिष्ठानत्वमितिवाच्यं । घटादेरधिष्ठानत्वेनाभिमतस्यब्रह्मणोघटाद्यधिकसत्तायाअसंप्रतिपत्तेः । ब्रह्मणितत्सत्यमित्यादिश्रुतेरिवसन्घटइतिप्रत्यक्षस्यापिघटादौब्रह्मसमानसत्त्वग्राहकस्यसत्त्वात् । नचमिथ्यारूप्यमसन्नृशृंगमित्यादौमिथ्यात्वासत्त्वयोरधिष्ठानताशंकापिनास्ति । शून्यवादापत्तेरितिवाच्यं । वियदादेःसर्वस्यमिथ्यात्वेकिंनशून्यवादः । अधिष्ठानमात्रसत्यत्वस्यचशून्यवादेपिसत्त्वात् । तस्मात्सन्घटइत्यादौयदिब्रह्मसत्तानुवेधःतर्हिनीलोघटइत्याद्यप्यधिष्ठानानुवेधःस्यादितिसाधूक्तं । प्रत्यक्षस्यजात्याप्राबल्यमनुमा

नादिभ्यःसमर्थयते ॥ [१०।११] प्रत्यक्षस्येति ॥ ननुतत्रोपजीव्यत्वनिबंधनंप्रत्यक्षस्यबाधकत्वमतआह ॥ [१०।१२] दृष्टंहीति ॥ धर्म्यादेश्चक्षुरादिनैवसिद्धेस्त्वचोनुपजीव्यत्वादित्यर्थः । ननुत्वाचप्रत्यक्षस्याप्युपजीव्यत्वेनैवशैत्यानुमितिप्रतिबंधकत्वं । चक्षुरादिनांधर्म्यादिग्रहेपित्वचंविनासाध्यप्रसिद्धेरभावात् । तथाचनजात्याप्राबल्येमानमस्ति । तदगृहीतग्राहित्वमपिनप्राबल्यप्रयोजकं । प्रत्यक्षागृहीतधर्मादिग्राहकत्वेनपरोक्षप्रमाणस्यैवप्राबल्यापत्तेः । नाप्यनुमानाद्यनिवर्तिंतदिङ्मोहादिन्निवर्तकत्वेनप्राबल्यं । एतावताहिवैधर्म्यमात्रंसिद्धं । नचतावतेतरप्रमाणापेक्षयाप्राबल्यंभवतीति । मैवं । शैत्याद्यनुमित्याद्यनिवर्तिंतपीतभ्रमनिवर्तकजातिविशेषावच्छिन्नज्ञानजनकत्वेनप्रत्यक्षस्यप्राबल्यं । नचचक्षुरनिवर्तिंतवंशोरगभ्रमनिवर्तकत्वात्त्वचोपिचक्षुरपेक्षयाप्राबल्यंस्यादितिवाच्यं । मंडूकवसांजनदोषेणहिदुष्टचक्षुषोवंशोरगभ्रमानिवर्तकत्वंदूरादिदोषवशात् । निर्दुष्टस्यचक्षुषःपुरैवचत्वचोवंशोरगादिभ्रमनिवर्तकत्वं । नचप्रत्यक्षागृहीतधर्मादिग्राहकत्वेनपरोक्षप्रमाणस्यैवप्राबल्यापत्तिः । स्वविषयेविशेषग्राहकत्वस्यप्रत्यक्षेप्राबल्यबीजत्वात् । धर्मादेस्तुतदविषयत्वात् । परोक्षप्रमाणेस्वविषयेतदग्राहकत्वात् । प्रत्यक्षस्यजात्याप्राबल्येआगमस्यतत्प्रतिपादकेनब्रह्मतर्कवचनेनविरोधंपरिहरति ॥ [१०।१३] प्राबल्यमागमस्यैवेति ॥ नचाद्वैतस्यापिवैदिकार्थत्वमितिवाच्यं । अद्वैतेप्रमाणाभावस्यवक्ष्यमाणत्वादिति ॥ [१०।१४] क्वचेति ॥ नचैतत्परीक्षितप्रामाण्यप्रत्यक्षविषयमितिवाच्यं । सन्घटइतिप्रत्यक्षस्यापिफलपर्यंतंपरीक्षितत्वात् । त्वयापिपरोक्षज्ञानेनानिवृत्तस्यभेदभ्रमस्यापरोक्षज्ञानेननिवृत्तेःस्वीकाराच्च । अनुभूयतेचानुमानादिभ्योपिविश्वासहेतुःप्राबल्यंप्रत्यक्षे । दीक्षणीयेष्टेरर्थवादेपिप्रत्यक्षस्यशब्दापेक्षयाप्राबल्यंज्ञायते । तथाह्यैतरेयब्राह्मणे । “तस्मा

दीक्षितेनसत्यमेववदितव्यं अथोखल्वाहुःकोर्हतिमनुष्याःसर्वंसत्यंवदितुंसत्यसंहितावैदेवाअनृतसंहितामनुष्याइतिविचक्षणवतीं वाचंवदेत् चक्षुर्वैविचक्षणंविधानेनपश्यतीति एतद्वैमनुष्येषुसत्यंनिहितं यच्चक्षुस्तस्मादाचक्षाणमाहुरद्रागिति सयदँदर्शमित्याह अथहास्यश्रद्दधति यस्तुवैस्वयंपश्यति नबहूनांनान्येषांश्रद्दधातितस्माद्विचक्षणवतीमेववाचंवदेत् सत्योत्तराहैवास्यवागुदिताभवती" ति । अत्रदीक्षितस्यसत्यवचनंविधायसत्यवाक्त्वंदेवधर्मोमनुष्याणामशक्यइत्यथोखल्वाहुरित्यनेनपूर्वपक्षय्याचक्षुःसंवादिवदनमेवसत्यवचनमितिसिद्धांतितंविचक्षणवतींवाचंवदेदित्यनेन । तत्रविचक्षणवतीमित्यनेनकथंचक्षुःसंवादित्वमित्यपेक्षायांविचक्षणशब्दस्यचक्षुःपरत्वंयोगेनेत्युक्तंविधानेनपश्यतीति । एतच्चक्षुःसर्वप्रमाणापेक्षयासत्यंबलवत् । अतएववक्तारंपृच्छति । अद्राक् दृष्टवानिति । सवाक्योच्चारयितायद्यदर्शं पश्यामीत्याह तर्हिश्रद्दधतितद्वचनं । नान्यस्य । तस्माच्छ्रुतिसिद्धंप्रत्यक्षस्यप्राबल्यं ॥ उपक्रमाधिकरणन्यायेनेति ॥ तृतीयस्यतृतीयेचिंतितं । "श्रुतेर्जाताधिकारःस्यात्" । ज्योतिष्टोमेश्रूयते "प्रजापतिरकामयतप्रजाःसृजेयेति सतपोतप्यततस्मात्तेपानात्त्रयोदेवाअजायंतं अग्निर्वायुरादित्यस्तेतपोतप्यंत तेभ्यस्तेपानेभ्यस्त्रयोवेदाअजायंत अग्नेर्ऋग्वेदोवायोर्यजुर्वेदआदित्यात्सामवेद" इत्युपक्रम्यश्रूयते "तस्मादुच्चैर्ऋचाक्रियतेउपांशुयजुषाउच्चैःसाम्ने" ति । तत्रसंशयः । किमुच्चैष्ट्वादयऋगादिजातानांमंत्राणांधर्माः ऋचामंत्रेणोच्चैरिति किंवावेदधर्माः ऋग्वेदोनोच्चैरितीति । उपक्रमेवेदश्रवणादुपसंहारेचऋगादिश्रवणात्संदेहः । वेदशब्दोहिमंत्रब्राह्मणसमुदायात्मनोग्रंथविशेषस्यवक्तानैकस्यमंत्रवाक्यस्यब्राह्मणवाक्यस्यवावाचकः । प्रयोगाभावात् । नह्येकं द्वेत्रीणिवाक्यान्यधीत्य "वेदानधीत्यवेदौवावे

दंवापियथाक्रम" मित्येतच्छास्त्रार्थमनुष्ठितंमन्यंते । तस्मात्समुदायोवेदः । ऋगादिशब्दास्तुमंत्रवचनाःस्थापिताः । तेनोपक्रमोपसंहारयोर्विप्रतिपत्तेरेकवाक्यत्वाच्चोभयोरेकविषयत्वेवश्यंभाविनिकिमुपसंहारस्यविध्युद्देशवशात् उपक्रमस्थार्थवादगतोवेदशब्दोवेदैकदेशमंत्रपरोभवतु किंवोपक्रमगतार्थवादवशादुपसंहारस्थऋगादिपदंवेदपरंभवत्विति संदेहः । पूर्वपक्षस्तु । प्रधानत्वादप्राप्तविषयत्वाच्चविध्युद्देशस्ययथाश्रुतादन्यथार्थत्वमप्रामाणिकं । अर्थवादस्तुप्रमाणांतरप्राप्तानुवादकत्वात्तद्वशेनलक्षणयानीयमानोनदुष्यतीति । जाताधिकाराउच्चैष्ट्वादयः । तदुक्तं "गुणत्वादनुवादत्वादर्थवादस्यलक्षणा । मुख्यस्यापिप्रधानत्वादप्राप्तविषयत्वतः । विध्युद्देशोजघन्योपिस्वार्थहानिंनगच्छति । मुख्यापिदीक्षणीयाहिलभतेनस्वधर्मतां । जघन्यस्यापिसोमस्यप्रधानत्वात्स्वधर्मता । वक्ष्यतेतद्वदत्रापिविध्युद्देशस्यसाभवे" दिति । सिद्धांतस्तु । यइष्ट्यापशुनासोमेनवायजेत सोमावास्यायांपूर्णमास्यांवायजेतेतिवचनात्सोमस्यापिकालोलब्धात्मतयायुक्तंदीक्षणीयाकालंबाधते । विध्युद्देशस्यस्त्विहमंत्रविषयत्वेनलब्धात्माकथमिवार्थवादंबाधेत । तथाहि । वेदशब्दोत्रोपक्रमगतोसंजातप्रतिपक्षत्वाद्यथाश्रुतपरएवतावदवधार्यते । तस्मिंश्चावधारितेसत्युपसंहारगतमृगादिपदमुपजातप्रतिपक्षविज्ञानत्वाद्यथाश्रुतार्थसत्तदेकवाक्यतामप्रतिपद्यमानंतदनुगुणवेदपरतयैवात्मानंलभतेनान्यथा । येनबाधकंस्यात् । उपक्रमएववेदानांकिंचिद्विधास्यतेइत्यवगतं । किंतद्विधेयमित्यवगतमपेक्षितंच । अतोविध्युद्देशगतोपिऋगादिशब्दोवगतविषयत्वादनुवादइतिलक्षणांसहते । तस्माद्वेदधर्माः । ऋग्वेदेनयत्क्रियतेविधीयतेतदुच्चैरिति । तदुक्तं । "लब्धात्मनःप्रधानस्यबलीयस्त्वंगुणाद्भवेत् । विध्युद्देशस्त्वलब्धात्मालब्धात्मानंनबाधत" इति । त

दिहोपक्रमोपसंहारैकवाक्यतयावेदधर्मत्वमवधारितमिति । तस्माद्यथाऽसंजातविरोधित्वादुपक्रमस्योपसंहारापेक्षयाप्राबल्यंत थासन्घटइतिप्रत्यक्षस्याप्यद्वैतागमापेक्षयाप्राबल्यं । नन्वेकवाक्यस्थपरस्परसापेक्षपदत्वेनोभयोःसाम्येसत्युपक्रमस्थवेदपदानु रोधेनोपसंहारस्थऋगादिपदानांमंत्रमात्रवाचिनांकृत्स्नवेदपरत्वेनिर्णीतेपिनप्रकृतेतन्न्यायःसंभवति । उभयोःसाम्याभावात् । गृहीतप्रमाणभावश्रुत्यपेक्षयाभ्रमविलक्षणत्वेनानिश्चितस्यप्रत्यक्षस्यन्यूनबलत्वात् । अन्यथेदंरजतमितिभ्रमोपीयंशुक्तिरित्या प्तोपदेशापेक्षयाप्रबलःस्यादिति । मैवं । सन्घटइतिप्रत्यक्षस्यभ्रमविलक्षणत्वेनानिश्चयेवीजाभावात् । प्रत्युतफलपर्यंतपरीक्ष याप्रामाण्यस्यैवनिश्चितत्वाच्च । इदंरजतमितिभ्रमस्यापरीक्षितत्वेननाप्तोपदेशबाधकत्वमिति ॥ लिंगात्श्रुतेरिति ॥ तृतीय स्यतृतीयेऽभिहितं "श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानांसमवायेपरदौर्बल्यमर्थविप्रकर्षात् । श्रुत्यादीनामेकविषयसमवा येविरोधेसतिबलाबलंचिंत्यते । तत्रश्रुतिलिंगयोर्विरोधोदाहरणमेवंश्रूयते । ऐंद्र्यागार्हपत्यमुपतिष्ठतइति । तत्रसंशयः । किमिंद्रस्यैवोपस्थानंकर्तव्यमुतेंद्रस्यवागार्हपत्यस्यवाथवासमुच्चयोथवागार्हपत्यस्यैवेति । यदिलिंगंबलीयस्ततइंद्रोपस्थानं । अ थतुल्यबलत्वंततोविकल्पः । अथतुल्यबलत्वेप्यविरोधस्ततःसमुच्चयः । श्रुतिबलीयस्त्वेतुगार्हपत्यस्यैवेति । यःशब्दस्यश्रवणा देवविनियोगःप्रतीयते सश्रौतइत्युच्यते । श्रवणंश्रुतिः । गार्हपत्यमितिचब्राह्मणगतद्वितीयांतपदश्रवणादेवगार्हपत्यस्यप्राधा न्यमुपस्थानंप्रत्यवगम्यते । ऐंद्र्याश्चतृतीयांतायाःकरणत्वमितिश्रौतोयंविनियोगः । मंत्रगतात्त्विंद्रपदादिंद्रस्वरूपमात्रंश्रु त्यावगम्यते । नतुमंत्रंप्रतींद्रस्यप्राधान्यंमंत्रस्यवाकरणत्वंकेनचिच्छब्देनोच्यते । किंतुमंत्रस्येंद्राभिधानसामर्थ्यमालोच्यनूनम

नेनमंत्रेणेंद्रउपस्थेयइतिकल्प्यतइतिलैंगिकोविनियोगः । गृह्णीमएतदिंद्रार्थत्वंलिंगादिति । नतुगार्हपत्यार्थत्वं । मंत्रस्यश्रौतगार्हपत्यमितिशेषितमात्रमनिर्धारितशेषविशेषंश्रुत्योक्तं । ऐंद्रीविषयंतुतदितिवाक्यादवगंतव्यं । तथैंद्र्येत्यनवगतशेषिविशेषविषयत्वंश्रुतंवाक्याद्गार्हपत्यविषयंसंभवति । यच्चश्रुत्युपात्तंसामान्यरूपंचनतल्लिंगेनविरुध्यते । संभवतिहि गार्हपत्यस्यकांचिदाग्नेयींप्रतिप्राधान्यं । ऐंद्र्याश्चेंद्रंप्रतिशेषत्वं । अन्योन्यान्वयस्तुवाक्यादवगतोलिंगेनविरुध्यते । तेनलिंगवाक्ययोरेवविरोधोनतुश्रुतिलिंगयोः । तदुक्तं । "शेषशेषित्वमात्रंहिश्रुत्यैंद्रीगार्हपत्ययोः । उक्तमन्योन्यविषयनियमस्त्वेकवाक्यतः" इति । उच्यते । यथैवश्रुतिमात्रमविरुद्धंएवंवाक्यमपिश्रुतिमनादृत्यालोच्यमानमविरुद्धमेव । यदिहिगार्हपत्यशब्दइंद्रंलक्षयेत् द्वितीयावासप्तम्यर्थे ततोलिंगाविरोधेनगार्हपत्यपदमैंद्र्योपतिष्ठतइत्यनेनैकवाक्यतांगच्छति । यस्तुद्वितीयांतगार्हपत्यशब्दश्रवणादेवार्थःप्रतीयतेगार्हपत्यस्यप्राधान्यं सलिंगेनविरुध्यते । अतोनकेवलंवाक्यं नकेवलाश्रुतिर्लिंगेनविरुध्यते वाक्यसहिताश्रुतिर्विरुध्यते । तदुक्तं । "सत्यंवाक्यविरोधोस्तिश्रुतिश्चापिविरुध्यते । सहितेहिविरुध्येतेनतुलिंगेनकेवले" इति । कथंपुनरेवमुभयविरोधःसंन्नयंश्रुतिविरोधएवव्यवह्रियते नवाक्यविरोधः । उच्यते । श्रुतेःप्राधान्यात् । विनियोगोहिप्रमेयः । सचसाध्यसाधनरूपःश्रुत्यैवोक्तः । वाक्यंतुप्रतियोगिविशेषसमर्पणेनश्रुतिमनुगृह्णद्गुणभूतं । प्रधानेनचविरोधोलक्ष्यते नतुगुणेन । अयंचापरोविशेषः । येनंश्रुतेरेवात्रविरोधोनवाक्यस्य । यस्यहिलिंगेबलीयसिबाधस्तल्लिंगेनविरुध्यते नत्वत्रलिंगेबलीयसिवाक्यंशक्यतेबाधितुं । तद्बाधेहिपृथक्कृतेगार्हपत्यैंद्रीपदेनकंचिदर्थंप्रतिपादयतः । पदमात्रस्याप्रमाणत्वात् । तत्रश्रुतेरप्यत्यंतबाधोवाक्यस्यबा

यत्रपृथक्भूतस्याप्यर्थप्रतिपादकत्वंनविहन्यते । यथास्योनादिषु । तत्रैववाक्यबाधोनैकंजातीयकेषु । ततश्चासंभवतिवाक्यस्य
बाधेश्रुतिरेवबाध्यते इतिश्रुतिलिंगयोरेवैषविरोधइति । तत्रश्रुत्यपेक्षयालिंगस्यप्राबल्यादिंद्रोपस्थानमितिप्रथमःपक्षः । त
दुक्तं । "यद्वासामर्थ्यरूपत्वाल्लिंगंस्यात्प्रबलंश्रुतेः । वस्तुशक्त्यनुसारीहिशब्दःसर्वःप्रवर्तत" इति । श्रुतिलिंगयोःस्वतःप्रामा
ण्यविशेषाद्विरोधाच्चविकल्पइतिद्वितीयःपक्षः । तदुक्तं । "तत्रस्वतःप्रमाणत्वंलिंगादेःश्रुतिवन्मतं । सामर्थ्यालोचनादेवसा
मर्थ्यंहिप्रतीयते । गार्हपत्यार्थताश्रुत्येत्युभयोस्तुल्यकालता । तेनद्वयोरुपस्थानंविकल्पेनभविष्यती" ति । श्रुतिलिंगयोरवि
रोधात्समुच्चयइतितृतीयःपक्षः । तदुक्तं । "समुच्चयेनवामंत्रःप्रयुज्येतद्वयोरपि । प्रतिप्रधानमावृत्तिर्गुणानांनविरुध्यते । यद्य
पिस्याद्बलीयस्त्वंश्रुतेर्लिंगात्तथापितु । अविरोधादबाधःस्यात्संभवीहसमुच्चय" इति । अत्राहुः । "तन्नतावद्बलीयस्त्वंलिंगस्य
नचतुल्यता । विनियोगःश्रुतेःपश्चाल्लिंगस्यारादसौस्थितः । यावदेवहिमंत्रार्थोमंत्रेणप्रतिपाद्यते । तावदेवश्रुतिर्मंत्रंगार्हपत्यार्थ
तांनयेत् । मंत्रार्थंमंत्रतोबुध्वापश्चाच्छक्तिंनिरूप्यच । मंत्राकांक्षावशेनेहशेषत्वेश्रुतिकल्पना । श्रुत्याप्रत्यक्षयापूर्वंगार्हपत्यांगतां
गते । निराकांक्षीकृतेमंत्रेनिर्मूलाश्रुतिकल्पना । तेनशीघ्रंप्रवर्तिन्याश्रुत्यालिंगस्यबाधनं । प्रत्यक्षेचानुमानेचयथालोकेबला
बलं । शीघ्रमंथरवृत्तित्वात्तथेहश्रुतिलिंगयोः । अविरोधादबाधोयोवर्णितःसनयुज्यते । लिंगस्यद्विप्रमाणत्वंमंत्राकांक्षानिबं
धनं । तांचश्रुतिर्निकृंतंतीनाविरोधेनगच्छति । विरोधेचश्रुतिर्लिंगंबलीयस्त्वेनबाधते । गार्हपत्येतुसामर्थ्यंगौणंमंत्रस्यविद्यते ।
गुणाद्वाप्यभिधानंस्यादित्यत्रैतद्धिसाधित" मिति ।। [१०।१२]प्रत्यक्षेचेति ।। श्रुतिलिंगयोःशीघ्रमंथरगामित्वेनबलाबलचिंतायांप्रत्यक्षा

नुमानयोरुदाहृतत्वेनप्रत्यक्षस्यानुमानापेक्षयाबलवत्त्वंनिश्चितमित्यर्थः । ननुपरीक्षितस्यमंथरगामिनोपिप्राबल्यमितिचेन्मैवं । प्रत्यक्षेपिफलपर्यंतंपरीक्षायाःसत्त्वात् ॥ [१०।३।१] यदाहवनीयेजुहोतीत्यस्मादिति ॥ दशमस्याष्टमपादेचिंतितं "अविशेषेणयच्छास्त्रमन्याय्यत्वाद्विकल्पस्यतत्संदिग्धमाराद्विशेषशिष्टंस्यात्" ॥ ज्योतिष्टोमेश्रूयते पदेजुहोतिवर्त्मनिजुहोतीति । अन्यत्रश्रूयते गार्हपत्येपत्नीसंयाजान्यजतीति । तत्रयदाहवनीयेजुहोतीतिसामान्यविहितस्याहवनीयस्यविशेषविहितैःपदादिभिःकिंविकल्पोवा बाधोवेतिचिंत्यते । यदिसामान्यविशेषयोस्तुल्यबलवत्त्वंततोविकल्पः । यदिविशेषस्यप्राबल्यंततोबाधः । पूर्वपक्षस्तु । युक्तः श्रुत्यालिंगबाधः । शीघ्रगामित्वात् । लिंगादिकल्पकस्यतुशास्त्रस्यमंथरगामित्वात् । तवातिदेशस्यानुमानिकत्वात् । प्रत्यक्षेणशरादिशास्त्रेणविरोधेसतितद्विरोधंपरिहृत्यविषयांतरपरिकल्पनाद्युक्तःकुशानांबाधः । सामान्यशास्त्रंतुक्तसंप्रत्यक्षश्रुतंच । विशेषशास्त्रवदितितुल्यबलत्वाद्विकल्पएवयुक्तः । तदुक्तं । "सामान्यस्यापिलब्धत्वात्प्रत्यक्षेणविशेषवत् । नास्तिलिंगादिवद्भ्रमोनापिबाधोतिदेशवत्" इति । सिद्धांतस्तु । पत्नीसंयाजादिषुहोमविशेषेषुहोमसामान्येश्रुतस्याहवनीयस्यलक्षणयाप्राप्तिः । गार्हपत्यादितुश्रुत्यैवहोमविशेषेविधीयते । तेनास्मिन्विशेषेश्रुत्याशीघ्रप्राप्तगार्हपत्यादिकंलक्षणयामंथरप्राप्ताहवनीयंनिरुणद्धीतिबाधएव । तदुक्तं । "प्राप्तिःसामान्यशिष्टस्यविशेषेलक्षणावशात् । श्रुत्याविशेषशिष्टस्यतस्मादस्तिबलाबल" मिति । ननु पदाहवनीययोर्विकल्पइतिपूर्वःपक्षोबाधइतिसिद्धांतश्चनयुज्यते । अदृष्टार्थत्वात्पदाहवनीययोः । तथाहि । यदाग्नेयोऽष्टाकपालोभवतीत्यष्टाकपालेनकिंचित्प्रकृतिद्रव्यमाक्षिप्तं । तत्रव्रीहयोनियम्यंते । इहत्वाधारोनाक्षिप्तएव । वचनसामर्थ्याद्विधी

यते । नतुसामान्येनाक्षिप्तोनियम्यते । शक्यतेह्यनाधारोपिहोमःकर्तुं । तेनदृष्टार्थत्वान्नविकल्पः । नह्यनेनक्रीयमाणेदृष्टेऽन्य
स्यहेतुत्वमस्तीत्यत्रकिंचित्प्रमाणमस्ति तदुक्तंभाष्ये । नचयत्संबंधिसंबंधेनक्रियतेनतत्तनूनपात्संबंधेनेति । व्रीह्यादिनिर्वर्त्यपु
रोडाशनिर्वर्तनसामर्थ्यंतुनीवारादीनांप्रत्यक्षसिद्धमतस्तत्रयुक्तोनियमइतिव्रीह्यादीनांदृष्टार्थता । पदाहवनीययोस्त्वदृष्टार्थत्वा
न्नविकल्पोनवाबाधः । किंतुसमुच्चयएव । विरोधाभावात् । अतएवनदेवताग्निशब्दक्रियमन्यार्थसंयोगादितिदेवतादीनांप्रति
निध्यभावउक्तःषष्ठे । दृष्टार्थेतुप्रतिनिधिःस्यादेव । अतएवचानुयाजादृष्टेनोपकुर्वंतोनामनहोमादिभिरुपहोमैर्विकल्प्यंते । बा
ध्यंतेचेत्युक्तंदशमे । उदाहरणंचायुक्तं । पदेजुहोतियदाहवनीयेजुहोतीत्युभयत्रापिहोमसामान्यमेवश्रुतं । अतःसामान्यविशे
षभावाभावान्नबाध्यबाधकभावः । अत्राहुः । सत्यमाग्नेयोष्टाकपालोभवतीत्यत्रयथाप्रकृतिद्रव्याक्षेपस्तथानाक्षिप्तआहवनीयः ।
त्वयापिनत्वनाकांक्षितःसंबध्यते । तथाहि । यदाहवनीयइतिसप्तम्यंतंसाकांक्षंजुहोतीत्यनेननिराकांक्षीक्रियते । जुहोतीत्यपि
साकांक्षमाहवनीयेननिराकांक्षीक्रियते । तेनानयोराकांक्षावशादाधाराधेयभावरूपदृष्टएवसंबंधरूपउपकारइतिदृष्टार्थत्वाद्विक
ल्पादिःप्राप्नोति । नन्वेवंप्रतिनिधिःप्राप्नोति । दृष्टार्थत्वात् । द्रव्यांतरवत् । तथाचषष्ठाधिकरणविरोधइतिचेन्मैवं । यत्रनि
यमेनाक्षेपाददृष्टार्थता तत्रप्रतिनिधिः । द्रव्याद्यभावेपुरोडाशाभावेनयागस्वरूपासिद्धेरवश्यंकिंचिद्द्रव्यमाक्षिप्तमष्टाकपालेन ।
तद्व्रीह्यादिशब्दैर्नियम्यते । नचैवंप्रकृते । विनाहवनीयंनिराधारहोमनिष्पत्तेराहवनीयस्यनियमेनाक्षेपासंभवात् । तस्मान्नप्र
तिनिधिः । अतोनषष्ठाधिकरणविरोधः । नाप्युदाहरणानुपपत्तिः । असत्यपिसामान्यविशेषशब्देआहवनीयोहिपवमानेष्ट्यादि

भिरुत्पादितःप्रयोजनमपेक्षते । तस्यचानारभ्यवादेनाधिकरणभावोहोमेषुप्रयोजनंविधीयते सामान्येन । इहतुपदविशिष्टएव होमउत्पद्यते । तत्राहवनीयोनशक्यतेविधातुं । पदेनहोमस्यव्याप्तत्वात् । तथाचयदाहवनीयेजुहोतीत्यत्रसाधारानाधारांश्च होमाननूद्यविधीयमानआहवनीयः साधारेष्वयोग्यत्वेनबाधितोनाधारेषुहोमेष्ववतिष्ठतइतियुक्तमुदाहरणं । गार्हपत्येपत्नीसं याजान्यजतीत्यत्रतुनकश्चित्क्षुद्रोपद्रवः । तत्रपत्नीसंयाजशब्दोयागविशेषमेवब्रूतेश्रुत्या । यद्दाहवनीयेजुहोतीत्यत्रयागसामा न्यमेवश्रुत्यानविशेषं । कथंनपुनरत्रबाधोयावताद्वयोरपिशास्त्रयोःप्रत्यक्षत्वाज्जुहोतिशब्दविशेषाच्चपत्नीसंयाजेष्वपिविहितए वाहवनीयः । मैवं । जुहोतिशब्दादाकृतिन्यायेनपत्नीसंयाजस्यलक्षणयोपस्थितिर्विलंबेन पत्नीसंयाजशब्दात्तदुपस्थितिःशीघ्रे त्येवंवैधर्म्येणबाधसंभवात् । तस्मान्नपदाहवनीययोःसमुच्चयः । अपिवाहवनीयःपदनिरपेक्षःसप्तम्याधारत्वेनप्रतिपाद्यते । प दमप्याहवनीयनिरपेक्षं । तस्मादप्यसमुच्चयः । तद्यथाव्रीहिभिरितिव्रीहीन्करणविभक्तिर्यवनिरपेक्षानेवप्रतिपादयतियागसाध नत्वेन । तथायवैरिति । तथाचतद्वदेवासमुच्चयः । ननुतत्राशक्यत्वादसमुच्चयोननिरपेक्षश्रवणादितिचेन्न । तत्रयःसमुच्चयं कुर्यान्नासौपुरोडाशंननिर्वर्तयति । शक्येतेहिमिश्रैरपिपुरोडाशोभिनिर्वर्तयितुं । किंतुवाक्येनयोनयोःप्रतिपाद्यतेनैरपेक्ष्यरूपः संबंधस्तंबाधते । तेनशब्दादेवतत्रविकल्पोनवस्त्वसंभवात् । अपिचवस्तुस्वभावोपीहैवशक्यतेवक्तुं । तत्रव्रीहियवाभ्यामपिपु रोडाशोनिवर्ततएवनतुप्रत्यक्षविरोधः । पदाहवनीययोस्तुसमुच्चयेसत्याहवनीयःपदेवानिक्षिप्यते आहवनीयेवापदं । तत्रयदा हवनीयःपदेनिक्षिप्तोहोमाधिकरणंभवति तदाहवनीयेनपदस्यव्यवधानान्नपदमधिकरणंस्यात् । एवमन्यत्रापि । तस्मान्नशब्द

तोवस्तुकृतःपदाहवनीययोःसमुच्चयः । किंतुबाधएवेति ॥ तदिदं[१०।३।१]मुक्तंपदेजुहोतीत्यस्यविशेषविषयत्वादिति ॥ अविशेषेणयच्छास्त्रंतत्संदिग्धंविशेषेविलंबितं. विशेषशिष्टंत्वाराच्छीघ्रमेवविशेषेप्रवर्तते तस्मात्सामान्यस्यविशेषशास्त्रंबाधकमितिसूत्रार्थः । ननुसामान्यविशेषन्यायस्यनिश्चितप्रामाण्योभयविषयत्वं अन्यथायंगौरश्वइत्यादेरपिगौरश्वोनभवतीत्यादितःप्राबल्यंभवेदितिचेत् । मैवं । उत्सर्गतःप्राप्तस्वतःप्रामाण्यस्यप्रत्यक्षेनिश्चयाभावेबीजाभावात् । फलपर्यंतपरीक्षायाःसत्त्वाच्च ॥ यत्किंचित्[१०।३।२]प्राचीनमिति॥ अग्नीषोमीयपशोःपूर्वकालंयत्किंचिदनुष्ठीयते तत्रोपांशु मंदस्वरःकर्तव्यइतिश्रुत्यर्थः ॥ तथा[१०।३।३]वृत्त्यंतरेणेति॥ तंत्त्वमसीत्यादौवृत्त्यंतरेणलक्षणया ब्रह्मैवसन्ब्रह्माप्येतीत्यादौब्रह्मशब्दस्यानेकार्थत्वेन सर्वएकीभवंतीत्यादौस्थानैक्यादिविषयांतरपरत्वेनेत्यादिबोध्यं । न्यायस्त्वित्थं । नवमस्यप्रथमपादेचिंतितं देशबद्धमुपांशुत्वं तेषांस्याच्छ्रुतिनिर्देशात् तस्यचतत्रभावात् । ज्योतिष्टोमेश्रूयते शरावाएषयज्ञस्यतस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशुचरतीति । तत्रसंशयः । किमिदमुपांशुत्वंज्योतिष्टोमस्ययःप्राग्भागस्तद्धर्मःसत्परमापूर्वप्रयुक्तं ततश्चविकृतिषुतद्भागारंभकेप्राकृतेपदार्थेप्यूहितव्यमुताग्नीषोमीयात्पशोर्येप्राचीनाःपदार्थाःदीक्षणीयादयस्तेषांधर्मस्तदवांतरापूर्वप्रयुक्तं ततश्चाप्राकृतेपदार्थेयूपावटस्तरणबर्हिर्धर्मयन्नोहितव्यं । पूर्वपक्षस्तु । यज्ञशब्दोव्यवहितेनापिप्राचीनशब्देनसंबध्यते । प्रवृत्तिविशेषकरत्वात् । नतुसंनिहितेनापिशराशब्देन । तथात्वेर्थवादत्वेनप्रवृत्तिविशेषकरोनस्यात् । तस्माद्यज्ञस्यज्योतिष्टोमस्ययत्प्राचीनंप्राग्भागस्तदुपांश्वितिसंबंधः । यज्ञस्येत्यवयवव्यतिरेकजनिताषष्ठी । तेनप्राचीनशब्देनयज्ञावयवोभिधीयतेनपदार्थः । यद्यपिप्राचीनशब्दःपदार्थान्शक्नोतिविवक्षितुं । तथापिन । श्रु

त्याहिभागवचनएवप्रतीयते । तथाह्यक्षरोच्चारणमात्रेणैवप्राग्भागमाह । पदार्थास्तुलक्षणया । नहिप्राचीनशब्दःपदार्थान्स्वरूपेण वक्ति । किंतुप्राग्देशविशेषितान् । अतश्चाकृतिन्यायेनदेशेश्रुतिः पदार्थेषुलक्षणा । अस्तुवाशराशब्दस्यार्थवादस्यशेषोयज्ञशब्दः । तथापिनोपांशुतायाःपदार्थधर्मतासिद्धिः । ननुकथंनासिद्धिः । प्राचीनशब्दोग्नीषोमीयेणविशेष्यते । अतस्तस्यानवयवित्वादवधि मात्रत्वेनावस्थानात्प्राचीनशब्देननावयवोभिधीयते । अग्नीषोमीयात्प्रथमेपदार्थाएवत्वभिधीयेरन् । मैवं । प्राचीनशब्दोऽग्नीषो मीयेणनविशेष्यते । ननुयद्यग्नीषोमीयशब्देनप्राचीनशब्दोनविशेष्यते कस्यतर्हिप्राग्भागः सर्वथाहियेनकेनचिद्विशेषयितव्यः । सापेक्षत्वात् । सत्यंविशेषयितव्यः । किंतुप्रकरणलब्धविपरिवर्तिकज्योतिष्टोमेनैव । तस्माद्यज्ञशब्दस्यशराशब्दशेषत्वेपिनप्रा चीनशब्दस्याग्नीषोमीयशब्देनसंबंधसिद्धिः । किंचयज्ञशब्दस्यशराशब्दसंबंधादप्युपांशुतायाःपरमापूर्वप्रयुक्तत्वसिद्धिः । त थाहि । येयमुपांशुत्वऽनुष्ठितिरेषाशराशब्दाच्छन्नगतिर्यथाशकुनिंजिघृक्षतःप्रच्छन्नागतिर्भवति शनैःपदन्यासोदृष्टिप्रणिधानम शब्दकरणंचेतितत्सर्वंशकुनिग्रहणाय । तथैवानुष्ठातुरुपांशुत्वानुष्ठानंच्छन्नगतिरूपमनुष्ठानसाध्यांययज्ञसाध्यत्वाद्यज्ञशब्दप्रति पाद्यायपरमापूर्वायेति । तस्मादुपांशुतायाःपरमापूर्वप्रयुक्तत्वेनविकृतौकुंडपायिनामयनेप्यग्नीषोमीयपशोःप्राचीनेषूपांशुत्वस्यो हइति । सिद्धांतस्तु । पदार्थापूर्वप्रयुक्तमुपांशुत्वंयद्यनर्थकंभवति ततोर्थवत्त्वायव्यवहितकल्पनास्यात् । यज्ञस्येत्यश्रुतोवाक ल्प्येत । इहत्वध्याहारव्यवहितकल्पनाभ्यामृतेपियथाश्रुतएववाक्येघटमानेकिमर्थंव्यवहितकल्पनाऽध्याहारोवाश्रीयते । अ पिचप्राचीनशब्देयज्ञशब्देनविशेष्यमाणेपियद्यग्नीषोमीयपदमविवक्षितंस्यात्तथासतिसाकांक्षत्वाद्वाक्यमेवनघटते । कतरस्मा

त्पदार्थात्प्रागितिसापेक्षत्वात्प्राक्शब्दस्य । तस्मादग्नीषोमीयशब्दोऽवश्यंविवक्षणीयोभवति । तेनसुदूरमपिगत्वाप्राचीनशब्दस्याग्नीषोमीयशब्देनसंबंधएषितव्यः । तद्वरमादावेवप्राचीनशब्देनाग्नीषोमीयशब्दःसंबंधनीयः । किंचयज्ञस्ययत्प्राचीनमित्यन्वयेप्राचीनशब्देनप्रमितसंबंधःकिंचिच्छब्दोनन्वितःस्यात् । तथाहि । किंचिच्छब्दोयमज्ञातेज्ञातुमिष्टेवर्तते । देशश्चज्ञात एव । प्राचीनशब्दस्यतद्वाचिनःश्रुतत्वात् । नाप्ययमनुवादः । यच्छब्दोत्तरकिंचिच्छब्दोहिवीप्सार्थेवर्तते । नचैकस्मिन्नेवप्राचीनशब्दार्थेवीप्सासंभवति । तस्मान्नानुवादोनाप्युत्सर्ष्टव्यार्थः । पदेवाक्येचगम्यमानार्थत्वात् । तस्माद्ग्रहैकत्वादिवदविवक्षाकारणाभावाद्वीप्सावाचीसन्नयमवश्यंविवक्षितार्थः । पदार्थपरत्वेचप्राचीनशब्दस्यतेषांबहुत्वात्किंचिदितिशब्दार्थोनुगृहीतोभवति । भागधर्मत्वेतुतस्यैकत्वात्किंचिच्छब्दार्थोवीप्साबाध्येत । अतःकिंचिच्छब्दस्यमुख्यत्वात्तदबाधायतदनुसारेणजघन्यस्यप्राचीनशब्दस्यवर्णनात्प्राचीनशब्दःप्राग्देशावच्छिन्नपदार्थानेवामुख्यवृत्त्याऽभिदधाति । एतेनाकृतिन्यायोपिपरास्तः । तस्माद्यत्किंचिच्छब्दस्यप्रकृतविशेषवाचित्वं ॥ तदिदमुक्तंयत्किंचिच्छब्दस्यप्रकृतविशेषवाचित्वेनेति ॥ देशसंबद्धमुपांशुत्वंतेषांपदार्थानामेवधर्मःस्यात् । नतुयज्ञावयवस्य । कुतः । प्राचीनमग्नीषोमीयशब्दयोःसंबंधस्यश्रुतिनिर्देशात् । शब्दश्रवणादेवप्रतीयमानत्वात् । प्राचीनमग्नीषोमीयादितिहिश्रूयते । नहियज्ञस्ययत्प्राचीनमित्येवंविधंवाक्यंश्रूयते । अथवाग्नीषोमीयादितिपदार्थःश्रुतः । सचोदितःप्राग्भाविनःपदार्थान्स्वसंबद्धानुपस्थापयति नयज्ञभागमित्यभिप्रेत्यश्रुतिनिर्देशादित्युक्तं । श्रुतिनिर्देशादग्नीषोमीयस्येत्यर्थः । पदार्थानामुपांशुत्वंप्रतिप्रयोजकत्वेनिष्प्रयोजनपदार्थप्रयुक्तमुपांशुत्वंव्यर्थंस्यादतआह ॥ तस्यचत

त्रभावादिति । तस्यावांतरापूर्वस्यप्रयोजनस्यतत्रसन्निपातिषुसोमप्रवहणीयसूक्तादिद्वारादुपकारेषुचप्रायणीयाप्रयाजादिषु भावात् । नह्यात्मसमवेतादृष्टमेवापूर्वशब्दं । अपितुव्रीह्यादिसमवेतःसंस्कारोप्यपूर्वशब्दः । तस्मात्सन्निपात्यारादुपकारकंचो पांशुतांप्रयोजकं । तदुक्तं “संस्कारोपिह्यदृष्टत्वादपूर्वमितिगीयते । प्रयाजापूर्ववत्तस्मादुभयंस्यात्प्रयोजक” मिति । इतिसू त्रार्थः ॥ [१०।३।१] यावत्यावाचाकामयीतेति ॥ नवमस्यद्वितीयाधिकरणद्वितीयवर्णकेविचारितं । संस्कारेयुज्यमानानांतादर्थ्याच्च त्प्रयुक्तंस्यात् । ज्योतिष्टोमेश्रूयते यावत्यावाचाकामयीततावत्यादीक्षणीयायामनुब्रूयात् मंद्रंप्रायणीयायांमंद्रतरमातिथ्यायां उपांशूपसत्सुउच्चैरग्नीषोमीयइतिश्रुतेर्वाङ्नियमाख्यःसंस्कारोज्योतिष्टोमापूर्वप्रयुक्तोवादीक्षणीयाजन्यफलभोक्तृत्वयोग्यतारूपय जमानसंस्काररूपदीक्षणीयापूर्वप्रयुक्तोवेतिसंशयेपूर्वःपक्षः । अवश्यंह्यत्रदीक्षणीयाशब्देनापूर्वसाधनत्वंलक्षयितव्यं । श्रुत्यर्थे आनर्थक्यापत्तेः । तत्रकिमितिफलवत्परमापूर्वलक्षणयातादर्थ्येसंभवति निष्फलावांतरापूर्वार्थत्वमाश्रीयते । तस्माद्दीक्षणीया परमापूर्वप्रयुक्तएववाङ्नियमः । तदुक्तं । “फलवत्परमापूर्वंतच्छेषत्वंततोभवेत् । स्वापूर्वंक्रतुशेषत्वान्नस्वयंफलवद्यतः + फलव च्छेषतायुक्तानतुनिष्फलशेषता । तस्मान्नसाधनेरूपेस्वरेभेदोभिधीयत” इति । सिद्धांतस्तु । दीक्षणीयाआत्मीयमपूर्वंलक्ष यति । प्रथमंतेनचधर्माणांसंबंधः । तस्यापिफलवत्त्वेनतदतिक्रमकारणाभावात् । परमापूर्वंतुलक्षितलक्षणया । अतःप्रथमो पस्थितफलवत्स्वापूर्वप्रयुक्तएववाङ्नियमः । तदुक्तं । “एवमाश्रीयमाणेहिभवेल्लक्षितलक्षणा । स्वापूर्वेलक्षणामात्रंतस्माल्लक्षितल क्षणा । तच्छेषत्वेपिधर्मस्यनानर्थक्यंप्रसज्यते । तस्याप्यदृष्टरूपत्वात्फलापूर्वोपयोगतः” इति । तत्रस्वरांतराणामस्यचसमावे

शोनिरूप्यते । दीक्षणीयायायाजुर्वेदिकत्वादुपांशुयजुषेतिनानावेदस्वरूपोपांशुत्वंप्राप्नोति । तच्चोदकेनबाध्यते । कथंप्राक्स्वि
ष्टकृतःप्रथमस्थानेनमध्यमेनेडायाः शेषेत्रितीयस्थानेनेत्येतत्स्थलवैचित्र्यंचोदकप्राप्तं । तच्चोदकाश्रयत्वात्प्रयोगवचनाश्रयनाना
वेदस्वरापेक्षयाबलवत् । तदपियत्किंचित्प्राचीनमग्नीषोमीयादित्यनेनवाचनिकेनोपांशुत्वेनबाध्यते । ततश्चपुनरपिदीक्षणीया
दीनांसांगानामुपांशुत्वमेवप्राप्तं । तदपियावत्यान्नाचाकामयीततावत्यादीक्षणीयायामनुब्रूयादित्यनेनवाङ्नियमेनबाध्यते । न
न्वग्नीषोमीयात्प्राचीनेषुप्रायणीयातिथ्योपसत्सुवाचनिकएवतत्तत्स्वरनियमइतियत्किंचित्प्राचीनमित्यनेनोक्तमुपांशुत्वंक्वविधीये
त उपसत्सुपुनरनुवादएवस्यादितिचेदुच्यते । दीक्षणीयादिशब्दवाच्येवाङ्नियमोविधीयते । दीक्षणीयादिशब्दश्चप्रधानमात्रे
वर्ततेनांगेषु । तेनप्रधानेषुयावत्यावाचेतिविहितःस्वरः । तदंगेषुतूपांशुत्वमिति । नन्वेवमग्नीषोमीयात्प्राचीनेप्रवर्ग्येपिउच्चैः
प्रवर्ग्येणेतिविहितमुच्चैस्त्वंप्रधानमात्रेस्यात् । अंगेषूपांशुत्वमेवस्यादितिचेन्न । उच्चैःप्रवर्ग्येणेतिकरणविभक्तिनिर्देशात्सांगस्यैवक
रणत्वेनसांगस्यैवोच्चैस्त्वं । दीक्षणीयादिषुतुकरणविभक्तिनिर्देशाभावात्प्रधानमात्रधर्मतेतिविशेषः यच्चपूर्वपक्षेभाष्यकारमतेप्रयो
जनमुक्तंमासाग्निहोत्रादिषूपांशुत्वस्यप्राप्तिरिति तद्वार्तिककारोनमन्यते । तथाहि । कौंडपायिनामयनाग्निहोत्रादीनांनैय्यमि
काग्निहोत्रादिभ्योनाम्नान्यस्वरःप्राप्नोति । चोदकेनचेदमुपांशुत्वं । चोदकाच्चनामधेयंबलवत् । तस्मादन्यत्प्रयोजनंवाच्यं ।
तदुच्यते । राजसूयेपुरस्तादुपसदांसौम्येनप्रचरंति अंतरात्वाष्ट्रेणोपरिष्टाद्वैष्णवेनेति । पूर्वपक्षेसौम्यादिषूपांशुत्वं । सिद्धांतेतु
नेति । ननुयत्किंचिच्छब्देनापिप्रकृताविशेषाउच्यंते । दीक्षणीयादिभिरपिशब्दैर्विशेषाएव । तत्रद्वयोर्विशेषप्रवृत्तेर्नास्तिबाध्य

बाधकभावः । तस्माद्दीक्षणीयादिष्वप्रधानेषुविकल्पःप्राप्नोति । मैवं । दीक्षणीयादिभिःशब्दैर्वर्णोपात्तमेवप्रधानं । तस्माद्विव र्णश्रवणादेवान्यनैरपेक्ष्येणदीक्षणीयादिप्रधानंप्रतीयते । यत्किंचिच्छब्देनतुनकश्चिद्वर्णोपात्तःपदार्थःप्रतीयते । किंतुप्रकरणा लोचनंसंव्यपेक्षः । वर्णोपात्तेननिरपेक्षेणावर्णोपात्तःसापेक्षोविरोधेसत्यवश्यंबाधनीयः । एवंचयोग्यताज्ञानापेक्षआगमस्तन्निर पेक्षप्रत्यक्षेणसंकोचनीयइत्यभिप्रायः । किंचदीक्षणीयातिरिक्तेदीक्षणीयांगेसावकाशमुपांशुत्वं । यावत्प्रावाचेतिविहितस्वरस्तु दीक्षणीयेतरत्रनिरवकाशइतिदीक्षणीयस्वरस्तस्यसंकोचकोभवति । तदिदमुक्तं । दीक्षणीयातिरेकेसावकाशत्वादिति । संस्कारे दीक्षणीयादौ युज्यमानानां विधीयमानानां तत्परमापूर्वमेव प्रयोजकंस्यात् । कुतः । दीक्षणीयादेस्तादर्थ्यात् परमापूर्वार्थ त्वादितिसूत्रार्थः । ननुतात्पर्यलिंगैरुपक्रमादिभिर्द्वैतनिषेधपरत्वेवधृतेअद्वैतश्रुतेरपिनिरवकाशत्वात्प्रत्यक्षस्यापिव्यावहारिकद्वैत विषयतयासावकाशत्वात्तद्विरुद्धयोर्द्वयोरहंमनुष्यइत्यादिप्रत्यक्षाकाशवत्सर्वगतश्चनित्यइत्यादिश्रुत्योरिवतात्त्विकप्रामाण्यानुपप त्तावकस्यचिद्व्यावहारिकंकस्यचित्तात्त्विकंप्रामाण्यमभ्युपेयं । अत्यंताप्रामाण्यस्यान्याय्यत्वात् । तत्राद्वैतश्रुतेर्व्यावहारिकप्रामा ण्यसंभवेद्वैतग्राहिप्रत्यक्षादेस्तात्त्विकंप्रामाण्यंभवेत् । तदसंभवेतुवलादेवाद्वैतश्रुतेस्तात्त्विकंप्रामाण्यमितिप्रत्यक्षादेर्व्यावहारिकं प्रामाण्यंपर्यवस्यतीति कृतबुद्धयोविदांकुर्वंत्विति । अत्रोच्यते । तदुपक्रमादिलिंगैःश्रुतेर्द्वैतनिषेधपरत्वेपिप्रत्यक्षगृहीतघटादी तरविषयत्वेनसावकाशत्वनिरवकाशत्वाभ्यामुभयोरपितात्त्विकप्रामाण्योपपत्तौनाप्रामाण्यापरनामधेयव्यावहारिकप्रामाण्यंप्रत्य क्षस्येतिसाधुकृतबुद्धयोविदांकुर्वंत्विति ॥ पंचदशंसूत्रम् १०।३।१३ इति ॥ द्वादशस्यद्वितीयेविचारितं । विप्रतिषिद्धधर्माणांसमवायेभूय

सांस्यात्सधर्मत्वं। अस्तिपंचदशरात्राख्यंसत्रंपंचदशसुत्यात्मकं। तस्यप्रथमंसौत्यमहरग्निष्टुन्नामकं। ततःपराणित्रीणिज्योतिर्गौरायुरित्येतन्नामकानि। परिशिष्टान्येकादशद्वादशाहिकानि। अग्निष्टुज्ज्योतिर्गौरायुरित्येतन्नामकाऐकाहिकाःक्रतवःप्रसिद्धाअपरेवर्तंते। तेषांनामान्यग्निष्टुदादीनिपंचदशरात्रस्यप्रथमदिवसचतुष्टयेधार्यंते। तदीयेतिकर्तव्यताप्राप्त्यर्थंकुंडपायिनामयनेअग्निहोत्रनामवत् सुब्रह्मण्याह्वानंचातिथ्यांतेउपसत्कालेचसुत्याकालीनंच। तत्रसुत्याकालीनंसुब्रह्मण्याह्वानंभिन्नकालत्वान्नतंत्रमर्हतीतिततःसुत्याकालएवक्रियते। आतिथ्यांतेउपसत्कालेसुब्रह्मण्याह्वानंतुसमानदेशकालकर्तृत्वादहर्गणेषुतंत्रमित्येकादशेवर्णितं। पंचदशरात्रस्यचाग्निष्टुन्नामकंप्रथममहरग्निष्टुन्नामकैकाहविकृतित्वात्तद्धर्मभूताग्नेयीसुब्रह्मण्यांगवत्। ततःपराणित्रीणिज्योतिर्गौरायुरित्येतत्संज्ञकान्यहानिज्योतिर्गौरायुरित्येतत्संज्ञकैकाहविकृतित्वात् तदंगभूतैंद्रीसुब्रह्मण्याधर्मकाणि। परिशिष्टान्येकादशद्वादशाहविकृतित्वादैंद्र्यासुब्रह्मण्ययोपेतानि। एवंचाद्यस्याह्नआग्नेयीसुब्रह्मण्यांगं। परिशिष्टानांचतुर्दशानामैंद्र्यंगं। अतएववसतीवरीग्रहणोत्तरकालंसुत्याकालेयथायथंआग्नेयीऐंद्र्यश्चसुब्रह्मण्याआहूयंते। प्रधानभूतैरेभिश्चपंचदशसुत्याभिरातिथ्यांतेउपसत्कालेचसुब्रह्मण्याह्वानंतंत्रेणक्रियमाणमाकांक्षितं। तत्राग्नेय्याप्रथमयासुत्ययानुरूपत्वेनाग्नेयीसुब्रह्मण्याकांक्षिता। परिशिष्टाभिरैंद्रीसुत्यादिभिःस्वानुरूप्येणैंद्रीसुब्रह्मण्याकांक्षिता। तदिहातिथ्यांतेउपसत्कालेचसुब्रह्मण्यायांसंदेहःकिमाग्नेयीसुत्यानुसारेणाग्नेय्याह्वातव्याआहोस्विदैंद्रीसुत्यानुसारेणैंद्रीआह्वातव्येति। तत्राग्नेय्याःसुत्यायाःप्राथमिकत्वेनमुख्यत्वादसंजातविरोधित्वाच्चाग्नेय्येवाह्वातव्यानत्वैंद्री। चरमोपस्थितत्वेनामुख्यत्वात्संजातविरोधित्वाच्चेतिपूर्वपक्षेप्राप्तेसिद्धांतितं। बहूना

मनुग्रहस्यन्याय्यत्वादैंद्र्येवाह्वातव्येतिभाष्यकारोवर्णयांबभूव । तदेतद्वार्तिककारोनानुमन्यते । तथाहि । यत्रान्यार्थेनान्यस्यो
पकारसिद्धिस्तत्रप्रसंगः । नचोपसत्कालीनाग्नेय्यासुब्रह्मण्यऐंद्रःसंस्कृतोभवति । ऐंद्र्यावातयाग्निः । यथाग्नयेजुष्टंनिर्वपामीति
निर्वापमंत्रःसंस्कारकत्वात्प्रतिनिर्वापंभिद्यतेएवमियमपि । अतएवनतंत्रता । तेनोभेअपिभेदेनाह्वातव्येइत्यनुदाहरणं ॥ सुब्र
१०।३।५ ह्मण्येति ॥ इदमुदाहरणंकाम्येष्टिकांडेश्रूयते । अग्नयेदात्रेपुरोडाशमष्टाकपालंनिर्वपेत् इंद्रायप्रदात्रेपुरोडाशमेकादशकपालंद
धिमधुघृतंपयोधानास्तत्संसृष्टंप्राजापत्यंपशुकामइति । तदिमानिसप्तहवींषि । आग्नेयमैंद्रंप्राजापत्यानिपंचेति । तत्राग्नेयंप्राजा
पत्याश्चधानाआग्नेयविकारत्वादुभयथाप्यविरुद्धाः । यस्त्वैंद्रःपुरोडाशोयच्चप्राजापत्यंदधितयोःक्रमेणैंद्राग्नसान्नाय्यविकारत्वाद
मावास्याधर्मापेक्षा । मधुघृतापानांतूपांशुयाजविकारत्वात्पौर्णमासिकधर्मापेक्षा । मधूदकयोराज्यविकारत्वमष्टमेसिद्धं । घृत
स्यत्वसंदिग्धमेव । तदेतेषुसप्तसुयागेषुसहप्रक्रांतेष्वभिमर्शनमंत्राज्यभागमंत्रयोर्विरोधः । चतुर्होत्रापौर्णमासीमभिमृशेत्पंच
होत्रामवास्यायामभिमृशेदित्यभिमर्शनमंत्रौविहितौ । पृथिवीहोता द्यौरध्वर्युः रुद्रोग्नीत् बृहस्पतिरुपवक्ता इत्ययंचतुर्हो
तृमंत्रः । अग्निर्होता अश्विनाध्वर्यू त्वष्टाग्नीत् मित्रउपवक्ता इत्ययंपंचहोतृमंत्रः । एताभ्यांचतुर्होतृपंचहोतृमंत्राभ्यां
हविषांपुरोडाशादीनामभिमर्शनंपूर्णमास्यमावास्ययोर्भेदेनविहितं । तत्रसंसृष्टत्वाद्धविषांसकृदेवाभिमर्शनंसर्वेषांपूर्णमासीहवि
षामेवमेवामावास्यायामपिसर्वेषांहविषामभिमर्शनंसकृदेव । नह्यभिमर्शनद्वयमस्ति । येनैकस्यहविषस्तत्कृत्वापरस्यापिक्रियेत ।
वाक्यांतरविहितेह्यभिमर्शनेमंत्रद्वयमिदंव्यवस्थयाविधीयतइत्यष्टमेवर्णितं । नचकृतस्याप्यभिमर्शनस्यमंत्रांतरेणाभिमर्शनंनकृत

मितिमंत्रार्थमावृत्तिर्युक्ता । अंगानुरोधेनप्रधानावृत्तेरभावात् । तथाचप्रकृतेष्टौपूर्णमास्यमावास्याविकाराणांहविषांसहाभिमर्शनेकर्तव्येतत्स्मरणार्थयोर्मंत्रयोरस्तिविरोधः । वार्त्रघ्नीपौर्णमास्यामनूच्येतेवृधन्वतीअमावास्यायामित्यनेनाज्यभागयोर्व्यवस्थया मंत्रौविधीयेते । तौचपौर्णमासीविकाराणांवार्त्रघ्नावाज्यभागमंत्रौप्राप्तौ । दर्शविकारयोस्तुवृधन्वंतौ ॥ नचान्यतराभ्यांमंत्राभ्यांकृतावाज्यभागौपुनर्मंत्रार्थमावर्तनीयौ । अंगानुरोधेनप्रधानावृत्तेरभावात् । तदिहकिममावास्याधर्माभ्यांवृधन्वतीभ्यांऋग्भ्यामाज्यभागौकर्तव्यौ । ताभ्यामेवचप्रसंगकार्यस्यसिद्धत्वात्पौर्णमासीकौमंत्रौनिवर्तेते । अथवापौर्णमासीधर्माभ्यांवार्त्रघ्नीभ्यांऋग्भ्यामाज्यभागौकर्तव्यौ । ताभ्यामेवचप्रसंगकार्यसिद्धेरमावास्यामंत्रौनिवर्तेतेइतिसंदेहे आग्नेयस्योभयथाप्यविरुद्धत्वादैंद्रदध्नोःप्राथमिकत्वादसंजातविरोधित्वाच्च तद्धर्मानुग्रहायवृधन्वत्यावेवाग्निःप्रत्नेनमन्मना सोमगीर्भिष्ट्वावयमित्येतेऋचौकर्तव्येइतिप्राप्तेसिद्धांतः । भूयसांमधुघृतापानामनुग्रहायवार्त्रघ्नावेवाग्निर्वृत्राणिजंघनत्त्वंसोमासिसत्पतिरित्येतेकर्तव्येइति ॥ नचात्रपूर्ववदन्यतरमंत्रेणान्यतरस्यानुपकारःशंकनीयः । अग्नीषोमयोराज्यभागादेवतयोरुभाभ्यांमंत्राभ्यामविशेषेणैवसंस्कार्यत्वात् ॥ नचवृत्रहवृधन्वद्रूपेणान्यतरस्यैवसंस्कारकत्वमितिवाच्यं । विष्णुशिपिविष्टादिवद्वृत्रहादिरूपेणाग्नीषोमयोर्देवतात्वाभावात् । किंतूभयत्राग्नीषोमावविशिष्टावेवदेवते । मंत्रस्यैवपरंतत्तच्छब्दभेदेनभेदः । अन्यथावृत्रघ्नेऽग्नयेऽनुब्रूहीतिप्रैषाद्यापातात् । यदाहाश्वलायनो "लिंगविशेषान्नामधेयान्यत्व" मिति । तदिहमधुघृतापापेक्षितमंत्रेणैवोपकारःसंपादनीयः । नत्वैंद्रपुरोडाशदध्यपेक्षितमंत्रेण । वहूनामनुग्रहस्यन्याय्यत्वात् । यद्यपिमुख्यस्यधर्मःप्रथममवगम्यते तथापिपश्चाद्भूयोनुग्रहमालो

च्यबाध्यते । नचात्राग्नावैष्णवंद्वादशकपालंनिर्वपेत् अपराह्णेसरस्वतीमाज्यस्ययजेतेतिमध्वरकल्पाहविषोरिवसमुयोर्विप्रति षेधः । येनप्रथमोपस्थितस्यानुग्रहःकल्प्येतेति । नचमुख्यानेकानुग्रहयोःकतरोनुसरणीयोनियामकाभावादितिवाच्यं । बहुसा द्गुण्यस्यैवनियामकत्वात् । यथांगगुणविरोधाधिकरणेमुख्यमपिदीक्षणीयाधर्मत्वंबाधित्वाप्रधानधर्मत्वबलेनसुत्याकालएवानुग्र हीष्यते । तदुक्तंशास्त्रदीपिकायां । नह्यल्पवैगुण्येसंभवतिभूयोवैगुण्यंप्रयोगवचनःक्षमते । अन्नगतमपिहिकारणांतरवशाद्बा ध्यतइति । तस्माद्भूयोनुग्रहोन्याय्यः । अत्रचभाष्यकारमतेनाधिकरणन्यायोक्तिरितिसर्वमनवद्यं । उदाहृतसूत्रार्थस्तुस्पष्टः । आग्नेयीप्राप्ता आतिथ्यांतेउपसत्सुचेतिशेषः ॥ चोदकेन[१०।४।१]प्राप्तयेति ॥ ननुचोदकादपिनामधेयंप्राबल्यंनवमेसाधितं । तत्कथं चोदकप्राप्तयाऐंद्र्यानामातिदेशेनप्राप्तायाआग्नेय्याबाधोवर्ण्यते । सत्यं । नामधेयप्राबल्यमेवनामांतरेणाक्षिप्यते । नहिनामधे येनचोदकप्राप्तिरेकादशस्वहस्सुनिराकर्तुंशक्यते । तस्याग्निष्टुद्विषयत्वात् । भिन्नविषययोश्चबाध्यबाधकभावाभावात् । तेनचो दकतस्तेषुनामधेयतश्चाग्निष्टुतियथायथंविध्यंतेप्राप्तेयत्रविरोधोभवति तत्रभूयस्त्वेनकारणेननामप्राप्तापिबाध्यते । वस्तुतस्तुपं चदशरात्रस्यप्राथमिकेषुचतुर्ष्वहस्स्वग्निष्टुज्ज्योतिर्गौरायुरित्येतन्नामातिदेशेनैकाहिकाःधर्माःप्राप्नुवंति । तत्रप्रथमेह्याग्नेयी । त्रिष्वैंद्र्यः । एवंचातिथ्यांतेउपसत्कालेचसुब्रह्मण्याग्निष्टुन्नामाग्नेयीप्राप्ता । ज्योतिर्गौरायुरितित्रिभिर्नामभिरैंद्रीप्राप्ता । तथावि रोधेबहूनामनुग्रहेणातिथ्यांतेउपसत्सुचैंद्र्येवसुब्रह्मण्येतिबह्वनुग्रहोद्रष्टव्यः । ननुचतुर्दशाहस्सुचोदकेनप्राप्तयेत्यनुपपन्नं । एका दशस्वेवाहःसुचोदकप्राप्तेर्निर्णीतत्वादितिचेत् सत्यं । चतुर्दशाहस्स्वित्यस्यचतुर्भ्यःपराणिदश चतुर्दश । तानिचयोग्यत्वादहान्ये

व । चतुर्दशचाहश्चचतुर्दशाहानितेषुचतुर्दशाहस्स्वित्यर्थः । एवंचअग्निष्टुज्ज्योतिर्गौरायुरित्येतेभ्यःपराणिपंचमप्रभृतीनिअचतुरीणिचतुर्दशांतानिमन्यंते । अहःशब्देनोत्तममहः । एवंचैकादशानिचतुर्दशाहःशब्देनोपस्थाप्यंते । अतोनवार्तिकादिविरोध इतिप्रतिभाति । यद्वाचतुर्दशाहस्सुप्राप्तयाऐंद्र्येतिसंबंधः । चोदकेनेत्यतःपरंनामधेयेनेतिशेषः । तथाचनामधेयसमुच्चितेनचोदकेनचतुर्दशाहस्सुऐंद्र्येवप्राप्तातयाऽऽग्नेय्यानिवृत्तिरित्यर्थः ॥ ऐंद्र्यांबहुविषययाबाध्यइति ॥ यद्यपिनायंबाधस्यविषयः । किंतुप्रसंगस्य । तथापिफलतोबाधस्यविषयोभवतीतितदुक्तिरित्यर्थः । अत्रैवंवाक्यार्थः । प्रथमेहनिप्रथमसुत्याग्रयांसुब्रह्मण्याग्नेयीत्यतः परंअग्निष्टुत्सुत्यादेवतासंस्कारानुगुणाययथाक्रियंतेवसतीवरीग्रहणोत्तरकालंतथापंचदशसुत्यासाधारणांगदिवसेआतिथ्यांतेउपसत्सुचप्रथमोपस्थिताग्निष्टुत्सुत्यादेवतासंस्कारानुसारेणाग्नेय्येवसुब्रह्मण्येत्यध्याहरणीयं प्राप्तातस्याःआतिथ्यातेउपसत्सुचप्राप्तायाआग्नेय्याःसुब्रह्मण्यायाःचतुर्दशसुसुत्यासुनामातिदेशेनचोदकेनचप्राप्तऐंद्र्यासुब्रह्मण्यया ॥ अत्रऐंद्र्यासुब्रह्मण्येत्यतःपरंचतुर्दशसुत्यादेवतासंस्कारत्वेसादृश्यात्तदंगदिवसेआतिथ्यांतेउपसत्सुचप्राप्तयाऐंद्र्यासुब्रह्मण्ययेत्यध्याहार्यं ॥ ततःबहुविषयेत्यादि पठनीयं । एवमध्याहारेणयोजनेनकाचिदनुपपत्तिः । यथासुत्याकालीनसुब्रह्मण्यायाःबाधाभावस्योक्तत्वात् । तदेतत्सहृदयैराकलनीयं । अयंचार्थोभाष्यकारमतेन । यथातुवार्तिकेतथानैतदिष्यतइतिप्रागवोचाम । ननुदृष्टांतेबहुविषयबाधोत्रतुबहुभिरितिवैषम्येदेहात्म्यैक्येप्रत्यक्षानुमानशब्दाभासादिसत्त्वेपिदेहात्मभेदबोधकस्यानन्यपरत्वेनप्राबल्यवदत्राप्यनन्यपरत्वेनाद्वैतश्रुतेःप्राबल्यात् विद्याविद्याभेदेनविद्वदविद्वत्पुरुषभेदेनचविरोधाभावादितिचेत् मैवं । बहुबाधप्रसंगस्यबाधबीजस्यसत्त्वेनय

थाबहुविषययाल्पविषयायाबाधस्तथातेनैवबाधबीजेनबहुभिरप्यल्पबाधस्यसंभवात् । यद्वाभेदग्राहकमानत्वंबाधकत्वसमाना
धिकरणंबहुविषयकत्वसमानाधिकरणत्वात् क्रतुविशेषातिदिष्टेंद्रप्रकाशकसुब्रह्मण्यात्ववदित्यत्रतात्पर्यात् । अतएवताद्दशमे
वोदाहरंति ॥ [१०४।४] तदुक्तमिति ॥ बहूनांप्रमाणानांविरोधेसतीत्यर्थः ॥ ९ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृत
तरंगिण्यांजात्याक्षंबलवन्नयैः ॥ प्रत्यक्षस्यजात्योपक्रमादिन्यायैश्चप्राबल्यं ॥ १० ॥ ९ ॥ ९ ॥ [१०४।५] श्रुतेःस्मृतितइति ॥ प्र
थमस्यतृतीयेभिहितं । धर्मस्यशब्दमूलत्वादशब्दमनपेक्षंस्यात् । मन्वादिस्मृतीनांप्रामाण्यसिद्ध्यर्थंश्रुतिमूलत्वसदसद्भावविचा
रणायांपूर्वपक्षः नतावदमीषांप्रत्यक्षादिमूलत्वेनप्रामाण्यं । तेषांधर्माधर्मयोरप्रवृत्तेः । नापिस्वातंत्र्येणवेदवत् । पौरुषेय
त्वात् । नचोद नामूलत्वेन । तदनुपलंभात् । नहितासांप्रत्यक्षेणोपलंभसंभवः । अनुच्चार्यमाणत्वात् । उच्चार्यमाणत्वेवास्मृ
तिप्रणयनवैयर्थ्यं । प्राक्पठिताअपिसंप्रतिपुरुषाशक्त्याउत्सन्नाइतिचेत् किमेकाकाचिच्छाखास्मार्तश्रुतिसंघातात्मिकापूर्वमा
सीत्सेदानीमुत्सन्नेतिकल्प्यतेकिंवाबहुशाखास्वितस्ततःश्रुतयःस्मृतिमूलभूताःपठिताःसंप्रत्युत्सन्नाइति । तत्रसहस्रंसामशाखाः
एकशतमध्वर्युशाखाएकविंशतिशाखाबह्वृचःइत्यादिशाखापरिमाणस्यपरंपरयासर्वलोकंस्मरणान्नातोधिकाशाखासंभावयितुंश
क्यते । नापिपठ्यमानानामत्यंतावहिताध्येतृकाणांमध्येकासांचिच्चोदनानामुत्सादसंभवः । नापिनित्यानुमेयाः । अंधपरंपरा
पातात् । ननुस्मृतिलिंगवशेननिश्चेष्यंतेचोदनाः लिंगादिनेवश्रुतयइतिचेत्विषमउपन्यासः । लिंगादयोहिसर्वपुरुषप्रत्यक्षविष
याःश्रुतिमंतरेणानुपपद्यमानाः युक्तंयत्तस्यानिश्चयमादधति । स्मृतिवाक्यरचनात्पौरुषेयीयदर्थविषयोमलभ्यतेतद्विषयमेवर

चयितुर्ज्ञानंकल्पयति । अष्टकाकर्तव्यताविषयंचस्मृतिवाक्यमिति । नूनमयमष्टकाकर्तव्यतांवेदेत्येतावत्प्रथमंकल्प्यते । नश्रुतिस्वरूपंनापितज्ज्ञानं । एवमर्थज्ञानेस्मृतिकारस्यकल्पितेपश्चाद्‌ज्ञानलिंगाज्ज्ञेयभूतार्थानुमानं । नश्रुतिकल्पनं । अथोच्येत । नखलुपरकीयेनज्ञानेनझटित्येवार्थनिर्णयः । मूलानुसंधानसापेक्षत्वात् । तत्रस्मृतिकारस्यार्थविषयज्ञानमनुसंदधानःस्मृत्यंतरंमेवसंभावयेत् । तदपिचज्ञानस्यैवलिंगंनार्थस्य । एवंचततःपूर्वतरमपिस्मरणंज्ञानस्यैवलिंगंनार्थस्येतिनक्कचिदर्थनिश्चयोलैंगिकोलभ्यतइतिश्रुतिरेवकल्पयितव्या । यद्येवंश्रुतावपितुल्यमेवैतत्स्मृतिकारस्यमूलतयाश्रुतिज्ञानमेवप्रथमंकल्प्यतेनश्रुतिसद्भावः । श्रुतिविषयेणतुज्ञानेनज्ञेयभूतश्रुतिनिर्णयः । परज्ञानेनचतद्विषयश्रुतिनिश्चयोमूलानुसंधानसापेक्षः । मूलंचस्मृतिकारस्यस्मृत्यंतरमेव । तदपिचार्थज्ञानद्वारेणश्रुतिज्ञानस्यैवलिंगंनश्रुतिसद्भावस्येतिनक्कचित्कस्यचिदपिश्रुतिसद्भावनिश्चयोलैंगिकोलभ्यते । तेनयदिपरकीयज्ञानेनप्रागेवार्थनिश्चयस्ततोर्थस्मरणंपरंपरयार्थस्यैवानुमानान्नश्रुतिसिद्धिः । अथस्मृत्यंतरमेवमूलंस्यादंधपरंपरयानस्वरूपनिश्चयःस्यात् । एवमुभयथापिनश्रुतिर्नित्यानुमेयासिध्यतीतिनतन्मूलत्वेनप्रामाण्यंस्मृतीनां । तदाहुः । “नैतासांश्रुतिमूलत्वेप्रत्यक्षादिप्रवर्तते । अर्थापत्तिस्तुनास्त्यत्रभ्रांत्यादेरपिसंभवात् । नोच्छिन्नश्रुतिमूलत्वंनित्यतोक्तिविरोधतः । पठितश्रुतिमूलत्वेस्मृतिप्रणयनंवृथा । नित्यानुमेयतायांतुमूलत्वंनैवसंभवेत् । स्मर्तृणामपिनास्पद्वत्कल्पनंह्युपपद्यत” इति । सिद्धांतस्तु । “वैदिकार्थप्रयोक्तृणामादरेणपरिग्रहः । स्मार्तेषुवेदमूलत्वंविनानैवोपपद्यते । मन्वादयश्चवेदेपिप्रवक्तृत्वेनकीर्तिताः । तेनतद्वाक्यसत्यत्वंवेदेनैवावधारितं” । यद्वैकिंचिन्मनुरवदत्तद्भेषजमितिवेदेनैवमानवस्यग्रंथस्यप्रमाणत्वा

भिधानादेवंविधशिष्टपरिग्रहदार्ढ्यात्प्रामाण्यमेववेदमूलत्वेनस्मृतीनां ॥ कथमनुच्चारितानांमूलत्वोपपत्तिरितिचेन्न । उच्चार्यंत
एवहिस्मृतिमूलभूताःश्रुतयः । संप्रत्यभिप्रकीर्णाः । काश्चित्क्वचित्कस्यांचिच्छाखायांविप्रकीर्णत्वाच्छाखांतराध्यायिभिः शाखां
तरगतानामनुपलंभात्तादर्थ्येमार्थवत्तन्निबंधनं । उपलंभेपिवामंदधीभिरनुपसंहरणीयानामुपसंहारफलंस्मृतिप्रणयनमितिनवै
यर्थ्यं । धर्मस्यशब्दमूलत्वात् वेदमूलत्वात् । अशब्द मवेदमूलं । अनपेक्षं धर्मप्रमायामनपेक्षणीयंस्यादितिसूत्रार्थः । एवं
स्मृतेःसकाशादुपजीव्यत्वेनयथाश्रुतेःप्राबल्यंतथाद्वैतश्रुतिग्राहिप्रत्यक्षस्याप्यद्वैतश्रुत्यपेक्षयाप्राबल्यमित्यर्थः ॥ प्रत्यक्षस्योपजी
व्यत्वमुपपादयति ॥ तच्चेति ॥ अक्षेणग्राह्यत्वादित्यन्वयः ॥ यद्दाहीति ॥ दृष्टंचापेक्षितैकदेशग्राहिणामप्युपजीव्यत्वं । त
द्विरुद्धग्रहणेतेनबाधश्च । यथाघटविभुत्वानुमानेपक्षग्राहिणाक्षेण । नरशिरःकपालशुचित्वानुमानेसाध्यग्राहकेणागमेन । म
नोवैभवानुमानेज्ञानासमवाय्याधारत्वहेतुग्राहकेणानुमानेन । किमुवक्तव्यमपेक्षिताशेषग्राहिणास्वविरुद्धग्राहकस्यबाधइत्यर्थः ।
नन्वनुयथानुमानस्यव्याप्त्याद्यंशेप्रत्यक्षापेक्षा तथाप्रत्यक्षस्यापिस्वरूपसिद्धिंप्रत्यनुमानापेक्षातुल्येत्याशंक्यनिराकरोति ॥ यद्यपी
ति ॥ इंद्रियस्याज्ञातकरणतयाज्ञानजननाद्यनपेक्ष अनुमानादीनांतुज्ञानजननार्थमेवतदपेक्षणादितिविशेषइत्यर्थः ॥ अक्षा
प्रामाण्येहीति ॥ व्याप्त्यादेरित्यत्रातद्गुणसंविज्ञानबहुव्रीहिणाऽबाधितत्वमुक्तं । साध्याभावप्रमाविरहरूपाबाधितत्वस्यबाधे
अनुमेयस्यबाधंनियमात् । योग्यतायाश्चेतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यंताभावप्रतियोगित्वाभावरूपायाःबाधेशब्दार्थबाध
स्यावश्यकत्वमित्यर्थः । तत्रहेतुमाह ॥ अनुमेयस्येति ॥ व्याप्त्यादिनेत्यत्राप्यबाधितार्थकत्वमेवोक्तं ॥ अन्यथेति ॥ अनु

मेयस्याबाधितार्थकत्वादिनातुल्ययोगक्षेमत्वाभावे ॥ प्रातिभासिक[१०६।४]त्वस्यादिमतेति ॥ प्रातिभासिकबाधितत्ववतेत्यर्थः ॥ [१०६।४]व्यावहारिकत्वस्यादिमतेति ॥ व्यावहारिकबाधितत्ववतेत्यर्थः ॥ [१०६।५]व्यावहारिकेणाबाधेनेति ॥ व्यावहारिकत्वस्यादिमतेत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणाऽबाधितार्थकत्वमनुमानेभिहितं । संप्रतिघटादिगोचरप्रत्यक्षेव्यावहारिकेणाबाधेनविश्वस्यतात्त्विकत्वंसिद्ध्येदित्युच्यतइतिभेदः । ननुप्रतिबिंबस्यमिथ्यात्वपक्षेप्रतिबिंबेऽबाधितार्थकत्वस्यासिद्ध्याकथमबाधितार्थकत्वस्यानुमेयतुल्ययोगक्षेमत्वमित्यतआह ॥ प्रतिबिंबस्यमि[१०७।१]थ्यात्वेपीति ॥ तन्मिथ्यात्वपक्षेपीत्यर्थः । तथाचप्रतिबिंबेपिव्यतिरेकव्याप्तिसत्त्वादबाधितार्थकत्वमस्त्येवेत्यबाधितत्वंतुल्ययोगक्षेमत्वमनुमेयस्यास्त्येवेतिभावः । ननुयादृशंसाध्यस्यसत्त्वमादायहेतोरबाधितत्वंसंभवति तादृशमेवसाध्यस्यसत्त्वंहेतुनासिध्यति । धूमादेस्तुव्यावहारिकसाध्यसत्त्वमादायाबाधितत्वमुपपन्नमितिधूमादिगतेनाबाधितविषयत्वेनव्यावहारिकएववह्निःसिध्यति । दृश्यत्वस्याबाधितविषयत्वंतुतात्त्विकसाध्यसत्त्वगर्भं । अतोव्यावहारिकेणापिदृश्यत्वगतेनाबाधितविषयत्वेनतात्त्विकमिथ्यात्वसिद्धिः । धूमादिनातुव्यावहारिकवह्निसिद्धिरित्यतआह ॥ [१०७।१]नचधूमस्येति ॥ व्याप्तिशब्देनाबाधितविषयत्वं । धूमेविद्यमानमबाधितत्वंव्यावहारिकसाध्यसत्त्वेनाप्युपपन्नं । दृश्यत्वेविद्यमानमबाधितविषयत्वंतुतात्त्विकमिथ्यात्वंविनानुपपन्नं । अतस्तात्त्विकंमिथ्यात्वंसाधयति । तथाचानुमेयस्याबाधितविषयत्वेनतुल्ययोगक्षेमत्वानंगीकारेपिधूमादेर्व्यावहारिकवन्ह्यनुमितिरेव । दृश्यत्वादेस्तुतात्त्विकमिथ्यात्वानुमितिरेवेतिव्यवस्थासिद्ध्यभावइत्यर्थः । ननुदृश्यत्वादेस्तात्त्विकार्थसाधनस्वभावादेवतथाविधार्थसिद्धिर्धूमादेस्तुतात्त्विकार्थसाधनस्वभावोना

स्तीतियवबीजात्कलमांकुरस्येवनधूमादेस्तात्विकार्थसिद्धिरित्यतआह ॥ [१०७।३] नचाध्यापीति ॥ क्लृप्तनियमत्याग[१०७।४]इति ॥ अनुमेय
स्याबाधितविषयत्वादिनासमानयोगक्षेमत्वादितिनियमस्यत्यागइत्यर्थः । कारणंविनापिक्लृप्तनियमत्यागेबाधकमाह ॥ [१०७।४] अर्कस्मा
दिति ॥ तथाहृश्यत्वहेतुनामिथ्यात्वसिद्धिरपिनस्यादितिभावः । अत्रवदंति सि० । ‘एतावताहिव्याप्त्यादिसमानसत्ताकमनुमेयं
सिध्यत्वित्यापत्तेःफलितोर्थः ’सचास्माकमिष्टएव । नहिब्रह्मभिन्नंकिंचिदप्यत्यंतावाध्यमस्ति । नन्चानुमेयादेर्व्याप्त्यादिनासमसत्ता
कत्वनियमेप्यस्ति । व्यभिचारिणापिलिंगेनसाध्यवतिपक्षेऽनुमितिप्रमादर्शनात् । ध्वनिधर्मेह्रस्वत्वदीर्घत्वादिविशिष्टत्वेनमिथ्या
भूतैरपिनित्यैर्विभुभिर्वर्णैःसत्याशाब्दप्रमितिःक्रियतइतिमीमांसकैरपिस्वीकारात् । गंधप्रागभावावच्छिन्नेघटेतात्विकव्याप्त्यादि
मतापिपृथिवीत्वेनातात्विकगंधानुमितिदर्शनात् । प्रतिविंवेनविंबानुमितिदर्शनात् । नचतत्रापिविंबरहितावृत्तित्वेरूपाव्याप्तिस्ता
त्विक्येवेतिवाच्यं । एवंस्त्यवृत्तिगगनादेरपिव्याप्यतापत्तेः । नचतत्रविंबपूर्वकत्वमेवानुमीयतेविंबव्यतिरेकप्रयुक्तव्यतिरेकप्रतियो
गित्वरूपेणप्रातिभासिकेनहेतुनेतिवाच्यं । प्रयुक्तत्वंनतज्जन्यजनकत्वादिरूपं । व्यतिरेकयोःपरस्परंतदभावात् । किंतुव्याप्यव्याप
कभावः । तथाचविंबव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वंहेतुः । सचाकाशादौव्यभिचार्येव । तस्मात्तत्रप्रतिविंबेनैवविंबानुमानं । अ
नुमेयस्यलिंगव्याप्त्यादिसमानसत्ताकत्वनियमस्यापास्तत्वात् । एतेनशब्देपियोग्यतासमानसत्ताकेनशब्दार्थेनभवितव्यं । योग्यता
वाक्यार्थयोःसमानसत्ताकत्वनियमादितिकथंवेदांतवाक्यार्थोयोग्यतावाधेप्यबाधितःस्यादितिपरास्तं । वेदांतवाक्येअखंडार्थरूप
वाक्यार्थावाधरूपायाःयोग्यतायाअप्यबाधाच्चेति । अत्रोच्यते । यत्तावदुक्तमनुमेयस्यव्याप्त्यादिनासमानसत्ताकत्वमिष्टमिति ।

तन्न । दृश्यत्वेनमिथ्यात्वानुमितेरेवातात्त्विकविषयत्वापातेनानिष्टत्वात् । यच्चोक्तमनुमेयस्यव्याप्त्यादिनासमानसत्ताकत्वनियमोसिद्धइत्यादि । तदयुक्तं । व्याप्तिशब्देनाबाधितविषयत्वस्योक्तत्वात् । तस्यचानुमेयसमसत्ताकत्वनियमात् । साध्यवतिसाध्यज्ञानजनकेव्यभिचारिणिलिंगेप्यबाधितविषयत्वस्यसत्त्वात् । रूपप्रागभावकालेरूपज्ञानजनकेपृथिवीत्वेव्याप्तिपक्षधर्मतयोः सत्त्वेप्यबाधितत्वस्याभावेनसाध्यज्ञानस्यभ्रमत्वात् । अतएवाबाधितत्वंप्रमानुमितौगुणइतिनैयायिकाः । यच्चोक्तं वर्णेष्वविद्यमानेनदैर्घ्यादिनासत्याशाब्दप्रमितिःक्रियतेइति । तन्न । दैर्घ्यस्याहेतुत्वात् । तज्ज्ञानस्यैवहेतुत्वात् । तस्यचवाक्यार्थसमसत्ताकत्वात् । तार्किकमतेदैर्घ्यस्यापिसत्त्वाच्च । यच्चोक्तं प्रतिबिंबेयदिबिंबरहितावृत्तित्वरूपाव्याप्तिस्तर्ह्याकाशस्यापिबिंबरहितावृत्तित्वेनबिंबव्याप्त्यापत्तिरिति । तन्न । इष्टापत्तेः । पक्षधर्मताविरहादाकाशादेःपरंनानुमितिहेतुत्वं । यच्चोक्तमखंडवाक्यार्थाबाधरूपायोग्यतावेदांतवाक्येप्यस्तीति । तन्न । वाक्यार्थस्यक्रियाकारकभावसंसर्गरूपस्याभेदसंसर्गरूपस्यवाखंडत्वविरोधात् । तस्मात्साधूक्तमनुमेयस्यव्याप्त्यादिनातुल्ययोगक्षेमत्वमिति । अनुमेयस्यानुमितिप्रामाण्येनतुल्ययोगक्षेमत्वमुक्तमुपपादयितुमाशंकते ॥ [१०७।५]ननुतथापीति ॥ [१०७।५]प्रत्यक्षस्याप्रमाणत्वेनेति ॥ अतत्वावेदकत्वेनेत्यर्थः ॥ [१०७।७]रूप्यादिज्ञानेष्विति ॥ तथाचप्रत्यक्षस्याप्रमाणत्वेनेत्यसिद्धिरितिभावः । निर्विकल्पकेप्रकारघटितप्रामाण्यस्यमिथ्यात्वेपिनतदर्थस्यातात्त्विकत्वमित्यतआह ॥ [१०७।७]अर्थाबाधेति ॥ अर्थाबाधरूपप्रामाण्यस्यार्थसत्त्वेपर्यवसन्नतयाप्रामाण्यबाधोर्थबाधएवेतिभावः ॥ नन्वर्थाबाधरूपप्रामाण्यमिथ्यात्वादर्थस्यापिमिथ्यात्वमितिनवाच्यं । अबाधितार्थविषयत्वंहियत्प्रामाण्यंतस्यमिथ्यात्वं प्रकृतेनार्थबाधात् । तद्बाधकप्रमाणासंभवात् ।

तस्यापिबाधावधित्वात् । किंतुतद्विषयत्वरूपसंबंधवाधात् । तथाचाबाधितार्थविषयत्वरूपप्रामाण्यस्यमिथ्यात्वेपिनार्थो
मिथ्या । विशिष्टस्यैकांशमिथ्यात्वेप्यपरांशस्यसत्यत्वात् । यथादंडवाधनिवंधनदंडिपुरुषबाधेपिपुरुषोनबाधितएवेति । अत्र
ब्रूमः । एवंसतिवस्तुतोयोबाधितोर्थोमिथ्यात्वं तद्विषयायामिथ्यात्वानुमितेःप्रामाण्यंमिथ्येत्यंगीकुर्वतांमिथ्यात्वतदनुमित्योर्वि
षयविषयिभावसंबंधोनेत्युक्तंस्यात् । तथासतिमिथ्यात्वानुमितेर्मिथ्यात्वसिद्ध्यर्थंपरंप्रतिप्रयोगोविरुद्धःस्यात् । मिथ्यात्वानुमि
तेस्तत्वावेदकत्वंचनस्यात् । नहिविषयत्वातिरिक्तंतदावेदकत्वंनामास्ति । अथमिथ्यानुमितेर्मिथ्यात्वविषयकत्वमस्ति । परंतु
मिथ्याभूतंतदितिचेन्न । वन्ह्यनुमितिर्जरद्गववाक्यंचमिथ्यात्वविषयकमितिकस्यचिद्भ्रममादायतयोरपिमिथ्यात्वेप्रमाणत्वंस्या
दिति ॥ [१०८।१] यत्प्रामाण्यमिति ॥ साक्षात्परंपरयाहेतुरुपजीव्यशब्देनविवक्षितः । येननेदंरूप्यमितिज्ञानंप्रतिइदंरूप्यमित्यस्या
प्युपजीव्यत्वंस्यात् । किंतुयत्प्रामाण्यप्रयोजकप्रामाण्याश्रयोयत् तत्तस्योपजीव्यं । इदंरूप्यमितिज्ञानंतुनेदंरूप्यमितिज्ञानप्रा
माण्यप्रयोजकप्रामाण्याश्रयोनेतिनतस्योपजीव्यत्वमितिभावः । प्रामाण्यप्रयोजकत्वंचयोगक्षेमसाधारणंविवक्षितं । तत्रस्वरू
[१०८।१] पसिद्ध्यर्थमित्याद्यप्रकारंयोगरूपमुदाहरति ॥ इहचेति ॥ अत्रापिव्याप्त्यादीत्यनेनानुमितिप्रामाण्यप्रयोजकमबाधितत्वंविव
क्षितं । अबाधितत्वज्ञानाप्रामाण्येऽनुमित्यप्रामाण्यस्यावश्यकत्वं । नतुव्याप्तिज्ञानाप्रामाण्येप्यनुमित्यप्रामाण्यं । कूटलिंगाद
[१०८।२] पिजायमानस्यसाध्यवतिसाध्यज्ञानस्ययथार्थत्वादित्यर्थः । अपवादनिरासार्थमितिद्वितीयप्रकारंक्षेमरूपमुदाहरति ॥ सर्वज्ञ
त्वेति ॥ ब्रह्मबुद्ध्यप्रामाण्यइत्युपलक्षणं । जीवबुद्ध्यप्रामाण्यइत्यपिद्रष्टव्यं । ऐक्यश्रुत्या प्रत्यक्षसिद्धंजीवमनूद्यतस्यब्रह्मत्वंवा

श्रुतिसिद्धंब्रह्मवानूद्यतस्यजीवत्वंवा उभयानुवादेनाऽभेदोवाविधेयः । सर्वथाप्युपजीव्यविरोधान्नश्रुतिरैक्येप्रमाणं । प्रत्यक्षेण जीवस्यब्रह्मतोभिन्नत्वेन श्रुत्याचसर्वज्ञत्वनिर्दुःखत्वादिनाब्रह्मग्राहिण्याब्रह्मणस्तद्भिन्नत्वेनानुभूयमानाज्जीवाद्भिन्नत्वेनग्रहणात् । सर्वज्ञत्वनिर्दुःखत्वादिप्रकारकंब्रह्मरूपधर्मिज्ञानाप्रामाण्येजीवरूपधर्मिज्ञानाप्रामाण्येचब्रह्मजीवरूपधर्मिणोरसिद्ध्यापत्त्याब्रह्मा त्मैक्यबुद्धेःप्रामाण्यंनसंभवतीत्यैक्यश्रुतेरुपजीव्यविरोधइत्यर्थः । तदुक्तं "शास्त्रगम्यपरेशानाद्भेदःस्वात्मनईयते । अनुभूति विरोधेनकथमेकत्वमुच्यत" इति । "सार्वज्ञादिगुणंजीवाद्भिन्नंज्ञापयतिश्रुतिः । ईशंतामुपजीव्यैवप्रवर्ततेह्यैक्यवादिनी" तिच । नचैवंनिषेध्यार्पकेइदंरजतमितिज्ञानेउपजीव्यत्वंनेदंरजतमितिनिषेधज्ञानंप्रत्यस्तीत्याह ॥ प्रतिषेध्यज्ञानांप्रामाण्यइति ॥ [१०८।३] उक्तप्रकारद्वयमपिइदंरजतमितिज्ञानप्रामाण्यस्यनेदंरूप्यमितिज्ञानप्रामाण्यंप्रतिनास्तीतिनतत्तस्योपजीव्यमित्यर्थः । उपजीव्य तायांप्रकारांतरमाह ॥ यद्वेति ॥ [१०८।३] इदंरूप्यमितिधीश्चेति ॥ [१०८।४] इदंरूप्यमितिधीश्चनधर्म्यर्पकत्वेनोपजीव्या । धर्मिणइदमंशस्य नेदंरूप्यमित्यनेनैवसिद्धेरित्यतउक्तं प्रतिषेध्यार्थकतयावेति । तर्हिइदंरूप्यमितिज्ञानंप्रत्युपजीव्यत्वेनप्राबल्यंस्यादित्यतआह ॥ नहीति ॥ [१०८।५] यांवच्छक्तीति ॥ [१०८।५] उपजीव्यस्ययथोचितपरीक्षायांसत्यामप्युपजीवकेनबाधनेदोषः अशोधितेअपरीक्षिते । उपजी वकेनबाधनेसत्यपिनदोषइत्यर्थः ॥ नहीति ॥ [१०८।६] परेणवेदांतवाक्येनपूर्वस्यप्रत्यक्षस्यापच्छेदन्यायेनबाधइतिवदतस्तवमतेपीत्यर्थः ॥ परीक्षितत्वंचेति ॥ [१०८।६] इदंरजतमितिज्ञानस्योपजीव्यत्वेपिपरीक्षाविरहान्नोत्तरज्ञानंप्रतिबाधकत्वमित्यर्थः । ननुशुक्तिरूप्याभे

दज्ञानेपिशुक्त्यंशेपरीक्षास्तीत्यतउक्तमंशइति । अभेदांशइत्यर्थः । नन्वनुव्यवसायादिविषयत्वरूपपरीक्षारूप्येप्यस्तीत्यतआह ॥ [१०१३] संजातीयेति ॥ सजातीयविजातीयाभ्यांसंवादस्ताभ्यांविसंवादस्याभावश्चपरीक्षा । नत्वनुव्यवसायादिरूपप्रमाविषयत्वरूपापरीक्षेत्यर्थः । रूप्यज्ञानथज्जगत्सत्यत्वज्ञानेपिपरीक्षानास्तीतिनतदुपजीव्यमप्यद्वैतांगमस्यबाधकमित्यतआह ॥ [१०१४] जगत्सत्यत्वप्रत्यक्षइति ॥ जगत्सत्यत्वप्रत्यक्षेसजातीयसंवादमाह ॥ [१०१५] सन्घटइतिज्ञानांतरमिति ॥ विजातीयसंवादमाह ॥ [१०१५] घटोर्थक्रियेति ॥ सजातीयविजातीयविसंवादाभावमाह ॥ [१०१५] प्रत्यक्षइति ॥ [१०१६] निषेध्यार्पिकेति ॥ तथाचोपजीव्येत्यर्थः । भेदश्रुतेःसजातीयसंवादमाह ॥ [१०१६] साक्षिप्रत्यक्षमिति ॥ उपलक्षणमेतत् सुरनरादिषुविचित्रशक्तितदभावादिरूपविजातीयसंवादोप्यस्तीतिबोध्यं । विसंवादाभावमाह ॥ [१०१६] अदोषत्वादिति ॥ [१०१६] परीक्षितमितीति ॥ परीक्षिताचपरीक्षितंचपरीक्षितं नपुंसकमनपुंसकेनेत्यादिनैकशेषैकवद्भावौ । एवंतदपीत्यत्रापि । ननुसजातीयसंवादादिरूपायाःपरीक्षायाअपिज्ञानरूपत्वात्तत्राप्यनाश्वासेतत्रापिपरीक्षांतरानुसरणेऽनवस्थास्यादित्यतआह ॥ [१०१७] इत्थमेवेति ॥ यद्वापरीक्षायांसत्यामंपिपरीक्षणीयेज्ञानेऽनाश्वासेदोषमाह ॥ [१०१७] इत्थमेवेति ॥ [१०१७] तज्ज्ञानइति ॥ निर्दोषज्ञानइत्यर्थः । अत्रवदंतिसि०नोपजीव्यविरोधः । यत्स्वरूपमुपजीव्यतेतन्नबाध्यते । बाध्यतेचतात्विकत्वाकारः । सचनोपजीव्यते । कारणत्वेतस्याप्रवेशात् । तदुक्तं । "पूर्वसंबंधनियमोहेतुत्वेतुल्यएवनौ । हेतुतत्ववहिर्भूतसत्त्वासत्त्वकथावृथे" ति । किंचापेक्षितत्वमात्रेणचेदुपजीव्यतातयाचबाधकत्वं तदाऽपेक्षितप्रतियोगिग्राहकत्वेनेदंरजतमितिभ्रमस्यबाधोपजीव्यत्वात्कथंनेदंरजतमितिबाधबुद्धिस्तद्विरुद्धोदियात् ।, अथनिषेध्यार्पकतया

प्रतियोगिज्ञानत्वेनतस्योपजीव्यत्वेपितत्प्रामाण्यंनोपजीव्यं । नहिप्रतियोगिप्रमात्वेनाभावज्ञानकारणता । गौरवात् । प्रतियोगिभ्रमादप्यभावज्ञानदर्शनाच्च । किंतुतज्ज्ञानत्वेनैव । लाघवात् । अतस्तद्विरुद्धविषयकंज्ञानमुदियादेवेतिब्रूषे तुल्यमिदंप्रकृतेपि । पक्षज्ञानत्वेनकारणता । नतुतत्प्रमात्वेनापीति । यच्चोक्तं । परीक्षितत्वविशिष्टमुपजीव्यत्वंप्राबल्येतंत्रमिति । तन्न । परीक्षाहिसंवादविसंवादाभावदोषाभावादिरूपा । तथाचस्वसमानदेशकालीनविषयाबाध्यत्वं प्रामाण्यस्यव्यवस्थाप्यते । धूमेनस्वसमानदेशकालीनवह्निरिव । तथाचव्यवहारदशामात्राबाध्यत्वंदेहात्मैक्यसाधारणंपरीक्षितप्रामाण्येव्यवस्थापितं । कथमत्यंताबाध्यत्वाभावग्राहकानुमानागमयोःप्रवृत्तिर्नस्यात् । तस्माद्विश्वासप्रमाणतदाभासव्यवस्थाजीवेशभेदादिकंचव्यावहारिकमित्युपपन्नमेवसर्वंजगन्मिथ्ये" ति ॥ अत्रोच्यते । यत्तावदुक्तंयत्स्वरूपमुपजीव्यते तन्नबाध्यतेइत्यादि । तन्न । अबाधितत्वादेस्तात्विकत्वस्यबाधेनुमित्यादेःप्रामाण्यस्यदुर्लभत्वापत्तेरित्युक्तत्वेनसत्वांतर्भावेणैवहेतुत्वस्यवक्तव्यत्वात् । यच्चोक्तमपेक्षितत्वमात्रेणचोपजीव्यतेत्यादि । तदपिन । यत्प्रामाण्यप्रयोजकप्रामाण्याश्रयोयत्तत्तस्योपजीव्यमित्युक्तत्वात् । रूप्यज्ञानंनतथेतिनतदुपजीव्यं । यच्चोक्तंपरीक्षयास्वसमानदेशकालीनविषयाबाध्यत्वंप्रामाण्यस्यव्यवस्थाप्यतइत्यादि । तदपिन । मिथ्यात्वानुमितेःस्वदेशकालयोरपिघटादिनिषेधविषयत्वेनोपजीव्यविरोधस्यदुष्परिहरत्वात् । पारमार्थिकत्वाकारेणनिषेधस्यनिर्धर्मिकात्मनोपिसंभवाच्चेति । यद्यपीदंरूप्यमितिधीर्धर्म्यर्पकत्वेननोपजीव्यधर्मिणइदमंशस्यनेदंरूप्यमित्यनेनैवसिद्धेः तथाप्यभ्युपेत्याह ॥ [१०९।१०] यद्यपीति ॥ नेदमित्यत्रेदमंशमात्रंधर्मि । नतुरजतत्वविशिष्टं । इदमंशमात्रेरूप्यनिषेधमात्रेणैवेष्टसिद्धेः ।

एवंचयदुपजीव्यंतन्नबाध्यं । इदमंशमात्रस्याबाधात् । यच्चबाध्यंरजतत्ववैशिष्ट्यंनतदुपजीव्यं । रजतत्वविशिष्टस्याधर्मित्वादि
त्यर्थः । नन्वेवंमिथ्यात्वानुमानैक्यवाक्येपिघटस्वरूपमात्रंब्रह्मस्वरूपमात्रंचधर्मि । नतुसत्त्वविशिष्टंघटस्वरूपंसार्वज्ञ्यादिविशिष्टं
ब्रह्मस्वरूपंवाधर्मि । एवंचयदुपजीव्यंतन्नबाध्यं यच्चबाध्यंनतदुपजीव्यमितिनमिथ्यात्वानुमानैक्यश्रुत्योरुपजीव्यविरोधइत्यत
आह ॥ [११०।१] शिष्टमिति ॥ मिथ्यात्वानुमानेनघटस्वरूपस्यापिबाध्यमानत्वेनधर्मिग्राहकविरोधोमिथ्यात्वानुमानस्यास्त्येव । ऐक्य
वाक्येपिकिंसार्वज्ञ्यादिनाभावरूपेणनिर्दुःखादिनाअभावरूपेणवाऽसाधारणधर्मेणब्रह्मोद्देश्यं चित्त्वादिनासाधारणधर्मेणवास्वरू
पेणैववा । आद्येसुस्थउपजीव्यविरोधः । द्वितीयेचितएवजीवैक्यंसिद्ध्येत् । नतुब्रह्मणः । तच्चममापिसंमतं । नतृतीयः ।
शब्देनासाधारणब्रह्मस्वरूपोद्देशस्यासाधारणधर्मिणंविनासिद्ध्यभावेनोपजीव्यविरोधस्यतादवस्थ्यात् । साधारणस्वरूपोद्देशे
चब्रह्मैक्यासिद्धेरित्यादिवक्ष्यतइत्यर्थः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुज्ञि । न्यायामृततरंगिण्यांप्रत्यक्षस्योपजीव्यता
॥ प्रत्यक्षस्योपजीव्यत्वेनप्राबल्यं ॥ ११ ॥ ७ ॥ ७ ॥ [११०।२] औदुंबरीमिति ॥ औदुंबरीनामज्योतिष्टोमेक्रतौसदोमंडपेविद्यमा
नाउदुंबरमयीस्थूणा । तांस्पृष्ट्वाउद्गातानामऋत्विक्गानंकुर्यादितिश्रुत्यर्थः ॥ [11०13] ऐंद्र्येति ॥ कदाचनस्तरीरसिनेंद्रसश्चसिदाशुषेइ
त्येतयाइंद्रप्रकाशिकयाऋचागार्हपत्यमग्निमुपतिष्ठते ॥ [11०13] शरमयमिति ॥ शराःकुशसदृशतृणविशेषाः । तेषांशराणांवेदिस्तर
णार्थंबहिर्भवति ॥ [11०13] औदुंबरीति ॥ तामूर्ध्वदेशेनवाससावेष्टयतीतिविहितंयदौदुंबर्याःस्थूणायाःवेष्टनंतत्सर्वप्रदेशेप्यौदुंबर्याःक

र्तव्यमित्येतमर्थंऔदुंबरीसर्वावेष्टयितव्येतिस्मृतिःप्रतिपादयति । साचस्वमूलभूतांश्रुतिंमनुमापयति । अनुमानंचैवं । औदुं
बरीश्रुत्युक्तसर्ववेष्टनयुक्ता । बाधकाभावेसतिसर्ववेष्टनप्रतिपादकस्मृतियुक्तत्वात् । यद्यदर्थप्रतिपादकस्मृतियुक्तंतच्छ्रुत्युक्तत
दर्थयुक्तंयथासंमतमितिसामान्यव्याप्तिः ॥ नेंद्रंसश्चसीति ॥ कदाचनस्तरीरसीतिमंत्रःश्रुत्युक्तेंद्रशेषकः । बाधकाभावेसतीं
द्रप्रकाशनसामर्थ्योपेतत्वात् । यद्यत्प्रकाशनसमर्थंतत्तथा यथासंमतं ॥ चोदनालिंगसौरूप्येणेति ॥ सोमारौद्रःश्रुत्युक्तकु
शबंर्हिषःकुशश्रुतियुक्तपौर्णमासचोदनासदृशनिर्वापशब्दद्विदेवतादियुक्तचोदनायुक्तत्वात् । यद्यत्सदृशचोदनालिंगंतत्तथाय
थासंमतमिति । अधिकरणविचारस्त्वेवंप्रथमस्यतृतीयेविचारितं । विरोधेत्वनपेक्ष्यंस्यादसतिह्यनुमानं । ज्योतिष्टोमेसदोना
मकस्यमंटपस्यमध्येकिंचिदौदुंबरीसंज्ञमुदुंबरवृक्षस्यद्विशिखंकाष्ठंनिखन्यस्थाप्यते । तस्याऔदुंबर्याःसर्वाऔदुंबरीवेष्टयितव्ये
तिस्मृत्यासर्ववेष्टनंविहितं । प्रत्यक्षेणवेदेनऔदुंबरींस्पृष्ट्वोद्गायेदित्यनेनस्पर्शोविहितः । तदेवंजातीयांप्रत्यक्षश्रुतिविरुद्धांस्मृतिमु
दाहृत्यकिंप्रमाणमप्रमाणंवेति । पूर्वपक्षस्तु । श्रुतिवदेवतद्विरुद्धापिस्मृतिरपिप्रमाणं । ननुश्रुतिमूलास्मृतिःप्रमाणं नचश्रुति
विरुद्धायाःस्मृतेर्मूलंश्रुतिरस्ति । अतोनस्मृतिःप्रमाणमितिचेत् । मैवं । श्रुतिविरुद्धस्मृतिमूलंश्रुतेरपिसंभवात् । तस्माद्यत्रद्व
योःश्रुत्योरसंभवस्तत्रैकविषयेणप्रत्यक्षेणेतरविषयानुमानंप्रमेयापहारादनायासेननिराक्रियतेवह्नाविवशैत्यानुमानं । यत्रतुद्वय
संभवस्तत्रतुशीघ्रंप्रवृत्तमपीतरन्नेतरस्यविषयमपहरतीतितद्विषयमनुमानंनशक्नोतिप्रतिषेद्धुं । संभवतिचयुगपदनुपसंहरणीया
र्थमपिश्रुतिद्वयं व्रीहियवबृहद्रथंतरग्रहणाग्रहणविषयश्रुतिवदितिप्रत्यक्षेणापिस्पर्शनविधिनासर्ववेष्टनश्रुत्यनुमानंनशक्यंनिरा

कर्तुं । कथंतर्हिंश्रुतिलिंगादिषुपूर्वपूर्वेणोत्तरस्यबाधस्तत्रापिश्रुतिद्वयसंभवात् नह्यस्याकल्प्यानिराकर्तुंशक्या । उच्यते । नैवा
त्रप्रमेयापहारनिबंधनोबाधः । किंतुकल्पनामूलोच्छेदनात् । यावद्धिमंत्राम्नानमनवगतप्रयोजनंप्रकरणीचाकृतार्थातावद्दैवत
त्सिद्ध्यर्थंश्रुतिकल्पनंप्रमाणवत् । यदातुह्यस्याश्रुत्याद्वयोरपिनैराकांक्ष्यं तदामूलोच्छेदादाकांक्षाधीनाश्रुतिकल्पनानोन्म
ज्जति । अत्रतुप्रत्यक्षयाश्रुत्यानस्मृतेर्मूलाकांक्षानिवर्तते । यतोमूलोच्छेदादनुमानविरोधःस्यात् । अतोत्रानुमानस्यप्रत्यक्षेणा
विरोधांत्विरुद्धानामपिप्रामाण्यमितिप्राप्तेभिधीयते । अशक्यार्थविषयताहिमूर्धाभिषिक्तंश्रुतीनामप्रामाण्यनिदानंसागरंतरेदि
त्यादिवत् अशक्यंसंस्पृशतावेष्टयितुंवेष्टयित्रास्प्रष्टुंवा । तदुक्तं । "अप्रामाण्यंविरुद्धानामशक्यार्थविधानतः । औदुंबरींनशक्नो
तिसर्वांवेष्टयितुंस्पृशन् । वेष्टितांचापिसंस्प्रष्टुमतोन्योन्यविरोधतः । प्रमेयापहृतेरेवबाधःस्याद्वह्निशैत्यवत्" इति । अतोवेष्टये
त्स्पृशेदित्यशक्यार्थविधानान्नतावदुभयोरपिप्रामाण्यंसंभवतीत्यवश्यमन्यतरद्बाधितव्यं । तत्रप्रत्यक्षेणानुमानस्यबाधोग्नावि
वशैत्यानुमानस्येतिसिद्धमप्रामाण्यंस्मृतीनांश्रुतिविरुद्धानां । व्रीह्यादौतुद्वयोरपिप्रत्यक्षत्वेनागृह्यमाणविशेषत्वान्नैकेनेतरस्यबा
धःसंभवति । विरुद्धार्थत्वाच्चनद्वयोरांजस्येनप्रामाण्यं । नचाप्रामाण्यमविद्यमानदोषयोःसंभवतीतिगत्यंतराभावादुभयोरपि
पाक्षिकोबाधःकल्प्यते । नचैवंशास्त्रस्याप्रामाण्यं । यथासामान्यशास्त्रस्यविशेषशास्त्रबाधितस्यापिनाप्रामाण्यंतद्वदिहापि । न
नुबाधितंचभवत्यप्रामाण्यं नभवतीतिव्याहतमेतत् । सत्यमेव । नत्वत्रपरमार्थतःशास्त्रार्थोबाध्यते । किंतुप्रतिपक्षमनालोच
यतोयःशास्त्रस्यस्वरसतःसार्वत्रिकःप्रत्ययःसोत्रबाध्यते । तद्बाधाच्चपाक्षिकानुमानपरत्वंशास्त्रस्याध्यवसीयते । नचैवंस्मृति

वशेनश्रुतिस्वरूपभंगेनस्पर्शनस्यपाक्षिकत्वंकल्पयितुंशक्यते । स्मृतेःस्वरसतोप्रमाणत्वेनश्रुतिबाधासामर्थ्यात् । श्रुतिकल्पनस्यप्रत्यक्षश्रुतिविहितस्यस्पर्शनविरोधेनविरुद्धत्वात् । ननुपाक्षिकत्वेनापिप्रत्यक्षश्रुतिरुपपद्यते । यस्मिन्पक्षेस्नानास्तितत्रस्पर्शाभावेनवेष्टनस्यापिशक्यानुष्ठानत्वात्तद्विषयश्रुतिकल्पनमनुपपन्नमितिचेत् न । इतरेतराश्रयात् । स्वरसतोहिश्रुतिवाक्यादपाक्षिकंस्पर्शनंगम्यते तस्मिंश्चापाक्षिकेनस्मार्तश्रुतिकल्पनमशक्यत्वात् । नहिस्पृशतावेष्टयितुंशक्यते । तत्रस्पर्शनस्यपाक्षिकत्वेसतिंशक्यार्थस्मृतिकल्पिताश्रुतिरात्मानंलभते । तस्यांचलब्धात्मिकायांतद्विरोधात्स्पर्शनस्यपाक्षिकत्वमितीतरेतराश्रयत्वंस्यात् । तस्मात्प्रत्यक्षश्रुतिविरुद्धास्मृतिरप्रमाणं । तस्मात्सर्ववेष्टनस्मृतिरूपमनुमानंप्रत्यक्षविषयस्पर्शनश्रुतिविहितस्पर्शविरुद्धसर्ववेष्टनश्रुतिसाधकंनभवति । किंतुस्वयमेवाप्रमाणंभवतियथा तथादृश्यत्वादिलिंगरूपमनुमानमपिसन्घटइत्यादिप्रत्यक्षविरुद्धमिथ्यात्वसाधकंनभवति । स्वयमेवाप्रमाणंभवतीत्यर्थः । नन्वनुपपन्नोभाष्यकारोक्तापवादाधिकरणसिद्धसर्ववेष्टनस्मृतिरूपोदृष्टांतः वार्तिककारदर्शिताधिकरणभंगप्रकारेणसर्ववेष्टनस्मृतिमूलस्यसर्ववेष्टनश्रुतेःसत्त्वेनसर्ववेष्टनस्मृतेरपिप्रमाणत्वात् । तथाहि । मन्वादिग्रंथजातस्यशिष्टग्रहणहेतुकं । कल्पितंवेदमूलत्वंकथंपुनरपोद्यते । किंचबाधकसद्भावात्साधकाभावतोथवा । श्रुत्यभावोवसीयेतनद्वेधाप्युपपद्यते ॥ नतावद्दृश्यादर्शनंबाधकं । सर्वशाखानुपलंभात् । नचश्रुत्यभावनियतंकिंचिल्लिंगंदृश्यते । विरुद्धश्रुतिदर्शनंतुषोडशिग्रहणादिश्रुतिभिरनैकांतिकं । नापिसाधकाभावः । नहिस्वप्रमाणप्रवृत्त्यभावमात्रेणवस्त्वभावनिश्चयः । सर्वपुरुषप्रमाणाभावस्त्वसिद्धः । स्मर्तृप्रत्यक्षस्यतद्ग्रंथानुमितस्यसत्त्वात् । नित्यानुमेयत्वेहिसर्वेषामिहानुमानमेवप्रमाणं

स्यात् । तच्चप्रत्यक्षश्रुतिविरोधेनोदेतीतिसर्वपुरुषाणांसाधकप्रमाणाभावादीषत्करमभावावधारणंस्यात् । नचतदस्ति । अंध परंपरादोषात् । अतःस्मर्तृपुरुषांतराणामिहप्रत्यक्षसंभवात् । तस्यचात्मप्रत्यक्षतुल्यत्वान्नस्मार्तश्रुतिनिराकरणं । तदुक्तं । "आत्मीयात्परकीयस्यदौर्बल्यंनहिकिंचन । प्रत्यक्षत्वाविशेषेणस्वप्रत्यक्षसमंहितत्" इति ॥ ततश्चात्मीयपरकीयप्रत्यक्षविषय श्रुतिविहितयोःस्पर्शनवेष्टनयोस्तुल्यकक्ष्यतयाविकल्पएव । सचांशेबाधएवेतिसर्ववेष्टनश्रुत्यनुमानमपिस्पर्शनश्रुतिप्रत्यक्षस्यबा धकमेवेतिचेन्मैवं । परकीयप्रत्यक्षादप्यात्मीयप्रत्यक्षस्यविस्रंभणीयतयापरप्रत्ययमनादृत्यात्मीयप्रत्ययेनैवव्यवहारःक्रियते । अतो त्रस्पर्शएवानुष्ठीयते । नतुसर्ववेष्टनमितिफलतोप्रामाण्यंश्रुतिविरुद्धानांस्मृतीनां । यथाहुः । "यावदेकंश्रुतौकर्मस्मृतौचान्यत्प्र तीयते । तावत्तयोर्विरुद्धत्वेश्रुत्यनुष्ठानमिष्यत" इति ॥ विरोधेत्वनपेक्षंस्यादिति श्रुतिस्मृत्योर्विरोधेयत्प्रमाणांतरानपेक्षंश्रुति वाक्यंतदेवग्राह्यं । अस्तिह्यात्मप्रत्ययेपरप्रत्ययानुमानक्लेशाश्रयणमितिसूत्रार्थः । नन्वौदुंबर्याःसर्ववेष्टनमशक्यंयोहितस्याःप्र देशोऽधोभागस्थस्तस्यवेष्टयितुमशक्यत्वात् । वेष्टयित्वापिगर्तेनिक्षेपसंभवात् । तस्मात्प्रत्यक्षश्रुतिविरुद्धस्मृतिमूलश्रुतिर्यावन्न स्वस्यप्रत्यक्षविषयस्तावदनुष्ठानमात्रं । ततःपरंतुविकल्पइतिस्मृत्यनुमानंनप्रत्यक्षबाधस्येष्टे । तस्माद्युक्तोदृष्टांतइति ॥ मंत्रसा मर्थ्यरूपेणेति ॥ एतच्चश्रुतिलिंगाधिकरणेनिरूपितप्रायमितिपृथक्नोच्यते ॥ चोदनालिंगसंसारूप्येणेति ॥ दशमाध्याये चतुर्थपादेचिंतितं । चोदनालिंगसंयोगेनतद्विकारःप्रतीयते । सोमारौद्रवरौश्रूयेते शरमयंबर्हिर्भवतीति तत्रकिंदार्शपौर्णमा सिकाःकुशाःनिवर्ततेनिवर्ततेवेतिसंदेहे शराणांकुशानांचोपदेशातिदेशरूपप्रमाणवत्तयावगतत्वात्समुच्चयइतिपूर्वःपक्षः । बर्हिः

शब्दलक्षितेबर्हिःकार्येशराणांविधायकस्यवचनस्यप्रत्यक्षत्वात् तैरेवकृतस्वकार्याणांकुशानांप्रापकस्यकुशसाधारणस्यातिदेशवाक्यस्यकल्पनंनप्रवर्ततेकिंतुकुशव्यतिरिक्तांगप्रापकस्यैवतस्यानुमानमितिप्रापकाभावात्कुशानिवर्ततइतिसिद्धांतः । चोदनायाः सल्लिंगंनिर्वपतियजेतेत्यादिशब्दः अष्टाकपालादिसंख्याएकद्विदेवत्वादितत्संयोगेनतत्सारूप्येणतद्विकारःप्रतीयतेइतिसूत्रार्थः ॥ सर्वंवमीमांसोन्मूलितास्यादिति ॥ अत्रवदंति । सि० किमिदमापाद्यते श्रुतित्रयग्राहिप्रत्यक्षमनुमानैर्बाध्येतेतिवाप्रत्यक्षविषयीभूतंश्रुतित्रयमितिवा । नाद्यः । विरोधाभावेनतद्बाध्यबाधकभावस्यशास्त्रार्थत्वाभावात् । अस्माभिरनभ्युपगमाच्च । अनुक्तोपलंभमात्रत्वेनर्ननिरनुयोज्यानुयोगापत्तेः । अतएवनद्वितीयः । प्रत्यक्षविषयभूतस्यश्रुतित्रयस्यलिंगबाधकत्वपरेपिशास्त्रे प्रत्यक्षस्यलिंगबाध्यत्वेपिविरोधाभावात् । नहिशब्दप्रत्यक्षयोरैक्यमस्ति । शब्दस्यसर्वप्रमाणापेक्षयाबलवत्त्वांगीकारादिति । अत्रोच्यते । आद्यस्तावद्युक्तः । नचश्रुतित्रयग्राहिप्रत्यक्षस्यानुमानैर्विरोधाभावइतिवाच्यं । प्रत्यक्षविषयश्रुत्यासर्शानुकूलसर्ववेष्टनं गार्हपत्यशेषत्वं शरबर्हिष्कत्वंचप्रतिपाद्यते । अनुमानैस्तुसर्ववेष्टनं इंद्रशेषत्वं कुशबर्हिष्कत्वंचप्रतिपाद्यतइत्यर्थविरोधकृतश्रुतिविरोधपूर्वकःप्रत्यक्षानुमानानामस्तिविरोधः । अतएवतार्तीयोप्राप्तबाधइत्युच्यते । यथाहुः १ "कल्प्यस्यशास्त्रस्यतुकल्पनं यन्निरुद्ध्यतेमूलनिकृंतनेन । क्लृप्तेनशीघ्रेणफलापहारादप्राप्तबाधंतमुदाहरंती"ति । तस्मादस्त्येवप्रत्यक्षस्यानुमानैर्विरोधः। द्वितीयोपियुक्तः । प्रत्यक्षविषयस्यश्रुतित्रयस्यश्रुत्यनुगुणानुमानबाधकत्वंहिप्रत्यक्षविषयत्वेन नतुश्रुतित्वमात्रेण । अनुमितायाअपिश्रुतेः प्रत्यक्षश्रुतिबाधकत्वप्रसंगात् । तस्मात्साधूक्तंसर्वैवमीमांसोन्मूलितास्यादिति ॥ अन्ययौष्ण्यंप्रत्यक्षंचेति ॥ अत्रवदंति । सि०

अग्न्यौष्ण्यप्रत्यक्षात्मस्थायित्वप्रत्यभिज्ञाप्रत्यक्षयोरर्थक्रियासंवादश्रुत्यनुग्रहाभ्यांप्राबल्येनानुमानबाधकत्वे । अपरीक्षितप्रत्यक्षंहि परीक्षितानुमानापेक्षयादुर्बलंनीलंनभइतिप्रत्यक्षमिवनभोनीरूपत्वानुमानापेक्षया । अतोनसामान्यतोदृष्टमात्रेणसर्वसंकरापत्ति रिति । अत्रोच्यते । सुखपर्यंतपरीक्षायाःजगत्सत्यत्वप्रतिपादकश्रुत्यनुग्रहस्यसन्घटइतिप्रत्यक्षेपिसत्त्वेनतस्याप्यनुमानापेक्षया बलवत्त्वात् । त्वन्मतेअस्तीत्येवोपलब्धव्यइत्यादीनामप्यखंडार्थत्वेनात्मनिस्थायित्वेसंसर्गाप्रतिपादकत्वाच्चेतिसाधूक्तं कालात्य यापदिष्टोच्छेदःस्यादिति ॥ तथाचशृंगित्वइति ॥ अत्रवदंति । सि० अयोग्यशृंगादिसाधनेप्रत्यक्षबाधस्यासंभवेनतत्रव्याप्ति ग्राहकतर्केष्वाभासत्वस्यत्वयापिवक्तव्यत्वेनव्यवस्थायाउभयसमाधेयत्वात् । नहितर्काभाससंसध्रीचीनमनुमानंप्रमाणमितिके नाप्यभ्युपेयतइति । अत्रोच्यते । शृंगस्ययोग्यत्वनियमाच्छृंगानुमानस्ययोग्यशृंगविषयत्वेनतत्रप्रत्यक्षबाधस्यसंभवात् । अन्य थाऽनौष्ण्यस्यातींद्रियत्वोक्तिसंभवेनतत्रापिबाधोद्भावनमसंभविस्यात् । तस्मात्प्रत्यक्षस्यानुमानाबाधकत्वेपशुत्वादिनाशृंगादि साधनमपिस्यादेवेतिसाधूक्तं ॥ घटवृत्तित्वादिनेति ॥ घटमात्रवृत्तित्वादिनेत्यर्थः । तेनचित्त्वादीनांदृष्टांतत्वसंभवो नवाऽ सिद्धिरिति ॥ ७ ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यामक्षंनोलिंगबाधितं ॥ प्रत्यक्षस्यानुमा नबाध्यत्वेबाधकं ॥ १२ ॥ ७ ॥ ७ ॥ तस्माद्धूमएवेति ॥ अर्थवादाधिकरणे "शास्त्रदृष्टविरोधाच्चे" तिपूर्वपक्षसूत्रेणतस्माद्धू मएवाग्नेर्दिवाददृशेनार्चिस्तस्मादर्चिरेवाग्नेर्नक्तंददृशेनधूमइत्यादीनांदृष्टविरोधादप्रामाण्यमाशंक्य "गुणवादस्तु" इतिसिद्धांतसू त्रेणगुणवादमभ्युपेत्यप्रामाण्यमुक्तं । तथाहि "सूर्योज्योतिर्ज्योतिरग्निःस्वाहेतिसायंजुहोति अग्निर्ज्योतिर्ज्योतिःसूर्यःस्वाहे" ति

प्रातरितिमिश्रलिंगमंत्रविधिशेषोधूमएवाग्नेर्ददृशेइत्यादिरर्थवादः । दिवाअग्निरादित्यमनुप्रविशति रात्रावादित्येस्तमित्येतमर्थमुपपादयन्विधेयमर्थंस्तौति । धूमएवेत्यवधारणंतुदूरभूयस्त्वात् दूरस्थैर्हिदिवाचधूमएवभूयान्दृश्यतेनार्चिः । रात्रौचार्चिर्भूयोदृश्यतेनधूमः । अतोनदृष्टविरोधादप्रामाण्यमिति ॥ अदितिर्द्यौरित्यादिमंत्रस्यचेति ॥ मंत्राधिकरणे“अर्थविप्रतिषेधा”दित्यादिसूत्रेणार्थविरोधाद्विरुद्धार्थकत्वात् “अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः । एकएवरुद्रोनद्वितीयायतस्थे सहस्रशोयेरुद्राअधिभूम्या”मित्यादेरप्रामाण्यमाशंक्य“गुणादविप्रतिषेधःस्या”दितिसिद्धांतसूत्रेणमातृत्वादिगुणैरदितिःस्तूयते तस्मादविरुद्धमित्यादिनांगौणार्थत्वमेवांगीकृतं तदेतत्सर्वंशब्दस्यप्रत्यक्षबाधकत्वेविरुध्येत । मुख्यार्थपरत्वमेवस्यादित्यर्थः ॥ तत्सिद्धिरित्यादीति ॥ प्रथमस्यचतुर्थेपादेविचारितं तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिंगसमवायाः वैदिकशब्देषुक्वचिद्गौणीवृत्तिरस्तीतिप्रतिपादयितुंगौण्यालक्षणंतावद्विचार्यते । गौणत्वमेकदेशेकिंवृत्तिःसंघातवाचिनः किमध्यारोपितार्थत्वंवृत्तिर्वागुणयोगतः । नाद्यःशौर्यादिरहितेसिंहेनोसिंहगीरियं । मुख्यवृत्तिंप्रपद्येताशतार्थेशतशब्दवत् । अतःसिंहत्वमारोप्यदेवदत्तेप्रयुज्यते । सिंहशब्दोन्यथानस्यात्तद्बोधःसिंहशब्दतः । शौर्यादिगुणयोगस्यासिंहत्वारोपकारणं । नचैवंमुख्यतापत्तिर्वाच्यस्यावास्तवत्वतः । व्रदेध्यारोपकाभावान्नाध्यारोपस्तुसंभवी । अतोवैदिकशब्देषुनगौणीवृत्तिरिष्यते । अत्रोच्यतेनसिंहत्वबुद्धिर्नरिकदाचन । विलक्षणाकृतित्वेनविशेषस्यैवदर्शनात् । सादृश्येप्यत्रनारोपःस्पष्टभेदप्रतीतितः । किंतुस्वार्थाविनाभूतशौर्यादिगुणयोगतः । पुंभिः प्रयुज्यमानस्यसिंहशब्दस्यगौणता । अतोवेदेपिगौणत्वंसंभवेद्गुणयोगतः । कथंतर्हिखपुष्पशशविषाणादिशब्दानांगौणीत्वंखपुष्पं

भवत्सिद्धांतइत्यादौ नहितेषांमुख्यमभिधेयमस्ति येनतत्सादृश्याद्गौणत्वंस्यात्। उच्यते। मुख्यमर्थंवदंत्येवशशशृंगादिकागिरः। असद्विशेषंतत्रापिविशेषोस्तीतिवक्ष्यते। असत्यप्यसत्वाविरोधीशेषोस्तीत्यनिर्वाच्यसाधकख्यातिवाधान्यथानुपपत्तिभंगेग्रंथकारएवंवक्ष्यति। तस्माद्वेदेपिगौण्याःसंभवाद्यजमानःप्रस्तरःयजमानएककपालइत्यादिषुविचार्यते नामधेयंवागुणविधिर्वाऽर्थवादोवेतिसंदेहेसामानाधिकरण्यादेकमितरस्यनामधेयंप्रस्तरशब्दोवायजमानस्ययजमानशब्दोवाप्रस्तरस्येतिपक्षोभिन्नार्थत्वेनप्रसिद्धत्वान्नैकमितरस्यनामधेयंभवितुमर्हतीतिनिरस्तः। नापितृतीयः। अर्थांतरवचनेनार्थांतरवचनस्यस्तुत्यसंभवात्। अष्टाकपालादिभिस्त्ववयवद्वारेणस्तुतिरुक्ताद्वादशकपालस्य नचप्रस्तरावयवंवचनोयजमानशब्दः। येनस्तुतिःस्यात् तस्मादन्यतरकार्येन्यतरविधानं गुणविधिः। तत्रापियजमानस्यमुख्यत्वाच्छ्रुतिवृत्तोयजमानःप्रस्तरशब्दलक्षितेस्रुग्धरणादौप्रस्तरकार्येविधीयते तस्माद्गुणविधिरितिप्राप्तेभिधीयते। यजमानस्यस्रुग्धारणेविनियुक्तस्यस्वपदार्थकरणविरोधात्प्रस्तरवच्चसूक्तवाकेनप्रस्तरंप्रहरतीतिप्रहरणापत्तेरेककपालवच्चसर्वहुतकरणात्सर्वतंत्रपरिलोपःस्यात्। तस्मादर्थवादः कथंपरशब्देनपरस्यस्तवनंसामानाधिकरण्यंवा गुणादितिब्रूमः। कथमगुणवचनोगुणमभिदध्यात्। नाभिदधाति किंत्वर्थसंबंधेनबोधयति यजमानशब्दोहिस्वार्थमभिधत्ते सचाभिहितःस्वसमवेतंस्वकार्यपरत्वंसंबंधाद्बोधयति। तच्चप्रस्तरेप्यस्तीतिप्रस्तरविबोधः। एवंस्वार्थसदृशेतद्गुणशालिनितात्पर्यंभजमानःशब्दोगौणः संपद्यते। यथालोकेसिंहोदेवदत्तइति तस्ययजमानस्यकार्यसिद्धिः यजमानकार्यकरत्वंस्रुग्धारणादियजमानशब्दस्यप्रस्तरेप्रवृत्तौ निमित्तंगुणः जातिः अग्निर्वैब्राह्मणइतिवार्तिककारस्योदाहरणं। आग्नेयोवैब्राह्मणःऐंद्रोराजन्योवैश्योवैश्वदेवइत्युदाहरणं। अत्रा

पिपूर्ववन्नामधेयत्वगुणविधित्वार्थवादत्वसंदेहेअर्थवादत्वसिद्धांतः निमित्तांतरकथनायपृथगुक्तिः । अग्निसंबंधोमुखजन्यत्वगुणोब्राह्मणेवर्तते । श्रूयतेचाग्निब्राह्मणयोर्मुखजन्यत्वंकस्मिंश्चिदर्थवादे । प्रजापतिरकामयतप्रजाःसृजेयेति समुखतःत्रिवृतंनिरमिमीतअग्निर्देवताअन्वसृज्यतगायत्रीछंदोरथंतरंसामब्राह्मणोमनुष्याणामजःपशूनांतस्मात्तेमुख्याःमुखतोह्यसृजंतेति । तस्मादाग्नेयशब्दस्तावकः । एवमैंद्रोराजन्योवैश्योवैश्वदेवइत्यादिषुद्रष्टव्यं । सारूप्यात् । आदित्योयूपोयजमानोयूपः । अत्रापितएवपक्षाः सारूप्यंत्वत्रप्रवृत्तिनिमित्तं । तच्चतेजस्वित्यादि । ननुसर्वत्रसारूप्यंगौणत्वनिमित्तंकोत्रविशेषः । इहचक्षुर्ग्राह्यसारूप्यंविवक्षितं । प्रशंसा प्रशंसाप्यपरंशब्दस्यगौणत्वेनिमित्तं । तथाहि । अपशवोवा अन्येगोअश्वेभ्यःपशवोगोअश्वाइत्यत्र अजादिषुश्रूयमाणंयदपशुत्वंतस्यार्थवादत्वंनसंभवति । पशुत्वनिषेधमात्रेणस्तुतेरसंभवात् । नामधेयत्वंत्वनाशंक्यमितिगुणविधित्वेनपूर्वःपक्षः । पशुकार्येगवाश्वव्यतिरिक्तानामजादीनांप्रतिषेधप्रतीतेरिति सिद्धांतस्तु । तत्रतत्राजादीनांविहितत्वादशक्यः पशुकार्येऽजादीनांप्रतिषेधः । पशुव्यतिरिक्तघटादिवचनस्यपरशब्दस्यापशुशब्दस्यपरत्राजादिषुगवाश्वगतप्रशंसानिमित्तः प्रयोगः । तस्मादर्थवादः । ननुसर्वएवप्रशंसानिमित्तोर्थवादःकिमत्रविशेषेणोपन्यस्यते । सत्यं । तत्सिद्ध्यादिनागुणेनप्रस्तरादिषुप्रवृत्तोयजमानादिशब्दःप्रस्तरादेःप्रशंसाफलोभवति । इहतुशब्दप्रवृत्तिनिमित्तमपिगुणःप्रशंसैव । तथाहि । अयमत्रार्थः । अपशवोवाअन्येगोअश्वेभ्यःइत्यत्रनञ्समासगेनपशुशब्देनप्रथमंगवाश्वगतंप्राशस्त्यमुपादायपश्चात्तदभावोनञापश्वंतरेषुकथ्यते । नहिपशुत्वंशक्यंप्रतिषेद्धुं अवश्यंचपशुशब्दोपात्तोर्थोनञापश्वंतरेषुप्रतिषेद्धव्यः शक्नोतिचायंपशुशब्दोगवाश्वाभ्यामेकवा

क्यतयासंबद्धस्तद्गतंप्राशस्त्यंलक्षयितुं तच्चनञापर्युदसिष्यते। एतदुक्तंभवति गवाश्वेषुयत्प्राशस्त्यंनतदन्येष्वस्ति। तस्मादप्रशस्तास्ते। गवाश्वमेवप्रशस्तं। सोयंगवाश्वगतप्राशस्त्याभावःपश्वंतराणामपशूनांतुल्यइत्यनेनाभिप्रायेणपश्वंतराण्यपशवइत्युच्यंते। द्विप्रकाराहिप्रशंसा वस्तुनिविद्यमानगुणोत्कर्षएकःप्रकारः। स्तावकेनशब्देनसंपादितोगुणोत्कर्षोऽपरःप्रकारः। गवाश्वयोरजादिभ्यउत्कर्षोलोकसिद्धोयःसोत्रनिमित्तं। अजादयःस्वभावतःपशवोपिसंतोगवाश्वौप्रत्यपशवःसंपन्नाईदृशोर्गवाश्वयोर्महिमेतिस्तुतिःफलं। नन्वपशुशब्दस्याजादिषुप्रवृत्तौकथंगवाश्वगतंप्राशस्त्यंनिमित्तं। व्यधिकरणत्वात्। अजादिगतप्रशंसाभावस्तुनिमित्तंस्यात्समानाधिकरणत्वात्। अतोप्रशंसैवसूत्रणीयानतुप्रशंसेतिचेदत्रब्रूमः। अजादिषुप्रवृत्तावपशुशब्दस्यतदवयवभूतेनपशुशब्देननिषेध्यमर्पयतासन्निहितगवाश्वगतप्रशंसायाउपादानादपशुशब्दःप्रशंसानिमित्तइत्युच्यते। एतेनापशुशब्दोऽजादिषुप्रवर्तते गवाश्वौचस्तौतीतिव्यधिकरणमितिपरास्तं। तत्सिद्ध्यादिषुशब्दप्रवृत्तिस्तुत्योःप्रस्तरादिनिष्ठत्वेपिप्रकृतेभिन्नरूपत्वात्। अजादिष्वप्रशंसयाप्रवर्तमानस्यापशुशब्दस्यार्थविशेषकरणत्वाभावाच्च। नचरजतनिंदयाहिरण्यस्तुतिवदजादिनिंदयागवाश्वयोःस्तुतिःस्यादितिवाच्यं। अपशुशब्दात्स्पष्टंनिंदायाअप्रतीतेः। तस्मात्प्रशंसैवसूत्रणीयेतिप्रशंसानिमित्तोयमर्थवादः। अयज्ञोवाएषयदसामा अयज्ञोवाएतद्यदछंदोममित्यादिष्वयमेवन्यायः। छंदोमशब्देनचतुर्विंशःचतुश्चत्वारिंशोष्टचत्वारिंशइत्येतेत्रयःस्तोमाउच्यंते। अक्षरसंख्यासाम्येनगायत्रीत्रिष्टुब्जगतीछंदोभिर्गीयमानत्वात्। भूमा अग्निचयनेश्रूयते। सृष्टीरुपदधातीतिसृष्टिशब्दोपेतामंत्रायासामिष्टकानामुपधानेविद्यंतेताइष्टकाःसृष्टयइत्युच्यंते। सृष्टिमानासामुपधानोमंत्रइतिविगृह्य "तद्वा

नासामुपधानोमंत्रइतीष्टकासुलुक्कमतो"रितिव्याकरणसूत्रसिद्धप्रक्रिययातन्निष्पादनात् सृष्टिशब्दोपेताश्चोपधानमंत्रा "एकयासू
वते"त्यस्मिन्ननुवाकेसमाम्नाताः ब्रह्मासृज्यतभूतान्यसृज्यंतेत्यादिनासृजतिधातोस्तेषुप्रयुक्तत्वात् । तेमंत्राअत्रसृष्टिशब्देनोपधा
नेगुणत्वेनविधीयंतेउतसृष्टिशब्दोऽनुवादरूपोर्थवादोवेतिसंशयेमंत्ररूपगुणविधिरितिपूर्वःपक्षः । कुतः उपदधातीत्यनेनाख्या
तेनाभिसंबंधात् । नचार्थवादत्वमस्यसंभवति विध्यंतरेणसहैकवाक्यत्वाभावादितिप्राप्तेऽभिधीयते । लिंगप्रकरणाभ्यामेवमंत्रा
णांप्राप्तत्वान्नविधिःसंभवति । तथासतिपरिसंख्यास्यात् बहुषुमंत्रेषुप्रकरणप्राप्तेषुसृष्टिविधानादन्येपरिसंख्यायेरन् । साचत्रि
दोषा परिसंख्यातानांचमंत्रांतराणामानर्थक्यंस्यात् । तस्मान्नतेमंत्राअत्रविधीयंते किंतुतान्मंत्राननूद्येष्टकोपधानंविधीयते ।
सृष्टिशब्देनानुवादस्तुवक्ष्यमाणार्थवादोपपत्त्यर्थः । यथासृष्टमेवावरुंधइतिवक्ष्यमाणोर्थवादः यदिविधिवाक्येमंत्राणामनुवादकः
सृष्टिशब्दोनस्यात्तदानीमर्थवादेसृष्टिशब्दप्रयोगाद्विध्यर्थवादयोर्वैयधिकरण्यभ्रमःस्यात् तस्मान्मंत्रानुवादीसृष्टिशब्दोनगुण
विधायकः किंत्वर्थवादः । ननुप्रथममंत्रेसृजतिशब्दोनप्रयुक्तः किंतुदधातिधातुःएकयास्तुवतेप्रजाअधीयंतेतितत्पाठात् बाढं ।
तथापिद्वितीयादिषुबहुषुमंत्रेषुसृजतिधातुप्रयोगाद्भूम्नागुणेनसृष्ट्यसृष्टिसमुदायेसृष्टिशब्दोगौणःप्रवर्ततइतिभाष्याभिप्रेतःपक्षः ।
एवंच"तद्वानासामुपधान"इत्यादिव्याकरणसूत्रमप्यनुसृतंभवति । यद्यपिव्याकरणसूत्रानुसारेणसृष्टिशब्दार्थांतर्गतत्वादुपधा
नमपिनपृथग्विधेयं । तथाप्युपधानरूपसृष्टिपदार्थविधानार्थंविधिप्रत्ययस्तावदवश्यंप्रयोक्तव्यः सचधातुंविनानकेवलंसाधुःप्रयो
गइतियस्यकस्यचिद्धातोःप्रयोक्तव्यत्वेबुद्धिसन्निहितउपदधातिरेवप्रयुज्यते । सृष्टिशब्दोपेतामंत्रायासामिष्टकानामुपधानेवर्तंत

इत्येवसृष्टिपदार्थैइष्टकाविशेषणत्वेनोपस्थितस्योपधानविशेषस्यविधिसंबंधेक्लिष्टत्वाच्चेतिवयंपश्यामः । केचित्त्वयंमंत्रविधिरि
तिसमर्थयंते । नह्येकयास्तुवतइत्यादीनामुपधानैकांतिकंलिंगमस्तियेनप्राप्तिःस्यात् । इष्टकालिंगस्यस्त्रीलिंगशब्दप्रयोगादेःसा
धारणत्वेनग्रहणासादनादिष्वपीष्टकानांप्राप्नुयुः । तथासत्यस्तिविधेरवकाशः । सत्यामप्युपधानेप्राप्तौमध्यमचितिसंबंधार्थम
पिप्रत्यक्षविधानमर्थवद्भविष्यति । यांकांचिद्ब्राह्मणवतीमिष्टकामभिजानीयात्तांमध्यमायांचितिनिदध्यादितिवचनात् लिंग
समवायात् । चयनेश्रूयते प्राणभृतउपदधातीति । अत्रापिसृष्टिन्यायेनमंत्रविधिरितिपूर्वःपक्षः । लिंगप्रकरणप्राप्तमंत्रानुवादेनेष्ट
कोपाधानविधिरितिसिद्धांतः । एतस्यैवप्राणान्दधातीत्यस्यवक्ष्यमाणार्थवादस्योपपत्तयेप्राणभृच्छब्देनमंत्रानुवादः । पूर्वत्र
द्वितीयादिमंत्रेषुसृष्टिलिंगानांबाहुल्यं । इहतुप्रथममंत्रएवप्राणभृल्लिंगमाम्नायते । अयंपुरोभौवनस्तस्यप्राणोवांयतइतिएकस्यैव
मंत्रस्यप्राणभृत्त्वेपितत्सहचरिताःसर्वएवमंत्राःछत्रिन्यायेनप्राणभृच्छब्देनलक्ष्यंते प्राणभृदप्राणभृद्गणेपिप्राणभृच्छब्दसमवायो
स्तीतिसर्वेषुतदनुवाकगतमंत्रेषुप्राणभृच्छब्दोगौणः । तत्सिद्ध्यादिभिर्हेतुभिर्यजमानादिशब्दागौणाश्रयाःगुणवृत्तयइतिसमग्र
सूत्रार्थः । तदुक्तं "तत्सिद्धिजातिसारूप्यप्रशंसालिंगभूमभिः । षड्भिःसर्वत्रशब्दानां गौणीवृत्तिःप्रकल्पिते"ति । विशेषस्तुपुष्प
टीकादौद्रष्टव्यः । अनेकप्रमेयसंग्रहरूपत्वात्पेटिकाशब्दः ॥ [१९३।५] अनन्यपरत्वादिति ॥ अद्वैतेतात्पर्यलिंगानांसत्त्वेनाद्वैततात्पर्य
कत्वादन्यत्रतात्पर्यलिंगाभावेनान्यत्रतात्पर्याभावइत्यर्थः । अत्रवदंति।सि० "प्रमाणांतरसंवादार्थक्रियादिरूपपरीक्षापरीक्षितस्य
प्रत्यक्षस्यप्राबल्येनव्यवहारदशायामेवतद्विरुद्धग्राहिणोधूमएवाग्नेर्दिवाददृशे अदितिर्द्यौर्यजमानःप्रस्तरइत्यादेःतद्विरोधेनामु

या० १२४

ख्यार्थत्वेप्यद्वैतागमस्यपरीक्षितप्रमाणविरोधाभावेनमुख्यार्थत्वोपपत्तेः । प्रत्यक्षादेर्हिपरीक्षयाव्यावहारिकप्रामाण्यमात्रंसिद्धं । तच्चनाद्वैतागमेनवाध्यते । वाध्यतेतुतात्विकंप्रामाण्यं । तच्चपरीक्षयानसिद्धमेवातोनविरोधः । धूमएवाग्नेरित्यादेस्तुमुख्यार्थत्वेनप्रत्यक्षादेर्व्यावहारिकंप्रामाण्यंव्याहन्येत । अतोविरोधात्तत्रामुख्यार्थत्वमितिविवेकः । यत्तुप्रत्यक्षाविरोधायतत्त्वंपदलक्षणानाश्रीयेतेति । तन्न । षड्विधलिंगैर्गतिसामान्येनवाखंडएवावधार्यमाणस्यतात्पर्यस्यानुपपत्तेर्जीवेशगतसर्वज्ञत्वकिंचिज्ज्ञत्वादीनामनुपपत्तेरैक्यस्यतात्पर्यविषयीभूताखंडप्रतीतिनिर्वाहायलक्षणांगीकरणस्यैवोचितत्वात् । तात्पर्यविषयीभूतान्वयनिर्वाहायलक्षणाश्रयणस्यसर्वत्रदर्शनात् । नचैवंसत्यमुख्यार्थत्वंस्यादितिवाच्यं । तद्धिप्रतीयमानार्थपरित्यागेनार्थांतरपरत्वंवाअशक्यार्थपरत्वं । नाद्यः । सामानाधिकरण्येनप्रतीयमानस्यैक्यस्यात्यागात् । नांत्यः । जहदजहल्लक्षणाश्रयणेनशक्यैकदेशपरित्यागेपि सोयंदेवदत्तइत्यादिवाक्यइवशक्यैकदेशस्यैवान्वयाभ्युपगमात् ॰। विशेषणबाधेनविशेष्यमात्रान्वयस्यैवात्रलक्षणाशब्देनव्यपदेशादिति" ॥ मैवं । परीक्षयाप्रत्यक्षादीनामद्वैतागमंसमानयोगक्षेमप्रामाण्यस्यैवप्राप्तेर्विरोधस्यवज्रलेपत्वात् । यत्तुषड्विधलिंगैरित्यादि । तदपिन । अन्योन्याश्रयात् । सिद्धेऽखंडेतात्पर्येतन्निर्वाहायसार्वज्ञादित्यागेनलक्षणयाविशेष्यपरतयामानांतराविरोधः । तदविरोधेचतात्पर्यलिंगैरखंडगोचरतात्पर्यसिद्धिरिति । लौकिकवाक्यस्यमानांतरविरुद्धार्थगोचरतात्पर्यकत्वेपिवैदिकवाक्यस्यन्यायगम्यतात्पर्यकस्यमानांतराविरुद्धएवतात्पर्यकल्पनात् ॥ [११३।२] नहीति ॥ मानांतराविरोधएवोपक्रमादीनांतात्पर्यप्रमापकत्वंनतुतद्विरोधेपीत्याखंडलार्थः ॥ [११३।२] वाक्यमिति ॥ आगमवाक्यमित्यर्थः ॥ [११३।७] नविधाविति ॥ विधौ विधायकेवाक्ये परः प्र

तीयमानवाक्यार्थातिरिक्तोन्योवाक्यार्थो नास्तीत्यर्थः ॥ अन्यशेषेपीति ॥ इयंगौःक्रय्येत्यस्यशेषभूतेवहुक्षीराद्यपत्याअ
नघप्रजेत्यादिवाक्येप्रतीयमानबहुक्षीरादिसंसर्गपरत्वेनमुख्यार्थत्वात् ॥ कामंधेनुरिति ॥ व्यतिरेकदृष्टांतः। हिरण्यदक्षिणाँवि
धिशेषेसोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वंयदश्रवसीयततद्रजतँहिरण्यमभवत् तस्माद्रजतँहिरण्यमदक्षिण्यंअश्रुजमित्यादिष्वपि
प्रतीयमानसंसर्गपरत्वंविनारजतनिंदासिद्धेःप्रतीयमानसंसर्गपरत्वरूपमुख्यवृत्तिरेवाश्रितेत्यर्थः ॥ प्रस्तरादीति ॥ व्यतिरेक
दृष्टांतः। अत्रवदंति। सि० "तात्पर्यविषयीभूतार्थबोधकत्वंहिमुख्यार्थत्वं नशक्यार्थमात्रबोधकत्वं। अन्यार्थतात्पर्यकत्वंचामु
ख्यार्थत्वं नलाक्षणिकत्वमात्रं। तथाचाद्वैतागमस्यतात्पर्यविषयीभूतार्थबोधनिर्वाहायलक्षणाश्रयणेपिमुख्यार्थत्वमुपपन्नं। एवंच
सोमेनयजेतेत्यादिविशिष्टविधेर्विशेषणतात्पर्याभावान्मत्वर्थलक्षणायामपिस्वार्थापरित्यागाच्चनामुख्यार्थत्वं जिज्ञासापदेतुज्ञाधा
तुनाइष्यमाणज्ञानलक्षणांगीकारानंगीकारमतभेदेपि सन्पदस्यविचारेजहल्लक्षणाभ्युपगमस्योभयत्रतुल्यत्वाच्छक्यार्थपरित्यागे
पिविधितात्पर्यनिर्वाहान्नामुख्यार्थत्वं। नहिवाक्यार्थप्रतीत्यन्यथानुपपत्त्यापदमात्रेणलक्षणायामपिवाक्यस्यामुख्यार्थत्वं प्रतीत
स्यार्थस्यानन्यशेषत्वेनमुख्यत्वात्। यत्रपुनःप्रतीतएववाक्यार्थोन्यशेषत्वेनकल्प्यते तत्रवाक्यस्यामुख्यार्थत्वमेव। अन्यद्धिपदता
त्पर्यं। अन्यच्चवाक्यतात्पर्यं। सैंधवमानयगंगायांवसतीत्यादौवाक्यतात्पर्यैक्येपिपदतात्पर्यभेदात्। विषंभुंक्ष्वेत्यादौपदतात्प
र्याभेदेपिवाक्यतात्पर्यभेदात्। अतएवगौःक्रय्यावहुक्षीरेत्यादिवाक्यस्यावश्यंक्रेतव्येतिविधिशेषत्वेनतत्प्राशस्त्यलक्षकत्वादमु
ख्यार्थत्वं। सोरोदीदित्यादिवाक्यार्थस्यचहिरण्यंदक्षिणेतिविधिशेषत्वेनरजतनिंदाद्वारातत्प्राशस्त्यलक्षकत्वात्। सर्वंखल्विदंब्र

ह्मतज्जलानितिशांतउपासीतेतिशमविधिशेषत्वेनात्यनायाससिद्धत्वरूपतत्प्राशस्त्यलक्षकत्वादमुख्यमेव। अतएवमानांतरविरोध एवलक्षणेत्यपास्तं । इयंगौर्बहुक्षीरेत्यादिनाप्राशस्त्यलक्षणायांव्यभिचारात्। किंतुपरमतात्पर्यविषयीभूतार्थप्रतीतिनिर्वाहायैवसर्वार्थवादेषुलक्षणा । एतावांस्तुविशेषः । विधिप्राशस्त्यलक्षणातःप्राग्यदर्थवादवाक्यार्थज्ञानंतस्यप्रमाणांतरविरोधेबाधएव यथाप्रजापतिरात्मनोवपामुदखिददित्यादौ । अतएवात्रगुणवादमात्रं प्रमाणांतरप्राप्तौत्वनुवादमात्रमग्निर्हिमस्यभेषजमित्यादौ। अतएवतदुभयत्राबाधिताज्ञातज्ञापकत्वरूपप्रामाण्यशरीरानिर्वाहादप्रामाण्यं । यत्रपुनःप्रमाणांतरप्राप्तिविरोधौनस्तस्तत्रप्रामाण्यशरीरनिर्वाहाद्भूतार्थवादत्वं यथेंद्रोवृत्रायवज्रमुदयच्छदित्यादौ । अयमेवदेवताधिकरणन्यायः। ननुतर्ह्यादित्योयूपइत्यादौवाक्यार्थप्रतीत्यर्थमेवलक्षणांगीकारादमुख्यार्थत्वंनस्यात्। नस्यात्यद्यादित्यसदृशोयूपइतिवाक्यार्थपर्यवसानंस्यात्। किंतुगुणवृत्त्याप्रतीतस्यापिवाक्यार्थस्ययूपेपशुंबध्नातीतिविधिशेषत्वेनतत्प्राशस्त्यलक्षकत्वमस्त्येव। तेनैवामुख्यत्वं नतुपदगौणतयेति । तत्सिद्धिपेटिकायांसर्वोदाहरणेष्ववांतरवाक्यार्थप्रतीतयेगुणवृत्तिप्रकाराःप्रदर्शिताः । कर्मप्राशस्त्यलक्षणातुसर्वार्थवादसाधारणीतत्रास्त्येवेतिनामुख्यार्थत्वानुपपत्तिः । अतउपपन्नंप्रस्तरादिवाक्यवैषम्यमद्वैतवाक्यस्य । तस्मादद्वैतागमस्यलाक्षणिकत्वेपिमुख्यार्थत्वात्प्रत्यक्षबाधकत्वमिति ” अत्रब्रूमः । तत्त्वमसि सोमेनयजेतेत्यादौवाक्यार्थस्यानन्यशेषत्वरूपामुख्यार्थत्वेपि बहुक्षीरा सोरोदीदित्यादौवाक्यार्थस्यान्यशेषत्वरूपामुख्यार्थत्वेपिस्वरसप्रतीतसमानाधिकरणपदार्थाभेदरूपवाक्यार्थनिर्वाहायतत्त्वंपदयोर्जहदजहल्लक्षणाश्रयणंसोमपदेमत्वर्थलक्षणाश्रयणंचनस्यात् । यदिप्रत्यक्षमागमबाधकंनस्यात्। सहितत्त्वं

पदार्थयोःसर्यज्ञत्वादिभोक्तृत्वादिविशिष्टयोरभेदबोधनेसोमद्रव्यस्यचयागाभेदबोधनेप्रत्यक्षविरोधादन्योदोषोस्ति । एवंजिज्ञा
साशब्दगतसन्पदेपिविचारेजहल्लक्षणानस्यात् । सन्पदार्थस्येच्छायाःविधिपरतंत्रत्वाभावबोधकमानस्यैवतद्धिजिज्ञासस्वेतीच्छा
विधायकागमवाधितत्वेनसन्पदस्यमुख्यार्थतायाएवप्राप्तेः । किंचान्यशेषस्यामुख्यत्वेप्रस्तरवाक्यमन्यशेषत्वादमुख्यार्थमितिहे
तुहेतुमद्भावोनोपपद्यते। यच्चोक्तं तात्पर्यविषयीभूतार्थबोधकत्वंमुख्यार्थत्वंनतुशक्यमात्रबोधकत्वमिति । तदपिन। मानांतर
विरुद्धेवाक्यतात्पर्यस्यैवानुपपत्तेः । मानांतरविरुद्धेवाक्यतात्पर्यवत्पदतात्पर्यस्याप्यापातेनतत्त्वंसोमसन्पदादिलक्षणायाअ
प्यसिद्धेः । अन्यशेषीभूतवाक्यार्थप्रतिपादकेसमिधोयजतीत्यादौवेदेतंडुलान्पचेतेत्यादौलोकेचामुख्यार्थत्वव्यवहाराच्च ॥ स
[११४।६]
र्वस्यापिवाक्यस्येति ॥ मिथ्यात्ववादिनाप्रत्यक्षवाधकत्वेनआगमेऽद्भाविते सत्यत्ववादिनाआगमस्यमुख्यार्थत्वेप्रत्युक्तेपुनः
[११५।३]
मिथ्यात्ववादिनाआगमस्यामुख्यार्थत्वंननिषेद्धव्यं । स्वाभ्युपगमविरोधापत्तेरितिभावः ॥ अनुवादमुख्यार्थत्वायेति ॥ अ
र्थवादमुख्यार्थत्वायेत्यर्थः । नन्वश्वप्रतिग्रहेष्टौप्रतिगृह्णीयादितिविधौप्रतिग्राहयेदिति व्यवधारणंकल्पनयाऽर्थवादानुसारेण
प्रयोजकव्यापारेलक्षणायाअंगीकरणादितिचेन्मैवं । नहितत्रार्थवादानुसारेणविधौलक्षणाकिंतु "प्रजापतिर्वरुणायाश्वमनयत्
संस्वांदेवतामार्छत् । सपर्यदीर्यत। सएतंवारुणंचतुष्कपालमपश्यत् तंनिरवपत् ततोवैसवरुणपाशादमुच्यत वरुणोवाएतंगृ
ह्णाति योश्वंप्रतिगृह्णाति यावतोश्वान्प्रतिगृह्णीयात्तावंतोवारुणांश्चतुष्कपालान्निर्वपेत् । वरुणमेवस्वेनभागधेयेनोपधावति ।
सएवैनंवरुणपाशान्मुंचती"त्यत्रोपक्रमस्वारस्यायैवोपसंहारेलक्षणा । प्रजापतिर्वरुणायाश्वमनयदितिप्रजापतिर्दातासंकीर्तितो

वरुणःप्रतिग्रहीता । सस्वांदेवतामार्छदितिसइतिसमानविभक्तिनिर्दिष्टःप्रजापतिःस्वांदेवतांपूर्ववाक्येसंप्रदाननिर्देशाद्वरुणमा-र्छत् अपरराध्न। सपर्यदीर्यत भीतोविदीर्णोवा। सएतंवारुणंचतुष्कपालमपश्यत् । ततोवैसवरुणपाशादमुंचतइतिसर्वत्रप्रजापतिरेवदातानुषज्यते। तथाचान्योप्यश्वस्यदीता एतामिष्टिंकुर्यादित्युपक्रमेदातुरिष्टिःप्रतीयते । वरुणोवाएतमित्याद्युपसंहारेप्रतिग्रहीतुः उपक्रमप्राबल्याच्चदातुरिष्टिर्नार्थवादबलवत्त्वात् । अपिचतंत्रसारे "मैत्रायणीयशाखायांदात्रुपक्रमतोप्यृते,। कर्मांगत्ववशादेवदातुरिष्टिःप्रतीयते"इत्युक्तत्वेनवचनादेवदातुरिष्टिर्नत्वर्थवादानुसारेणविधिवाक्येव्यवधारणकल्पनादिनादातुरिष्टिरिति ॥ ७ ॥ ७ ॥ व्यासाद्रिसृततर्काबुपूरैःपक्षयुगैर्युजि । न्यायामृततरंगिण्यामक्षंनोशब्दवाधितं ॥ प्रत्यक्षस्यशब्दबाध्यत्वेबाधकं ॥ १३ ॥ ७ ॥ ७ ॥ अपच्छेदन्यायेनेति ॥ षष्ठस्यपंचमेस्थितं । पौर्वापर्येपूर्वदौर्बल्यंप्रकृतिवत् । बहिष्पवमानस्तुत्यर्थंप्रस्तोतृप्रतिहर्तारौप्रतिहर्त्रुद्गातारौचसमन्वारब्धाःप्रसर्पंति । अध्वर्युंविनिष्क्रामंतंप्रस्तोतासंतनुयात् । तंप्रतिहर्ता तमुद्गाता तं ब्रह्मा तंयजमानइतिवचनात् । तत्रविभागेप्रायश्चित्तंश्रुतं यदिप्रस्तोतापच्छिद्येतब्रह्मणेवरंदद्यात् । यदिप्रतिहर्तापच्छिद्येतसर्ववेदसंदद्यात् । यद्युद्गातापच्छिद्येतादक्षिणंयज्ञमिष्ट्वातेनपुनर्यजेत तत्रतद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यादिति । पूर्वाधिकरणेस्थितमपच्छेदस्ययौगपद्येविकल्पइति । इदानींपौर्वापर्येकिंविकल्पउतबाधइतिचिंत्यते । तत्रपूर्वःपक्षः । नतावदत्रसामान्यविशेषनित्यनैमित्तिकनित्यकाम्यक्रत्वर्थपुरुषार्थाल्पभूयस्त्वसावकाशनिरवकाशत्वांगप्रधानतद्धर्मत्वलक्षणःकश्चिदपिशास्त्रद्वयस्यमिथोबाधेहेतुरस्ति । नापिप्रमाणतदाभासवत्पौर्वापर्येणबाधः । शास्त्रावधारणवेलायांपौर्वापर्याभावात् । प्रयोगस्थंतुपौर्वापर्यंन शास्त्रार्थं

॥ ८९ ॥

वधारणायालं । नहिप्रयोगाधीनंशास्त्रार्थावधारणं। तदवधारणोत्तरकालत्वात्तत्प्रयोगस्य। किंच। यःपूर्वस्यपरेणबाधमिच्छति तेनतावदुत्पन्नस्योत्पत्तिविरोधलक्षणबाधासंभवान्मिथ्यात्वलक्षणबाधोवक्तव्यः । नचनामशास्त्रस्यमिथ्यात्वसंभवः । सामान्य शास्त्रादेर्हिविशेषशास्त्रादिवशात्तद्व्यतिरिक्तविषयपरिकल्पनान्नमिथ्यात्वप्रसक्तिः । इहत्वस्मिन्नेवप्रयोगेशास्त्रेणोत्पन्ननैमित्ति कंविज्ञानमित्यविवादं । नतद्विषयांतरेव्याख्यातुंशक्यं । तत्रतद्बाधेशास्त्रस्यप्रामाण्यबाधप्रसंगः । किंचमिथ्यात्वंविद्यमानमे वबाधकेनबोध्यते । नतुतद्वशेनमिथ्यात्वंजन्यते । नचात्रपूर्वविज्ञानस्यमिथ्यात्वमस्ति । अदुष्टकरणजन्यत्वात् । नचामिथ्या भूतस्यबाधसंभवः । तस्मात्पौर्वापर्योत्पत्तावपियेनकेनचित्कल्पेनैवक्रतावधिक्रियेतैवेति । सिद्धांतस्तु । यथाशक्त्यनुबंधादा ख्यातोविदधदेवस्वार्थविरुद्धंधर्मांतरमबाधित्वास्वार्थंबोधयितुमशक्नुवन्पूर्वविज्ञानंबाधते। आगंतुकनिमित्तसंबंधेनक्रतोर्विका रेविधीयमानेऽयमर्थोवगम्यते । प्रागन्यादृशोपिक्रतुःफलसाधनःसन्नस्मिन्निमित्तेसंजातेसत्यन्यादृशःफलंसाधयतीति । ततश्च यथाद्वादशशतदक्षिणःफलसाधकः सचोद्गात्रपच्छेदेसंजातेसत्यदक्षिणः पुनरावृत्तिधर्मकश्चफलसाधनंभवति प्रतिहर्त्रपच्छेदेच सर्ववेदसदक्षिणः तथाद्वयोर्निमित्तयोरन्यतरेणपूर्वोत्पन्नस्यादाक्षिण्यस्यसर्ववेदसदाक्षिण्यस्यवासतःपश्चात्तनेननिमित्तांतरेणसा मर्थ्यांतरमेवक्रतोर्जातमितिपूर्वस्यपरेणबाधः । सचायंशास्त्रार्थावधारणवेलायामेवप्रायोगिकेणपौर्वापर्येणशास्त्रयोर्मिथोबाधोव गम्यतइतिनप्रयोगोत्तरकालंशास्त्रार्थावधारणापत्तिः । नचशास्त्रस्याप्रामाण्यप्रसंगः । यत्रपाश्चात्यंनिमित्तांतरंबाधकंनास्तित द्विषयत्वेनशास्त्रव्याख्यानात् । प्रकृतिवच्छन्दस्यैवलुप्तार्थप्रत्याम्नातप्रतिषिद्धातिरिक्तविषयतया श्रुतिलिंगादिषुतुपूर्वपूर्वविरो

धेपरस्यानुत्पत्तिरेवेतिपूर्वस्यप्राबल्यं । इहतुपूर्वविज्ञानसमयेपरस्यानुत्पन्नत्वेनाविरुद्धत्वात्अबाध्यत्वं । नह्यसतोबाधःसंभवति । उत्तरस्यपूर्वबाधनमंतरेणावस्थितिर्नसंभवतीतिपूर्वप्रतिबाधकत्वं । तदुक्तंवाचस्पत्ये । "पूर्वंपरमजातत्वादबाधित्वैवजायते । परस्यत्वन्यथोत्पादात्तदबाधेनसंभव" इति । तस्मात्पूर्वस्यपरेणबाधइति । तत्रविप्रतिषेधाद्विकल्पःस्यादिति । यौगपद्येप्रायश्चित्तद्वयमापतति । तत्किंसमुच्चीयते उतविकल्प्यतइतिविचारः । तत्रपूर्वःपक्षः । उद्गात्रपच्छेदेपुनर्यज्ञादिविधानाददाक्षिण्यसर्ववेदसदानयोःप्रयोगद्वयेनानुग्रहसंभवात्सत्यांगतावष्टदोषनिदानविकल्पासंभवात्समुच्चयइति । सिद्धांतस्तु । यस्मिन्नेवप्रयोगे प्रतिहर्त्रपच्छेदस्तस्मिन्नेवतन्निमित्तंप्रायश्चित्तंसर्वस्वदानंकर्तव्यमित्यवगमान्नप्रयोगांतरेणतदनुग्रहसंभवः । किंचयत्पूर्वस्मिन्दातव्यंतदेवपुनःक्रतौदास्यन्स्यात् । यदिपूर्वस्मिन्नसर्वस्वंततस्तस्यपुनःक्रतावपिनदानसंभवः । अथदातव्यंततस्तुल्यत्वान्नादाक्षिण्येनबाधसंभवः । तस्माद्युगपदुभयनिपातात्परस्परविरुद्धंनैमित्तिकंविकल्पितुमर्हतीति ॥ यद्युद्गाताजघन्यःस्यात्सर्ववेदसंदद्यादित्यधिकरणइति ॥ एतच्चसूत्रमर्थतःपठितं । नतुयथापाठं । सूत्रपाठस्तु । यद्युद्गाताजघन्यःस्यात्पुनर्यज्ञेसर्ववेदसंदद्यात् यथेतरस्मिन्नित्येवंरूपः । पौर्वापर्येपरेणपूर्वबाधइतिस्थितं तत्रप्रतिहर्त्रपच्छेदानंतरमुद्गात्रपच्छेदेसतिकर्तव्येपुनःप्रयोगेसति किंद्वादशशतंदेयमुतसर्ववेदसंद्वादशशतयोर्विकल्पउतसर्ववेदसमेवेतिसंशयः । तत्रपूर्वःपक्षः । यत्पूर्वस्मिन्दास्यन्स्यादितियदेवक्रतौस्वभावतोदेयं तदेवपुनर्देयंप्रतीयतइत्येकः । प्रथमंद्वादशशतंदास्यन्नासीत्प्रतिहर्तरित्वपच्छिन्नेसर्ववेदसं अतउभयमपि पुनःप्रयोगेयत्पूर्वस्मिन्दास्यन्स्यादितिशक्यंवक्तुं । तस्माद्विकल्पइति द्वितीयः। सिद्धांतस्तु । द्वादशशतस्यसर्ववेदसेनबाधितत्वात्

नतद्दास्यन्भवति । यच्चपूर्वंदास्यन्भवतितत्पुनःक्रतौदंये । तस्मात्सर्ववेदसमेवदेयं । ननुतदप्यदाक्षिण्येनवाधितं । मैवं । वाधो हिपरिमाणांतरं । यथाप्रतिहर्त्रपच्छेदेसर्ववेदसंदद्यादितिद्वादशशतविरुद्धपरिमाणांतरविधानाद्द्वादशशतस्यबाधः । नत्वेवमिह परिमाणांतरमस्ति । यतोर्थात्सर्ववेदसंनिवर्तेत । नचाहृत्यसर्ववेदसंप्रतिषिध्यते । नन्वदक्षिणःसंस्थाप्यइतिदक्षिणाप्रतिषेधः श्रुतएवं । मैवं । नायंप्रतिषेधोयथानगृह्णातिषोडशिनमिति । किंतर्ह्यदक्षिणस्यनिवृत्तिःकथ्यमानादक्षिणादानेसतिनसंभवतीत्य र्थाद्दक्षिणायानिवृत्तिःकल्प्यते । नतुशब्दात् । नदद्याद्दक्षिणामित्येवंशब्दाभावात् । नन्वर्थादपिसर्वस्वदक्षिणानिवर्ततएवेतिचेन्नार्थात्सर्ववेदसनिवृत्तिः । साभ्यासेक्रतावुभयंसमावेशेसंभवात् । ननुयस्मिन्नेवपूर्वप्रयोगेप्रतिहर्त्रपच्छेदःतस्मिन्नेवसर्वस्वं दातव्यं । नप्रयोगांतरेतस्यानुग्रहस्संभवति । तस्मिंश्चप्रयोगेऽदक्षिणसंस्थापनविधानात्वाधितमेवसर्वस्वदानंतुल्यंद्वादशशतेने तिचेत्सत्यं । पूर्वस्मिन्नेवप्रयोगेसर्वस्वंदातव्यं । प्रयोगांतरेचनतस्यानुग्रहःसंभवति । वचनात्तुप्रयोगांतरेनिक्षिप्यते । इदंहिवच नंयत्पूर्वस्मिन्प्रयोगेदातव्यंप्राप्तंतत्ततआच्छिद्यप्रयोगांतरेनिक्षिपति नतुस्वरूपमेवबाधते । तस्मात्सर्वस्वदानेनैवपुनःक्रत्वावधिकारइति द्विविधोपिपूर्वपक्षोनिरस्तोभवति । यद्युद्गाताजघन्यःस्यात् जघनंपश्चाद्देशमर्हतीतिजघन्यः अपच्छिद्येतेतियावत् । सदाऽऽरब्धंप्रयोगमदक्षिणंसमाप्यपुनर्यज्ञे पुनःप्रयोगे सर्ववेदसंदद्यात् । यथेतरस्मिन्प्रतिहर्तृमात्रापच्छेदेयथासर्वस्वंदेयंतथाप्र तिहर्त्रपच्छेदोत्तरभाव्युद्गात्रपच्छेदनिमित्तकद्वितीयप्रयोगेपिसर्वस्वंदेयमितिसूत्रार्थः ॥ ३३७।१ तस्यप्रयोगांतरेनिक्षेपइति ॥ ३३८।१ तस्यसर्व स्वदानस्यपूर्वस्मिन्प्रयोगेकर्तव्यत्वेनप्राप्तस्यवचनेनप्रयोगांतरेनिक्षेपएवक्रियते नतुस्वरूपमेवबाध्यतइत्यर्थः ॥ पौर्वापर्यमिति ॥

नियमादित्यप्रामाण्येनसंबध्यते । नास्ति नापादयितुंशक्यतइत्यर्थः । तदयमर्थः । क्रमिकैकविषयकप्रवृत्तियुक्तविरुद्धपूर्वकालीनानापादनीयनियताप्रामाण्यकमानजन्यविज्ञानंतदवधिकोत्तरकालप्रवृत्तमानजन्यविज्ञानेनबाध्यतइति । यथाश्रुतेस्वमतेप्रत्यक्षागमयोरपच्छेदन्यायापत्तेः । क्रमिकपाठावगतविकल्पस्थलेअपच्छेदन्यायोमाभूदितियुक्तांतं तच्चविरुद्धंविशेषणं । क्रमिकानुष्ठानेष्वाग्नेयादिषुतत्प्रसंगवारणायविरोधइत्युक्तं । एकोदेवइत्यादिसगुणनिर्गुणवाक्येतत्प्रसंगवारणायतृतीयविशेषणं । न चनियमोधिकः। तदनुक्तावुपक्रांतप्रयोगेप्रतिहर्त्रपच्छेदयुक्तेप्राप्तस्यसर्वस्वसदाक्षिण्यविज्ञानस्यप्रतिहर्त्रपच्छेदोत्तरभाव्युद्गात्रपच्छेदेनैवबाधिततयाऽप्रमाणत्वेनापच्छेदन्यायोसंभवदुक्तिकएवस्यात्। नियमादित्युक्तौतुनासंभवः। सर्वस्वदाक्षिण्यस्यप्रयोगांतरेऽनुग्रहेणनियताप्रामाण्यस्याभावात्।यदातुवदरफलश्यामरक्तरूपविज्ञानवत्सर्वस्वदाक्षिण्यादाक्षिण्यविज्ञानस्यक्रतुविशेष्यकस्यकालभेदावगाहिनोनायथार्थत्वमितिपक्षस्तदानियमादितिनवक्तव्यमेवेतिसर्वमनवद्यं ॥ नचैवंप्रकृतइति ॥ ननूद्गात्रपच्छेदाभावेयुगपदुभयापच्छेदेप्रतिहर्त्रपच्छेदस्यपश्चात्त्वेचज्योतिष्टोमद्वितीयप्रयोगेप्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागप्रतिपादकवाक्यस्यसावकाशत्ववद्व्यावहारिकप्रामाण्येप्रत्यक्षस्यापिसावकाशत्वात्तत्रैकप्रयोगेविरोधवदत्रामितात्विकांशेविरोधइतिनापच्छेदन्यायवैषम्यमितितद्वैषम्याभिधानमवोधमात्रविजृंभितं । अतएवसगुणसप्रपंचश्रुत्योर्निर्गुणनिष्प्रपंचश्रुतिभ्यामपच्छेदन्यायेनबाधइतिसुष्ठूक्तमितिचेन्मैवं । व्यावहारिकतात्विकरूपप्रमाणविभागस्यासंमतत्वेनतात्विकस्यैवप्रमाणतयातात्विकत्वबाधेप्रामाण्यस्यैवबाधापत्तेः । प्रमाणतात्विकत्वयोर्विरोधश्च । अतएवसगुणसप्रपंचवाक्येपिनापच्छेदन्यायइतिशिवं॥ तत्परत्वादिति॥

तत्तात्पर्यकत्वादित्यर्थः ॥ [११८।५] तत्परत्वमसिद्धत्वादिति ॥ आद्येहेतावसिद्धिः । द्वितीयेव्यभिचारः । तृतीयेऽप्रयोजकत्वमि
त्यर्थः । असिद्धिमेवाह ॥ [११८।६] असिद्धंहीति ॥ द्वितीयहेतोर्व्यभिचारस्थलमाह ॥ [११८।६] परत्वंत्विति ॥ व्यभिचारस्थलांतरमाह ॥
[११८।७] दृश्यंतेचेति ॥ स्वतएवकिद्वःक्त्वायाःकिद्वाचोनर्थकत्वतः । सेटःक्त्वायाःकिन्निषेधनिषेधार्थत्वमास्थितं । अप्रयोजकत्वमाह ॥
[११९।१] निर्दोषत्वमिति ॥ अर्थांतरे प्रत्यक्षाविरुद्धे । उपलक्षणमेतत् । यजमानप्रस्तरभेदग्राहकप्रत्यक्षाबाधकेयजमानःप्रस्तरइत्यादि
वाक्येव्यभिचारोपिबोध्यः। प्रस्तरवाक्यस्यप्रतीतार्थेननिर्दोषत्वमितितुत्वदीयागमेपितुल्यं । अत्रवदंति । सि०"नासिद्धिव्यभि
चाराप्रयोजकत्वैस्तत्परत्वपरत्वनिर्दोषत्वानिनहेतवः । तथाहिप्रत्यक्षादेर्व्यावहारिकंप्रामाण्यंश्रुतेस्तुतात्विकमितिविरोधाभावे
नतत्परत्वसिद्धेः । परशब्देनचमानांतराबाधितपरत्वंविवक्षितं । तेनप्रमानंतरभ्रमेनव्यभिचारः । तस्यतदुत्तरभाविमानबा
ध्यत्वात् । नक्त्वासेडित्यस्यतुपाठतः परत्वेप्यर्थतःपूर्वत्वमेव । अतोनिर्दोषत्वमपिनान्यथासिद्धं । तात्पर्यविषयएवप्रामाण्यस्याभ्यु
पेयत्वा"दिति मैवं । व्यावहारिकतात्विकप्रमाणविभागाभावेनासिद्धयुद्धारासिद्धेः। द्वितीयहेतोर्व्यभिचाराभावेप्यसिद्धिप्राप्तेः।
प्रत्यक्षबाधितत्वेनमानांतराबाधाभावात् । नक्त्वासेडित्यस्यतुपुरस्तादपवादन्यायेनपूर्वेणमृडमृदेत्यादिनाबाध्यमानत्वात् । नि
र्दोषत्वेनतात्पर्यविषयेप्रामाण्येपिमानांतरविरुद्धेतात्पर्यस्यैवासिद्धेरिति ॥ ७ ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्या
यामृततरंगिण्यामपच्छेदवितुल्यता ॥ ७ ॥ अपच्छेदन्यायवैषम्यं ॥ १४ ॥ ७ ॥ [१२०।५] मिथ्यात्वश्रुतेरिति ॥ अत्रकेचिदात्मनि
तात्विकसत्त्वप्रसिद्ध्याप्रसक्तिमुपपादयंति । तन्न । नहिप्रतियोगिज्ञानमात्रंप्रसक्तिः किंतुनिषेधाधिकरणकप्रतियोगिज्ञानं ।

नचात्मनिषेधाधिकरणं । अन्येत्वेवंवदंति । माभूत्प्रसक्तिः । अभावप्रत्यक्षेहिसंसर्गारोपत्वेनसोपयुज्यते । शब्दानुमानयोस्तु तस्याःक्वोपयोगः । नचाप्रसक्तनिषेधवैयर्थ्यं । अनर्थनिवृत्तिरूपस्यप्रयोजनस्यविद्यमानत्वादिति । अत्रब्रूमः । दशमाध्याये अष्टमपादे "अपूर्वेचार्थवादःस्या" दित्यधिकरणेनसोमेअध्वरेइत्यस्यनञःप्राप्त्यभावेननिषेधार्थत्वासंभवादर्थवादत्वमभिहितं । तद्विरुध्येत । तथाहि । दर्शपूर्णमासयोराज्यभागावग्नीषोमाभ्यांयजतीत्याज्यभागौ विधायतौनपशौःकरोतीतिनिषिध्यपश्चान्न सोमेध्वरइतिश्रूयते । तत्रकिमयंप्रतिषेधःपर्युदासोवाऽर्थवादोवेतिसंशयः । तत्राऽसमस्तत्वात्प्रतिषेधः । प्रतिषेधोन्नीतप्रसक्त्या चविकल्पभयात्पर्युदासः । ननुसोमस्योपदेशातिदेशाभ्यांआज्यभागप्राप्त्यभावादुभयमप्ययुक्तं । सत्यं । साक्षात्सोमेनाज्यभागौ स्तः । दीक्षणीयादिद्वारेणत्वाज्यभागाभ्यांसोमस्यास्तिसंबंधः । सप्तदशारत्निर्वाजपेयस्ययूपइतियूपवाजपेयवत्सप्रतिषिध्यते । तदनेनप्रकारेणसोमांगेषुदीक्षणीयादिष्वाज्यभागप्रतिषेधःपर्युदासोवेतिप्राप्तेब्रूमः । यद्युपदेशेनातिदेशेनवाज्यभागौसोमेप्राप्नुयातां नातोनिषेधःस्यात् । यदिचसोमासोमसाधारणमाज्यभागविधानमभविष्यत्ततोसोमइतिपर्युदासोवाकल्प्यःस्यात् । न त्वेवमस्ति । नचादीक्षणीयादिषुप्रतिषेधः । तथासतिनसोमइत्यनेनैवाग्नीषोमीयेपिपशौप्रतिषेधसिद्धेः । ततएवतद्विकारेषुनिरूढादिपशुष्वपिप्राप्त्यभावान्नपशावितिप्रतिषेधोनर्थकःस्यात् । सोमशब्दस्यैवंलक्षणास्यात् । नचवाजपेयस्ययूपेनेवांगद्वारकः सोमआज्यभागयोःसंबंधोवगम्यते । तत्रवाजपेयस्येतिहिषष्ठ्यासामान्येनसंबंध्युपात्तः । तस्यसप्तदशारत्निताविधीयते । संबंधमात्रंचांगांगस्याप्यस्त्येवेतियुक्तोयूपेनिवेशः । इहत्वाधारत्वेनांगितयासोमःश्रूयते नसंबंधिमात्रतया । नचपरंपरासंबंधेस्त्याधा

रत्वमितिसाक्षादेवायंसोमसंबंधःप्रतीयते । सचाप्राप्तइतिप्रतिषेधासंभवः । तस्मान्नपशावित्यस्यायमर्थवादः । यथा सोमस्य नाज्यभागावेवंपशावपीति । इत्थंमहाभागावाज्यभागौयौसोमेऽक्रियमाणौतावत्रपशौनक्रियेतेइतिस्तुतिः । तौनपशावितितु प्रतिषेधइतिवक्ष्यते । तदेतद्विरुद्धंस्यात् । नचतत्रप्रयोजनाभावादप्राप्तनिषेधासंभवेपिप्रकृतेऽनर्थनिवृत्तिरूपप्रयोजनसत्त्वाद प्राप्तनिषेधोयुज्यतइतिवाच्यं । जगन्मिथ्यात्वज्ञानादेरनर्थनिवर्तकत्वस्यासिद्धेः । तमेवंविद्वानमृतइत्यादिनासगुणब्रह्मज्ञान स्यैवमोक्षसाधनत्वोक्तेः । किंचतौनपशौकरोतीत्यत्रवाक्येनञःप्रतिषेधार्थत्वमाश्रित्यविकल्पउक्तः । तदप्यप्रसक्तप्रतिषेधपक्षे नसंगतंस्यात् । तथाहि । नतावदयंपर्युदासः । यदिपशुप्रकरणेइदंश्रूयेत तथासतिचोदकेनप्राप्तावाज्यभागौपर्युदस्येयातां । आज्यभागवर्जंप्रकृतिवत्कुर्यादिति । इहतुदर्शपूर्णमासप्रकरणेइदंविपरिवर्तते । तत्रयदीयंवचनव्यक्तिराज्यभागवर्जंदर्शपूर्ण मासौकुर्यादितिदर्शपूर्णमासविधिशेषःस्यात्ततोविधानमाज्यभागयोरनर्थकंस्यात् । पशावित्ययंचप्रमादपाठःस्यात् । तस्मान्न पशावित्ययंप्रतिषेधः । नचाप्रसक्तस्यप्रतिषेधःसंभवतीतिप्रसक्तिरपिनिषेधादेवोन्नीयंते । तथाचपशावाज्यभागयोर्विकल्पइति व्यवस्थापितं । तदेतद्विरुद्धंस्यात् । यत्तुनाप्रसक्तप्रतिषेधः परोक्षप्रसक्तेःसंभवादिति । तदपिन । परोक्षप्रसक्तिःकिमनुमाने नवाऽऽगमेनवा । नाद्यः । श्रुत्याप्रत्यक्षेणवाऽननुगृहीतस्यानुमानस्यार्थासाधकत्वान्निषेधवैयर्थ्यं । तदुक्तंवाचस्पत्येतर्काप्रतिष्ठा नादित्यत्र । "यत्नेनानुमितोप्यर्थःकुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यत" इति । नद्वितीयः । श्रुत्याप्रसक्त स्यश्रुत्यानिषेधायोगात् । विकल्पापत्तेश्च । तस्मात्साधूक्तंमिथ्यात्वश्रुतेरप्रसक्तप्रतिषेधत्वापातादिति ॥ १३।१६ अंक्षसिद्धस्येति ॥

यां० १२५

अत्रकेचित् नप्रत्यक्षविषयस्यतात्विकत्वापत्तिः । तद्विषयाधिकरणस्यैवपारमार्थिकत्वव्यतिरेकस्यबोधनादित्याहुः । तन्न । व्यधिकरणत्वात् । तथाहि । श्रुत्यप्रतिपादितप्रतिपन्नोपाध्यधिकरणाभावकस्यप्रपंचगतव्यावहारिकसत्त्वस्यतात्विकतायाआपादनीयत्वात् । प्रातिभासिकेरूप्येव्यावहारिकत्वनिषेधेप्रातिभासिकत्वस्यव्यावहारिकत्ववद्व्यावहारिकेप्रपंचेपारमार्थिकत्वनिषेधेव्यावहारिकत्वस्यपारमार्थिकत्वापातात् । नचव्यावहारिकत्वेपिप्रत्यक्षसिद्धव्यावहारिकत्वाबाधेनपारमार्थिकत्वनिषेधान्नव्यावहारिकत्वस्यतात्विकतापत्तिरितिवाच्यं । तथासतिप्रपंचगतस्यप्रत्यक्षसिद्धव्यावहारिकत्वस्यनिषेधप्रसक्तावुपजीव्यविरोधेनश्रुतेरेवानुत्थानात् ॥ योगेवेति ॥ तथाचवन्ह्यनौष्ण्यानुमितेस्तात्विकानौष्ण्यविषयतयानप्रत्यक्षबाध्यत्वंस्यादित्यर्थः ॥ नन्विदमिति ॥ इदं वह्नौसाध्यमानमनौष्ण्यमुष्णत्वाभावः । जलादिसाधारणश्चेन्नतात्विकः । किंतुव्यावहारिकः । तथाचप्रतियोगितदभावग्राहकयोःप्रत्यक्षानुमानयोरेकसत्तयातदुभयग्राहकत्वात्प्रत्यक्षस्यानुमानबाधकत्वमेव । यदितुप्रतियोग्यधिकसत्ताकोब्रह्मरूपस्तदतिरिक्तोवाअत्यंताभावउष्णत्वस्यसाध्यते तर्हिवह्नावुष्णत्वाभावानुमितिरप्युष्णत्वमिथ्यात्वानुमितिरेव । यत्रयत्प्रतीयतेतत्रतस्यतात्विकाभावसाधनमेवमिथ्यात्वानुमानं । तथाचयथाममतेजगन्मिथ्यात्वानुमानस्यतात्विकजगदत्यंताभावग्राहकस्यव्यावहारिकजगद्ग्राहकेणप्रत्यक्षेणनबाधस्तथावन्ह्यनौष्ण्यानुमानस्याप्यौष्ण्यप्रत्यक्षेणनबाधइत्यर्थः ॥ विश्वमिथ्यात्वमपीति ॥ जगन्मिथ्यात्वानुमित्यासाध्यमानंमिथ्यात्वंजगदंतर्गतेनरूप्यमिथ्यात्वेनतुल्यसत्त्वंचेद्व्यावहारिकमेव । नतात्विकं । तथाचप्रत्यक्षविरोधएव । यदिरूप्यसमसत्त्वंमिथ्यात्वंमिथ्यात्वानुमितिविषयस्तर्हिंजगतोनमिथ्यात्वसिद्धिः । प्र

त्युतमिथ्याभूतमिथ्यात्वसिद्ध्याद्वैतसिद्धिरेवस्यादित्यर्थः । ननुरूप्येणवातन्मिथ्यात्वेनवासमसत्त्वंमिथ्यात्वंनमिथ्यात्वानुमिति विषयः । येनोक्तदोषःस्यात् । किंतुतात्विकमित्यवोचाम । नचदृष्टांतेसाध्याप्रसिद्धिः । दृष्टांतेरूप्यादौविद्यमानस्यजगतिसा ध्यमानस्यचमिथ्यात्वस्यव्यावहारिकत्वतात्विकत्वाभ्यांवैलक्षण्येपि द्वयोरपिवाधधीवोधनीयत्वादिरूपमिथ्यात्वलक्षणयुक्तत्वा दित्याह ॥ [११३।१] ननुतात्विकत्वेति ॥ [११३।२] इदमपीति ॥ अग्नावनौष्ण्यानुमितिरपिजलादिविलक्षणमपूर्वमेघानौष्ण्यंगृह्णीयात् । तथा चनप्रत्यक्षबाधःस्यादित्यर्थः । ननुयद्यपिरूप्यमिथ्यात्वसमानमेवमिथ्यात्वंसाध्यते तथापिव्यावहारिकंसाध्यमानंमिथ्यात्वंपक्ष धर्मतावलात्तात्विकंसेत्स्यतीत्याह ॥ [११३।४] ननुप्रातिभासिकस्येति ॥ [११३।४] जलादिस्थस्येति ॥ तथाचव्यावहारिकस्यौष्ण्यस्याभावो ग्न्यादौसाध्यमानस्तात्विकंएवसेत्स्यतीतिनकालात्ययापदिष्टदोषस्यावकाशोस्तीत्यर्थः । ननुव्यावहारिकौष्ण्यवतितदभावःप्रा तिभासिकोपिस्यात् । प्रतियोगिसत्त्वविरोधस्योभयथापिसंभवादितिचेत्तर्हिव्यावहारिकसत्त्ववतिमिथ्यात्वरूपसत्त्वाभावोपि प्रातिभासिकएवस्यान्नतात्विकः । तथाचप्रत्यक्षवाधोमिथ्यात्वानुमितेरितिभावः । मिथ्यात्वानुष्णत्वानुमित्योर्वैलक्षण्यंशंकते ॥ [१२३।१] तत्त्वप्रदीपिकायांत्विति ॥ [१२३।१] हेत्वभावादिति ॥ औष्ण्यज्ञानप्रामाण्येसंमतिवज्जगत्सत्यत्वज्ञानप्रामाण्यमपित्वयांगीकार्यं । तदनंगीकारेहेत्वभावात् । तथाचतत्राप्युभयसंमतिरस्त्येवेतिभावः ॥ [१२३।३] मिथ्यात्वश्रुतेरिति ॥ तथाचमिथ्यात्वानुवादरूपत्वे नमिथ्यात्वश्रुतेर्नमिथ्यात्वानुमित्यनुग्राहकत्वमित्यर्थः । यत्तुस्वस्वचमत्कारानुसारिणोनुमानस्यसकलसाधारण्याभावेनश्रुत्य नुवादकत्वाप्रयोजकत्वमिति । तन्न । तथासतिनानुमानंपरंप्रत्युपन्यसनीयं । अनाश्वासात् । अनौष्ण्यानुमितेरपि दिव्याअं

गाराइरिणेन्युप्ताःशीताःसंतोहृदयंनिर्दहंतीत्यापाततःश्रुत्यनुगृहीतत्वाच्च । आपाततःप्रतीतेर्थेतात्पर्याभावस्तुशीतश्रुतेरिवमि थ्यात्वश्रुतेरप्यविशिष्टः ॥ [१२३।३] उष्णमात्रेशैत्यस्येति ॥ तस्यौष्ण्यनिरूप्यत्वात् उष्णविशेषेअनौष्ण्यसाधने औष्ण्यज्ञानस्यपक्षा तिरिक्तेपिसंभवान्नपक्षेप्रतियोगिज्ञानापेक्षेतिभावः ॥ [१२३।४] एतेनेति ॥ जलादिसाधारणौष्ण्यात्यंताभावातिरिक्तौष्ण्यात्यंताभावरू पमित्यर्थः ॥ [१२३।५] अतद्रूपत्वादिति ॥ औष्ण्याभावरूपत्वाभावादित्यर्थः ॥ [१२३।५] स्वतःप्रमात्वमिति ॥ अनुमानाद्यविरोधानधीन मित्यर्थः ॥ छ ॥ छ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यांमैथ्यशैत्यानुमेसमे ॥ मिथ्यात्वानुमितेर ग्निशैत्यानुमितिसाम्यं ॥ १५ ॥ छ ॥ छ ॥ [१२३।७] सयुक्तिकेत्यादि ॥ ननुरजताभेदशरीराभेदप्रत्यययोर्जाग्रतोरकृतेयुक्त्याप्र तिबंधाक्षमत्वेतद्विषयप्रत्यक्षोत्पत्तेरेवानवकाशइतिचेन्मैवं । तर्हिसुतरांयुक्तेरनवकाशः । तस्याःविरोधिनिश्चयमात्रप्रतिबध्य त्वात् । तस्माद्रजतादिप्रत्यक्षेविद्यमानेपिस्वभावतएवबलवद्विपरीतप्रत्यक्षमुपपद्यतइतिस्वीकार्यं । अन्यथाक्वचिदपिज्ञानेअ र्थासत्त्वपर्यवसाय्यप्रामाण्यशंकाद्यनुदयःस्यात् । तद्विरोधिनःप्रथमोत्पन्नस्यजागरूकत्वादिति । ममशरीरमितिसर्वसिद्धभेद प्रत्ययाच्चगौरोहमितिनैक्याध्यासः किंतुगौणउपचारइत्याह ॥ [१२४।१] कर्दमलिप्तइति ॥ [१२४।१] उष्णमिति ॥ तोयतेजसोर्भेदानुभवादि त्यर्थः ॥ [१२४।४] जीवस्येति ॥ नचाकाशवत्सर्वगतश्चनित्यइत्याद्यागमेनउत्सर्गसिद्धप्रामाण्येनयुगपत्पादशिरोवच्छिन्नसुखदुःखानुभवे नजीवस्याणुत्वमसिद्धमितिवाच्यं । उत्क्रांत्यादिनातदणुत्वस्यवक्ष्यमाणत्वात् ॥ [१२४।५] अन्यत्रापीति ॥ नचयएवदीर्घःसएवेदानीं

ह्रस्वइतिदीर्घत्वह्रस्वत्वाभ्यामुपस्थितयोरभेदस्यसाक्षात्क्रियमाणत्वाद्दीर्घोयंदीपोह्रस्वोनेतिप्रत्यक्षमसिद्धमितिवाच्यं । तथाप्रत्य भिज्ञायाअसिद्धेः ॥ शिष्टाकोपेयथोदितमिति ॥ प्रथमस्यतृतीयेस्थितं "शिष्टाकोपेविरुद्धमितिचेन्नशास्त्रपरिमाणत्वात्" । क्षुतआचामेदितिस्मरणानि वेदंकृत्वावेदिंकरोतीतिचश्रौतान्युदाहरणं किमप्रमाणंप्रमाणंवेतिविचारः । तदर्थंचप्रत्यक्षश्रुत्या द्विभिर्विरुध्यतेनवेति । तदर्थमप्येभिःक्रतुमध्येनुष्ठीयमानैःकस्यचिच्छ्रुत्यर्थस्यक्रमादेर्भवतिबाधोनवेति । अथवाभ्युपेत्यैवविरोधंस्मृतिरप्रमाणं प्रमाणंवेतिविचार्यते । तदर्थंचप्रमाणप्रमेयबलाबलविसंवादेकिंज्यायइतिचिंत्यते । श्रुतिस्मृत्योःप्रमाणयोः श्रुतिर्बलीयसीतिस्थितं । अतःश्रौतत्वात्क्रमादयःस्मार्तेभ्यआचमनादिभ्योबलीयांसोविज्ञायंते । प्रमेयस्वरूपालोचनेपदार्थ गुणत्वात्क्रमादेराचमनादयःपदार्थाबलीयांसोविज्ञायंते । बलाबलद्वयविसंवादात्कतरेणनिर्णयइतिसंदेहः । तत्रपूर्वःपक्षः । श्रुत्युक्तानांक्रमादीनांस्मार्तैराचमनादिभिः । व्याकोपःस्यादतस्तावद्विस्पष्टैवविरुद्धता । ततःश्रुतेर्बलीयस्त्वात्स्मृतेःस्यादप्रमाणता । पूर्वभाविप्रमाणस्थंप्रमेयस्थाद्बलाबलात् । ज्यायस्तेनैवनिर्णीतेनपश्चादितरांदरः । नैराकांक्ष्यात्प्रमाणानामतःस्मृत्यर्थ बाधनं । वेदंकृत्वावेदिंकरोतीतिक्रमः । कालश्चयःप्रधानेनांगानामविप्रकर्षः । प्रयोगप्राशुभावश्चप्रयोगवचनावगतोयश्चपूर्वा ह्णादिः । परिमाणंचाविस्मृतसमस्तपदार्थानुष्ठानसिद्ध्यर्थंप्रयोगविधिनैवाकांक्षितं । पदार्थविधिप्रचयावगतं । तत्रयमपिक्रमकालपरिमाणात्मकंमाचमनादिनाबाधितंनभवति । नचश्रुत्यर्थत्वेपिपदार्थगुणत्वात्क्रमादेर्दौर्बल्यं । आचमनादेःस्मृत्यर्थस्यापि पदार्थत्वाद्बलीयस्त्वमितिवाच्यं । प्रमाणपूर्वकोहिप्रमेयावगमः । तेनपूर्वभाविप्रमाणस्थंबलाबलंपूर्वमवगम्यते । तेनाचमना

दिभ्यःक्रमादीनांबलीयस्त्वेनिर्णीतेनिराकांक्षत्वान्नपश्चादवगतंप्रमेयवलावलमादर्तव्यं । तस्मादाचमनादिस्मृतीनामप्रामाण्यमिति । सिद्धांतस्तु । पदार्थप्राप्त्यपेक्षत्वात्क्रमादेरविरोधिता । विरोधेपिचदौर्वल्यंपदार्थेभ्योगुणत्वतः । सर्वेषुचहिपदार्थेषुप्राप्तेषुप्रयोगवेलायांतद्विशेषणतयाक्रमआपततिं । तेनपदार्थप्राप्त्यपेक्षत्वात्क्रमस्यात्यंतजघन्यप्रमाणकोपिपदार्थःपूर्वंप्राप्नोतिपश्चात्क्रमंःपूर्वपदार्थप्रयोगांगतयाचेतरत्रापिपदार्थैर्विरुध्यते । कालोप्येवमेवप्रयोगांगत्वाद्यावंतःपदार्थाअवधारितास्तेषामेवपूर्वाह्लादिकालत्वंप्रधानसंनिकर्षःप्रयोगप्राशुभावश्च । परिमाणंतुनकस्यचिदपिशास्त्रस्यार्थः । प्रयोगविधिरपिनत्तदाक्षिपति । अन्यथाप्यविस्मरणसिद्धेः । अथापिशास्त्रार्थतयापिप्रयोगौपयिकत्वात्प्रयोगस्यचप्रयोज्यपदार्थसापेक्षत्वादविरोधित्वं । यद्यपिक्रमादीनामाचमनादिभिर्विरोधस्तथापिपदार्थगुणत्वाद्दौर्वल्यं । आचमनादयस्तुपदार्थत्वाद्बलवंतः । नचप्रमाणबलाबलस्यपूर्वभावित्वं । नहिप्रमाणयोःस्वरूपतोविरोधः । अपितुप्रमेयविशेषनिमित्तः । प्रमेयंगतंहिविरोधमालोच्यप्रमाणविरोधबुद्धिर्भवति । तद्यदैवप्रमेययोर्विरोधोवगम्यतेतदैवतयोर्बलाबलमपीतिततएवनिर्णयेकृतेनैराकांक्ष्यात्प्रमाणबलमनादर्तव्यमितिनस्मृतेर्वाधः । यद्धिस्वभावंतएवाप्रमाणंतत्सर्वदैवानादर्तव्यं । यत्तुबलवद्विरोधापेक्षमप्रमाणं तत्तदभावापेक्षयाप्रमाणमेवेत्यवगंतव्यं । नचात्रबाधकमस्ति । प्रमाणवलावलस्यवाधकत्वात् । तस्मादाचमनादेर्बलीयस्त्वात्तदनुरोधेनैवश्रुत्युक्तक्रमादयोवाध्यंतइत्याचमनादिस्मृतीनामबाधात्प्रामाण्यमिति । एतच्चभाष्यकारमतेनाधिकरणशरीरंभाष्यकारोहिशिष्टाकोपेअविरुद्धमितिचेन्न । शास्त्रपरिमाणत्वादित्यनेनपूर्वपक्षयित्वा अपिवाकारणाग्रहणेप्रयुक्तानिप्रतीयेरन्नितिसूत्रेणसिद्धांतितवान् । शिष्टस्य श्रुत्युपदिष्टस्यवेदंकृत्वावे

दिंकरोतीत्यादेःस्मार्ताचमनाद्यनुष्ठानात् अक्रोपे ह्यन्यभावेसत्यविरुद्धमेवंजातीयकंस्मार्तमितिचेत् पश्यसिद्धातिन्नित्याद्यसू त्रार्थः । एवमाशंक्याहपूर्वपक्षी । नशास्त्रपरिमाणत्वादिति । नैतदेवंअविरुद्धमेवंजातीयकमिति । कुतः । शास्त्रपरिमाणत्वा त्पदार्थानामिति । शास्त्रेणपरिमाणंपदार्थानांत्रिधावगतं । इयंतइतिश्रुतिलिंगादिषट्केनएतत्क्रमकाइतिश्रुत्यर्थादिषट्केन । प्रधा नप्रत्यासन्नाइतिप्रयोगवचनेन । तत्रयदिवेदवेदिकरणयोरंतःक्षुन्निमित्तमाचमनमनुष्ठीयेत् तर्हिइयत्तादित्रयमपिबाध्येत । त स्माच्छ्रुत्युक्तार्थबिरुद्धान्येवंजातीयकानिस्मरणान्यप्रमाणान्येवेतिद्वितीयसूत्रस्यार्थः । अपिवेतिपूर्वपक्षव्यावृत्तिः । क्रतुमध्ये प्रयुक्तान्याचमनादीन्यविरुद्धत्वेनप्रमाणत्वेनप्रतीयेरन् । कारणाग्रहणे लोभादिरूपमूलांतराग्रहणेसतीतितृतीयसूत्रार्थः । वेदोनामसंमार्जनसाधनंदर्भमुष्टिः । तस्यकरणंसम्यग्बंधनाग्रपरिवासनादिसंस्कारः । वेदिर्नामगार्हपत्याहवनीययोर्मध्ये चतुरंगुलखाताभूमिः । तत्करणंनामवेदेनसंमार्जनमुद्धननादिसंस्कारः । वार्तिककारस्तुभाष्यकारोक्तपूर्वपक्षस्यातिमंदत्वा च्छिष्टाक्रोपेत्यादिनापूर्वपक्षयित्वानशास्त्रेत्यादिनासिद्धांतितवान् । अपिवेत्यादिंत्वधिकरणांतरमित्याह । तथाहि । नैताव दाचमनस्मृत्यादयउदाहरणं । हस्ताववनिज्य त्रिराचामेत् द्विःपरिमृज्य सकृदुपस्पृश्येतिप्रत्यक्षवेदविहितत्वादाचमनंन स्मार्तं । यत्किंचब्राह्मणोयज्ञोपवीत्येवाधीयेतयाजयेद्यजेतवायज्ञस्यप्रसृत्या इत्ययज्ञोपवीतेप्रत्यक्षोवैदिकोविधिः । यथावैदक्षि णःपाणिरेवंदेवयजनमितिदक्षिणाचारस्यप्रत्यक्षोवेदपरामर्शः । अतआचमनादीनांप्रत्यक्षश्रुतिविहितत्वेनस्मार्ततयानोदाहरणं युक्तं । नापिविरोधाशंका । अप्राप्तेषुपदार्थेषुनभवंतिक्रमादयः । प्राप्तेषुतदधीनत्वान्नपदार्थविरोधिता । नित्यंचाचमनंसर्वपू

वेत्वान्नविरुध्यते । नैमित्तिकंतुनित्यस्यक्रमादेर्बाधकंभवेत् । अथप्रमाणप्रमेयबलाबलयोःकिंग्राह्यमितिचिंत्यते । किंप्रमाणबलाबलवशात्श्रौतेनस्मार्तबाधोधर्मित्वेनवापदार्थानांबलीयस्त्वाद्धर्मभूतक्रमादिबाधइति । तदप्ययुक्तं । सिद्धांतासंभवात् । तथाहि । इष्टेस्मृतिप्रमाणत्वेदौर्बल्यंकिंनिबंधनं । अनिष्टेतुप्रमेयत्वंपदार्थानांकुतोभवेत् । विषयालोचनेनाथस्मृतेरत्रप्रमाणता । नान्योन्याश्रयतापत्तेरेतदप्यवकल्प्यते । प्रमेयत्वेहिधर्मत्वात्पदार्थाबलवत्तराः । बलवद्विषयत्वेनस्मृतेःस्यात्तत्प्रमेयता । धर्मित्वाच्चबलीयस्त्वंस्वधर्मान्प्रतिसंभवेत् । नचैषामप्रमेयत्वेतद्धर्मत्वंक्रमादिना । किंचवैदिकपदार्थमात्रोपसंहारिक्रमादिर्बाध्यतेस्मृत्याचारपर्यंतसकलप्रमाणप्रापितपदार्थोपसंहारीवा । आद्येकल्पेस्मार्तपदार्थानपेक्षत्वात्कथंतद्बाध्यत्वं । द्वितीयेत्वविरोधान्नबाधः । वैदिकपदार्थमात्रपर्यालोचनयोत्पन्नमपितावन्मात्रोपसंहारिक्रमज्ञानंस्मार्तपदार्थज्ञानेनबलीयसाबाध्यतइतिचेत् न । बलवत्प्रमाणावष्टंभमंतरेणतद्बलीयस्त्वासिद्धेः । अतःप्रमाणदौर्बल्येप्रमेयबलवागियं । व्योमचित्रायतेतेनविचारोयंनयुज्यते । अतःशाक्यादिशास्त्रस्थंवेदवाक्याविरोधियत् । सत्योक्त्यादिवचस्तत्किंप्रमाणंनेतिचिंत्यते । विरोधेनाप्रमाणत्वंपूर्वमेषांनिरूपितं । तदभावादतःपूर्वपक्षीप्रत्यवतिष्ठते । विरोधेप्रामाण्यमनपेक्ष्यमितिवदतार्थादविरोधेप्रामाण्यमुक्तं । तथासति वेदाविरोधिनामहिंसासत्योक्त्याद्यर्थानांशाक्यादिवचसांप्रामाण्यंप्राप्नोति । "एवमाद्येनसूत्रेणपूर्वपक्षःकृतोधुना ॥ नशास्त्रपरिमाणत्वादित्यनेननिराकृतः । चतुर्दशैवशास्त्राणिवेदाश्चत्वारएवच । धर्मशास्त्रपुराणांगमीमांसान्यायमिश्रिताः । शाक्याद्यैःसंहितास्तत्रबाह्याःशिष्टाप्रयोगतः । नशास्त्रपदवाच्याःस्युरतोधर्माप्रमाणता । वेदप्रमितएवार्थःश्रेयःसाधनमाश्रितः । स्वाध्यायवि

धिनान्येषांतदधीनाप्रमाणता । अतोवेदाननुज्ञातशाक्यादिवचसामिह । अविरोधेपिनैवास्तिप्रामाण्यंमत्तवाक्यवत् । अपिवाकारणेत्येतद्भिन्नाधिकरणंमतं । शिष्टाचारःप्रमाणंकिंनवेत्यत्रविचार्यते । स्मृतिन्यायेनसिद्धापिशिष्टाचारप्रमाणता । विरुद्धाचारसंसर्गात्पुनराक्षिप्यसाध्यते” इति ॥ नहीति ॥ आचमनादेःप्राधान्यमनुष्ठीयमानत्वं स्मृत्याक्षुतआचामेदित्येवंरूपया ॥ अतएवेति ॥ नचैतत्पित्रादिवचसिनास्तीतितत्रशब्दस्यैवाक्षबाधकत्वमितिवाच्यं । पितृवाक्यत्वेनैवदृष्टमूलत्वात्तेनैवबाधः ॥ नचचंद्रेति ॥ चंद्रप्रादेशिकत्वादिप्रत्ययस्यागमादिनाभ्रमत्वंनज्ञायते । किंतुप्रागेवज्ञातदूरादिदोषेणेत्यर्थः । ननुयुक्तिरेवैषा । यद्यद्दूरस्थाल्पपरिमाणज्ञानंतद्दूरदोषनिबंधनमप्रमा । शैलाग्रस्थविटपिदूर्वांकुरपरिमाणज्ञानवत् । इदमपितथेति । तथाचैवंरूपयायुक्त्यैवचंद्रप्रादेशिकत्वादिप्रत्यक्षस्यबाधंवदन्युक्त्यानप्रत्यक्षस्यबाधइतिवक्तुंकथमुत्सहेत । किंचयेनयस्यभ्रमत्वंज्ञायतेतत्तस्यबाधकमितियदितदाभ्रमत्वस्यानुमेयत्वादनुमानमेवबाधकमित्यायाति । नहिप्रमात्ववत्भ्रमत्वस्यापिस्वतस्त्वंभवदभिमतमितिचेन्न । दूरस्थतरुचंद्रपरिमाणादौनोक्तप्रकारेणयुक्त्याबाधइष्यते । अपितुदूरादिदोषेणंस्वरूपसताजायमानंज्ञानमर्थनिश्चयपराङ्मुखंजायते । तस्मिंस्तुजातेदूरादिदोषजन्यत्वज्ञानसहकृतेनसाक्षिणैवतत्रभ्रमत्वनिश्चयइति नप्रथमंयुक्त्यादूरस्थचंद्रपरिमाणादिप्रत्यक्षबाधः । विरोधिनिश्चयप्रत्यक्षेजाग्रतितद्विपरीतयुक्तेरनुत्थानादित्युक्तत्वात् । अतएवपीतःशंखःतिक्तोगुडइत्यादौनापीतानुमित्यादिनाप्रत्यक्षबाधः । किंत्वपीतप्रत्यक्षेणेतिसर्वतांत्रिकसिद्धांतइति । परैरपिसाक्षात्कारिभ्रमेसाक्षात्कारिविशेषदर्शनमेवविरोधीतिस्वीकर्तव्यं । अन्यथापरोक्षज्ञानस्यापरोक्षभ्रमनिवर्तकत्वोपपत्तौवेदांतानामपरोक्ष

ज्ञानजनकत्वसाधनप्रयासोव्यर्थःस्यात् । किंचनायंसर्पइत्याप्तवाक्यादिनासविलासाज्ञाननिवृत्त्यभावेपिभ्रमगताप्रमाणत्वज्ञापनेनभ्रमप्रमाणत्वबुद्धेस्तद्विषयसत्यताबुद्धेश्चनिवर्तनात् । तावताभ्रमनिवर्तकत्वव्यपदेशाद्भ्रमेप्रामाण्यविभ्रमस्यतद्विषयसत्याविभ्रमस्यचपरोक्षत्वेनापरोक्षवाधानपेक्षत्वात् । नहिदुष्टकारणाजन्यत्वमबाधितविषयत्वंवाप्रामाण्यंकस्यचित्प्रत्यक्षं । नवासर्वदेशसर्वकालसर्वपुरुषाबाध्यत्वरूपंविषयसत्यत्वं । अतस्तयोःपरोक्षप्रमाबाध्यत्वमुचितमेव । तयोश्चबाधितयोःरजतादिभ्रमस्यस्वरूपेणसन्नपिस्वकार्याक्षमत्वादसन्निवेतिबाधितइत्युच्यतइतितत्रतत्रपरैरुक्तत्वात्परोक्षज्ञानस्यापरोक्षज्ञानबाधकत्वमभिप्रेत्ययुक्त्याप्रत्यक्षंबाध्यतइतिवदतांवाङ्मनसविसंवादएव । ननुप्रत्यक्षेयोग्यविशेष्यसन्निकर्षःकारणं । अतएवरूपाभाववान्वायुरितिधीर्नप्रत्यक्षरूपा । तथाचसाक्ष्यविषयाकाशेनीलाभावःकथंसाक्षिविषयइत्याशंक्यनकेवलंममतेसाक्षिविषयआकाशोपितुपरमतेपीत्याह ॥ [१२८।१] परमतेपीति ॥ रूपमपिपरमतेसाक्षिविषयइत्याह ॥ [१२८।१] निमीलितनेत्रस्येति ॥ तथाचाकाशस्याधिकरणस्यप्रतियोगिनोनीलिम्नश्चसाक्षिग्राह्यत्वादाकाशेनीलरूपाभावःसाक्षिवेद्यइतिसाक्षिबाधितैवनभोनैल्यधीरित्यर्थः ॥ [१२८।१] यद्वेति ॥ आकाशेरूपाभावइत्येवंरूपाभावविशेष्यकेत्यर्थः । तदिदमाह ॥ [१२८।२] आकाशेरूपाभावधीरिति ॥ [१२८।३] तत्रैवचक्षुषैवानैल्यबुद्धेरिति ॥ ननुनीलंनभइतिप्रत्यक्षेजाग्रतिरूपाभावग्रहस्यचक्षुषासाक्षिणावानसंभवः । तथाचबलवतीयुक्तिरेवतद्बाधिकेति । तन्न । तद्वदेवयुक्तेरप्यनुदयप्रसंगात् । स्वभावबलवत्त्वंचचक्षुःसाक्षिणोरेवयुक्तेरप्यतिशेते ॥ [१२८।४] लिंगाभावादिति ॥ ननुनलिंगाभावः । चक्षुरन्वयव्यतिरेकानुविधायिरूपाविशेषितप्रतीतिविषयत्वान्नरूपवदितिलिंगसंभवात् । नचाप्रयोजकत्वं । नभोयदिरूपव

त्स्यात् चक्षुरन्वयव्यतिरेकानुविधायिप्रतीतौरूपासंवंधितयाविषयोनस्यादिततर्कोपपत्तेः । नचेष्टापत्तिः । सविधेरूपासंबंधि
तयानभस्सिद्धेस्सर्वजनसिद्धत्वात् नभसस्साक्षिवेद्यतायामपि चक्षुरन्वयव्यतिरेकानुविधानमवर्जनीयमेव । अन्यथा अंधस्या
पितद्ग्रहणंस्यादिति । तन्न । मंडूकवसांजनाक्तनेत्रस्यवंशेवंशत्वाप्रतीतावपिवंशत्वसत्त्ववत्सविधेसामीप्यदोषेणनभःप्रतीतौरूपा
विषयकत्वेपिनभसिरूपाभावासिद्धेः । अतएवयस्यैवयत्रैवसविधेनभसिनरूपधीस्तस्यैवतत्रैवनभोभागेनीलिमधीः । तस्मान्नो
क्तानुमानान्नभसिनीरूपत्वसिद्धिरितिसाधूक्तंलिंगाभावादिति ॥ [१३८।१४] द्रव्याणामनारंभकत्वादेरिति ॥ अंत्यावयविनिव्यभिचारोपि
बोध्यः ॥ [१२९।१] पंचीकरणेनेति ॥ पंचीकरणंत्वित्थं । अपंचीकृताकाशस्यार्धभागेपृथिव्यादिचतुष्टयंस्याष्टमेष्टमेभागेमिलितेसतिपं
चीकृताकाशस्योत्पत्तिः । अवशिष्टस्याकाशार्धभागस्यचतुर्भागकल्पनयाएकैकभागेनापंचीकृतपृथिव्यादिचतुष्टयस्यप्रत्येकार्ध
भागेनपंचीकृतपृथिव्यादिचतुष्टयस्योत्पत्तिः । एवंभूतांतरेपियोजनीयं । एवंचपंचीकरणपक्षेरूपवत्तेजोजलपृथिव्यारब्धत्वा
दाकाशेरूपवत्तयारूपाभावानुमानेबाधःस्यादित्यर्थः । नचापंचीकरणदशायांयस्मिन्भूतेयोगुणःसपंचीकरणेनव्यवहारयोग्यो
भवति । आकाशेचापंचीकरणदशायांरूपंनास्तीतिकथंपंचीकरणेनाकाशेरूपारंभःस्यादितिवाच्यं । तथापिरूपवदवयवारब्ध
द्रव्यत्वात्रूपोत्पत्तिःपृथिव्यादाविवदुर्वारा । अतएवपंचीकरणपक्षस्यदुष्टत्वात् त्रिवृत्करणपक्षएवसिद्धांतितःसमन्वयसूत्रे ।
तस्मात्पंचीकरणपक्षेयुक्तोबाधः ॥ [१३५।६] तस्मादिति ॥ स्वार्थनिश्चयरूपत्वात्तन्निश्चयपराङ्मुखतरुचंद्रादिपरिमाणगोचरप्रत्यक्षविल
क्षणापरोक्षधीःप्रपंचसत्यत्वविषयाकेवलेनानुमानादिनानबाध्यते ॥ [१३०।२] यत्रेति ॥ यत्रविशेषदर्शनाद्यभावेअर्थसन्निकर्षमात्रेणजा

यमानंप्रत्यक्षज्ञानमप्यनुमानादिनावाधितंप्रवृत्त्यादिस्वयोग्यव्यवहाराक्षमंभवति तत्रप्रत्यक्षस्यमिथ्यात्वंभवतु । यत्रपुनःपरीक्षयाविशेषदर्शनादिनाचप्रत्यक्षेप्रामाण्यावधारणं तत्रनानुमानेनप्रत्यक्षस्यविषयापहाररूपमिथ्यात्वसिद्धिरित्यर्थः । नचैतदपिगृहीतप्रामाण्ययुक्त्यादीतरयुक्त्यादिविषयं । एकत्रप्रामाण्यनिश्चयेबलाबलचिंतायाएवानवकाशादितिवाच्यं । विश्वमिथ्यात्वयुक्तेरपिप्रत्यक्षविरोधेनगृहीतप्रामाण्येतरत्वादिति ॥ ७ ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यां नाक्षावाध्यत्ववाधकं ॥ प्रत्यक्षस्यलिंगाद्यबाध्यत्वेबाधकोद्धारः ॥ १६ ॥ ७ ॥ ७ ॥ प्रत्यक्षमप्रमाणमेवेतिप्रथमःपक्षःस्वतःप्राप्ततत्वावेदनलक्षणप्रामाण्यस्यत्यागः किमनुमानविरोधादागमविरोधाद्वाभावविवाधकशंकामात्रेणवेतित्रेधाविकल्पितः । तत्राद्यौनिराकृतौ । तृतीयंनिराकरोति ॥ १३०।६ उक्तरीत्येति ॥ जात्याउपक्रमादिन्यायैश्चप्रबलेनप्रत्यक्षेणविरोधाल्लिंगशब्दयोर्बाधाक्षमत्वादित्यर्थः ॥ १३०।६ प्रत्यक्षस्येति ॥ प्रत्यक्षांतरस्याप्रमाणतयाशंक्यमानत्वेनाबाधकत्वादित्यर्थः ॥ १३०।६ सर्वविशेषेति ॥ नचसर्वविशेषाणामियत्तानवधारणदशायांसंशयसंभवइतिवाच्यं । बाधकत्वेनसंभावितानामागमानुमानादिप्रमाणविशेषाणामियत्तावधारणकालेतैर्बाधाभावस्यनिश्चयसंभवात् । ननुप्रत्यक्षशब्दयोर्बलाबलविचारात्प्राक्किमयंशब्दउपचरितार्थः आहोस्वित्प्रत्यक्षमप्रमाणमितिशंकायामुभयोरप्यबाधकत्वप्राप्तौतात्पर्यलिंगैःश्रूयमाणार्थपरतयानिश्चितस्यागमस्योपचरितार्थत्वशंकाव्युदासेननलब्धावकाशत्वसंभवइतिचेन्मैवं । शब्देप्रतीयमानार्थपरतायांहेतुभूतेभ्यस्तात्पर्यलिंगेभ्यःसकाशात्प्रत्यक्षविषयार्थसत्यत्वफलपर्यंतपरीक्षायाबलवत्त्वेनप्रत्यक्षस्यैवलब्धावकाशत्वसंभवात् । प्रत्यक्षविरुद्धेतात्पर्यलिंगानांतात्पर्यासाधकत्वात् ॥ १३०।७ किंचेति ॥

जाग्रच्छब्देनस्वप्नदृष्टस्यगजादेरभावः । आदिपदेनशुक्तिरूप्यादेरभावः । तयोर्ज्ञानमित्यर्थः । स्वप्नादेरित्यादिशब्देनशुक्तिरू
प्यादि ॥ [१३०।१] प्रतियोगिनीति ॥ जाग्रज्ज्ञानेस्वप्नगजादिविरोधिनिगजाद्यभावेज्ञाते अस्माकंसत्यमिथ्यात्वविवेकवतांस्वप्नादिबु
द्धिर्मृषामिथ्यार्थावभासिकाभवेत् । तवसर्वमिथ्यात्ववादिनःबाधकत्वेनाभिमतस्यजाग्रद्गजाद्यभावज्ञानस्यमिथ्यार्थावभासत्वा
त्स्वप्नगजादेर्मिथ्यात्वंनसिध्यति । तथाचदृष्टांतासिद्धिरितिभावः । नचारोप्यसत्ताधिकसत्ताकविषयत्वेनापेक्षिकप्रमात्वेनान्यू
नसत्ताकविषयत्वेनवाजाग्रज्ज्ञानस्यनेदंरूप्यमितिज्ञानस्यवाबाधकत्वमितिवाच्यं । आरोप्यसत्ताधिकसत्ताकविषयकमिदंजाग्र
दादिज्ञानमितिज्ञानस्यापिबाधितत्वेनजाग्रज्ज्ञाने आरोप्यसत्ताधिकसत्ताकविषयकत्वस्यासिद्धेः । विश्वबाधकाभिमतज्ञानेबा
धकत्वव्यापकाभावमाह ॥ [१३१।१] भ्रमकालीनेति ॥ भ्रमकालीनापरोक्षबुद्धिर्भ्रमएव । स्वस्यस्वकालीनत्वात् । तदविषयोविशेषः
शुक्तित्वादिः । तद्विषयाइयंशुक्तिरित्यादिधीर्बाधिकेत्यर्थः । यद्वापरमतेभ्रमोऽविद्यावृत्तिः । तत्कालीनापरोक्षधीरिदमित्या
कारांतःकरणवृत्तिः । तदविषयःशुक्तित्वादिकमित्यर्थः । नन्वधिष्ठानतत्वज्ञानत्वेनैवभ्रमनिवर्तकत्वं । ब्रह्मज्ञानंचतथेतिवि
श्वभ्रमनिवर्तकमिति । मैवं । अधिष्ठानगतकिंचित्प्रकारानवगाहिनो ज्ञानस्यस्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकर
णधर्मज्ञानत्वरूपतत्वज्ञानत्वासिद्धेः । अधिष्ठानतत्वस्यज्ञानमधिष्ठानतत्वज्ञानं । नह्यधिष्ठानस्वरूपमेवाधिष्ठानस्यतत्वं । तथा
सतिप्रमेयत्वेप्रमेयत्वप्रकारकज्ञानवत्स्वप्रकारकत्वापत्तौब्रह्मज्ञानस्यनिष्प्रकारत्वासिद्धिःस्यात् । बाधकत्वव्यापकांतराभावमाह
न्यां० १२६ ॥ [१३१।१] किंचेति ॥ [१३१।२] निर्विकल्पिकायाइति ॥ जागराद्यकालीनरजतभ्रमहेतुशुक्तिरूपधर्मिज्ञानोपपादकत्वेनशुक्तिनिर्विकल्पक

स्यावश्यकतयातस्यचरजतभ्रमाविरोधित्वादित्यर्थः । तस्मात्सप्रकारकमेवज्ञानंभ्रमविरोधि । अत्रवदंति । “सि०निवर्तकतीयांसप्रकारकत्वंनप्रवेश्यं । गौरवात् । नन्वावश्यकःसप्रकारकत्वनियमः । व्यावृत्ताकारज्ञानत्वेनैवभ्रमनिवर्तकत्वात् । अन्यथाअनुवृत्ताकारज्ञानादपितन्निवृत्त्यापत्तेरितिचेत्सत्यं । व्यावृत्ताकारत्वेनज्ञानस्यभ्रमनिवर्तकता । नतुतत्रविशेषप्रकारकत्वनियमः । तथाहि । व्यावृत्ताकारताहिद्वेधाभवति । विशेषणादुपलक्षणाच्च । तत्राद्येसप्रकारत्वनियमः द्वितीयेपिधर्मांतरं चेदुपलक्षणं तस्माद्व्यावृत्ताकारत्वेसप्रकारकतैव । यदितुस्वरूपोपलक्षणाद्व्यावृत्ताकारतातदानिष्प्रकारकतैव । उपलक्षणस्य तत्राप्रवेशात् । स्वस्यचस्वस्मिन्नप्रकारत्वात् । नचप्रमेयत्वादिवत्स्वस्यैवस्वस्मिन्प्रकारत्वमितिवाच्यं । त्वयापिकेवलान्वयिन्येवस्वगत्यातथांगीकारान्नसर्वत्र । अथाकारप्रकारयोरभेदाद्ब्रह्माकारतैवब्रह्मबुद्धेस्तत्प्रकारत्वमितिचेन्न । विशिष्टबुद्धेर्विशेष्याकारत्वेपितदप्रकारत्वादाकारप्रकारयोर्भेदात् । आकारश्चवृत्तिनिष्ठःकश्चिद्धर्मोसाधारणव्यवहारहेतुः । तस्माद्यथाकाशपदाच्छब्दाश्रयत्वोपलक्षितधर्मिस्वरूपमात्रंज्ञायते तद्वदत्रापिद्वितीयाभावाद्युपलक्षितब्रह्मस्वरूपज्ञानंव्यावृत्ताकारंद्वैतनिवर्तकमपरोक्षं वेदांतवाक्या” दिति ॥ अत्रोच्यते । उपलक्ष्येकिंचिद्धर्ममादधतएवोपलक्षणत्वं । अतएवेत्थंभूतलक्षणेतृतीया । कंचित्प्रकारं प्राप्तइत्थंभूतः । तस्यलक्षणेज्ञापनेतृतीयेतिपाणिनिसूत्रव्याख्याने । तथाचोपलक्ष्येब्रह्मण्युपलक्षणस्यद्वितीयाभावस्यस्वसंसृष्टप्रमाजनकत्वमेवाद्वितीयादिशब्दानां । ननिष्प्रकारकज्ञानजनकत्वं । अस्त्वेतद्यथातथा । तथापिपराभिप्रेतस्यनिष्प्रकारकज्ञानस्यनबाधकत्वं । निष्प्रकारकज्ञानस्यस्वरूपमात्रविषयकस्यभ्रमविषयीभूतस्वरूपानपहारकत्वात् । अर्थापहाराद्बाधइतिपरैर

॥ ९९ ॥

प्यभ्युपगतमिति । विश्वबाधिकाधीःकिंशब्दजन्याशब्दाजन्यावा । आद्येपिकिंसप्रकारानिष्प्रकारावा । त्वदनभिप्रेतत्वान्ना
द्यइत्याह ॥ [१३।३] नतावत्सेति ॥ शब्दस्यनिष्प्रकारकज्ञानजनकत्वासिद्धेर्नद्वितीयइत्याह ॥ [१३।४] नापीति ॥ नांत्यइत्याह ॥ [१३।५] नचैत्व
न्मतइति ॥ लिंगशब्दयोरबाधकत्वादित्यत्रप्रमाणस्याबाधकत्वमुक्तं । इहतुज्ञानस्येतिभेदः ॥ [१३।४] किंचबाधकधीरिति ॥ अत्रा
भ्यस्तस्येतिपरमतेइष्टत्वोपपादनाय । तथाचभ्रमादेरबाध्यतयासत्यत्वेनतत्रैवदृश्यत्वादेर्व्यभिचारइतिभावः । अत्रवदंति ।
सि० "यदाहिस्वप्नेद्रष्टारंदुष्टकरणवंतंकल्पयित्वातस्यभ्रमंकल्पयति तत्रजागरज्ञानेनसर्वेषांनिवृत्तिदर्शनात् जाग्रद्दशायामपि
मनुष्यप्रतिकृतौचैतन्यंकल्पयित्वातत्समीपवर्तिन्यनादर्शएवादर्शत्वंकल्पयित्वास्वप्रतिबिंबंपश्यतीतिकल्पयति तदानायमादर्शो
नायंचेतनइतिप्रमयासर्वनिवृत्तिदर्शनाच्च नेयमदृष्टचरीकल्पना । तथाचेयंशुक्तिरित्याद्यधिष्ठानज्ञानंरज्वांसर्पभ्रममिवदृष्टाद्य
ध्यासंमानिवीवृतत् । तत्कस्यहेतोः । तदधिष्ठानसाक्षात्कारत्वाभावात् । ब्रह्मज्ञानंत्वाकाशादिभ्रममिवद्रष्टृदोषादिभ्रममपि
निवर्तयेदेव । तत्कस्यहेतोः । अशेषभ्रमाधिष्ठानतत्वसाक्षात्कारत्वात् । एवंचबाधबुद्धित्वंनदोषाद्यबाधकत्वेतंत्रं । किंतुतद्भ्र
माधिष्ठानतत्वसाक्षात्कारभिन्नत्वमेव । ननुकल्पितत्वादुक्तदृष्टांतेतद्बाध्यतां । इहतुकथमितिचेत् हंतब्रह्मव्यतिरिक्तस्यसर्वस्य
कल्पितत्वमंगीकुर्वतामस्माकमिदमनिष्टं मह्वदापादितं" मिति । अत्रोच्यते । यदुक्तंस्वप्नेद्रष्टारमित्यादि तन्नयुक्तं । दुष्टकर
णवतोद्रष्टुर्गजादिवत्कल्पितत्वेनस्वप्नद्रष्टृत्वाभावात् । यच्चमनुष्येत्यादि तन्न । तेषामपिदृश्यत्वेनद्रष्टृत्वासंभवात् । तद्द्रष्टुरन्य
त्वात् । योयद्भ्रमेद्रष्टासतद्भ्रमबाधेननबाध्यतइतिव्याप्तेरविकलत्वात् । एवंचजगद्भ्रमद्रष्टृदोषादीनांजगद्भ्रमबाधकेनबाधोन

युक्तइति । सन्घटइतिवाध्यत्वेनाभिमतेज्ञानेबाध्यत्वव्यापकाभावमाह ॥ दोषजन्यमेवेति ॥ नन्वपौरुषेयत्वेननिर्दोषश्रुति जन्यमद्वैतज्ञानंतवमतइव मममतेदोषाजन्यमपिसाक्षिज्ञानंबाध्यतामित्यतआह ॥ अद्वैतज्ञानेत्विति ॥ अत्राहुः । सि० “चैतन्यस्यस्वरूपतोदोषाजन्यत्वेपितदवच्छेदिकाया अविद्यावृत्तेर्दोषजन्यत्वात्तत्प्रतिफलितचैतन्यस्यैवसाक्षिपदार्थत्वादद्वैतता त्पर्यग्रहस्यप्रत्यक्षाविरोधेनप्रमारूपतयादोषत्वाभावात्तज्जन्यमद्वैतज्ञानंवाध्यं । भ्रमजन्यत्वस्यविषयवाधाप्रयोजकत्वाच्चे” ति.। अत्रोच्यते । अविद्यावृत्तिप्रतिबिंबितचैतन्यस्यसाक्षिपदार्थत्वेप्रतिबिंबनोपाधेरविद्यावृत्तेस्साक्षिविषयत्वार्थंतस्याएवोपा दानंनयुक्तं । प्रतिबिंबनोपाधिभूतायावृत्तेर्विषयिकोटिप्रवेशेनविषयत्वानुपपत्तेः । नाप्यन्यस्याः । तस्याअपिविषयत्वार्थमन्य स्याइत्यनवस्थानात् । तस्माच्चैतन्यमेवसाक्षीत्यंगीकार्यं । तच्चनिर्दोषमेव । यच्चोक्तमद्वैततात्पर्यग्रहस्येत्यादि तदपिन । प्रत्य क्षाद्यविरोधासिद्धेरुक्तत्वात् । यच्चोक्तंभ्रमजन्यत्वस्येत्यादि । अत्रब्रूमः । कारणीभूतज्ञानविषयककार्यज्ञानसंबंधिविषयबाधं प्रतिभ्रमजन्यत्वस्यप्रयोजकत्वमस्त्येव । यथाशब्दज्ञानविषयबाधंप्रतिसंसर्गावाधरूपयोग्यताभ्रमत्वं । तदिहाद्वैतता त्पर्यभ्रमस्यापियेनकेनापिरूपेणाद्वैतविषयतयातद्भ्रमत्वनिबंधनःशाब्दाद्वैतज्ञानविषयापहारस्स्यादेव । तस्मात्साधूक्तंदोषज न्यमेवेत्यादि । सन्घटइतिज्ञानेअबाध्यत्वव्याप्यमाह ॥ बाधकतुल्यमानेति ॥ ननुद्वैतस्यप्रत्यक्षादिलौकिकमानसिद्धत्वेनत द्बोधकश्रुतेरनुवादकतयाफलवज्ज्ञानस्वार्थतात्पर्यकाद्वैतश्रुतिसाम्याभावइतिचेन्मैवं । वर्तमानमात्रग्राहिप्रत्यक्षगृहीतव्यावहा रिकसत्यद्वैतातिरिक्तकालत्रयाबाध्यतात्विकद्वैतग्राहकत्वोपपत्त्याद्वैतश्रुतेरननुवादकत्वात् । फलवज्ज्ञातस्वार्थतात्पर्यकत्वाच्च

बाधकमानतुल्यमानत्वं ॥ [१३२।२] बाधकधीबोध्यमिति ॥ अधिष्ठानवदित्यर्थः ॥ [१३२।२] तयेति ॥ स्वविषयस्यब्रह्मणोऽभेदस्यवाबाध्यमानाद्भेदादभिन्नतयाऔदासीन्येनभेदाभेदानवगाहित्वेनवेत्यर्थः । ननुबाधकधियोभेदविषयत्वंनाभ्युपगच्छामः । इयंशुक्तिरित्येवबाधकबुद्ध्युदयात् । तस्यास्तुनेदंरजतमितिवत्तद्बुद्धिःफलं । व्यावृत्ताकारतैवबाधधियआवश्यकी । साचस्वरूपोपलक्षणबलान्निष्प्रकारज्ञानेप्यस्तीतिनबाधकधीबोध्यत्वंभेदस्येतिचेत् । मैवं । इयंशुक्तिरित्येवंज्ञानस्यबाधकत्वाभावात् । इदंरजतयोरिवइदंरजतशुक्तीनाप्यभेदग्रहसंभवात् । इयंशुक्तिरितिज्ञानेनस्वविषयस्यशुक्तेः रजतस्यचभेदेगृहीतेरजतभ्रमनिवृत्तेरनुभवसिद्धत्वात् । अतएवपीतःशंखइतिभ्रमःशंखत्वप्रत्यक्षेप्यनुभूयते । पीतभेदप्रत्यक्षेतुनेतियुक्तंभेदानवगाहिज्ञानस्यनबाधकत्वमितिबाधकधीबोध्यस्यभेदस्यनबाध्यतेतिसाधूक्तं ॥ [१३२।४] कथंचेयमिति ॥ सन्घटइतिप्रत्यक्षेभाविबाधकशंकाकिमबाधितबाधोभविष्यतीत्येवंरूपाआहोस्विद्बाधितबाधोभविष्यतीत्येवंरूपा । नाद्यः । कोट्यप्रसिद्धेः । त्वन्मतेरूप्यादिबाधेपिबाधशंकायाःसत्त्वात् । नद्वितीयः । अबाध्यत्वाविरोधित्वात् । बाधोभविष्यतीत्येवंशंकायाःसामान्यविषयकायाश्चयावद्विशेषबाधेन्नायोगादित्यर्थः । पूर्वंजाग्रदादिज्ञानस्याप्रमात्वेनेत्यादिनाबाधस्यापिबाध्यत्वाद्रूप्यादेर्मिथ्यात्वासिद्धौदृष्टांतासिद्धिरित्युक्तं । अत्रतुबाधस्यापिबाध्यत्वादबाधितबाधरूपकोटेरप्रसिद्धौतत्कोटिकसंशयानुपपत्तिरुच्यतइतिभेदः ॥ [१३३।२] नापिशब्देति ॥ अद्वैतसाक्षात्कारस्तुशब्दजन्यइत्यर्थः ॥ [१३३।४] स्वक्रियाविरोधाच्चेति ॥ सर्वत्रप्रत्यक्षेशंकास्तीतिवदतस्तवमतेबह्वायाससाध्यावेदांतश्रव

णादिक्रियावेदांतवाक्यजन्यधीप्रामाण्यग्राहिसाक्षिगोचरप्रामाण्यशंकाभावसाध्याविरुध्येतेत्यर्थः ॥ [१३३।५]स्वव्याघाताच्चेति ॥ सर्वप्रत्यक्षेशंकामुपपाद्यप्रत्यक्षमप्रमाणीकर्तुमुद्युक्तेनशंकागोचरसाक्षिप्रत्यक्षेपिशंकोपपादनाद्धटादिप्रत्यक्षेशंकाविरहोपपादनमुखेनघटादिप्रत्यक्षस्यप्रामाण्यमेवसाधितंस्यादित्यर्थः । भाविबाधेपिबाधशंकापातेनेत्यादिनाज्ञानमात्रेशंकायांस्वव्याघातउक्तः । अत्रतुसाक्षात्कारमात्रेशंकायांसउच्यतइतिविशेषः ॥ नापि[१३३।६]शब्दान्यजन्येति ॥ मुक्तस्वरूपानंदसाक्षात्कारादिस्तुस्वरूपरूपोनजन्यइत्यर्थः । साक्षिणोनित्यत्वपक्षेउक्तदोषेसत्येवदोषांतरमाह ॥ [१३३।६]दर्शमइति ॥ शंकाहेतोःसाधारणधर्मदर्शनादेःशब्दतदन्यजन्यसाक्षात्कारयोःसत्त्वेनेत्यर्थः ॥ अद्वैत[१३३।७]श्रुतीति ॥ द्वैतश्रुतिमेवानेकमेवसद्वितीयमित्यादिकामद्वैतश्रुतित्वेनगृह्णातीति शंकापिस्यादित्यर्थः ॥ [१३४।१]शून्याद्वैतमिति ॥ यद्यप्येतादृशशंकयाशून्याद्वैतंतत्वमितिश्रुतेरभावासिद्धिरेव । नतुशून्याद्वैतसिद्धिः । तथापितादृशश्रुतेरभावासिद्धौतादृशश्रुतिसत्त्वापत्त्यातन्मूलैवशून्याद्वैतसिद्धिःस्यादित्यर्थः । ननुप्रत्यक्षस्यतत्वावेदकेनाद्वैतागमेनबाधःशंक्यते । अद्वैतागमस्यनतत्वावेदकेनबाधःशंकास्पदः । अन्यस्यतत्वावेदकस्याभावादित्यतआह ॥ [१३४।३]नचात्माद्वैतेति ॥ प्रत्युततात्विकबाधस्यक्काप्यदृष्टत्वात्सएवनशंकास्पदः । अतात्त्विकबाधस्तुस्वप्नादौदृष्टइतिसएवव्यावहारिकसत्त्वविरोधीअद्वैतागमेशंक्यते । व्यावहारिकसत्त्वविरोधित्वमात्रेणममेष्टसिद्धिरित्यर्थः । नन्वप्रातिभासिकत्वरूपविशेषदर्शनान्नाद्वैतागमेव्यावहारिकबाधशंकाभविष्यतीत्यतआह ॥ [१३५।१]अप्रातिभासिकत्वधीरिति ॥ तथाचतात्विकत्ववदप्रातिभासिकत्वविशेषःपक्षेनास्तीतिनतत्रतद्दर्शनंशंकाविरोधीत्यर्थः ॥ [१३६।१]श्रुतिरिति ॥ श्रुतिर्नित्यत्वात्क्रमादिजन्यत्वादिदोषशंकारहिते

त्यर्थः । तथापितात्पर्यभ्रमरूपदोषशंकास्यादेवेतिदोषेसत्येवदोषांतरमाह ॥ [१३६।१]त्वन्मतइति ॥ ननुनाद्वैतश्रुतौदोषबाधशंकात
स्यांप्रमाकरणत्वरूपविशेषदर्शनादित्यतआह ॥ [१३६।२]तस्याइति ॥ [१३६।३]तवेति ॥ शंकयेतियोजना । द्वैतवक्तुर्द्वैतेयथाऽभ्रमोयथाब्रत्र
ह्ममीमांसायांप्रत्यधिकरणंपूर्वपक्ष्यभिमतार्थेपूर्वपक्षिणोऽभ्रमस्तथाममाद्वैतवादिनोप्यद्वैतेतात्पर्यधीर्भ्रमइतितवशंकयाद्वैतश्रुति
जन्याद्वैतधियःप्रमात्वासिद्धेरित्यर्थः । अत्रवदंति । सि०“नवयंनिश्चितमात्रेशंकांब्रूमः । येननेक्तसर्वविप्लवापत्तिः । अपितु
समत्वेनप्रमाणांतरउपस्थितएवनिश्चितेपिसत्त्वादौशंकाभवतीतिब्रूमः । तथाचयदुक्तंभट्टवार्तिकेदुष्टज्ञानगृहीतेत्यादितदपिन
विरुध्यते । गृहीतमात्रवाधस्यतच्छंकायाश्चानुक्तेरिति । अत्रब्रूमः । शब्दप्रत्यक्षयोःसमत्वमसिद्धं । प्रमाणत्वोपयोगिशब्दसिद्धेः
प्रत्यक्षाधीनत्वेनतस्योपजीव्यत्वात् । यद्यप्यतींद्रियेंद्रियसिद्धिरपिशब्दाद्भवति । तथापिसानेंद्रियस्यप्रमाणतोपयोगिनी । इं
द्रियस्याज्ञातकारणत्वात् । शब्देतुज्ञातस्यकारणत्वमितिवैषम्यं । यदिशब्दप्रत्यक्षयोःसाम्यं तर्हिप्रस्तरायजमानत्वादिग्राहिप्र
त्यक्षस्ययजमानःप्रस्तरइतिश्रुतेश्चसाम्येनसंशयएवस्यान्नतुगौण्यार्थनिर्णयइति । तस्माद्भाविवाधशंकायांसर्वविप्लवापत्तिःसूक्ता ।
दोषजन्यत्वज्ञानरूपकारणाभावादपिनभाविवाधशंकेत्याह ॥ [१३६।५]किंचप्रत्यक्षेक्लृप्तेति ॥ योग्यानुपलब्ध्यादूरादिदोषाभावनिश्च
येपिसन्घटइतिप्रत्यक्षेयदिदोषशंका तदाश्रुतावपिसास्यादित्यर्थः । ननुदूरादिदोषाभावनिश्चयेपिनदोषसामान्याभावनिश्चयः ।
स्वाप्नप्रत्यक्षवदन्यस्यापिदोषस्यसंभावितत्वादितिशंकते ॥ [१३६।६]स्वाप्नप्रत्यक्षेति ॥ तदा स्वप्नावस्थायां । सममित्याह ॥[१३६।८]स्वाप्नइति॥
सत्त्वादित्यतःपरंनदोषसामान्याभावनिश्चयः । स्वाप्नवेदवदन्यस्यापिसंभावितत्वादितिपूरणीयं । नन्वद्वैतश्रुतौस्वाप्नवेदवैष

म्यानुभवान्नस्वाप्नवेदवद्दोषांतरशंकेत्यतआह ॥ [१३६।७] स्वाप्नवैषम्येति ॥ सन्घटइतिप्रत्यक्षेपिस्वाप्नप्रत्यक्षवैषम्यानुभवान्नदोषांतरशं
केत्यर्थः । प्रत्यक्षसामान्येदोषजन्यत्वज्ञानरूपकारणाभावात्कार्यविरहमुक्त्वाप्रत्यक्षविशेषेसाक्षिणिवाद्येचतमाह ॥ [१३६।७] नताव
त्साक्षिणीति ॥ दोषजन्यमेववाध्यमित्यादिनाबाध्यत्वेतद्व्यापकदोषजन्यत्वानुपलब्धिरूपबाधउक्तःसाक्षिणि । इहतुतस्मि
न्बाध्यशंकाकारणाभावाद्बाधशंकाभावउच्यतइतिनाभेदः । ननुदोषजन्यत्वज्ञानाभावेपिप्रमाणाजन्यत्वेनसाक्षिणिशंकास्याद
तआह ॥ [१३७।१] प्रमाणेति ॥ तदप्रामाण्ये तस्याप्रामाण्यहेतुबाधशंकायां ॥ [१३७।१] वेदस्यापीति ॥ अप्रामाण्यहेतुबाधशंकापातादित्यर्थः ।
तन्निरासात् दोषजन्यत्वज्ञाननिरासेनशंकानिरासात् ॥ [१३७।८] अन्यथेति ॥ परीक्षायामप्यनाश्वासइत्यर्थः ॥ संगृह्णाति ॥ [१३७।१] एवंचेति
॥ [१३८।१] अपवाद्यत्वेनेति ॥ वदःसुपिक्यप्चेत्यत्रसुप्ग्रहणात्सुप्ग्रहणेचोपसर्गग्रहणाभावस्यसत्सूद्विषेत्यत्रोपसर्गग्रहणेनज्ञापित
त्वादपवाद्यमित्यत्रक्यब्यतौनभवतः । किंतुहलंताण्ण्यदेव ॥ [१३८।७] इहजन्मनीति ॥ इहजन्मनिबाधोनोपलभ्यते । योग्यवस्थायां
वाधोभविष्यतिवानवेतिनविद्मइत्यपहासः ॥ [१३९।९] वृद्धिमिच्छतइति ॥ जगन्मिथ्यात्वरूपांवृद्धिमिच्छताघटादिप्रत्ययस्यवाध्यत्वमु
क्तं । तत्समानयोगक्षेमत्वान्नेदंरजतमितिबाधस्यापिप्राप्नोति । तथाचबाधसिद्धंरूप्यादेर्मिथ्यात्वरूपंमूलंहीयेतेत्यर्थः । मूलरक्षार्थं
रूप्यादिवाधस्यसत्यत्वेघटादिसत्ताग्राहकस्यापिसत्यत्वंस्यादित्याह ॥ [१४०।१] तथाचेति ॥ ननुसौषुप्तिकानंदानुभवस्याप्रामाण्येप्यात्मन
आनंदरूपता "विज्ञानमानंदंब्रह्मे" तिश्रुत्यासेत्स्यतीत्यतआह ॥ [१४०।२] आनंदश्रुतेरिति ॥ तथाचफलवदज्ञातस्वार्थतात्पर्यकत्वरूपं ॥१०२॥
प्रामाण्यमसिद्धमित्यर्थः । अत्रवदंति सि॰"सत्त्वप्रत्यक्षाद्वैतागमयोःक्लृप्तदोषाभावनिश्चयस्यसमानत्वेनतस्यप्रत्यक्षेअप्रामाण्य

शंकायामप्रतिबंधकत्वात् । नहिसत्प्रतिपक्षेउभयत्रदोषाभावनिश्चयःकिमत्रत्वमितिजिज्ञासांप्रतिबध्नाति । विरुद्धविशेषादर्शन
कालीनस्यैवविशेषदर्शनस्यशंकाप्रतिबंधकत्वात् । अवच्छेदकवृत्त्यनित्यत्वेनचसाक्षिप्रत्यक्षस्यदोषजन्यत्वस्योक्तेः । अतएवत्ता
किंकोक्तंतदेवह्याशंक्यतइत्यादि भट्टवार्तिकोक्तंचइहजन्मनीत्यादि यच्चोक्तंप्रामाण्यस्योत्पत्तौज्ञप्तौचस्वतस्त्वादित्यादि तत्सर्वं
चिरस्तं । आगमादिप्रमाणमूलकशंकायाएवस्वीकारात् । रूप्यादिनिषेधकस्यतुनेदंरजतमित्यादेरद्वैतश्रुत्यनुगुणत्वेननाप्रामा
ण्यशंकास्कंदनं । नवृद्धिमिच्छतोमूलहान्यापत्तिः । नापिसन्घटइत्यादेर्नेदंरजतमित्यनेनसमानयोगक्षेमता । अद्वैतश्रुतिवि
रोधाविरोधाभ्यांविशेषात् । अतएवसौषुप्तिकानंदानुभवस्येत्याद्युक्तमपास्तं । आनंदस्यब्रह्मरूपत्वेनाद्वैतश्रुतिविरोधाभावेनत
दप्रामाण्यप्रयोजकाभावात् । अतएवनानंदश्रुतेरप्रामाण्यं । सुरेश्वरवार्तिकवचने अतोवबोधकत्वेनेत्यत्राक्षवदितिनिदर्शनं
व्यावहारिकप्रामाण्यमात्रेण । एवंचतात्विकप्रामाण्याभावेपिप्रत्यक्षज्ञानादीनांव्यावहारिकप्रामाण्याभ्युपगमान्नस्वक्रियाव्याघा
त":इति । अत्रब्रूमः । सत्त्वप्रत्यक्षेक्लृप्तदोषाभावनिश्चयेपिनिर्दोषाद्वैतागमस्योत्तेजकतयानशंकाप्रतिबंधोयथातथानिर्दोषाद्वैता
गमेपिनिर्दोषप्रतिद्वंद्वप्रत्यक्षनिबंधनाशंकास्यादेव । सत्प्रतिपक्षन्यायस्योभयत्रतुल्यत्वात् । अतएवसत्प्रतिपक्षेप्रकृतहेत्वोःकिंत
त्वमितिजिज्ञासांतार्किकामन्यंते । तस्मात्प्रत्यक्षेशंकांगीकारेश्रुतावपिसादुर्वारा । प्रत्यक्षस्यश्रुत्यवैषम्यस्यैवात्रापाद्यमानत्वात् ।
यच्चोक्तंविरुद्धविशेषादर्शनकालीनस्येत्यादि तदपिन । प्रत्यक्षइवश्रुतावपिविरुद्धविशेषदर्शनकालीनस्यविशेषदर्शनस्यबाधशं
कांप्रत्यप्रतिबंधकत्वेनशंकास्यादेव । यदपिचोक्तमागमादिप्रमाणमूलकेत्यादि तदपिन । श्रुतावपिप्रत्यक्षमूलकशंकायाएवस्वी

कारादित्यस्यापिसुवचत्वात् । यदपिमूलहान्यापत्तिसमाधानमुक्तं तदपिन । श्रुतेःप्रत्यक्षवद्बाधशंकादुरवस्थायाआनुगुण्यस्य नेदंरजतमितिज्ञानेऽकिंचित्करत्वात् । यदपिचोक्तंसन्घटइत्यादेर्नेदंरजतमित्यनेनसमानतेति तदपिन । अप्रामाण्यशंकादुष्टश्रुतेरविरोधस्यनेदंरजतमितिज्ञाने तद्विरोधस्यचसन्घटइतिज्ञानेचाप्रयोजकत्वात् । अतएवसुषुप्तावानंदानुभवस्येत्याद्यपिनिरवद्यं । तस्मात्प्रत्यक्षेबाधशंकायांसर्वविप्लवापत्तिरितिसाधूक्तं । श्रुतिस्मृतिभ्यामपिप्रत्यक्षप्रामाण्यसिद्धिरित्याह ॥ [१४०।३] स्मृतिरिति ॥ यद्यपि "स्मृतिःप्रत्यक्षमैतिह्यमनुमानश्चतुष्टयं । प्रमाणमितिविज्ञेय" मितिप्रमाणलक्षणोदाहृतश्रुतौज्ञानरूपायाःस्मृतेःप्रामाण्यमुक्तं । नश्रुतेः । तथाप्यैतिह्यशब्दस्याशेषागमोपलक्षणत्वाच्छ्रुतेरपिप्रामाण्यमुक्तं । अर्थकथनमिदंनश्रुतिपाठः । स्मृतिःप्रत्यक्षमैतिह्यमनुमानश्चतुष्टयं । प्रमाणेष्वनवस्थानाद्विकल्पात्सविरज्यतइतिभारते । श्रुत्यादिप्रमाणसिद्धेश्वरस्वातंत्र्यवित्यःसःश्रुत्यादिप्रमाणाविषयाज्जीवस्वातंत्र्यरूपाद्विकल्पाद्विरज्यते । मिथ्याभिमानंत्यजतीत्यर्थः । युक्तं । युगपद्वृत्तिद्वयापत्तेरितिशेषः ॥ ६ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यांभाविभाँच्छंकितंनखं ॥ ७ ॥ भाँत् । बाधनमित्यर्थः ॥ प्रत्यक्षस्यभाविबाधकशंकाभंगः ॥ ७ ॥ ७ ॥ पूर्वंकिंप्रत्यक्षमप्रमाणमेवोतप्रमाणमपित्रिकालाबाध्यत्वरूपसत्त्वग्रहाक्षममितिद्वौविकल्पावुक्तौ तत्राद्यस्त्रेधाविकल्प्यनिराकृतः । संप्रतिद्वितीयंनिराकरोति ॥ [१४०।५] नापीति ॥ प्रत्यक्षस्यवर्तमानमात्रग्राहित्वाद्रसग्रहादौचक्षुषइवसत्त्वग्रहेऽक्षमत्वादित्यर्थः ॥ [१४०।६] तद्धीति ॥ अबाध्यत्वरूपसत्यत्वमित्यर्थः । सत्त्वं विद्यमा

नता ॥ [१४०।६] किंत्विति ॥ सर्वकालावच्छेदेनसर्वाधिकरणसंसृष्टव्याप्यवृत्त्यत्यंताभावप्रतियोगिविद्यमानताकत्वरूपंयदसत्वंतदभावइत्यर्थः । यथाश्रुतेअसत्वशब्दस्यविद्यमानतात्यंताभावार्थकत्वेकालत्रयवर्तित्वस्यविशेषणस्याव्यावर्तकता । अभावमात्रार्थत्वेतादृशविद्यमानतान्योन्याभावस्यघटादौसत्यत्वपक्षेसत्त्वात्तदभावासिद्धिरित्यादिशंकावकाशःस्यात् । तार्किकादिसाधारणामिदमुच्यतइतिनक्षुद्रोपद्रवः ॥ [१४०।७] सचेति ॥ घटादौस्वकालेविद्यमानत्वस्यसंसर्गेप्रत्यक्षेणगृहीते तदधिकरणेतत्कालेतदत्यंताभावसंबंधाभावस्यग्रहणात् । प्रतियोग्यधिकरणसंसर्गाभावस्यैवाधिकरणेऽत्यंताभावसंबंधरूपतयाधिकरणेप्रतियोगिसंसर्गस्यात्यंताभावसंबंधाभावरूपत्वादितियुक्तमुपरिष्टाम...

Actually: स्यात्यंताभावसंबंधाभावरूपत्वादितियुक्तमुत्पश्यामः । सत्त्वे विद्यमानत्वसंसर्गे । सत्त्वग्राहिणांविद्यमानत्वसंसर्गग्राहिणा । अस्तितां विद्यमानतासंबंधं । प्रतिषेधंनिरुंद्धानः अत्यंताभावसंबंधाभावंविषयीकुर्वन् । ननुघटादिसाक्षात्कारोनस्वार्थस्यघटादेर्विद्यमानतांगृह्णाति । घटादिज्ञानेप्रामाण्यसंशयस्यानुभवसिद्धत्वात् । अन्यथास्वार्थसत्त्वनिश्चयस्यस्वस्यैवस्वप्रामाण्यसंशयविरोधित्वात्तदनुपपत्तिप्रसंगादित्यतआह ॥ [१४१।१] वेदेपिहीति ॥ घटादिज्ञानेअर्थसत्त्वगर्भप्रामाण्यस्यघटादिज्ञानानंतरमेवसाक्षिणाग्रहणाच्छ्रौतज्ञानइवप्रत्यक्षेप्यर्थसत्त्वसिद्धिरित्यर्थः ॥ [१४१।३] उक्तप्रकारत्रयेति ॥ चतुर्थस्तुवेदेप्यसंभवी अपदार्थतयाऽवाक्यार्थतयाचभाविबाधाभावस्यश्रौतज्ञानाविषयत्वात् । नन्वेवंप्रामाण्यग्रहेऽनुभूयमानस्तत्संशयोनुपपन्नःस्यादित्यतआह ॥ [१४१।४] प्रामाण्यस्येति ॥ स्वतस्त्वाद्दोषाभावेसतिज्ञानग्राहकग्राह्यत्वात् । तथाचसंशयस्थलेदोषसत्त्वेनप्रामाण्याग्रहात्संशयउपपद्यतइ

त्यर्थः । ननुघटादिज्ञानेपिकश्चिद्दोषोभविष्यतीत्यतआह ॥ नचरूप्यादीति ॥ घटादिज्ञानइतिवाक्यशेषः । प्रत्युतयोग्यानुपलब्ध्यादोषाभावएवनिश्चितइतिभावः । ननुगृह्यतएवप्रामाण्यं । मममतेपिज्ञानग्राहकेण । परंतुचरमबाधावुधीत्याशंकामनुव्याख्यानवचनेनपरिहरति ॥ तदुक्तमिति ॥ कालतोमर्यादाव्यवहारेप्रामाण्यंपरमार्थतोनेत्येवंरूपा । श्रुतिप्रत्यक्षयोःसत्त्वग्रहणेअवांतरवैषम्यमाह ॥ इयांस्त्विति ॥ वर्तमानेति ॥ सत्सत्यमित्यादिश्रुतौवर्तमानकालोपस्थापकपदाभावादित्यर्थः ॥ प्रत्यक्षेणेति ॥ प्रत्यक्षज्ञानेवर्तमानकालस्यावश्यंविषयता । इदमिदानीमेवमितिहिप्रत्यक्षानुभवः । अतएवकालस्यषडिंद्रियवेद्यतामाहुः । तच्चोपनयांद्वाऽन्यथावेतिप्रकारमात्रेविवादः । जागराद्यनुभवेपीदंताभासतएव । विशिष्टानुभवस्यविशेषणज्ञानजन्यत्वानभ्युपगमात् । अनुभवस्यवाजागराद्यत्वमसिद्धमितिभावः ॥ नित्यत्वाद्यसिद्धावपीति ॥ कालानवच्छिन्नसत्तासंवंधरूपनित्यत्वाद्यसिद्धावपीत्यर्थः । प्रागभावप्रध्वंसाभावाप्रतियोगित्वरूपनित्यत्वस्यतत्सत्यमितिश्रुतितोप्यसिद्धेः । ननुयदेशकालप्रकारावच्छेदेनयत्रयस्ययेनसत्तागृहीतातद्देशकालप्रकारावच्छेदेनतत्रतस्यतेनसत्त्वसिद्धावपिनत्रैकालिकनिषेधाप्रतियोगित्वसिद्धिः । नेहनानेतिभाविवाधबाधितत्वात् । नचैतावताऽन्यतराप्रामाण्यं । पूर्वोत्तरकालव्यवस्थयोभयोपपत्तेरित्यतआह ॥ कालांतरादिस्थमपीति ॥ आद्यइति ॥ रूप्यज्ञानवद्यस्मिन्कालेयत्रार्थोगृहीतस्तस्मिन्नेवकालेतत्रैवार्थापहारादित्यर्थः ॥ अंत्यइति ॥ यस्मिन्कालादौयोर्थोगृहीतःपूर्वज्ञानेनतस्मिन्कालादौवाधकज्ञानेनसोर्थोप्रतिषिद्धएव । अन्यदाविषिद्धइत्यनित्यत्वमेवस्यादित्यर्थः । वेदेपिहिविषयस्यावाध्यत्वेज्ञानप्रामाण्यमेवतंत्रं । नतुशब्दत्वादयश्चत्वारःप्रकाराः । आद्यानां

त्रयाणामनाप्तवाक्यसाधारण्यात् । चतुर्थस्तुप्रत्यक्षइवशब्देप्यसंभवीत्युक्तं । यदिकश्चिद्द्वैयात्याद्ब्रूयात् शब्देस्त्येवभावविबाधाभावग्रहणंप्रामाण्यग्रहणद्वारेति तर्हिप्रत्यक्षेप्यस्तिप्रामाण्यग्रहणद्वाराभावविबाधाभावग्रहणमित्याह ॥ [१४३।५] किंचानागतेति॥ [१४३।७] अंस्कं व्यंचेति ॥ घटात्यंताभावस्यकालत्रयसंबंधग्रहंविनाघटादिमिथ्यात्वग्रहोनसंभवतीत्यर्थः । कालत्रयसंसृष्टोयोत्यंताभावस्तत्प्रतियोगित्वरूपमिथ्यात्वाभावस्त्वेककालेप्रतियोगिसत्तामात्रग्रहेपिसुग्रहइतिदर्शयतिपरेणैवेत्येवकारेण ॥ [१४३।९] प्रातिभासिकेति ॥ प्रत्यक्षस्याप्रामाण्येघटादेःप्रातिभासिकवैधर्म्यासिद्ध्यातत्प्रामाण्यंत्वयाप्यभ्युपेयमित्यर्थः ॥ [१४३।११] यैर्व्यक्षंसिद्धमिति ॥ दोषाभावादिनिश्चयस्यरूप्यमिथ्यात्वप्रत्यक्षइवविश्वसत्यत्वप्रत्यक्षेप्यविशेषादित्यर्थः । ननुरूप्यधर्मोमिथ्यात्वमपिममतेमिथ्यैव । धर्मिणएवमिथ्यात्वेधर्मस्यापिमिथ्यात्वात् । नहिवंध्यासुतेश्यामरूपंनास्तीत्येतावतागौररूपंसेत्स्यतीत्यतआह ॥ [१४३।१] रूप्यमिथ्यात्वस्येति ॥ परस्परात्यंताभावरूपयोरन्यतरनिषेधेअन्यतरसत्यत्वं गौरश्यामरूपयोस्तुनपरस्परविरहरूपत्वं अतोनैकाभावेअपरस्यसत्वमित्यर्थः । नचवृद्धिमिच्छतइत्यनेनपौनरुक्त्यं । तत्रनेदंरजतमित्यस्यबाध्यत्वेरजतस्यमिथ्यात्वंनसिद्ध्यतीत्युक्तं । अत्रतुप्रत्यक्षस्यपारमार्थिकसत्यत्वाग्राहकत्वेरूप्यमिथ्यात्वस्यपारमार्थिकत्वंनसिध्यतीत्युच्यतइतिभेदः ॥ [१४३।१] पारमार्थिकेति ॥ नचमिथ्यात्वश्रुतेरप्रसक्तप्रतिषेधापातइत्यनेनपुनरुक्तिः । तत्रप्रत्यक्षानुमानयोर्व्यावहारिकपारमार्थिकप्रतियोगितदभावविषयत्वेनकालात्ययापदिष्टव्यवस्थोक्तौश्रुतेरप्रसक्तप्रतिषेधतोक्तिः । इहतुप्रत्यक्षस्यतात्विकसत्त्वाविषयत्वेसोच्यतइतिभेदः । प्रत्यक्षबाधमुपसंहरति ॥ [१४३।५] तस्मादिति ॥ ७ ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यांसत्सत्त्वेपिक्षमाक्षधीः

॥ प्रत्यक्षस्यपारमार्थिकसत्त्वग्राहित्वं ॥ १८ ॥ ७ ॥ ७ ॥ प्रत्यक्षबाधमभिधायानुमानबाधमाह ॥ अनुमानेति ॥ ब्रह्मप्रमान्येनेत्यादि ॥ अत्रबाधादिवारकविशेषणस्यप्रयोजनवत्त्वंविप्रतिपत्तावुक्तमनुसंधेयं ॥ सद्वेति ॥ पारमार्थिकसत्त्वातिरिक्तंव्यावहारिकंप्रातिभासिकंवासत्त्वंनास्तीतिपक्षेसदित्येवसाध्यनिर्देशः । व्यावहारिकसत्त्वादिकमादायसिद्धसाधनाभावादित्यभिप्रायः ॥ अनिषेध्यत्वेनेति ॥ पुरोवर्तिनंरजततयाजानामीत्याद्यनुव्यवसायरूपप्रमाविषयेप्रातिभासिकेव्यभिचारवारणायसाक्षात्पदं । तत्रैवमिथ्यात्वप्रमितेःसाक्षाद्विषयेव्यभिचारवारणायानिषेध्यत्वेनेतिविषयत्वविशेषणं । इदंरजतमितिज्ञानंप्रतिसाक्षाद्विषयेरूप्येव्यभिचारवारणाय प्रमेति । तेनरजताभावस्यानिषेध्यत्वेनरजतंनास्तीतिप्रमांप्रतिविषयेरजतेनव्यभिचारः । नचैवंस्वप्रमाविषयत्वमेवास्त्वितिवाच्यं । यथोक्तविशेषणविशेष्यभावेवैयर्थ्याभावात् ॥ अनिषेध्यत्वेनईश्वरंप्रतीति ॥ अपरोक्षत्वस्यज्ञानत्वाघटितत्वान्नवैयर्थ्यमितिबोध्यं ॥ प्रातिभासिकस्येति ॥ ननुसर्वप्रत्ययवेद्यत्वाद्ब्रह्मणःप्रातिभासिकबाधकज्ञानमपिब्रह्मज्ञानमेव । नचतस्यब्रह्मज्ञानत्वेपिनतत्प्रमात्वमितिवाच्यं । ब्रह्मांशेतस्यापिप्रमात्वात् । नचोभयसिद्धायाब्रह्मप्रमातदन्येतिविवक्षितमितिवाच्यं । ब्रह्मण्यारोपितस्यक्षणिकत्वादेस्तथाप्यबहिर्भावादितिचेन्न । उभयसिद्धब्रह्माधिष्ठानकभिन्नत्वेसतीत्यस्यापिविशेषणत्वादितिनकोपिदोषः ॥ अन्योन्याश्रयादिति ॥ मानांतरागम्यस्यवाक्यार्थस्यवाक्यादुपस्थितौ तत्रतात्पर्यावधारणं तदवधारणेचवाक्याद्वाक्यार्थोपस्थितिरित्यर्थः । ननुज्ञानमेवाज्ञाननिवर्तकमितिपरमतेअज्ञाननिवृत्तिरूपमोक्षहेतोर्ज्ञानान्य

स्याभावेनाव्यावर्तकतयाज्ञानेतिव्यर्थं । नचाज्ञाननिवृत्तिरदृष्टादिकारितापीतिवाच्यं । तर्हितद्वदेवप्रपंचस्याप्यदृष्टसहितज्ञान
बाध्यत्वापत्तौज्ञानान्याबाध्यत्वमसिद्धमित्यरुचेराह ॥ [१४५।४] यद्वेति ॥ ननुशशशृंगमस्तीतिशब्दाभासजन्यासद्विषयकज्ञानहेतोर्दो
षस्यासद्बाधकाभिमताबाध्यतयासत्यंतविशेषणेनैवासद्व्यावृत्तिसंभवेतद्वारकस्यासत्त्वानधिकरणत्वेसतीत्यस्यवैयर्थ्यमेवं । रू
प्याकाराविद्यावृत्त्यनंगीकर्तृमतेसाक्षिविषयस्यापिरूप्यस्यदोषजन्यज्ञानाविषयतयातस्यापिपक्षत्वापत्तौबाधश्चेत्यरुच्यापक्षांतर
माह ॥ [१४५।५] स्वबाधकाभिमतेति ॥ [१४५।६] समानाधिकरणेति ॥ मनःपरिणामस्यज्ञानस्यकर्मप्रागभावसामानाधिकरण्यंबोध्यं । ननु
सर्वेष्वप्येषुपक्षेषुवादिनंप्रतिप्रातिभासिकव्यावृत्त्यर्थमुपात्तमाद्यंसत्यंतंवैकल्पिकंविशेषणंव्यर्थं । तन्मतेप्रातिभासिकस्यासत्त्वेना
सद्व्यावर्तकासत्त्वानधिकरणत्वविशेषणेनैवप्रातिभासिकस्यापिव्यावृत्तिसिद्धेः । नचपरार्थानुमानेप्रतिवादिनंप्रतिसिद्धसाधनो
द्धारस्यापिवादिनंप्रतिप्रयोजनत्वात् जन्यकृत्यजन्यानीत्यत्रपक्षतावच्छेदकेमीमांसकंप्रतिजन्यत्वस्येवेहापिवादिनंप्रतिसत्यंतस्य
तदुपरक्तबुद्धेरुद्देश्यत्वेनविशेषणत्वोपपत्तेश्चनवैयर्थ्यमितिवाच्यं । एवमपिदेहात्मैक्यस्यापिपक्षत्वेबाधएव । बाधेचसतिपक्ष
विशेषणस्यपक्षत्वस्यासिद्ध्याआश्रयासिद्धिरपीतिचेन्मैवं । देहात्मैक्याध्यासनिराकरणाभिप्रायेणास्योक्तत्वाददोषः । वस्तुतस्तु
आद्यसत्यंतविशेषणस्यसत्यत्ववादिमिथ्यात्ववाद्युभयसिद्धमिथ्यात्वकभिन्नत्वमर्थः । अस्तिचरूप्येदेहात्म्यैक्येचतार्किकादीनां
सत्यत्ववादिनांमिथ्यात्ववादिनांचमिथ्यात्वप्रसिद्धिरतस्तस्यनपक्षता । प्रपंचेचतार्किकादीनांनमिथ्यात्वप्रसिद्धिः । अतःप्रपंच
स्यपक्षतोपपत्तिः । सिद्धांतेदेहात्म्यैक्यभ्रमाभावेपिदोषाभावश्चेतिदिक् । प्रथमसाध्येसिद्धसाधनतांपरिहरति ॥ [१४५।१] व्यावहारि

कसत्त्वमिति ॥ तथाचपरमतेप्रपंचेसत्त्वव्यवहारेपिसत्त्वस्याभावान्नसिद्धसाधनमित्यर्थः । द्वितीयसाध्येव्यर्थविशेषणत्वंपरि
हरति ॥ [१४६।१] अर्थगतमिति ॥ तथाचप्रपंचेपितन्मतेसत्त्वस्यविद्यमानत्वात्तद्विशेषणाभावेसिद्धसाधनतास्यादित्यर्थः ॥ [१४६।२] अनिर्वा
च्येति ॥ सदसत्त्वंक्वचिद्बौद्धमस्ति । तदनधिकरणमनिर्वाच्यमितिलक्षणमाश्रित्येदमुक्तं ॥ [१४६।४] परार्थानुमानइति ॥ विशेषण
त्वेतूभयसिद्धंप्रयोजनवत्त्वंतंत्रं । नतुप्रयोजनस्याप्युभयसिद्धत्वमितिभावः ॥ [१४७।१] अप्रसिद्धिरिति ॥ प्रतियोगिप्रमाविरहेणाभा
वाज्ञानमित्यर्थः ॥ [१४७।१] मतद्वयेपीति ॥ प्रतियोगित्वादित्यतःपरंप्रतियोगिज्ञानमात्रस्यैवाभावधीहेतुत्वादितिशेषः । केनचिद्रूपे
णप्रतियोगिप्रमापिसंभवतीत्याह ॥ [१४७।२] आरोपितत्वेनेति ॥ नचविशेष्यस्यासत्त्वात्कथंसाप्रमेतिवाच्यं । प्रमांप्रतिनविशेष्यस
त्त्वंप्रयोजकं । विशेष्यसत्त्वेपिरूप्यज्ञानस्याप्रमात्वात् । किंतुस्वोल्लिखितस्यप्रकारसंबंधस्यविशेष्येसत्त्वं । तच्चप्रकृतेप्यस्त्येवेति
भावः ॥ [१४७।२] प्रतिभासेति ॥ मात्रशब्देनार्थोव्यावर्त्यते । अर्थाभावेपिप्रतिभासवत्त्वमित्यर्थः । यथाश्रुतेज्ञानात्मकतापत्तौविरो
धःस्यादितिबोध्यं ॥ [१४७।४] असिद्धीति ॥ यत्किंचिदधिकरणेप्रपंचेअधिकरणत्वाभावस्यासिद्धिरित्यर्थः । असिद्धिवारकस्यापिबहु
शोऽभियुक्तैःप्रयुक्तत्वान्नवैयर्थ्यमित्याह ॥ [१४७।४] शरीरेत्यादि ॥ [१४७।५] विमतमिति ॥ वह्निमतःपक्षीकरणादसिद्धिर्बोध्या । विमतंतप्ता
यःपिंडादि ॥ [१४७।७] किंचेति ॥ तथाचाप्रसिद्धिवारकतयासहचारग्राहकतयाव्याप्तिग्रहोपयुक्तत्वान्नतद्वैयर्थ्यमित्यर्थः । केचिदित्यस्वरसो
द्भावनं । तद्बीजंत्वनधिकरणत्वस्याधिकरणत्वसामान्याभावपरत्वेव्यभिचाराभावःविशेषाभावपरत्वेतुप्रातिभासिकत्वविशेषणे

पिव्यभिचारएवेति । ननुतथापिप्रातिभासिकत्वविशेषणंव्यर्थं । अनधिकरणत्वेसत्यसत्वानधिकरणत्वस्यैवपरमार्थसत्वसाध
कत्वोपपत्तेः । शुद्धमेवहिब्रह्मदृष्टांतत्वेनाभ्युपेयं । धर्मवतोदृष्टांतत्वेसाध्यवैकल्यापत्तेः । साध्यंतुबाधाभावरूपत्वादधिकरण
स्वरूपमेव । नधर्मः । धर्म्यतिरिक्ताभावानभ्युपगमात् । तथाचक्षित्यादिकमकर्तृकं । शरीराजन्यत्वादित्यत्राशरीरस्येवव्या
प्तिग्रहांनुपयोगित्वेनप्रातिभासिकत्वस्यवैयर्थ्यमेव । आकाशादावजन्यत्वकर्तृजन्यत्वाभावयोरिवनिर्धर्मकेब्रह्मण्यनधिकरणत्व
परमार्थत्वयोर्व्याप्तिग्रहोपपत्तेः । तथाचैकामसिद्धिंपरिहरतोद्वितीयापत्तिः । स्वरूपासिद्धिपरिहारार्थंविशेषणंप्रक्षिपतोव्याप्य
त्वासिद्ध्यापत्तिरित्यर्थः । व्याप्तावनुपयोगस्यदर्शितत्वादितिचेत् अत्रब्रूमः । शुद्धेब्रह्मण्यनधिकरणत्वतदभावाभ्यामधिकरण
त्वस्यैवप्राप्त्याऽनधिकरणत्वासिद्धेर्व्याप्त्यग्रहात्प्रातिभासिकत्वविशेषणेतुव्याप्तिग्रहात्तस्यसार्थक्यं । वस्तुतस्तु अधिकरणत्वा
भावातिरिक्तस्यप्रातिभासिकत्वविशेषिताधिकरणत्वस्यविशिष्टस्याभावो अखंडएवहेतूकृतः अतोनवैयर्थ्यगंधोपि । नचैवंशरी
राजन्यत्वादित्यत्राप्युक्तविधयाऽखंडाभावसत्त्वेनवैयर्थ्योक्तिरसंगतास्यादितिवाच्यं । इष्टापत्तेरितिविभावनीयं । ननुतथापि
त्वन्मतेप्रातिभासिकस्याप्यसत्त्वेनव्यर्थविशेषणतयाव्याप्यत्वासिद्धिः । अस्मन्मतमाश्रित्यहेतूकरणेचदेहात्मैक्येब्रह्मज्ञानेतरा
बाध्येव्यभिचारः । नचतस्यत्वन्मतेप्रातिभासिकत्वेनप्रातिभासिकत्वानधिकरणत्वविशेषणेनैवव्यावर्तिततयानतत्रव्यभिचारइ
तिवाच्यं । तस्यब्रह्मज्ञानेतरबाध्यादन्यत्वेनप्रातिभासिकत्वाभावात् । नहिप्रातिभासिकंब्रह्मज्ञानेतरबाध्यादन्यदितिचेन्मैवं ।
नहिप्रातिभासिकत्वंब्रह्मज्ञानेतरबाध्यत्वमितीहाभिप्रेतं । येनोक्तदोषःस्यात् । किंतुसत्यत्ववादिमिथ्यात्ववाद्युभयसंमतमिथ्या

त्वकत्वंप्रातिभासिकत्वमिहाभिप्रेतं । देहात्मैक्यंचसत्यत्ववादिनांतार्किकादीनांमिथ्यात्वेनसंमतं । अतस्तत्रनव्यभिचारः । त
दिदमुक्तमारोपितत्वेनोभयसम्मतत्वरूपस्येति ॥ [१४८।१] नचेति ॥ तथाचनपारमार्थिकसत्त्वसिद्धिरित्यर्थः ॥ [१४८।२] व्यावर्तकतयेति ॥
व्यावृत्तेर्व्यावर्तकप्रयोज्यत्वनियमादित्यर्थः । नन्वसत्प्रातिभासिकव्यावृत्तिंप्रतिव्यावर्तकंपारमार्थिकसत्त्वंब्रह्मण्यस्तु । तत्रपार
मार्थिकसत्त्वस्यसंभवात् । प्रपंचेतूक्तहेतुंप्रतिनपारमार्थिकसत्त्वंव्यावर्तकं । प्रपंचस्यमिथ्यात्वेनपारमार्थिकसत्त्वस्याभावात् ।
किंतुव्यावहारिकसत्त्वमेवव्यावृत्तिरूपहेतुंप्रतिप्रपंचेव्यावर्तकं । तथाचाननुगतमेवसत्त्वमुक्तहेतुंप्रतिप्रयोजकमित्याशंकापरिहा
रार्थमुक्तंविश्वमिथ्यात्वेत्यादि ॥ [१४८।३] अन्योन्याश्रयादिति ॥ व्यावृत्तिरूपोक्तहेतुंप्रतिपारमार्थिकसत्त्वस्याव्यावर्तकत्वेउक्तहेतोर
प्रयोजकत्वेनमिथ्यात्वानुमानंप्रतिबाधकत्वाभावसिद्धौमिथ्यात्वानुमानेनमिथ्यात्वसिद्धिः तत्सिद्धौचानुगतव्यावर्तकस्यासंभ
वादननुगतस्यव्यावर्तकत्वेनोक्तहेतोरप्रयोजकत्वमित्यन्योन्याश्रयइत्यर्थः ॥ [१४८।४] तत्प्रयोजकमिति ॥ उक्तहेतुंप्रतिव्यावर्तकतया
प्रयोजकमित्यर्थः ॥ [१४८।५] असद्व्यावृत्तिंचप्रतीति ॥ असत्प्रातिभासिकव्यावृत्तिंप्रतीत्यर्थः ॥ [१४८।५] सत्त्वस्यैवेति ॥ ब्रह्मप्रपंचयोर्विद्य
मानासत्प्रातिभासिकव्यावृत्तिंप्रतिव्यावर्तकतयाप्रयोजकमुभयानुगतंतद्विरुद्धंपारमार्थिकसत्त्वमेववाच्यं । नतुब्रह्मत्वादिकं ।
तस्यप्रपंचेऽविद्यमानत्वेनन्यूनवृत्तित्वादित्यर्थः । यथाश्रुतेत्वसद्व्यावृत्तेःपरमतेशुक्तिरूप्येपिसत्त्वेनतत्रतत्प्रयोजकसत्त्वस्याभा
ववत्प्रपंचेपितदभावोपपत्तेरसंगतिःस्यादितिध्येयं ॥ [१४८।५] अन्यथेति ॥ उक्तव्यावृत्तिंप्रतिज्ञानत्वादेःप्रयोजकत्वेसत्यज्ञानादिवाक्ये ॥१०७॥
ज्ञानपदेनज्ञानत्वप्रतिपादनद्वाराऽनृतव्यावृत्तिसिद्धिप्रसंगेनसत्यपदवैयर्थ्यंस्यादित्यर्थः ॥ [१४८।६] प्रपंचइति ॥ अनुगतस्यसंभवेबाध

कंविनात्यागायोगादितिभावः। अत्रवदंति। सि० "अयुक्तमेतत्। नहिप्रातिभासिकासतोरेकाव्यावृत्तिरुभयावासमव्याप्ता। येनै
कप्रयोजकप्रयोज्याभवेत्। किंतुप्रातिभासिकव्यावृत्तिप्रयोजकंब्रह्मविश्वासत्साधारणमेववक्तव्यं । असत्यपिप्रातिभासिकत्वाभा
वात्। एवमसद्व्यावृत्तावपिप्रयोजकंब्रह्मविश्वप्रातिभासिकसाधारणमेववक्तव्यं । प्रातिभासिकस्याप्यसत्त्वाभावात्। तथाचतत्प्र
योजकद्वयसमावेशादेवब्रह्मण्युभयव्यावृत्त्युपपत्तौनीलघटत्वरूपावच्छेदकद्वयसमावेशोपपन्ननीलघटत्ववन्नातिरिक्तप्रयोजकक
ल्पनायामस्तिकिंचिन्मानमितिकृतबुद्धयोविदांकुर्वंतु । नित्यत्वंचोपाधिः । तुच्छप्रातिभासिकयोर्नित्यत्वव्यतिरेकेसाध्यव्य
तिरेकदर्शनादिति । अत्रब्रूमः । नतावद्ब्रह्मविश्वासत्सुप्रातिभासिकव्यावृत्तिरेकापरमतेसंभवति । ब्रह्मणिसाधर्मिस्वरूपा । जग
तिव्यावहारिकीअन्योन्याभावादिरूपा । असतितुनिर्धर्मकत्वेननव्यावहारिक्यपिव्यावृत्तिः । किंतुव्यावृत्तावेवासत्प्रतियोगि
कत्वादिकं । नवाब्रह्मविश्वासत्सुप्रातिभासिकव्यावृत्तिंप्रतिप्रयोजकोऽनुगतोधर्मःसंभवति । ब्रह्मणोनिर्धर्मिकत्वात्। विश्वस्य
व्यावहारिकधर्मवत्त्वात्। असतोनिरुपाख्यत्वात् । नापिब्रह्मविश्वप्रातिभासिकेषुअसद्व्यावृत्तिरेकासंभवति । नाप्येकव्यव
र्तकप्रयोज्या । ब्रह्मविश्वयोस्त्वसत्प्रातिभासिकव्यावृत्तिःसामान्याभावरूपतयैकासंभवति । अधिकरणभेदेनाभावभेदाभा
वात् । तथाचब्रह्मविश्वयोर्विद्यमानामुक्तव्यावृत्तिंप्रतिव्यावर्तकतयाप्रयोजकमेकमनुगतमवश्यंवाच्यं । तच्चपारमार्थिकसत्त्व
मेव । अवच्छेदकांतरानुपपन्नप्रयोज्यकत्वादितिसाधुंकृतबुद्धयोविदांकुर्वंतुतरां । नापिनित्यत्वमुपाधिः । पक्षेपारमार्थिकस
त्त्वाभावेतद्विरुद्धस्वभावासत्प्रातिभासिकयोर्व्यावृत्तावुच्यमानायांव्याघातवत्पारमार्थिकसत्त्वाभावेध्वंसप्रतियोगित्वरूपस्यनि

त्यत्वाभावस्योक्तौव्याघाताभावेनोपाधेःपक्षेसाध्याभावासाधकत्वात् । उक्तानुकूलतर्कगृहीतसाध्यव्याप्तिकहेत्वव्यापकत्वेन साध्याव्यापकत्वाच्चेति ॥ प्रामाण्येति ॥ अर्थसत्त्वगर्भप्रामाण्यस्यार्थासत्त्वगर्भातत्वावेदकत्वेनात्यंतविरोधात्प्रामाण्यातत्वावेदकत्वयोःसामानाधिकरण्यादर्शनात् । प्रामाण्यस्यसाधारणधर्मत्वाभावेनातत्वावेदकत्वकोव्यस्मारकतयानोक्तविधविकल्पः संभवतीत्यर्थः ॥ प्रत्यक्षस्येति ॥ तथाचतत्वावेदकप्रमोक्तावपिनासिद्धिरितिभावः ॥ अनुमानादेश्चेति ॥ तथाचतत्वभूतमिथ्यात्वावेदकतयातत्वावेदकजातीयानुमानविषयत्वेनापि तत्वावेदकप्रमाविषयत्वंपक्षेनासिद्धमितिभावः ॥ विपक्षइति ॥ मिथ्याविषयकज्ञानस्यापिप्रमात्वेव्याघातइत्यर्थः ॥ विषयेति ॥ रूप्यज्ञानस्यापिप्रामाण्यप्रसंगादित्यर्थः । अत्राहेतौनित्यत्वमुपाधिःपूर्ववन्निरसनीयः । अत्रवदंति । सि० "प्रमात्वंतद्वतितत्प्रकारकत्वंवा तत्वावेदकत्वंवा । आद्येदृष्टांतस्यसाधनवैकल्यं नहिपरमार्थतःशुद्धस्यब्रह्मणस्सप्रकारकज्ञानविषयत्वं । नचधर्मवतोदृष्टांतत्वंसंभवति । तस्यपक्षकुक्षिनिक्षिप्तत्वेननिश्चितसाध्यवत्त्वाभावात् । द्वितीयेतत्वावेदकत्वस्याबाधितविषयत्वरूपत्वेनसाध्याविशेषपर्यवसानात् । हेतुग्रहेसिद्धसाधनं । हेत्वग्रहेतुस्वरूपासिद्धिरिति । मैवं । विशेष्यावृत्त्यप्रकारकज्ञानत्वादेःप्रमात्वस्यविवक्षायांदोषाभावात् । तत्वावेदकप्रमोक्तावप्यदोषत्वस्योक्तत्वाच्च । नचसाध्यावैशिष्ट्यंदोषः । अर्थसत्त्वाग्रहेपिशब्दादिनातज्ज्ञानेतद्विषयकत्वग्रहसंभवात् । शब्देऽनित्यत्वाग्रहेपिशब्दत्वानित्यत्वयोर्व्याप्तिग्रहवदितिसर्वमनवद्यं । ननुसत्यत्वसिद्धिंविनाअनिषेध्यत्वेनेत्यंशस्यासिद्धिः । तथाचान्योन्याश्रयइत्यतआह ॥ त्वयापीति ॥ अन्यथाजन्माद्यस्ययतइतिसूत्रेजगत्कर्तृत्वेनब्रह्मणःसर्वज्ञत्वसिद्धिः शास्त्रयोनित्वादितिसूत्रेचस

र्वकर्तृत्वसिद्धमेवसार्वज्ञंस्फोर्यतइतित्वदुक्तमयुक्तंस्यादितिभावः ॥ अन्यथेति ॥ ईश्वरस्याप्यनिषेध्यत्वेनजगद्द्रष्टृत्वाभावेपाल
नीयाज्ञानात्तत्पालनादौप्रवृत्तिर्नस्यादित्यर्थः । नन्वीश्वरःप्रपंचंनिषेध्यत्वेनैवजानाति । अतएवनतस्यभ्रांतत्वं । मिथ्याभूतस्य
चमिथ्यात्वेनैवग्रहणादैंद्रजालिकवद्भ्रांतित्वायोगात् । अन्यथासर्वविषयकभ्रमज्ञातृत्वेनभ्रांतत्वस्यदुर्वारतापत्तेः । नचनिषे
ध्यत्वेनंज्ञानेतत्पालनार्थमीश्वरस्यप्रवृत्तिर्नस्यादितिवाच्यं । ऐंद्रजालिकप्रवृत्तिवदीश्वरप्रवृत्तेरपितथाविधत्वादितिचेन्मैवं । न
ह्यैंद्रजालिकस्तत्पालयति । किंतुदर्शयामीतिभ्रमयति । ईश्वरस्तुपालयति । एषलोकपालः विश्वंतञ्चंद्रंयदवंतिदेवाइत्यादि
श्रुतेः । यस्माद्देवाःविश्वंरक्षंतितस्माञ्चंद्रंसत्यमितिमाधवीयव्याख्यानात् । सेयंदेवतैक्षतहंताहमिमास्तिस्रोदेवताअनेनजीवे
नात्मनानुप्रविश्यनामरूपेव्याकरवाणि । सईक्षतेमेनुलोकाश्चलोकपालाश्चेत्यादावनिषेध्यत्वेनैवसर्वज्ञानोक्तेश्च ॥ यःसर्वज्ञःसर्व
विदित्यादौसामान्यविशेषाभ्यांज्ञानोक्तेश्च । निषेध्यत्वेनज्ञानेसामान्यविशेषाभावाच्चेति ॥ विपक्षइति ॥ अनिषेध्यत्वेनेश्वर
ज्ञानविषयस्यापिविश्वस्यसत्यत्वाभावेनिषेध्यमेवप्रपंचमनिषेध्यत्वेनईश्वरोजानातीतिस्यात्तथाचेश्वरस्यभ्रांतत्वंस्यादित्यर्थः ॥
साचेति ॥ शोकंमोहंजरांमृत्युमत्येतीत्यादिभिर्विरुद्धेत्यर्थः ॥ सत्यायाइति ॥ सत्यत्वविशेषितार्थक्रियायाःहेतुविशेषणत्वइ
त्यर्थः । यथाश्रुतेअसिद्ध्याद्यभावादितिबोध्यं ॥ पक्षेसपक्षेचेति ॥ पक्षेऽसिद्ध्यपक्षधर्मतायाःसपक्षेऽसिद्ध्याव्याप्तेरयोगादि
त्यर्थः ॥ असत्यायाश्चेति ॥ अर्थक्रियामात्रस्यहेतुविशेषणत्वइत्यर्थः । नन्वैंद्रजालिकादेरसत्त्वात्कथंस्वमतेतस्यार्थक्रियाका
रित्वमितिचेन्न । तस्याप्यविद्यमानापरपर्यायमिथ्याभूतार्थक्रियाहेतुत्वात् । अतएवब्रह्माणीत्याद्यग्रिमग्रंथविरोधोपिनेतिध्येयं

॥ [१४५१६] संप्रकारकेति ॥ ऐंद्रजालिकार्थक्रियातुसप्रकारेणेदानींतनबाधेनबाध्येतिनतत्रव्यभिचारइत्यर्थः । ननुसप्रकारकजाग्रद्बो धाबाध्यस्वप्नजलावगाहनप्रियासंगमादिविशेषिताप्रमाणीभूतज्ञानस्यार्थक्रियाकारित्वदर्शनेनतद्विषयेतत्रव्यभिचारः । अथतं अज्ञानमेवसुखादिजनकं तच्चाबाध्यमेवेतिमतं । तदसत् । ज्ञानमात्रस्यहितादृशसुखाजनकत्वेनकिंचिद्विशेषितस्यैवतथात्वं वाच्यं । ज्ञानेचविशेषोनार्थातिरिक्तः । तदुक्तं ॥ "अर्थेनैवविशेषोहिनिराकारतयाधिया"मिति । अर्थेनेत्यर्थएवेत्यर्थः । तथा चमिथ्याभूतविशेषितस्यजनकत्वाभ्युपगमेमिथ्याभूतस्यापिजनकत्वाद्व्यभिचारएवेतिशंकांपरिहरति ॥ [१४५१६] व्यभिचारस्त्विति ॥ सि० "अत्रब्रूमः । विषयविशेषोपलक्षितज्ञानस्यैवजनकत्वमस्तु । तत्कुतोविषयस्यजनकत्वं । तथाचोक्तंशास्त्रदीपिकायांबौ द्धंप्रति । "अथसुखज्ञानमेवार्थक्रिया । तच्चाव्यभिचार्येव । नहिक्वचिदप्यसतिसुखेसुखज्ञानमस्ती"त्याशंक्य सत्यमेतत् ननु तेनपूर्वज्ञानप्रामाण्याध्यवसायनंयुक्तं । अप्रमाणेनापिप्रियासंगमविज्ञानेनस्वप्नावस्थायांसुखदर्शना"दिति । ननुस्वरूपाणाम ननुगततयाज्ञानत्वादेश्चातिप्रसक्ततयाऽनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकाभावादुपलक्षणत्वासंभवइतिचेन्न । विशेषणत्वम प्यसंभवि अनागतादिज्ञानेतत्कालाविद्यमानस्यविषयस्यपूर्वभावित्वरूपजनकत्वासंभवात् । ननुस्वव्यापारजन्येव्यापारिणो सतोजनकत्ववत्स्वज्ञानजन्येप्यसतोजनकत्वमस्त्वितिचेन्न ॥ व्यापारद्वाराव्यापारिणोजनकत्वमित्यस्यकार्यजनकव्यापारजन कत्वमित्यर्थः । भवतिचयागादितथा । तस्यापूर्वोत्पत्तिकालेसत्त्वात् । मिथ्याभूतंतुस्वकालेपिसद्विलक्षणस्वभावंकथंस्वज्ञानं व्यापारंजनयेत् । असद्वैलक्षण्यापेक्षयालाघवेनसत्त्वस्यैवकारणत्वेप्रयोजकत्वात् । स्वज्ञानाजनकस्यापिमिथ्यार्थस्यस्वज्ञानज

न्यकार्यंप्रतिस्वज्ञानस्यजनकत्वमात्रेणमिथ्यार्थस्यापिजनकत्वाभिधानंत्वमानकं । नन्वतीतानागतावस्थस्यापिसद्धर्माश्रयत्वम भ्युपगम्यतएव । अन्यथाध्वंसप्रागभावप्रतियोगित्वतज्ज्ञानविषयत्वादीनामनाश्रयत्वापत्तेः । प्रमाणबलात्कारणत्वाभ्युपग मस्यापितुल्यत्वादितिचेन्मैवं । विद्यमानप्रागभावप्रतियोगित्वादीनामनाश्रितत्वासंभवादविद्यमानाश्रयत्ववत्कारणत्वस्यपूर्व वृत्तित्वरूपस्यासत्यसंभवाद्विद्यमानाश्रितत्वं । नहिविद्यमानत्वमविद्यमानेस्ति । व्याघातादितिसर्वंमनोरमं । नन्वर्थोपलक्षित ज्ञानस्यार्थक्रियाकारित्वमितिपक्षेप्युक्तहेतोःस्वाप्नगजादिज्ञानएवव्यभिचारः । स्वरूपाबाध्यस्यविषयाबाध्यत्वदर्शनेनविषयबा धेस्वरूपबाधस्यावश्यकतयास्वाप्नादिज्ञानंसदेवेत्यस्यवक्तुमशक्यत्वादितिचेन्न । असत्यपिगजेगजज्ञानमासीदितितज्ज्ञानस्यजा ग्रत्यप्यनुभवेनविषयासत्त्वेपिसत्त्वात् । स्वरूपाबाध्यसाक्षिविषयस्यापिरूप्यस्यबाध्यत्वदर्शनाच्चेति । ननुशुद्धस्यार्थक्रियाकारि त्वाभावात्साधनविकलत्वं । उपहितस्यपक्षनिक्षेपात्साध्यविकलत्वमित्यतआह ॥ [१५।०।१] सत्यस्येति ॥ आश्रयत्वविषयत्वादिनाऽज्ञा नादिसिद्धिरूपार्थक्रियाकारित्वंशुद्धात्मनिदृष्टांतेवर्तते । तदुक्तंसंक्षेपशारीरके । "आश्रयत्वविषयत्वभागिनीनिर्विशेषचितिरे वकेवले"ति । शुद्धस्यजगद्धेतुत्वेनाप्यर्थक्रियाकारित्वात् । अतएवानुपदंवक्ष्यति । ब्रह्मणिहेतुत्वंप्रतीत्यादि । अन्यथातद्वा क्यस्यासंगतत्वापातइत्यर्थः । एतेनममतेअविद्योपहितस्यसाक्षिणोमिथ्यात्वात्साधनवत्यपिसाक्षिणिसाध्यवैकल्यंसाध्यवति शुद्धात्मनिसाधनवैकल्यमितिनिरस्तं । साक्षिशब्देनविश्वसाक्षिणःशुद्धात्मनउपादानात् । तस्यचार्थक्रियाकारित्वोक्तेश्चतुष्यतु दुर्जनइतिन्यायेनोक्तार्थक्रियातिरिक्तार्थक्रियामभिप्रेत्याह ॥ [१५।०।३] असद्वेति ॥ वाशब्दोनास्थायां । ननुसाध्ययुक्तादात्मनःसप

क्षाद्धेतुव्यावृत्तावसाधारण्यंदोषःस्यादित्यतआह ॥ असाधारण्यस्येति ॥ अगृह्यमाणेति ॥ साध्यतदभावानुमित्यनुकूलव्यतिरेकव्याप्तिद्वयवत्तयावाताद‍ृशव्याप्तिग्रहहेतुव्यतिरेकसहचारवत्तयावाज्ञायमानत्वेसतिपक्षधर्मतयाज्ञायमानत्वेनसाध्यतदभावौप्रतिहेतोरगृह्यमाणविशेषावस्थायामसाधारण्यंदोषइत्यर्थः । प्रकृतेतुनागृह्यमाणविशेषावस्था । विपक्षेबाधकतर्केणस्थापनासाध्यंप्रतिहेतोर्व्याप्यत्वग्रहादित्याह ॥ विपक्षेइति ॥ ब्रह्मणिसप्रकाराबाध्यजगद्धेतुत्वंप्रतिपरमार्थसत्त्वस्यप्रयोजकत्वेनावधारणात् । प्रपंचेतदभावेऽकारणकार्योत्पत्तिरूपविपक्षबाधकतर्केणहेतोर्व्याप्यत्वग्रहान्नासाधारण्यं नवाऽप्रयोजकत्वमित्यर्थः ॥ ननुतथाप्युक्तंहेतुरयुक्तः । अनादित्वस्यविषमव्याप्तस्योपाधित्वात् । नचोक्तविपक्षबाधकतर्केणहेतोःसाध्यव्याप्यतया तदव्यापकतयोपाधेःसाध्याव्यापकत्वमितिवाच्यं । प्रातिभासिकरज्जुसर्पादौभयकंपादिकार्यकारित्वदर्शनेनप्रातिभासिकसाधारण्यस्यतुच्छव्यावृत्तस्यप्रतीतिकालसत्त्वस्यैवार्थक्रियाकारित्वंप्रतिप्रयोजकत्वात् । प्रातिभासिकस्यार्थक्रियाकारित्वानभ्युपगमेसप्रकारकाबाध्येतिहेतुविशेषणवैयर्थ्यापत्तेः । कस्मिन्नपिदेशेकस्मिन्नपिकालेकेनापिपुरुषेणाबाध्यत्वंहिपरमार्थसत्त्वं । तदपेक्षयाप्रतीतिकालसत्त्वस्यलघुत्वादितिचेन्मैवं । स्वरूपेणैवप्रपंचस्यनिषेधइतित्वयाव्यवस्थापितत्वेनसत्त्वेनप्रतीयमानत्वातिरिक्तंस्यप्रातिभासिकसत्त्वस्यतवमतेऽभावेनतस्यहेतुत्वंप्रत्यप्रयोजकत्वात् । अन्यथाशशविषाणमस्तीतिशब्दाभासात्सत्त्वेनप्रतीयमानस्यनिरुपाख्यस्यापिहेतुतापत्तेः । यथाचशशविषाणमस्तीत्यादिनानाभासस्यासतःप्रतीतिस्तथोक्तंपुरस्तात् । यथाचहेतौनविशेषणवैयर्थ्यंतथातत्रैवावोचामननुघटेघटत्वस्येवमिथ्याभूतेप्रपंचेमिथ्यात्वस्यपरमतेसत्वान्नतत्रतदारोपितं । अतोहेत्व

सिद्धिरित्याशंकांपरिहरति ॥ नचपंचम[१५०।१४]इति ॥ आरोपितत्वा[१५०।१४]दिति ॥ नन्वारोपितत्वंप्रातिभासिकत्वंचेत्प्रपंचेहेत्वसिद्धिः । तत्सिद्धेःपारमार्थिकत्वसिद्ध्युत्तरकालीनत्वात् । व्यावहारिकत्वंचेच्छुक्तिरूप्यादौव्यभिचारः । उभयसाधारण्येप्ययमेवदोषइतिचेन्नैवं । मिथ्यात्वेनोभयसंमतत्वस्यारोपितत्वस्यहेत्वंतर्गतत्वात् । अस्तिचब्रह्मजगतोस्तादृशंमिथ्यात्वं । अतोनासिद्ध्यादि । रूप्येचतादृशमिथ्यात्वाभावान्नव्यभिचारइति । नन्वसतिसदसद्वैलक्षण्यादिरूपमिथ्यात्वस्याभावेनारोपितमेव तत्रतदित्यत आह ॥ [१५०।१४]अत्रचेति ॥ ननुप्रपंचस्यकल्पितत्ववादेकश्चित्कल्पकोस्त्येवेतिहेतोरसिद्धिरितिशंकांपरिहरति ॥ [१५०।१५]नचषष्ठइति ॥ [१५१।१]चिन्मात्रस्येति ॥ कल्पनोपयोगिदेहाद्यध्यासाभावादित्यर्थः ॥ [१५१।१]अन्यस्यचेति ॥ चिन्मात्रस्याकल्पकतयाकल्पितांतरेणैवकल्पितस्यकल्पनावाच्येत्यनवस्थापत्त्यायावद्विशेषबाधेसामान्याभावसिद्धेरित्यर्थः ॥ [१५१।१]अत्रचेति ॥ ननुनासतिव्यभिचारः । सिद्धांतेतस्यापिभ्रांतिविषयत्वेनशुक्तिरूप्यवत्कल्पकोपेतत्वादितिचेत् न । स्वप्रत्यासन्नकल्पकरहितत्वादित्यर्थात् । असतोप्रत्यासन्नत्वात् । कल्पकशब्दस्यपित्रादिशब्दवत्संबंधिविशेषपरतयातद्राहित्यंपक्षेस्वमतेप्यस्तीतिभावः । ननुशुद्धस्याप्यन्तद्यविद्योपधानवशेनकल्पकत्वमस्तु । कल्पकत्वंहिकल्पनांप्रत्याश्रयत्वंविषयत्वंसाधकत्वंवा । तच्चसर्वकल्पनासमसत्ताकत्वेनशुद्धत्वाव्याघातकं । तदुक्तं । "आश्रयत्वविषयत्वभागिनी"ति । अस्तुवोपहितस्यकल्पकत्वं । नचानवस्था । अविद्याद्यध्यासस्याध्यासांतरानपेक्षत्वात् । स्वपरसाधारणसर्वनिर्वाहकतोपपत्तेः । अकल्पितस्यकल्पकत्वादर्शनात् । कल्पितप्रतिबिंबविशिष्टादर्शादेरादर्शांतरेप्रतिबिंबकल्पकत्वदर्शनाच्च । बिंबस्यद्वितीयादर्शसंमुखत्वाभावेनतत्कल्पकत्वायोगादिति । मैवं । कल्पि

तेनापिसंसारेणास्पृष्टस्यचैतन्यस्याभावेनित्यमुक्तश्रुतेर्निर्विषयत्वापत्तेर्वक्ष्यमाणत्वात् । अतात्विकसंसारास्पृष्टत्वस्यसर्वसाधारणत्वात् । नापिशुद्धस्यकल्पनांप्रत्याश्रयत्वादिकं । अस्यास्मिन्कल्पनेतिकल्पनायाद्वयसापेक्षत्वात्कल्पकस्यान्यस्यसंभवेतत्कल्पनांप्रतिशुद्धस्याश्रयत्वादिकंसंभवेत् । शुद्धस्यकल्पनांप्रतिकर्तृत्वंतुनसंभवति । देहेंद्रियाद्यभावादित्युक्तत्वात् । नाप्युपहितस्यकल्पकत्वेअनवस्थाद्यभावः । अविद्याध्यासस्यस्वपरनिर्वाहकत्वकल्पनायानिर्बीजत्वात् । प्रपंचस्यसत्यत्वेनैवोपपत्तेश्च । आदर्शांतरेप्रतिबिंबस्याकल्पितत्वस्यवक्ष्यमाणत्वाच्चेति साधूक्तंकल्पकंविनाकल्पनायोगादिति ॥ तस्येति ॥ तथाचरूप्येहेतुसत्त्वेसाध्यस्यापिसत्त्वापांतान्नव्यभिचारइतिभावः । ननुनरूप्येसाध्यस्यसत्त्वस्यापातः । तथात्वेहिसर्वजनसिद्धबाधविरोधात् । गजादौगोवैलक्षण्येपितद्विरुद्धाश्ववैलक्षण्ययोगवत्सद्वैलक्षण्येप्यसद्वैलक्षण्ययोगोपपत्तिरितिचेत् । मैवं । रूप्येबाधोपपत्त्यर्थमसत्वस्यैवांगीकर्तुमुचितत्वात् । नचतथात्वेप्रतीत्यनुपपत्तिः । प्रतीत्युपपत्त्यर्थंसत्त्वस्याप्यंगीकरणीयत्वात् । निषेधसमुच्चयवद्विधिसमुच्चयस्याप्यनिर्वचनीयवादेऽविरोधोपपत्तेः । सत्त्वासत्त्वयोःपरस्परात्यंताभावरूपत्वस्यमिथ्यात्वनिरुक्तिभंगेउक्तत्वेनगजादौगोत्वतदभाववैलक्षण्यवत्सामानाधिकरण्यानुपपत्तेश्चेति ॥ तस्मिन्नपरोक्षेपीति ॥ ननुसामान्याकारेणापरोक्षेपिशुक्त्यादौरजतादेरनिषेध्यत्वेनसाक्षाद्भासमानतयातत्रव्यभिचारः । अथव्यावृत्ताकारेणयस्मिन्भासमानेयदनिषेध्यत्वेनसाक्षाद्भासतेनतत्तदज्ञानकार्यादीतिव्याप्तिरितिमन्यसे तदाऽसिद्धिः । नहिचैतन्यमिदानींभ्रमनिवर्तकत्वाभिमतव्यावृत्ताकारापरोक्षप्रतीतिविषयः । तथासत्यधिष्ठानमेवनस्यात् । यदातुवेदांतवाक्यजन्यवृत्तौव्यावृत्ताकारतयापरोक्षंतदाअनिषेध्यत्वेनप्र

पंचापरोक्ष्यंक्वापिनास्ति । अतःप्रमाणजन्यासाधारणाकारज्ञानस्यैवाज्ञानविरोधित्वान्नापरोक्षज्ञानमात्रेणाज्ञानपराहतिप्रसंग
इति ॥ अत्रोच्यते ॥ भ्रमनिवर्तकाभिमताधिष्ठानापरोक्षज्ञानान्यूनविषयकाधिष्ठानापरोक्षज्ञानस्यात्रापरोक्षपदेनविवक्षित
त्वात् । तवमतेचचैतन्यमात्रस्यैवभ्रमनिवर्तकज्ञानविषयत्वात् । तावन्मात्रस्यचेदानीमपिस्फुरणात् । व्यावृत्तासाधारणाका
रस्यस्वरूपातिरिक्तस्यवेदांतजन्यवृत्तावपिनविषयता । निष्प्रकारकत्वहान्यापत्तेरिति । यत्तुअज्ञानपदेनज्ञानाभावोक्तौसिद्ध
साधनं । अनिर्वचनीयाज्ञानोक्तौचतस्यखपुष्पायमाणत्वेनप्रतियोगित्वासिद्धिरिति । तदसत् । पराभ्युपगममात्रेणैवप्रतियो
गिप्रसिद्धिसंभवात् । तदुक्तंमतद्वयेप्यप्रामाणिकस्यापिनिषेधप्रतियोगित्वादिति ॥ शंखतत्त्वेति ॥ श्वैत्येत्यर्थः । ननुप्रतिबिंबे
व्यभिचारः । सहिमुखैक्यसाक्षात्कारवत्प्रवृत्तिविषयेमुखेऽध्यस्तइतिचेन्न । नहिमुखैक्यसाक्षात्कारवतःप्रवृत्तिविषयःप्रति
बिंबः । किंतुतद्भेदज्ञानवतएव । अतएवबालानांतत्रबालांतरधीः । नचतद्व्यतिरेकेणोपलभ्यमानत्वमुपाधिः । व्यतिरेकेणेत्य
स्यभेदेनेतियदि तदोपाधेर्नपक्षाद्व्यावृत्तिः । शुद्धंब्रह्मनजानामिघटस्यस्फुरणमित्यादिभेदेनैवप्रपंचोपलंभात् । अथविनेत्यर्थ
स्तदारूपादिहीनेनाऽऽसंसारमज्ञानावृतेनचैतन्येनविनापिचाक्षुषादिज्ञानेघटादेरुपलभ्यमानत्वेनोपाधेर्नपक्षाद्व्यावृत्तिरिति ॥
तंप्रतीति ॥ नन्वैंद्रजालिकंप्रत्यपरोक्षेतन्मायाकल्पितेव्यभिचारइतिचेन्न । मायाविनंप्रतिमायिकस्यापरोक्षत्वाभावात् । त
दुक्तं । "नचमायाविनामायादृश्यत" इति ॥ नचमायाऽविद्ययोरभेदाद्देहात्मैक्येव्यभिचारइतिवाच्यं । तयोर्भेदपक्षेअस्यो
क्तत्वात् । अतएवनरूप्येपिव्यभिचारः ॥ प्रत्यभिज्ञानादिति ॥ नचसुषुप्तिकालस्थायित्वासाधकत्वस्यप्रत्यभिज्ञायाःदृष्टिस्

ष्टिसमर्थनेवक्ष्यमाणत्वादसिद्धिरितिवाच्यं । तत्रैवनिरसिष्यमाणत्वात् ॥ अदृष्टादेरिति ॥ नचादृष्टादेःकारणात्मनावस्थानात्पुनरुत्थानसंभवइतिवाच्यं । तस्याप्यदृष्टसमानयोगक्षेमत्वात् ॥ मिथ्यामात्रेति ॥ प्रतियोगित्वादौव्यभिचारवारणायमात्रेति । नचमिथ्यात्वन्यूनवृत्तित्वमुपाधिः । प्रमेयत्वादौसाध्याव्यापकत्वात् । तस्यात्मान्यसर्वांतःपातिन्यसतिवृत्त्यभावेनसाध्यवतोमिथ्यात्वन्यूनवृत्तित्वाभावात् । ननुपक्षीकृतंमिथ्यात्वंसदसद्विलक्षणत्वंवासद्विलक्षणत्वमात्रंवा । आद्येसिद्धसाधनं । तस्यात्मान्यसर्वमध्यपतितासद्वृत्तित्वाभावात् । द्वितीयेतुहेतौमिथ्यापदस्यसदसद्वैलक्षण्यमात्रपरत्वेसंदिग्धानैकांतिकता । साध्याभाववत्यात्मभेदेहेतुसंदेहादप्रयोजकत्वाच्चेति । सि० "अत्रब्रूमः । आद्यपक्षेदोषाभावः । साध्यगतसर्वशब्दस्यसर्वनामतयासद्विलक्षणसर्वपरत्वात् । अनुकूलतर्कस्योक्तत्वान्नाप्रयोजकत्वादिकमिति ॥ परमार्थसदन्यइति ॥ परमार्थसतःसकाशादन्यइत्यर्थः । भेदस्यबाधेनपक्षधर्मताबलात्स्वेतरपरमार्थसद्भेदसिद्धिः । नचकल्पितेनात्मप्रतियोगिकभेदेनार्थांतरं ॥ कल्पिताकल्पितयोरेकसामान्याभावेनतेनसमंव्याप्तेरग्रहात् । अन्यथामिथ्यात्वानुमानेपिकल्पितमिथ्यात्वमादायार्थांतरंस्यात् सिद्धसाधनंवा । नचव्यावहारिकपदार्थमादायसिद्धसाधनेऽतिप्रसंगाभावइतिवाच्यं । आत्मनिस्वप्रतियोगिकस्यव्यावहारिकभेदस्यतवमतेंप्यभावात् । आत्मान्यस्यपरमार्थसतोभावात् । परमार्थसदंतराभावेनसाध्यसिद्ध्यभावापत्तेः । नचानानंदत्वमुपाधिः । परमार्थसदन्यत्वाभावंविनाआनंदत्वस्योपाध्यभावस्यव्याघाताद्यभावेनोपाधेरप्रयोजकत्वात् ॥ भावान्यइति ॥ अभावस्यद्वितीयस्यपरमार्थत्वपक्षेसिद्धसाधनतावारणायभावेति । एवमग्रेपि ॥ यावत्स्वेति ॥ ननुयावत्स्वरूपमित्यत्रस्वशब्दस्ययत्किं

॥११२॥

चित्स्वरूपपरत्वेसिद्धसाधनं । आत्मस्वरूपपरत्वेसाध्याप्रसिद्धिः । नहियावदात्मस्वरूपमनुवर्तमानोनात्माप्रसिद्धोस्ति । तथा सत्यनुमानवैयर्थ्यादितिचेन्मैवं । स्वशब्दस्यसमभिव्याहृतपरत्वाद्व्याप्तिग्रहदशायांदृष्टांतस्वरूपपरत्वं । पक्षधर्मताग्रहदशायां चात्मस्वरूपपरत्वमेवेति नसाध्याप्रसिद्धिर्नवासिद्धसाधनमिति । नचानुमानेशब्दस्वभावोपन्यासानुपयोगइतिवाच्यं । आत्मायावत्स्वस्वरूपमनुवर्तमानेतिवाक्येयतोविशेषादाकांक्षोत्थापनेसतिस्वपदेनआत्मस्वरूपमेवबोध्यतेनत्वन्यत् । सचविशेषः पक्षधर्मतायाःविशेषसाधनसामर्थ्येउपयुज्यतएव । यदेवहिविशेषबोधनेप्रतिज्ञायामाकांक्षाविशेषोत्थापकतयासहकारितदेवत त्रानुमानेपक्षधर्मतायांतथा । अतएवप्रतिज्ञायामाकांक्षालभ्योर्थःपक्षधर्मताविषयइत्युच्यतइतिनंकश्चिद्दोषः । अविद्यानुमाने स्वप्रागभावव्यतिरिक्तस्वविषयावरणेत्यादिबहुस्वशब्दकसाध्यस्यत्वदीयैर्विवरणेप्युक्तत्वात् ॥ स्वप्रतियोगीति ॥ स्वशब्द निर्दिष्टायाःबंधनिवृत्तेःप्रतियोगीबंधस्तस्यविषयआत्मातद्विषयकंयज्ज्ञानंआत्मतत्वसाक्षात्कारः तेनाबाध्योयोनात्मातेनसहवर्त तइत्यर्थः ॥ निगडेति ॥ चोरादिविषयज्ञानाबाध्यानात्मसमानकालीनानिगडबंधनिवृत्तिर्भवतीत्यर्थः । ननुपक्षदृष्टांतयोर्बं धपदार्थस्यैकस्याभावेनस्वरूपासिद्धिसाधनवैकल्यान्यतरापातइतिचेन्मैवं । नहिनिगडादावपिबंधशब्दप्रयोगेणतन्निमित्तस्या विद्यायामिवतत्रापिवाच्यत्वात् । अप्रकाशितार्थप्रकाशकत्वादित्यविद्यानुमानेत्वदीयैरपिज्ञानप्रभयोःप्रकाशत्वस्योक्तेश्च । हे तौचबंधपदंनिवृत्तिविशेषलाभाय । अतोखंडाभावतुल्यतयानवैयर्थ्यं । अविवक्षितार्थोवा । नन्वप्रयोजकमिदंकस्याश्चिन्नि वृत्तेरनात्मसमानकालीनत्वदर्शनंनिवृत्तिमात्रस्यतथात्वसाधनेसंसारकालीनायादुःखनिवृत्तेः समानाधिकरणदुःखप्रागभावस

मानकालीनदर्शनमिवदुःखनिवृत्तिमात्रस्यतथात्वसाधनइतिचेत् मैवं । निवृत्तेः स्वकारणानात्मसहभावंविनातज्जन्यत्वासिद्धेरित्यादितर्कानुगृहीतत्वात् । उक्तनिवृत्तेस्तुनानुग्राहकस्तर्कोस्तीतिविशेषात् ॥ [१५३।६] नस्वविषयेति ॥ क्षणिकत्वादिरूपेणात्मधियोक्षणिकत्वादिधीबाध्यत्वात् बाधवारणायंस्वविषयेतिविशेषणं । यत्तुधीपदेनचैतन्यमात्रविवक्षायांसिद्धसाधनमिति तदसत् । चैतन्यमात्रस्यात्मधीत्वासंभवेनतच्छंकायाएवानुदयात् ॥ [१५३।६] धीत्वादिति ॥ ननुअंधोयंरूपज्ञानवानिति अंधकस्यरूपविषयतयाकल्पितंयज्ज्ञानंतस्यरूपंनांधगम्यमितिस्वविषयविषयकप्रत्ययबाध्यत्वदर्शनेनव्यभिचारः । कल्पितत्वात्तत्रतद्बाधनेप्रकृतेपिवृत्तेःकल्पितत्वंसमंमितिंचेन्मैवं । रूपविषयतयाकल्पितस्यज्ञानस्यरूपंनांधगम्यमितिज्ञानेनसमानविषयत्वाभावात् ॥ [१५३।६] आत्माधिष्ठानकेति ॥ एतच्चशुक्त्यधिष्ठानकभ्रमहेतुचाकचक्यादेःपक्षत्वेसिद्धसाधनवारणाय ॥ [१५३।८] नस्वकार्येति ॥ शुक्तिकायांरूप्यभ्रमहेतोश्चाकचक्यस्यघटादौबाध्यत्वदर्शनाद्व्यभिचारवारणायसाध्येस्वकार्येतिविशेषणं ॥ [१५३।८] शुक्त्यज्ञानमपीति ॥ तथाचतत्रव्यभिचारोनदोषइत्यर्थः । ननुदूरादिदोषेणोपलादौयत्रचाकचक्यकल्पनातेनचाकचक्यदोषेणशुक्ताविवरजतकल्पनातत्राधिष्ठानज्ञानेनचाकचक्यरूप्ययोरुभयोरपिबाधदर्शनाद्व्यभिचारइतिचेन्मैवं । आरोपितस्यसद्विलक्षणत्वेनाहेतुत्वात् । सत्यपिचाकचक्यादौतज्ज्ञानंविनाऽऽरोपादर्शनेनतज्ज्ञानस्यैवहेतुत्वात् । तत्रसाध्यस्यापिसत्त्वात् । नचव्यावृत्ताकाराधिष्ठानज्ञानान्याबाध्यत्वंवास्वकार्यभ्रमाधिष्ठानानारोपितत्वंवोपाधिरितिवाच्यं । व्यावृत्ताकारेत्यस्यपक्षमात्रव्यावर्तकत्वेनाद्यस्योपाधेःपक्षेतरत्वात् । द्वितीयेसाधनव्यापकत्वं । तत्रारोपितस्यतदधिष्ठानभ्रमाहेतुत्वेनसाधनाव्याप्तिसंदेहस्याप्यभावात् । अप्रयोजक

त्वाच्च ॥ [१५३।८] ब्रह्मान्यदनादीति ॥ अत्रपक्षेहेतौचानादिपदमनादिभावपरं । अतएवध्वंसाप्रतियोगित्वंनोपाधिः । पक्षादव्या
वृत्तेः ॥ [१५४।२] कालाद्यसंबंधंनावतिष्ठतइति ॥ ननुकालसंबंधंविनानावतिष्ठतइत्यस्ययदाब्रह्मतदावश्यंकालसंबंधइत्येवंरूपाव्या
प्तिरित्यर्थः । तथाचसिद्धसाधनं । नहियस्मिन्कालेब्रह्मतस्मिन्कालेब्रह्मणःकालसंबंधोनास्ति । एवंयत्रात्मातत्रकालसंबंधइति
दैशिकव्याप्तावपिसिद्धसाधनं । नहिदेशःकालासंबद्धःकदाप्यस्ति । परममुक्तौतुनदेशोनवाकालइतिचेन्मैवं । कालासंसृष्टस
त्ताराहित्यस्यसाध्यार्थत्वेसिद्धसाधनानवकाशात् । नहिपरमतेमुक्तौब्रह्मणःसत्तायाःकालसंसर्गोस्ति ॥ [१५४।३] वेदैकगम्यमिति ॥
नचपारमार्थिकत्वेनश्रुतितात्पर्यविषयत्वमुपाधिः । ईश्वरानुमानेशरीरजन्यत्वादिवत्साधनविशेषितत्वात् । धर्मादावपरमार्थ
त्वेनश्रुतितात्पर्याविषयेपरमार्थत्वेनैवश्रुतितात्पर्यविषयत्वस्यवाच्यतयोपाधेःपक्षादव्यावृत्तेश्च । अप्रयोजकत्वाच्च ॥ [१५४।३] दोषाज
न्येति ॥ शुक्तिरूप्यादीनांदोषजन्यज्ञानविषयाणामपिदोषाजन्यसाक्षिरूपज्ञानंप्रत्यविषयत्वान्नतेषुव्यभिचारः । नचपक्षेहेत्व
सिद्धिः साक्ष्यवच्छेदकाविद्यावृत्तिरूपदोषस्योभयसिद्धत्वाभावेनविशिष्टाभावरूपहेतोःपक्षेसत्वाच्च । साक्षाद्विशेषणत्वेनेत्यपि
बोध्यं । तेनक्षणिकत्वादिप्रकारकदोषजन्यज्ञानंप्रतिविशेष्यत्वादात्मनिनसाधनवैकल्यंसाक्षात्पदेनसंसृष्टतयादेहात्मैक्यभ्रमेआ
त्मनोपिविशेषणतयाविषयत्वात्साधनवैकल्यंपरिहृतं । दोषेप्युभयसिद्धत्वंविवक्षितं । तेन अखंडाभावरूपतयाहेतौनविशेष
णस्यासिद्धिवारकतयावैयर्थ्यमितिबोध्यं । शुद्धस्यवृत्तिविषयत्वानभ्युपगमेपिनसाधनवैकल्यं । विशिष्टाभावस्यतत्रापिसत्त्वात् ।
एतेनात्मनोवृत्तिविषयत्वाभ्युपगमे विषयत्वमात्रस्यैवपरमार्थसत्त्वसाधकत्वोपपत्तौदोषेत्यादिविशेषणवैयर्थ्याद्व्याप्यत्वासिद्धिः ।

तावन्मात्रंचपक्षेस्वरूपासिद्धमितिनिरस्तं । विशिष्टोपाधौवैयर्थ्यशंकानुदयात् ॥ [१५.४।४] स्वविषयेति ॥ परीत्यारूप्यादौव्यभिचार वारणायस्वविषयकेत्यादिविशेषणं । नचदृष्टिसृष्टिपक्षेऽसिद्धिः । प्रतिकर्मव्यवस्थानुपपत्त्यातस्यत्वयाप्यभ्युपगमनीयत्वात् ॥ [१५.४।६] अन्योन्याभावातिरिक्तेति ॥ एतच्चाभावविशेषणं । एतद्घटसमानाधिकरणेएतद्घटप्रतियोगिकान्योन्याभावेएतद्घटसमानकालीनेएतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावत्वं वर्ततइतिबाधवारणाय । तंत्वादिनिष्ठैतद्घटप्रतियोगिकात्यंताभावेएतद्घटसमानकालीनेब्बाधवारणायैतद्घटसमानाधिकरणेतिविशेषणं । एतद्घटसमानाधिकरणेकपालरूपादौबाधवारणायएतद्घटप्रतियोगिकाभावत्वंविशेषणं । हेतौएतद्घटान्योन्याभावत्वेव्यभिचारवारणायआद्यंविशेषणं । तंत्वादिनिष्ठैतद्घटात्यंताभावेतद्वारणायद्वितीयं । तदर्थस्तुसंवंधविशेषेणएतद्घटःतत्समानाधिकरणेत्यर्थः । तेनसंयोगसंवंधेनघटवत्यपिभूतलेसमवायसंबंधेनघटात्यंताभावसत्वात्साध्याभाववतिघटात्यंताभावत्वेव्यभिचारइतिशंकापरिहृता । पक्षेप्येतद्घटसमानाधिकरणेत्यस्यैवमेवार्थः । तेनतत्रबाधशंकापरिहृता । एतद्घटसमानाधिकरणपटात्यंताभावत्वेव्यभिचारवारणायतृतीयविशेषणं । एतद्घटकपालसमवायेतद्वारणायाभावेति । प्रमेयत्वादौतद्वारणायमात्रेति । पटप्रागभावादौसाध्यसाधनवैकल्यपरिहाराय । एतद्घटेत्यादिदृष्टांतेविशेषणं ॥ [१५.६।१] अनेनचेति ॥ अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटसमानकालीनाभावस्यनिषेधेस्वसमानाधिकरणात्यंताभावप्रतियोगित्वरूपमिथ्यात्वाभावरूपसत्त्वसिद्धिरित्यर्थः । नचैतद्घटप्रतियोगिकजन्यजनकान्यतरवृत्तित्वमुपाधिः । एतद्घटपूर्वकालीनमात्रवृत्तितद्घटत्वादौसाध्याव्याप्तेः । नचसाधनावच्छिन्नसाध्यव्यापकत्वं । पक्षीकृतधर्म

स्यात्यंताभाववृत्तित्वसंदेहेसाधनाव्यापकत्वसंदेहात् । नचविपक्षवाधकतर्कानवतारदशायांतादृशोप्युपाधिरितिवाच्यं । तद भावात् । प्रत्युतस्थापनायामेवानुकूलतर्कोस्तीत्याह ॥ अत्रचेति ॥ संगृह्णाति ॥ तथाचेति ॥ ७ ॥ ७ ॥ व्यासाद्रिसृतत र्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यांविश्वसत्त्वानुमाइमाः ॥ विश्वमिथ्यात्वस्यानुमानबाधः ॥ १९ ॥ ७ ॥ ७ ॥ विश्वमिथ्यात्वस्यागमबाधमाह ॥ किंचेति ॥ विश्वंसत्यमित्यादि ॥ विश्वंसत्यं मघवानायुवोरिदापश्चनप्रमिनंतिव्रतंवां । अच्छेंद्राब्रह्मणस्पतीहविर्वोअन्नंयुजेववाजिनाजिगातंइतिमंत्रस्यायमर्थः । हेमघवंतौ धनवंतौ मखवंतावितिवा इंद्राब्रह्मण स्पती युवोःयुवयोः संबंधि विश्वंजगत् सत्यमित्सत्यमेव वांयुवयोः व्रतं सत्यजगत्सर्जनादि आपश्चनव्यापनशीलाः देवता अपि प्रमिनंतिजानंति । डुमिञ्प्रक्षेपणेक्र्यादिः नःअस्मदीयं हविर्दध्यादिकंप्रति अन्नंचपुरोडाशादिकंचप्रति अच्छजिगातं स म्यक्आगच्छतं । जिगातिः गतिकर्मा जौहोत्यादिकः । काविव वाजिनावन्नवंतौ युजेव सखायाविवेति । यस्तुविश्वंस र्वंसद्भावत्वाद्वाफलस्यावश्यकत्वाद्वासत्यंकर्मयुवोरित् युवाभ्यामेवोद्दिश्यक्रियते । वांयुवयोर्व्रतंजगत्संर्जनादि आपोदेवता अपि नहिंसंति । चनेत्येतत्पदद्वयं । अध्यापकप्रसिद्ध्यात्वेकंपदमित्याह । तन्न । सत्यशब्दस्यकर्मण्यप्रसिद्धेः अबाध्यएवप्र सिद्धेश्च । अन्यथासत्यंज्ञानमित्यादावपिसद्धेतुत्वादिस्तदर्थःस्यात् । पदगणनायामध्यापकेषुचैकपदत्वेनप्रसिद्धस्यभिन्नपदत्वे मानाभावात् । नुकंइत्यादिवत्चनशब्दस्याव्ययेषुंचनाभ्यांपृथक्पाठाच्च । ममच्चनत्वायुवतिःपरासममच्चनत्वाकुषवाजगा रेत्यादिषुचनशब्दस्यैकपदत्वेनैवमाधवीयेव्याख्यातत्वेनेहापितथात्वस्यैवोचितत्वात् । नेहनानास्तिकिंचनेत्यादिषुतदेकपदत्व

स्यस्वयमप्यंगीकृतत्वाच्च । शाक्मनाशाकोअरुणःसुपर्णः । आयोमहःशूरःसनादनीडः । यच्चिकेतसत्यमित्तन्नमोघंवसुस्पार्हमु
तजेतोतदाता । इतींद्रप्रतिपादकमंत्रस्यायमर्थः । शाक्मनाशक्मैवशाक्म । तेनशाक्मनाबलेन । शाकःशक्तः स्वशक्त्यैवसर्वं
कर्तुंशक्तइत्यर्थः । नहींद्रेसहायांतरापेक्षास्ति इंद्रत्वादेव । अरुणोऽरुणवर्णः सुपर्णःशोभनपतनः यःप्रसिद्धः । आअभिव्याप्तः
महःमहान्शूरः विक्रांतः सनात्पुराणः अनीडःनीडस्याकर्ता । नहींद्रोग्निवत्कुत्रचिदपियज्ञेनिकेतनंकरोति । स्पार्हस्पृहणीयं
वसुधनं जेताजयति शत्रुभ्यःसकाशात् उतअपि दाताददाति स्तोतृभ्यः । जेतादातेतितृन् ।' तेनन्नलोकेत्यादिनाषष्ठीनि
षेधः । एवंविधःइंद्रःयत्यस्मात् सत्यमित्सत्यमेव चिकेत तत्तस्मान्नमोघं नमिथ्या । कविर्मनीषीपरिभूःस्वयंभूर्याथातथ्यतो
र्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यइतिमंत्रस्यायमर्थः । कविः ज्ञानी । मनसांमनसावा ईष्टेइतिमनीषी । परिभावयतिसर्वा
नितिपरिभूःसर्वोत्तमः स्वयंभूःस्वरूपसामर्थ्यः । शाश्वतीभ्यःसमाभ्यःसर्वदा । याथातथ्यतःसत्यान् अर्थान् महदादीन् व्यद
धात् निर्मितवान् । नचयाथातथ्यतइत्यस्यपूर्वसृष्टप्रकारेणसर्जनमर्थइतिवाच्यं । यथार्थशब्दसमानार्थात्ततोऽबाध्यत्वरूपार्थ
स्यैवप्रतीतेः ॥ [१५६।५] असत्यमिति ॥ असत्यंब्रह्मण्यप्रतिष्ठितंजगत् येआहुः तेअसुराइत्यर्थः ॥ [१५६।६] नाभावइति ॥ अभावःसद्भिन्नंजग
न्नभवति उपलब्धेःसत्त्वेनोपलब्धेरित्यर्थः ॥ [१५६।५] वैधर्म्यादिति ॥ जगत्स्वप्नमरीचितोयतुल्यंनभवति । वैधर्म्यात्स्वप्नादिवैलक्ष
ण्यानुभवादित्यर्थः । स्वप्नशब्देनात्रस्वप्नगजादिगतंजाग्रत्त्वंगृह्यते । जगतःस्वप्नसाम्यस्यसिद्धांतेपीष्टत्वादितिविभावनीयं ॥
[१५६।७] त्वन्मतइति ॥ परमतेघटोनित्यःइत्यादिष्विवसन्घटइत्यत्रघटेसत्त्वंनविषयः । किंत्वधिष्ठानभूतसद्ब्रह्मानुवेधमात्रमित्यंगीका

राद्धटादिषुसत्यत्वस्यप्रत्यक्षतोप्राप्तेरितिभावः ॥ १५६।८ यच्चिकेतेत्यादीति ॥ यच्चिकेतेत्यत्रेश्वरकृतजगदनुवादेननसत्यत्वमात्रविधिः संभवति । जगतईश्वरकृतत्वस्यकेवलानुमानाद्यवेद्यतयामानांतराप्राप्तत्वेनानुवाद्यत्वायोगात् । किंतुसत्यकामादिवाक्यइव सत्यत्वविशिष्टजगत्स्रष्टृत्वमीश्वरस्योच्यते । विधानाभावाच्चनविशिष्टविधिशेषः । नचास्यस्तुतिपरतयानस्वार्थपरतेतिवाच्यं । मानांतराविरोधेसति आतेसिंचामिकुक्ष्योरित्यादेर्देवताविग्रहस्येवजगत्सत्यत्वस्याप्येतस्मात्सिद्धेः । उक्तंचैतद्वाचस्पत्येदेवताधिकरणे ॥ १५६।१ पृथिवीति ॥ घटादावितरभेदस्यप्रत्यक्षेण ब्राह्मणोनहंतव्यइत्यादिनाब्राह्मणादावेकदेशेहिंसाभावस्यसिद्धावपिपृथिवीमात्रेप्राणिमात्रेचतयोरसिद्ध्यायथानानुवादकत्वंतथेहापिकतिपयेषुघटादिषुप्रत्यक्षेणसत्त्वग्रहेपितदयोग्येषुश्रुत्यासत्यत्वबोधनान्नतस्याअनुवादकत्वमित्यर्थः । ननुदृष्टांतेहिपृथिवीत्वंहिंसात्वंचैकोनुगतोधर्मइतितदवच्छेदेनविधेयस्याप्राप्तत्वेनतत्रानुवादकत्वंयुक्तं । इहतुविश्वत्वंनामनैकोधर्मोस्ति । किंतुविश्वशब्दःसर्वनामत्वान्नतेनरूपेणघटपटादीनामुपस्थापकः । तेषुचप्रत्येकंसत्यत्वंगृहीतमेवेतिकथंनानुवादकता । प्रकारवैलक्षण्याभावादितिचेन्मैवं । सर्वनामपदेषुतदादिषुप्रकृतानांतत्तद्रूपेणोपस्थापकत्वेपिजगदादिशब्दसमानार्थकविश्वादिशब्दैःसर्ववृत्तिधर्मप्रकारेणसर्वोपस्थापकत्वस्यानुभवसिद्धत्वेनघटत्वादिप्रकारभिन्नप्रकारेणजगत्सत्यत्वस्यविश्वंसत्यमित्यादिनाबोधनात् । यच्चोक्तंहिंसात्वमेकोनुगतोधर्मइति तत्तुच्छं । नहि नहिंस्यादित्यहिंसात्वावच्छेदेनकिंचिद्विधीयते । किंतुभूतेषुहिंसाभावः । तथाचकिंहिंसात्वस्यानुगमकथनेनेतिभावः ॥ १५७।३ अतिप्रसंगादिति ॥

सिद्धमनूद्यासिद्धं विदधदपिदध्नाजुहोतीत्याद्यनुवादवाक्यमापद्येतेत्यर्थः ॥ [१५७।१] एकशाखास्थेति ॥ तत्तच्छाखागतवाक्यानांतत्तच्छाखाध्येतृन्प्रत्यर्थवत्त्वं । अन्यथाअनन्यार्थपुनःश्रुतिरूपादभ्यासाच्छाखांतरेकर्मभेदःस्यादित्यर्थः । उक्तंचद्वितीयस्यचतुर्थपादेनामरूपधर्मविशेषपुनरुक्तिनिंदाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखांतरेकर्मभेदःस्यात् । नानाशाखाम्नाताग्निहोत्रादि भिन्नंनवेतिसंशयेअनन्यार्थपुनःश्रुतिरूपादभ्यासाद्भिद्यतइतिप्राप्ते पुनःश्रुत्याहिकर्मविधेयमित्येवतावत्सिध्यति । नतुभेदः । विधिवशात्तुभेदसिद्धिरन्यत्रविहितस्यविधानायोगादिति । इहतुशाखाभेदानामध्येतृभेदनियतत्वेनविहितस्यापिपुरुषांतरंप्रतिविधिःसंभवतीत्यन्यथासिद्धापुनरुक्तिर्नकर्मभिनत्तीति । नामरूपाद्युदाहरणानिवार्तिकादिषुद्रष्टव्यानि ॥ [१५७।२] येनपुंसेति ॥ प्रतिपत्तृव्यवस्थयाऽनधिगतार्थबोधकत्वस्येहापिसत्त्वादित्यर्थः । नचपुरोवादपूर्वकत्वादनुवादस्यात्रायंपुरोवादइत्यस्यैवाभावान्नशाखांतरस्थवाक्यस्यानुवादकत्वप्रसंगइतिवाच्यं । "भूयस्त्वेनोभयश्रुती"तिन्यायेनकर्मस्वरूपनिश्चयवद्भेदद्रष्टृप्रथमव्यक्त्यपेक्षयापुरोवादस्यापिनिश्चयात् । सादिप्रत्यक्षस्यानादिवेदात्पुरोवादकत्वासंभवाच्च । तस्मात्प्रतिपत्तृव्यवस्थयैवानुवादकत्वंवाच्यमितिभावः ॥ [१५७।२] ननिर्णीतेति ॥ एतच्चविशेषादर्शनकालीनसंशयस्यप्रतिबंधकतयातत्सामग्र्याअपितथात्वमित्यभिप्रेत्योक्तं । नन्वेवमनुवादःक्वापिनसिध्येदित्यतआह ॥ [१५७।३] अनुवादकत्वंत्विति ॥ नचसर्वाविवादएकत्रासंभवीतिवाच्यं । अग्निर्हिमस्यभेषजं अस्यामोषधयोजायंते अग्निरेनांस्वदयतीत्यादिषुसर्वाविवादस्यसिद्धत्वात् ॥ [१५७।५] वादिविप्रतिपत्तीति ॥ ननु

तत्रवादिविप्रतिपत्तिदर्शनेनदेहव्यतिरिक्तात्मनःप्रत्यक्षतैवनास्ति । अन्यथाप्रत्यक्षप्रामाण्यवादिनश्चार्वाकादेस्तत्रविप्रतिपत्तिर्न स्यादित्युक्तंबृहदारण्यकभाष्ये । नतुवादिविप्रतिपत्तिनिरासेनास्तीत्यादेःसार्थकत्वमननुवादकत्वंवातत्रोक्तमितिचेत् मैवं । तद्वदेववादिविप्रतिपत्तिदर्शनाज्जगत्सत्यत्वमपिनप्रत्यक्षविषयः । अन्यथाप्रत्यक्षप्रामाण्यावादिनस्तवममेव(ममच)जगत्सत्यत्वेविप्रतिपत्तिर्नस्यादित्येवंपरत्वादस्यवाक्यस्यनकोपिदोषः । अतएवबृहदारण्यकभाष्यएवोक्तं तस्माज्जन्मांतरसंबंध्यात्मास्तित्वेजन्मांतरेष्विष्टाद्विष्टप्राप्तिपरिहाररूपविशेषोपायेचशास्त्रंप्रवर्ततइति ॥ द्वयोःप्रणयंतीति ॥ चातुर्मास्यानीतिकर्मनाम । तेषुवैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानिचत्वारिपर्वाणि । तत्रद्वयोःप्रणयंति तस्माद्द्वाभ्यामेतीतिश्रूयते । तस्यचद्वाभ्यामेतीतिवाक्यशेषात् "ऊरूवाएतौयज्ञस्ययद्वरुणप्रघासश्चसाकमेधश्चेति" गमनसाधनोरुसंस्तुतमध्यपर्वद्वयविषयत्वेनिश्चितेचातुर्मास्यानांदर्शपूर्णमासविकृतित्वेनप्रणयनस्यप्राप्ततयाप्रणयनपुनःश्रुतेर्वैयर्थ्यं । तथाहि । साकिंपरिसंख्यार्थावागुणार्थावाऽर्थवादार्थावा । नाद्यः । तथासतिद्वयोर्मध्यमपर्वणोरेवप्रणयनं नेतरयोर्द्वयोरिति तत्राहवनीयाभावाद्यागाभावःस्यात् । अथोच्येत । नप्रणयनमात्रंपरिसंख्येयं । किंतुधर्मपरिसंख्या । द्वयोरेवधर्मवत्प्रणयनंनेतरयोरिति । मैवं । नहिधर्मवद्दर्शपूर्णमासयोःप्रणयनं । येनधर्ममात्रपरिसंख्यायांकृतायांकेवलमधर्मकंप्रणयनमितरत्रापिक्रियते । तस्मान्नपरिसंख्यार्था । नद्वितीयः । यत्रहितस्मिन्नेववाक्येगुणिनमुच्चार्यकिंचिद्विधीयते ।ःयथादध्नाजुहोतिशरमयंबर्हिर्भवतीति । तत्रगुणविधिः । इहतुप्रणयनमुच्चार्यनकिंचिद्विधीयते । नतृतीयः । यत्रहिकस्यचिद्विधिस्तत्रार्थवादोभवति । विधिनात्वेकवाक्यत्वादित्युक्तं । प्रणयनंतुदर्श

त्यां० १२९

पूर्णमासयोर्विधीयते । इहतुवाक्येतदविधानात्किमर्थवादेन । तस्मात्प्रणयनपुनःश्रुतिरनन्यार्थाभेदिकाभवतीतिदर्शपूर्णमास पूर्वकाद्गार्हपत्यावधिकाहवनीयप्रणयनादपूर्वमेवाहवनीयावधिकमुत्तराहवनीयप्रणयनंद्वयोःप्रणयंतीतिवाक्येनवोध्यते । तद्दु क्तंटुप्टीकायां तंत्ररत्नेचसप्तमाध्यायेतृतीयपादे । शाखांतरे अग्निप्रणयनोत्तरकालंआहवनीयात्द्वावध्वर्युप्रतिप्रस्थातारौ अग्नीप्रणयतइतिश्रूयते । तदेकवाक्यतयाद्वयोःप्रणयंतीत्यनेनाहवनीयात्प्रणयनंविधीयते । तेन चोदकप्राप्तंयद्गार्हपत्यप्रण यनंततोविलक्षणमिदं तदुत्तरकालमाहवनीयाद्विहारयोःप्रणयनंपशुवंधवदिति । अत्रकश्चिदग्निप्रणयनमबुद्ध्वातत्स्थानेंअपू प्रणयनमितिलिखति । समीमांसागंधवैधुर्यमात्मनोव्यानंजेत्युपेक्षणीयः ॥ श्रुतेरिति ॥ विश्वंसत्यमित्यादिकायाः ॥ तत्सत्य मित्यादीति ॥ तवमतें सन्घटः सद्घटज्ञानं अहमस्मि अज्ञोस्मि सत्सुखस्फुरणमित्यादिप्रत्यक्षेणात्मसत्यत्वप्राप्तेरात्मसत्यत्व प्रतिपादिकायास्तत्सत्यंसआत्मेत्यादिकायाःश्रुतेर्वैयर्थ्यंस्यात्तन्माभूदित्येवमर्थमित्यर्थः । ननुन्नविश्वसत्यत्वश्रुतिस्त्रैकालिकस त्वपरा । त्रैकालिकसत्त्वनिषेधकश्रुतिविरोधात् । नचवैपरीत्यमेवकिंनस्याद्विनिगमकाभावादितिवाच्यं । तात्पर्यान्यथानुप पत्तिगतिसामान्ययोरेवविनिगमकत्वात् । अद्वैतश्रुतिर्हिषड्विधतात्पर्यलिंगोपेता । तत्रत्रिविधंतात्पर्यलिंगंप्रामाण्यशरीरघटकं अर्थनिष्ठमज्ञातत्वमवाधितत्वंप्रयोजनवत्त्वंच । त्रिविधंतुशब्दनिष्ठमतिप्रसंगवारकंउपक्रमोपसंहारैकरूप्यमभ्यासोर्थवादश्चेति । तत्रशब्दनिष्ठलिंगत्रयेतावन्नविवादः । सर्वासामुपनिषदामेवंप्रवृत्तत्वात् मानांतरासिद्धतयामोक्षहेतुज्ञानविषयतयाचाज्ञातत्वं प्रयोजनवत्त्वंचनिर्विवादमेव । अबाधितत्वमात्रंसंदिग्धं । तच्चान्यथानुपपत्तिगतिसामान्याभ्यांनिर्णीयते । नहिसर्वप्रपंचनि

षेधरूपमद्वैतंव्यावहारिकं । येनतत्रश्रुतेर्व्यावहारिकंप्रामाण्यंस्यात् । अतस्तत्रतात्त्विकमेवप्रामाण्यं । द्वैतसत्यत्वंतुव्यावहारिकं । अतस्तत्रनश्रुतेस्तात्त्विकंप्रामाण्यं । परस्परविरुद्धयोर्द्वयोस्तात्त्विकत्वायोगात् । वस्तुनिचविकल्पासंभवात् । तात्त्विकव्यावहारिकप्रामाण्यभेदेनव्यवस्थोपपत्तेः । स्तुतिपरत्वेनावधारितस्यविश्वसत्यत्ववाक्यस्यैवान्यथाव्याख्यातुमुचितत्वात् । तथाहि । चतुर्धाहिसामानाधिकरण्यं । अध्यासे इदंरजतमित्यादौ । बाधायां स्थाणुःसपुमान्नेत्यादौ । विशेषणविशेष्यभावेनतुनीलमुत्पलमित्यादौ । अभेदेनतत्त्वमसीत्यादौ । अत्रचबाधायामध्यासेवासामानाधिकरण्योपपत्तेर्नसत्त्वबोधकश्रुतेःषड्विधतात्पर्यलिंगोपेताद्वैतश्रुतिबाधकत्वमिति । अत्रोच्यते । एवंहिबाधिततयाप्रतीयमानादन्यार्थस्यानुपपत्त्यासएवाबाधितोर्थइत्यध्यवसीयतइत्युक्तंस्यात् । तथाचतत्त्वमसीत्यादौसामानाधिकरण्यस्यतत्त्वमादिपदार्थविशिष्टैक्यंविनायस्यार्थस्यानुपपत्त्याविशिष्टैक्यमर्थःस्यात्तत्रलक्षणादिनोपपत्तिरितियदितर्ह्यद्वैतवाक्येपिस्वतंत्राद्वितीयमर्थोस्तु । अन्यथातवमतेव्यावहारिकार्थप्रस्तरवाक्यंव्यावहारिकंयजमानाभेदंबोधयेत् । मानांतरंतुप्रातिभासिकंयजमानभेदंबोधयति । तत्वमसिवाक्यंमपितात्त्विकंविशिष्टाभेदंबोधयति । प्रत्यक्षंतुतयोर्व्यावहारिकंभेदंबोधयतीति । द्व्यपिमीमांसोन्मूलितास्यात् । गतिसामान्यंत्वभ्यासपर्यवसन्नमबाधित्वासाधकमसिद्धंच । सर्वस्यापिवाक्यस्यत्वन्मते अखंडब्रह्मपरत्वात् । तस्माद्द्वैताद्वैतवाक्ययोर्विरोधेमानांतराविरुद्धएववाक्यार्थोध्यवसातव्यइतिद्वैतश्रुतेरेवाद्वैतश्रुतिबाधकत्वंयुक्तं । व्यावहारिकतात्त्विकार्थविषयत्वेनश्रुतेर्व्यवस्थापनंत्वयुक्तं । अन्योन्याश्रयापातेनविनिगमनाविरहात् । अध्यासेबाधेचसामानाधिकरण्योपपादनमप्ययुक्तं । तदध्यासादेरद्याप्यसिद्धे

रिति ॥ सुखंसुप्तोस्मीति ॥ सुप्तौस्वरूपानंदोगृह्यते स्वरूपंचतदज्ञानोपहितमेवसाक्षिविषयइतिसौषुप्तिकानंदस्यातात्त्विकत्वमित्यर्थः । ननुसाक्षिणउपहितानंदविषयत्वंश्रुतेश्चनिरुपाधिकानंदविषयत्वात्नानुवादकत्वंभिन्नविषयत्वादितिचेत् तर्हिप्रत्यक्षगृहीतसत्त्वापेक्षयाश्रुतेरपिभिन्नसत्त्वंविषयइतिनानुवादकत्वंश्रुतेरित्यवेहि । साधारणधर्मदर्शनादिजन्यप्रामाण्यसंशयाक्रांतत्वरूपानाश्वासनिरासप्रयोजनवत्त्वेननिष्प्रयोजनानुवादइत्याह ॥ निर्गमनवदित्यादिना ॥ ननुपिपासितस्यशब्दादिनाजलेज्ञातेपि नप्रत्यक्षेणतज्ज्ञानमितितत्सिध्यर्थं प्रत्यक्षापेक्षा प्रकृतेतुप्रत्यक्षसिद्धेसत्यत्वे नशब्दापेक्षाभविष्यतीत्यतआह॥ प्रत्यक्षसिद्धइति ॥ नकिंचिदवेदिषमितिप्रत्यक्षसिद्धेप्यज्ञाने तमआसीदितिश्रुतेस्त्वयापिप्रमाणत्वेनोपन्यासादित्यर्थः । नचतमआसीदित्यस्यसृष्टिकालसंबंधित्वेनाज्ञानग्राहितयासुषुप्तिकालसंबंधित्वेनाज्ञानग्राहकप्रत्यक्षमपेक्ष्यभिन्नविषयत्वेनैवप्रामाण्यसंभवइतिवाच्यं । एतावंतंकालंशुद्धंब्रह्मनावेदिषमिति अनादिकालसंसृष्टाज्ञानानुभवेनसृष्टिकालेपितत्सिद्धेः ॥ षड्विंशतिरस्येति॥ अग्नीषोमीयपशौ दैव्याःशमितारआलभध्वमित्यादिरूपोऽध्रिगुसंज्ञकःप्रैषोस्ति । तस्मिन्प्रैषे षड्विंशतिरस्यवंक्रयस्ताअनुष्ठ्योच्यावयतादितिमंत्रोस्ति । अश्वमेधे अश्वस्तूपरोगोमृगइतिप्राजापत्यास्त्रयःपशवःसंति । तस्मिन्प्रकरणेचतुस्त्रिंशद्वाजिनोदेवबंधोर्वंक्रीरश्वस्यस्वधितिःसमेतीतिवैशेषिकमंत्रोस्ति । आश्वमेधिकस्याश्वस्याग्नीषोमीयपशुविकारत्वेनततःषड्विंशतिपदोपेतमंत्रविशिष्टोध्रिगुश्चोदकात्प्राप्नोति । तन्मध्यपतितःषड्विंशतिरस्येतिमंत्रोपिचोदकादश्वमेधेप्राप्तः । तस्यचाश्वमेधिकवैशेषिकमंत्रेणचतुस्त्रिंशत्पदोपेतेनअपवादप्रसक्तौसत्यांअश्वमेधप्रकरणएव नचतुस्त्रिंशदितिब्रूयात्षड्विंशतिरित्येवब्रूयादितिपठ्यते । तत्रसं

शयः । किमश्वमेधप्रकरणएवपठितवैशेषिकमंत्रोश्वपशौपठनीयइतिकृत्वाचोदकप्राप्तमंत्रस्यसर्वथानिवृत्तिः उततनिवृत्तिरिति । तत्रचतुस्त्रिंशदित्यादिवैशेषिकमंत्रस्यप्रकरणपठितस्यबाधायोगात्तेनचोदकप्राप्तस्यैववाधः । नचवैशेषिकमंत्रस्यापि नचतुस्त्रिंशदित्यादिनाप्रतिषेधइतिवाच्यं । तस्यचतुस्त्रिंशद्वाजिनोदेववंधोरित्यस्यांऋचिचतुस्त्रिंशत्पदमुत्कृष्यषड्विंशतिपदंप्रक्षेपणीयंइत्यर्थवत्त्वोपपत्तेः । अतःचोदकप्राप्तस्यसर्वथावाधएवेतिप्राप्ते प्रकरणपठितायांऋचिचतुस्त्रिंशत्पदप्रतिषेधेनतत्रतत्स्थानेषड्विंशतिपदप्राप्तौप्रमाण्णाभावात् षड्विंशतिरित्येवब्रूयाद्दितितदनुवादासंभवात् तस्यापिविधौवाक्यभेदापत्तेरेकवाक्यत्वनिर्वाहाय नचतुस्त्रिंशदित्यनेनवैशेषिकींऋचंप्रतिषिध्यषड्विंशतिरित्येवब्रूयादित्यनेननिष्परिपंथिचोदकप्राप्तप्राकृताध्रिगुवचनमनूद्यतइत्यभ्युपेयत्वात् नतस्यनिवृत्तिरितिनवमाध्यायस्यचतुर्थपादेसिद्धांतितं । ननुषड्विंशतिरित्येवब्रूयादित्यत्रनचतुस्त्रिंशदितिब्रूयादितिनिषेधश्रवणेनचोदकप्राप्तमंत्रापवादकवैशेषिकमंत्रंप्रतिवाधकत्वमस्तु विश्वंसत्यमित्यादौनिषेधाश्रवणात्कथंप्रत्यक्षापवादकाद्वैतश्रुतिवाधकत्वमित्यतआह ॥ दृश्यंतेहीति[१५।१।५] ॥ असंयोगाल्लिट्किदितिकित्त्वविधिसन्निधिपठितस्यनिषेधरहितस्यमृडमृदगुधकुषक्लिशवदवसःक्त्वेतिसूत्रस्य नक्त्वासेडितिकित्त्वापवादंप्रतियथावाधकत्वं तथाविश्वंसत्यमित्यादेर्निषेधविधुरस्यापिसत्त्वग्राहिप्रत्यक्षापवादकाद्वैतश्रुतिवाधकत्वंयुक्तमित्यर्थः । कित्त्वंहिक्त्वोनिजंयन्नक्त्वासेडितिनिराकृतम् । मृडेत्यादिविधानंतत्पुनरुज्जीवयत्यदः । स्वतएवकितःक्त्वायाःकिद्वाचोनर्थकंत्वतः । सेटःक्त्वायाःकिन्निषेधनिषेधार्थत्वमास्थितमित्युक्तेः । संगृह्णाति ॥ [१५।१।५] तस्मादिति ॥ प्रत्यक्षाविषयेधर्मिणिसत्यत्वबोधनाद्धर्मिभेदः । विप्रतिपत्त्यादिनाप्रत्यक्षागृहीतसत्त्वंप्रमातारंप्रतितद्बोधनात्

प्रमातृभेदः । प्रत्यक्षगृहीतव्यावहारिकसत्त्वभिन्नतात्विकसत्त्वरूपधर्मग्रहाद्धर्मभेदः । नहिंस्यादित्याद्यहिंसावाक्यं अहिंसावाक् । एकार्थकनानाशाखास्थवाक्यंभिन्नशाखावाक् । द्वयोःप्रणयंतीतिवाक्यंद्विप्रणयनादिशब्देनगृह्यते ॥ प्रमाणमिति ॥ अबाधितार्थग्राहकमित्यर्थः ॥ तद्बाधइति ॥ विरुद्धयोर्द्वयोरप्यबाधितार्थत्वानुपपत्तेरित्यर्थः ॥ नचेदिति ॥ प्रमितप्रमापकत्वाभावादितिभावः । ननुप्रमितप्रापकत्वंनानुवादकत्वं किंतुप्रमाणेनवाऽप्रमाणेनवाबोधितस्यबोधकत्वंतच्चास्तिसत्त्वश्रुतेरितिचेन्मैवं । यतःनबोधिमंदबोधोपिबुधंमन्योभवान् । नहिप्रमितप्रमापकत्वमनुवादकलक्षणमस्माभिरभिहितं किंतुप्रमाणस्य श्रुतेरप्रमाणप्रत्यक्षावधिकमनुवादकत्वंनसंभवतीत्यभिहितं । नन्वद्वैतश्रुतिविरोधेनसत्त्वश्रुतिरप्रमाणं अतोनुवादिनीस्यात् अतआह ॥ श्रुतेरिति ॥ सत्त्वश्रुतेः । अद्वैतश्रुतिस्तुप्रत्यक्षगृहीतसत्त्वमेवनिषेधतु तथाचनसत्त्वश्रुतिरप्रमाणंअनुवादिनीवेतिभावः । ननुसत्त्वश्रुतेःप्रत्यक्षसिद्धसत्त्वग्राहकत्वेपिवाक्यार्थस्यक्रियासमभिव्याहारसिद्धस्यापूर्वत्वेनतद्विषयतयैवाननुवादकत्वोपपत्तावद्वैतश्रुतिविरुद्धतात्विकसत्त्वविषयकत्वकल्पनातदर्थमयुक्ता । परमार्थसद्विषयतातुसर्वश्रुतीनांशुद्धब्रह्मतात्पर्यकत्वेनैव । अवांतरतात्पर्यमादायव्यावहारिकसद्विषयतेतिचेत् मैवं । सत्यज्ञानादिवाक्येप्येवंकल्पयितुंशक्यत्वेनब्रह्मणोपिनतात्विकसत्त्वसिद्धिःस्यात् । नचसत्यादिवाक्येनक्रियासमभिव्याहारोस्तीतिवाच्यं । ब्रह्मविदाप्नोतीत्यादिक्रियायाःसत्त्वात् । इहापिसिद्धार्थवाक्यानां विश्वमाप्रा अंतरिक्षंमहित्वासत्यमद्धानकिरन्यस्त्वावान् । जहिप्रतीचोअनूचःपराचोविश्वंसत्यंकृणुहिविष्टमस्तु । सत्रासोमाअभवन्नस्यविश्वेइत्यादिबहूनांसत्त्वात् । त्वन्मतेजरद्गवादिवाक्यानामपिलक्षणयाअखंडब्रह्मपरत्वसंभ

वेनतद्विलक्षणप्रामाण्यस्यकर्मकांडवाक्येअनुपपादनात् । अवांतरतात्पर्यप्रतिपादितार्थस्यबाधितत्वेनाप्रामाण्योपपादनएवपर्य
वसानाच्च । प्रमाणस्याप्यप्रमाणापेक्षयानुवादितास्त्वित्यतआह ॥ नहीति ॥ यथेति ॥ द्वैतग्राहिप्रत्यक्षंद्वैतग्राहिश्रुत्यर्थभूतं
द्वैतंनोपहरेत् प्रत्यक्षस्याप्रमाणत्वेनार्थानिश्चायकतयाद्वैतश्रुतिप्रतिपिपादयिषितद्वैतोपनायकत्वायोगादित्यर्थः ॥ प्रमाणत्वे
नेति ॥ पूर्वंप्रमाणत्वेदोषउक्तः । इदानींतन्निश्चयेदोषउच्यतइतिभेदः ॥ लोकतइति ॥ अज्ञोस्मिसत्सुखस्फुरणमित्यादिप्रत्य
क्षेणेत्यर्थः । नचब्रह्मत्वसामानाधिकरण्येनसत्त्वंनप्रत्यक्षसिद्धमितिवाच्यं । अज्ञत्वस्फुरणस्यैवब्रह्मत्वात् । अखंडार्थनिष्ठेनस
त्यादिवाक्येनापिब्रह्मत्वसामानाधिकरण्येनसत्त्वाप्रतिपादनाच्च ॥ लिंगेनचेति ॥ नचानुमानममानमितिवाच्यं । प्रत्यक्षादि
सहकृतस्यतस्यमानत्वात् । त्वयाप्यविद्यादावनुमानोक्तेः । अत्राप्यज्ञोस्मीत्यादिप्रत्यक्षसहकृतत्वादनुमानस्येतिभावः ॥ प्रवा
हानादीति ॥ नचश्रुतेरपौरुषेयत्वेनविज्ञानवादादेर्नतदवधिकपूर्वत्वमितिवाच्यं । त्वन्मतेश्रुतेरपिसर्गादावुत्पन्नत्वेनतयोःपौ
र्वापर्यानिश्चयादित्यर्थः । ननुस्वरूपप्रवाहाभ्यामनादित्वशून्यादनुमानात् विज्ञानादिवादाद्वासकाशान्नश्रुतेरनुवादकत्वं अत
आह ॥ उक्ताहीति ॥ उरुप्रथस्वोरुतेयज्ञपतिःप्रथतामितिपुरोडाशंप्रथयतीतिश्रूयते । तत्रपुरोडाशप्रथनाभिधानसामर्थ्यरू
पलिंगेनपुरोडाशप्रथनरूपेकर्मणिउरुप्रथस्वेत्यादिमंत्रस्यविनियोगेसिद्धेइतिपुरोडाशंप्रथयतीतिब्राह्मणरूपस्यतदर्थशास्त्रस्यवैय
र्थ्यादनुवादकत्वमुक्तमित्यर्थः । ननुक्रमप्रकरणाभ्यांलब्धांगभावामंत्राःनपुरोडाशप्रथनादितत्तत्कर्मसमवेतार्थप्रकाशनेनोपकु
र्वंति । येनतत्प्रकाशितार्थस्यकर्मसमवायित्वरूपलिंगेनमंत्रविनियोगइति तदर्थशास्त्रवैयर्थ्यंस्यात् । किंतुअनुच्चरितानामनभि

धायकत्वात् । प्राथम्यावश्यकत्वाभ्यामुच्चारणमात्रेणयद्यर्थप्रकाशनमेवमंत्राणांकार्यंस्यात्तर्हितेषांनित्यवदाम्नानमनर्थकंस्यात् । उपायांतरेणापिप्रयोगवेलायामर्थप्रकाशनस्यशक्यत्वात् । अथार्थप्रकाशनाददृष्टंकल्प्येततद्दूरमपिगत्वाकल्प्यमदृष्टंतदुच्चारणादेवकल्पयितुमुचितं । तस्माददृष्टार्थामंत्राः । तदुक्तं यदिदृष्टार्थतैवस्यान्मंत्राम्नानमनर्थकं । प्रत्यायनाददृष्टंचेत्तदुच्चारणतोवरमिति । अत्राहुः कर्मप्रकरणेमंत्रोच्चारणस्याविधानेनतस्यकर्मविध्यनपेक्षितत्वेनतैरनाक्षेपात् पुंव्यापारस्यमंत्रगतव्यापारत्वाभावेनमंत्रांगत्वानिर्वाहकतयातेनाप्यनाक्षेपात्मंत्रोच्चारणकर्तव्यतायामेवनप्रमाणमस्ति दूरेद्वारकल्पना । किंतुमंत्रगतव्यापारत्वेनमंत्रांगत्वनिर्वाहकतयाभिधानस्यविध्याक्षेपसंभवादभिधानस्यद्वारत्वंयुक्तं । तदर्थंतुपश्चादुच्चारणस्यकर्तव्यतासिद्धिः । तस्मादभिधानरूपदृष्टांतार्थामंत्राः । यस्तुमंत्रैरेवाभिधानंकर्तव्यमितिनियमः तस्यनकिंचिद्दृष्टंप्रयोजनमस्तीति अदृष्टंकल्प्यतइति तदर्थंशास्त्रस्यानुवादकता । एतच्चप्रथमाध्यायस्यद्वितीयपादेभिहितं ॥ १६१।२ अनुवादितेति ॥ पूर्वपक्षरीत्येत्यर्थः ॥ १६१।२ नाप्रामाण्यहेतुरिति ॥ नचलाघवादनुवादकत्वमेवाप्रामाण्येप्रयोजकं नतुसापेक्षानुवादत्वं अनधिगतार्थवोधकत्वस्यप्रामाण्यघटकस्यतावतैवगतत्वादितिवाच्यं । याथार्थ्यस्यैवप्रामाण्यप्रयोजकत्वस्यानुपदमेववक्ष्यमाणत्वात् । अन्यथाधारावाहनधीप्रामाण्यंनस्यात् । नचतस्याःवर्तमानार्थग्राहकत्वेनतत्तत्क्षणविशिष्टग्राहकतयाप्रामाण्यमितिवाच्यं । प्रत्यक्षेसूक्ष्मक्षणभानायोगात् । वर्तमानतातुस्थूलकालोपाधिमादायैवसर्वज्ञानधारासाधारिणीतिनविषयभेदिका । नचसत्वश्रुतिरपिसत्वप्रत्यक्षसापेक्षत्वात् सापेक्षानुवादिन्येव । नहिसत्वप्रत्यक्षंविनातन्मूलशक्यशक्त्यादिग्रहमूलकशब्दप्रवृत्तिसंभवइतिवाच्यं । ब्रह्मसत्वबो

धकस्यसत्यज्ञानादिवाक्यस्यापितथैवप्रत्यक्षसापेक्षत्वात् । अज्ञोस्मीत्यादिप्रत्यक्षसिद्धसत्वानुवादित्वाच्चसापेक्षानुवादःस्यादिति
भावः । नन्वनुवादोपिधारावाहनज्ञानवत्प्रामाण्यमस्त्यैवेतियदुक्तंतदयुक्तं । तथाहि । तात्पर्यविषयेशब्दःप्रमाणं यत्परःशब्दः
सशब्दार्थइत्यभ्युपगमात् अन्यतःसिद्धेचशास्त्रतात्पर्यंनसंभवति । अतोनुवादस्यानुवाद्येस्वार्थेतात्पर्यासंभवात् नतत्रतस्यता
त्पर्यमितिशंकांविश्वसत्यत्ववाक्यस्यविश्वसत्यत्वेतात्पर्यकथनेनोपपादयति ॥ १६१।७ किंचवादीति ॥ विद्वद्वाक्ये यएवंविद्वान्पौर्णमासीं
यजतेयएवंविद्वानमावास्यांयजतइत्यादौ ॥ १६१।८ अतएवेति ॥ विद्वद्वाक्यस्याग्नेयादिषड्यागानांपौर्णमासीकालयुक्तानांत्रयाणाममा
वास्याकालयुक्तानांचत्रयाणांयागानांविद्वद्वाक्यगताभ्यांपौर्णमास्यमावास्याकालयोगनिमित्तप्रसिद्धयागत्रिकत्रिकनामधेयत्वा
भ्यांपौर्णमास्यमावास्यापदाभ्यांनिर्देशेसतिएकावगत्यात्रिकस्यत्रिकस्यएकैककरणेनसमुदायद्वयसंपादकतयादर्शपूर्णमासाभ्या
मितिफलवाक्यगतद्विवचनांतपदस्यआज्यभागौयजतीतिद्वित्वसंख्योपेते आज्यभागादिषुप्रातिपदिकार्थासंभवेन आग्नेयादिषु
द्विवचनार्थासंभवेनानुपपन्नस्यसमुदायद्वयपरत्वेसतिउपपन्नार्थस्यप्रसिद्धार्थकतयाफलवाक्यगताप्रसिद्धार्थयजिविशेषकृतयज्य
जेर्नामपरतंत्रत्वेननामार्थस्यत्रिकद्वयस्यैवफलवाक्येनफलसंबंधोभवतीत्येवंसप्रयोजनानुवादोविद्वद्वाक्यं । अन्यथादर्शपूर्णमा
सपदस्ययजिपरतंत्रत्वेयजेश्चतंत्रेणप्रकृताग्नेयाज्यभागसमिदादिसर्वयागोपस्थापकतयासर्वेषामेवफलसंबंधःस्यादितिसर्वेषांसमप्रा
धान्यमापद्येत । सप्रयोजनानुवादत्वादेवविद्वद्वाक्यस्यपौर्णमास्यमावास्याकालयुक्तआग्नेयादियागलक्षणानुवाद्यभूतस्वार्थप
रत्वं । अतएवपौर्णमास्यमावास्याख्ययागसमुदायस्यविद्वद्वाक्यनिष्पन्नार्थस्यदर्शाख्येनसमुदायेनपूर्णमासाख्येनचसमुदायेन

स्वर्गकामइष्टंकुर्यादितिफलवाक्यार्थेनान्वयात् विद्वद्वाक्यस्यफलवाक्येनैकवाक्यत्वं । स्वार्थबोधेसमाप्तानामंगांगित्वाद्यपे
क्षया । पदानामेकवाक्यत्वंपुनःसंहत्यजायतइतिवचनात् ॥ १६२।२ स्वार्थेति ॥ वायुर्वैक्षेपिष्ठादेवतेत्यादीनामसतिप्रयोजनेमानांतर
प्राप्तार्थमनुवदतामनुवाद्येतात्पर्याभावेऽवगतेवांतरवाक्यार्थमनादृत्यैववायव्यश्वेतालंभनरूपप्रधानस्तुतिपरत्वंयथोक्तंतथावि
द्वद्वाक्येप्युच्यतेत्यर्थः । ननुविद्वद्वाक्यस्यानुवादकत्वमेवकुतइतिचेत् मैवं । द्वितीयाध्यायस्यद्वितीयपादेनिर्णीतत्वात् । त
थाहि । यदाग्नेयोष्टाकपालोमावास्यायांपौर्णमास्यांचाच्युतोभवतितावब्रूतामग्नीषोमावाज्यस्यैवनावुपांशुपौर्णमास्यांयजेरन् ।
ताभ्यामेतमग्नीषोमीयमेकादशकपालंपूर्णमासेप्रायच्छत् । ऐंद्रंदध्यमावास्यायामैंद्रंपयोमावास्यायामितिकालसंयुक्तानिवच
नानिश्रूयंते । तथासमिधोयजति । तनूनपातंयजति । आज्यभागौयजतीत्यकालसंयुक्तानिवचनानि । तेषांसं
निधौयएवंविद्वान्पौर्णमासींयजते यएवंविद्वानमावास्यांयजतेइतिवाक्यद्वयंश्रुतं । तथादर्शपूर्णमासाभ्यांस्वर्गकामोयजेते
तिफलवाक्यंश्रुतं । तत्रसंशयः किमिमौविद्वद्वाक्यगतौयजतीतिफलवाक्यबोधितफलसंबंधेपूर्णमास्यमावास्यासंज्ञकेअपूर्व
कर्मणीविधातारौउतपूर्णमास्यमावास्याकालसंयोगनिमित्ताग्नेयादिनामधेयत्वाभ्यां पूर्णमास्यमावास्यापदाभ्यांविशेष्यमाणौ
प्रकृतांनाग्नेयादीन्पूर्णमास्यमावास्याकालसंयुक्ताननुवदितारौइति । तत्सिद्ध्यर्थमप्येतच्चिंतनीयं किमपूर्वकर्मविधौरूपंलभ्यते
नवेतिततोप्येतद्विचारणीयं । किंप्राप्तकर्मानुवादेनानेकगुणविधानंएकेनविधिनासंभवति उतनेति । तत्रपूर्वःपक्षः ।
यएवंविद्वानित्येताभ्यांपूर्णमास्यमावास्यासंज्ञकौयागौविधीयेते अनुवादमात्रस्यव्यर्थत्वात् किंपुनरनयोर्द्रव्यदेवतंतदुच्यते ।

यदाग्नेयोष्टाकपालोभवतीत्यादिभिः पूर्णमास्यमावास्यासंज्ञाभ्यां तावेवयागौअनूद्याष्टाकपालादिद्रव्यमग्न्यादयश्चदेवतावि धीयंतइतितदेवद्रव्यदेवतं । अस्मिंश्चपक्षेपूर्णमासीमित्येकत्वंप्रातिपदिकार्थगतमेवभविष्यति । यागश्चप्रत्यक्षतःश्रुतः । तौचद्वावेव । तदपूर्वेचद्वेइतिलाघवं । समुदायानुवादत्वेतुप्रातिपदिकार्थलक्षितसमुदायगतमेकत्वं । यागश्चक्लेशेनद्र व्यदेवतासंबंधादनुमातव्यः । तेचानेकेतदपूर्वाणिचानेकानीतिगौरवं । फलवाक्यंतुतयोरेवफलसंबंधबोधकमिति । सिद्धां तस्तु । नैतेष्टाकपालादयोगुणविधयः प्राप्तकर्मानुवादेनानेकगुणविधानेप्रत्ययावृत्तिरूपदोषप्रसंगात् । तदुक्तंवार्तिके । प्राप्ते कर्मणिनानेकोविधातुंशक्यतेगुणः। अप्राप्तेतुविधीयंतेबहवोप्येकयत्नतइति । कर्मोत्पत्तिवाक्येश्रूयमाणोविधिः भावनायाअप्राप्त त्वात्तांविधातुमुपक्रांतोपिकेवलायास्तस्या अनुष्ठातुमयोग्यत्वात् । कारकविभक्त्यंतपदांतरादिप्रतिपादितैः। भावनांशभूतैर्विशे षणैर्विशेष्यमाणांतांविदधत्तद्विशेषणानिअर्थापत्त्याविदधातीतिनतत्रप्रत्ययावृत्तिदोषः । विशिष्टायांभावनायांश्रौतविधित्वमा दाययद्यन्यत्रापिश्रुत्यैवपुनर्व्याप्रियेतततःपुनरुच्चारणदोषमवैदिकत्वापत्त्यालभेत । अयंपुनःसकृद्विधायनिवृत्तव्यापारःस्वार्था न्यथानुपपत्यासर्वविशेषणेषुप्रत्येकनिष्ठानिविध्यंतराण्याविर्भावयन्सन्समाम्नायावगतैकरूपापरित्यागेनैवासकृदुच्चारणेवर्तते । तदुक्तंवार्तिके । शब्दव्यापारनानात्वेशब्दानामतिगौरवं । एकोक्त्यवसितानांतुनार्थाक्षेपोविरुध्यतइति । विशिष्टविधिनिमित्त त्वादर्थापत्तिःपश्चाद्भवंतीयद्यपिविशेषणविधीनुत्तरकालमवगमयति तथापिविशेषणान्यनुपादायविशिष्टेव्यापारासंभवात् नूनं पूर्वतरंविशेषणविधयोनिष्पन्नाः । यतस्तदधीनसिद्धिर्विशिष्टप्रत्ययोदृश्यते तेनबहवएवचैतेविधयइतिप्रत्यक्षार्थापत्तिलभ्यायु

गपत्क्रमेणवाव्याप्रियंतइति अनेकविध्यंतरप्रसवसमर्थैकविशिष्टविधिप्रसादेनानेकगुणविधानमपूर्वभावनाविधिपक्षेसुलभं । यदातुभावनाऽन्यतःप्राप्ताभवति तदापिष्टपेषणवत्प्रतिहतशक्तिर्विधायकोभावनामविदधत्ततोवतीर्यतत्संगतानिकरणान्युपसर्पति । तत्रानेकेषुविशेषणेषु एकेनविहितेनेतरानाक्षेपात् तत्रापिश्रुत्यैवविधानंकर्तव्यमित्यावृत्तिप्रसंगः । तदुक्तंवार्तिके । प्रधानंनीयमानंहितत्रांगान्यपकर्षति । अंगमाकृष्यमाणंतुनांगांतरमसंगतेरिति । तस्माद्विद्वद्वाक्यविहितकर्मानुवादेनाष्टाकपालादिवाक्यैराग्नेयाष्टाकपालसंबंधस्तस्यपूर्णमासीकालसंबंधइत्यनेकगुणविधानंनसंभवति । आग्नेयोष्टाकपालःपूर्णमास्यामित्यत्रयद्यपितद्धितस्यसन्निहितद्रव्यवचनत्वात्सामानाधिकरण्यलक्षणःसंबंधः प्रागेवपूर्णमासीसंबंधात् आग्नेयाष्टाकपालयोर्लभ्यते । तथाप्यसौसंबंधःप्रमाणांतरेणासिद्धत्वात् अत्रैवविधातव्यः । तंचविधायपुनःपूर्णमासीसंबंधविधिरित्यावृत्तिप्रसंगः । नह्येवंसंभवतियआग्नेयोष्टाकपालःसपूर्णमास्यामिति आग्नेयाष्टाकपालस्याप्रसिद्धत्वात् । अतएववक्तव्यं अष्टाकपालआग्नेयःकर्तव्यःसचपूर्णमास्यामिति । तथासत्यावृत्तिःप्रत्ययस्यस्यात् तस्माद्यएवंविद्वानितिविहितकर्मानुवादेनाष्टाकपालादिवाक्येगुणविधानासंभवात् अवश्यमेवभावनांतरंद्रव्यदेवताविशिष्टंआक्षिप्तयजिकंविधातव्यं । नचभावनांतरंभावनांतरस्यरूपंभवतीतिसिद्धमरूपत्वं । अतोविद्वद्वाक्यगतौयजतीसमुदायानुवादौ । ततश्चागत्यापूर्णमासीमित्येकवचनंलक्षणयासमुदायपरंभविष्यति । किंचयदाग्नेयोष्टाकपालइत्यादिक्रियासमानाधिकरणयच्छब्दाद्विलक्षणःयएवंविद्वानितिकर्तृसमानाधिकरणोयच्छब्दउपबध्यमानोविधिसामर्थ्यंनिरुंधे । तथाचोक्तंवार्तिके ॥ क्रियापदैकयोगित्वेयच्छब्दोनरुजेद्विधिं । कर्तृयुक्तस्सएवान्यःप्रापि

तार्थानुवादकृदिति । तस्मात्समुदायानुवादौ । ननुप्रत्यक्षसिद्धेवादिविप्रतिपत्तिनिरासरूपप्रयोजनवत्त्वेनप्रमाणांतरस्यसप्रयो
जनतयास्वार्थपरत्वोक्तावग्निर्हिमस्यभेषजमित्याद्यपि तेनैवप्रयोजनेनसप्रयोजनंस्वार्थपरंचस्यात् । अतोनप्रत्यक्षसिद्धेवादिवि
प्रतिपत्तिनिरासार्थमन्यापेक्षेतिचेन्मैवं । प्रत्यक्षसिद्धेभावरूपाज्ञानेवादिविप्रतिपत्तेस्त्वयांगीकारात् । तत्रश्रुत्यादेरुपन्यासाच्च ।
विमतिंर्नाक्षगइतित्वदुक्तिव्यक्तवेदनः । आत्माज्ञानौषधंसिद्धंविमृश्यारोग्यमाप्नुयात् । वस्तुतस्तुप्रत्यक्षेणसत्त्वेगृहीतेपिवा
दिविप्रतिपत्त्याप्रत्यक्षेऽप्रामाण्यशंकायां तदाहितार्थसंशयेसतिसर्वजनसिद्धप्रामाण्ययाश्रुत्यांप्रत्यक्षगृहीतार्थस्यानुवादेसतिसर्वसं
शयवीजनिरासोस्यानुवादस्यप्रयोजनं । अस्तिहिमीमांसकानांप्रत्यक्षसिद्धेपिवायुप्रत्यक्षत्वेनैयायिकानांचात्मप्रत्यक्षत्वेप्रत्यक्षसि
द्धेपितत्रतदन्येषांविवाददर्शनात् । सत्यांविप्रतिपत्तावग्निर्हिमस्यभेषजमित्याद्यपिद्वीपविशेषस्थंप्रत्यननुवादएव । पुरुषविशेषं
प्रत्येवानुवादकत्वं । सप्रयोजनानुवादकत्वाभावेपिसत्त्वश्रुतेःप्रामाण्यस्याक्षतत्वात् तयामिथ्यात्वानुमानंवाधितमेवेत्याह ॥
[१६२।२] किंचानुवादत्वेपीति ॥ नचाधिगतेऽर्थेतात्पर्याभावइतिवाच्यं । अधिगतेपीष्टेक्रियासमभिहारेणबालभाषितवृत्तात्पर्योप
पत्तेः । नैष्फल्यं अज्ञाननिवृत्त्यादिफलाभावः । इष्टवोधनस्यापिसुखादिहेतुत्वात् ॥ [१६२।३] किंचायमिति ॥ वायव्यंश्वेतमालभेत
भूतिकामोवायुर्वैक्षेपिष्ठादेवतेत्यादौ इत्थंवायव्यश्वेतालंभःप्रशस्तः यत्रशीघ्रगामिनीवायुदेवताइज्यतइत्यादिस्तुतेरत्राभावात् ॥
[१६३।१] आश्रयेति ॥ विधीयमानोगुणोयत्रकारकतामापद्यतेसआश्रयः । यथादध्नाजुहोतीत्यत्रविधीयमानस्यदध्नःहोमंप्रतिकारक
त्वात्होमोदध्नआश्रयः । तथाचानुवाद्यत्वसिद्धौतत्संसर्गोपिसिद्धःस्यादित्यर्थः ॥ [१६३।२] तत्रैवेति ॥ नेहनानास्तिकिंचनेतिवाक्यए

वकिंचनेत्यनेनसर्वानुवादसंभवादित्यर्थः । ननुसामान्यतोनिषेधस्यकिंचनेत्यनेननिषेध्यसमर्पणेपिविशिष्यनिषेधेविशिष्यनिषे
ध्यार्पणस्योपयोगइत्यतआह ॥ [१६३।३] नहीति ॥ निषेद्धुंप्राप्तिरपेक्षिता । नतुशब्दतः । गौरवादितिभावः । विश्वंनसत्यमित्यादिवि
शिष्यनिषेधादर्शनाच्च । अस्थूलादिवाक्येस्थूलादिपदस्यैवनिषेध्यानुवादस्यसत्त्वात् ॥ [१६३।४] अत्रेति ॥ परमेश्वरकृतजगत्सृष्ट्यादेः विश्व.आ.
सत्यत्वेनज्ञानंदेवानामप्यस्तीतिदेवसंबंधिताहृशज्ञानरूपस्यालौकिकप्रमाणस्योक्तेरित्यर्थः ॥ [१६३।५] यत्तन्नेत्यादीति ॥ इतियत्तन्नइत्ये १ । २०
वंनिषेधार्थानुवादलिंगस्यैकस्याप्यभावादित्यर्थः । एतेनयत्किंचिल्लिंगाभावेनलैंगिकाभावोवक्तुमशक्यइतिपरास्तं । ननुतत्स
त्यमित्यादिवाक्यंनब्रह्मसत्तानुवादकं । तस्याःमानांतराप्राप्तत्वादित्यतआह ॥ [१६३।६] सर्वेति ॥ व्यवस्थिते अनुस्यूते । ब्रह्मणः
सर्वप्रत्ययवेद्यत्वेनसन्घटइत्यत्रब्रह्मणिसत्त्वप्रतीतिरित्यर्थः । ननुविशिष्टस्यैवसर्वप्रत्ययवेद्यत्वं नतुशुद्धस्येतिशंकामपाकर्तुमुत्त
रार्धउदाहृतः ।प्रपंचविलयाधिष्ठानत्वेनसर्वप्रत्ययवेद्यस्यब्रह्मणःशुद्धत्वमितिभावः ॥ [१६३।८] परागर्थेति ॥ परांचोयेर्थाःतेचप्रमेया
नितेषुयाफलभूतासंवित्घटादिभासकंचैतन्यंतदेववेदांतवाक्यरूपप्रमाणस्यप्रमेयमित्यर्थः । तथाचघटज्ञानस्यब्रह्मत्वात् सत्
घटज्ञानमित्यत्रब्रह्मसत्ताप्रतीयतइत्यर्थः । ननुघटादिविशिष्टेब्रह्मणिसत्त्वप्रतीतावपिशुद्धेनतत्प्रतीतिरित्यतआह ॥ [१६३।९] सदिति ॥
नन्वत्रापिसुखविशिष्टेअज्ञानविशिष्टेचसत्ताप्रतीयतेनकेवलइत्यतआह ॥ [१६४।१] अधिकेति ॥ ननुसत्सुखस्फुरणमित्यादौब्रह्मत्वसा ॥ १२३ ॥
मानाधिकरण्येननसत्त्वंप्रतीयतइत्यतआह ॥ [१६४।२] ब्रह्मशब्देति ॥ तवमतेसत्यादिवाक्यस्याखंडार्थनिष्ठतयाब्रह्मत्वसामानाधिक

रण्येनसत्त्वाबोधकतयाब्रह्मस्वरूपेसत्त्वंतेनबोध्यतइतिवाच्यं । तच्चसत्सुखस्फुरणमित्यत्राप्यस्ति । तार्किकमतेनिर्विकल्पकेभा
तस्यघटस्यसविकल्पकेपिभानवत् ॥ [१६४।३] एवंमानंदेति ॥ नन्वदुःखमसुखमित्यत्रदुःखसाहचर्येणसुखस्यापिवैषयिकस्यैवग्रहणेनत
न्निषेधायब्रह्मस्वरूपसुखानुवादायोगइतिचेन्मैवं । दुःखेवैषयिकत्वाव्यभिचारेणदुःखमात्रस्यैवग्रहणमितितत्सहपठितस्यापिसु
खस्यसर्वस्यनिषेधायब्रह्मानंदश्रुतिरप्यनुवादिनीस्यादित्याशयः ॥ [१६४।४] विश्वंसत्यमिति ॥ विश्वंसत्यमित्यादिश्रुत्याबाध्यत्वाभाव
रूपमिथ्यात्वाभावंबोधयंत्यातद्रूपंमिथ्यात्वंनिषिध्यतइतिविश्वसत्यत्वश्रुतिरेवनिषेधश्रुतिः । तांचप्रतिनिषेध्यमानंमिथ्यात्वंवि
ज्ञानवादादिप्राप्तमेवनेहनानेतिश्रुतिरनुवादिनीस्यादित्यर्थः । ननुभावाभावयोःपरस्परविरहरूपत्वेसमेपिभावग्रहोनिरपेक्षत्वा
न्नाभावग्रहमपेक्षते । अभावग्रहस्तुसप्रतियोगिकत्वाद्भावग्रहमपेक्षते । अतोनेतिनेतीतिश्रुतेरेवसत्त्वश्रुत्यपेक्षा नतुसत्त्वश्रुते
र्नेतिर्नेतीतिश्रुत्यपेक्षेतिचेन्मैवं । सत्यत्वस्यबाध्यत्वादिभावरूपमिथ्यात्वाभावरूपतयातद्बोधयंत्याःसत्त्वश्रुतेरेवात्यंताभावप्रति
योगित्वादिरूपभावरूपमिथ्यात्वप्रतिपादकश्रुत्यपेक्षायाएवोचितत्वात् ॥ [१६४।५] स्वर्गनरकादेरिति ॥ सत्यत्वस्येतिशेषः । तेननो
पक्रमानानुगुण्यं । नचधर्मिप्रमातृभेदेनेत्यादिनापौनरुक्त्यं । नह्यत्रधर्माद्यंशेप्रत्यक्षाप्राप्तसत्त्वविधानेनविश्वंसत्यमित्यादेरन
नुवादत्वमुच्यते । किंतुवाक्यप्राप्तस्यवाक्यांतरेणनिषेधेऽतिप्रसंगउच्यते ॥ [१६४।६] एतच्छाखास्थेति ॥ यथानहिंस्यात्सर्वाभूतानी
तिश्रुतिरविशेषप्रवृत्तापिहिंसात्वसामान्यस्यप्रत्यक्षादिप्राप्तत्वात्निषेध्योपस्थितौनाग्नीषोमीयवाक्यमपिनिषेध्यसमर्पणायापेक्षते
तथानेतिनेतीत्यादिश्रुतिरविशेषप्रवृत्तापिप्रत्यक्षप्राप्तघटादिसत्त्वरूपंनिषेध्यमादायनिराकांक्षासतीनप्रत्यक्षाप्राप्तधर्माधर्मादिस

त्यत्वबोधिकांविश्वंसत्यमित्यादिश्रुतिमपिनिषेध्यसमर्पणायापेक्षितुमर्हति । मानांतरेणनिषेध्योपस्थितावपिवाक्यापेक्षणे अग्नीषोमीयहिंसायाअपितथानिषिद्धत्वेनाधर्मसाधनत्वंस्यादितिबोध्यं । नन्वग्नीषोमीयवाक्यस्यनिषेधविषयन्यूनविषयत्वेननिषेध्यसमर्पकत्वमितिचेन्न । विश्वंसत्यमित्यस्यापिप्रत्यक्षाप्राप्तधर्माधर्मादिसत्यत्वबोधकतयासर्वनिषेधकान्नेतिनेतीत्येतस्मान्न्यूनविषयत्वात् । एवंचदृश्यत्वादिहेतोर्धर्माद्यंशेश्रुत्यादिबाधएव ॥ [१६४।१] नहीति ॥ बौद्धादिमतेपिजगतिव्यावहारिकसत्त्वस्यसत्त्वात् । यथाहुः । नसन्नासन्नसदसन्नैवानुभयतत्वकं । विमतंतर्कपीड्यत्वान्मरीचिषुयथोदकमिति । द्वेसत्त्वेसमुपाश्रित्येत्यादिचवक्ष्यते ॥ [१६५।१] अप्राप्तेचेति ॥ व्यावहारिकसत्त्वस्यसर्वसंमतत्वान्नतद्बोधनेनश्रुतेरर्थवत्त्वमित्यर्थः ॥ [१६५।३] त्वत्पक्षइति ॥ नन्वखंडार्थबोधस्यद्वितीयाभावबुद्धिद्वारत्वेनजगत्सत्यत्वविरोधित्वमितिचेन्न । द्वितीयाभावस्यद्वितीयतयाऽखंडार्थविरोधित्वेनतस्यतद्बोधेद्वारत्वायोगात् । स्वरूपात्मकत्वेतुस्वरूपमात्रप्रतिपादनपर्यवसानेनश्रुतेस्तद्बोधिकायाःसत्यत्वश्रुत्यविरोधित्वात् । जगत्सत्यत्वाविरोधित्वात् । जगत्सत्यत्वबोधकागमाविरोधित्वात् । ननुवैदिकतात्पर्यविषयस्यतात्विकत्वनियमेनतात्पर्यज्ञापकानामपिलिंगानामर्थतथात्वज्ञापकत्वएवपर्यवसानमित्यतआह ॥ [१६५।६] अस्तिचेति ॥ तथाचोभयोस्तात्पर्यलिंगवत्तयानबाधकत्वाध्यवसायइत्यर्थः ॥ [१६६।२] मानांतरेति ॥ मानांतरप्राप्तार्थत्वेत्वनधिगतार्थत्वक्षतिः । मानांतरविरुद्धार्थत्वेतुयाथार्थ्यमेवनस्यादितिविशेषोपिबोध्यः । ननुप्राप्तार्थाप्राप्तार्थयोर्विरोधेप्राप्तार्थस्याप्राप्तार्थविध्यर्थत्वेनान्यशेषत्वनियमादप्राप्तार्थस्यैवानन्यशेषत्वे

नबलवत्त्वं । तदुक्तंसंक्षेपशारीरके । अतत्परातत्परवेदवाक्यैर्विरुध्यमानागुणवादएवेतिचेन्मैवं । विश्वसत्यत्वश्रुतेरन्यशेषत्वस्यप्राप्तार्थत्वेपिदार्ढ्यादिप्रयोजनवत्तया अतत्परत्वस्यचाभावात् । प्रत्युतमिथ्यात्वश्रुतेरेवमानांतरविरोधेनप्रस्तरादिवाक्यवदतत्परत्वात् ॥ [१६६।२]यदित्विति ॥ तथाचमिथ्यात्वश्रुतेर्नमानांतरविरोधइतिभावः ॥ [१६६।३]तर्हीति ॥ तथाचसत्त्वश्रुतेर्नानुवादत्वमितिभावः । श्रुत्योःप्रावल्यप्रसंगेनास्योक्तत्वात्नधर्मादिभेदान्नद्वैतगीर्वृथेत्यनेनपौनरुक्त्यमितिविभावनीयं ॥ [१६६।४]सुषुप्ताविति ॥ सुषुप्तौनिष्प्रपंचतायाःसुखत्वेनफलवत्त्वात् । तद्बोधकस्यस्थूलादिवाक्यस्यप्रधानप्रतिपादकवाक्यतुल्यत्वात् । सप्रपंचसगुणवाक्यस्यनिष्फलप्रपंचादिप्रतिपादकत्वेनांगवाक्यतुल्यतयाप्रधानवाक्यानुसारेणचांगवाक्यस्यनेयत्वात् । अस्थूलादिप्रपंचनिषेधकवाक्यानुसारेणसत्यत्वप्रतिपादकंसप्रपंचवाक्यंस्तुत्यर्थत्वेननेयमित्यर्थः ॥ [१६६।५]तस्यांइति ॥ निष्प्रपंचतायाइत्यर्थः ॥ [१६६।६]मूर्च्छायामिति ॥ तथाचनिष्प्रपंचतायाःफलवत्त्वव्यभिचारइतिभावः ॥ [१६६।७]सममिति ॥ तथाचनिष्प्रपंचतायाःफलवत्त्वंनकुत्रापिदृष्टचरमितिभावः ॥ [१६६।७]यदिचेति ॥ सुप्तौनिष्प्रपंचतायाःप्रसक्तंपुरुषार्थत्वंदुःखयोगादपोद्यते । उत्सर्गतस्तुनिष्प्रपंचतापुरुषार्थएवेतिभावः ॥ [१६६।७]तर्हीति ॥ सुषुप्तिरपिप्रपंचाभावरूपफलेननपुरुषार्थः किंतुसुखेनैवेतिनिष्प्रपंचतानप्रधानतुल्येतिभावः । ननुसप्रपंचतादुःखवत्त्वादपुरुषार्थः । द्वितीयाद्वैभयंभवतीतिश्रुतेः । निष्प्रपंचतातुदुःखरहितत्वादेवपुरुषार्थइत्यतआह ॥ [१६७।१]अस्तिचेति ॥ तथाचनिष्प्रपंचतायाअपितस्मादेकाकीनरमतइतिश्रुतेरेवदुःखवत्त्वादपुरुषार्थत्वमित्यर्थः । ननुएकधैवानुद्र

ष्टव्यमितिवाक्यस्वारस्यात् अभेदज्ञानस्यैवमोक्षहेतुत्वान्निष्प्रपंचतैवपुरुषार्थइत्यतआह ॥ [१६७।१]संतिचेति ॥ आत्मानंजीवं प्रेरितारंप्रेरयितारं पृथक्भेदेनमत्वा तेनभेदज्ञानेन परमात्मनावा जुष्टःप्रीतियुतःसन् ततःपरमात्मनःसकाशादमृतत्वमेतीत्यर्थः। अतएवोत्तरत्र अत्रापितंवेदविदोविदित्वालीनाब्रह्मणितत्परायोनिमुक्ताः । तदात्मतत्वंप्रसमीक्ष्यदेहीएकःकृतार्थोभवतेवीतशोकइतिभेदज्ञानस्यैवमोक्षहेतुत्वमुक्तं॥ [१६७।३]तर्हीति॥ तर्हिं कितितद्धितेपरेवृद्धिविधायकात्कितिचेतिसूत्रात्सकाशात् सामान्यतःसर्वत्रकितिप्रत्ययेपरेवृद्धिनिषेधकस्यक्ङितिचेतिसूत्रस्यप्राबल्यंस्यादित्यर्थः । ननुसामान्यविशेषन्यायेनक्ङितिंचेत्याद्यपेक्षयाकितिचेत्यादेर्बलवत्त्वमितिचेत् तर्हिं यदंगदाशुषेत्वमग्नेभद्रं तस्तंभद्यांमंत्रेभिःसत्यैः कृण्वन्विश्वान्यपांसिसत्या ऋतावरीऋतजातस्यसत्ये सत्यमिंद्रंसत्यइंदुः आद्वांब्रवामसत्यान्युक्थ्या सत्यमिद्वाउतंवयमिंद्रंस्तवामनानृतं योभूत्सोमैःसत्यमद्वा सत्योयंपूर्वेंचिदेवासश्चिद्यमीधिरे ऋतंयतीसरमागाअविंदद्विश्वानिसत्यांगिराश्चकार तंनुसत्यंपवमानस्यास्तु. इत्यादिषुबहुषुविशिष्यमंत्रादीनांकर्मणांदेवतानांपृथिव्यादीनांचसत्यत्वोक्त्यासामान्यतोनेतिनेतीतिश्रुतेःसकाशात्सत्यत्वश्रुतेरेवविशेषश्रुतित्वेनबलवत्त्वात्॥ [१६७।७]अनुपसंजातेति ॥ न्यायाःपूर्वमुक्ताअनुसंधेयाः । ननुमिथ्यात्वानुमानस्यश्रुतिसूत्रविरोधोनसंभवति । तयोःशून्यवादिमतनिरासार्थत्वात् । तथाहिसद्रूपाद्ब्रह्मणोजगत्सर्गंवदतःसमन्वयस्यसर्वमसदित्यनुमानेनविरोधेब्रह्मसाधारण्यांनिस्तत्वतायांप्राप्तायांसूत्रेणपरिहारः। सतोब्रह्मणोनाभावःनशून्यत्वंउपलब्धेः । सत्वेनप्रमाणांतरप्रतीतेः । तथाचकिंचित्परमार्थसदवश्यंशून्यवादिनापिस्वीकार्यं । अन्यथाबाधस्यनिरवधित्वप्रसंगादितिसूत्रार्थः । सचनप्रपंचमिथ्यात्वविरोधी । तथाचोक्तं ।

“बाधितापह्नवामानैर्व्यावहारिकमानता । मानानांतात्विकंकिंचिद्वस्त्वनाश्रित्यदुर्भणे”ति । विज्ञानवादिनिराकरणपरेणापि
नानेनसूत्रेणविरोधः । रूपादिरहितब्रह्मजगदुपादानत्वप्रतिपादकस्यसमन्वयस्यनीलाद्याकारंविज्ञानंसाधयतानुमानेनविरोध
संदेहे स्वप्नधीसाम्यताबुद्धेर्बुध्यार्थस्यसहेक्षणात् । तद्भेदेनानिरूप्यत्वाज्ज्ञानाकारोर्थइष्यते । विमताधीर्नज्ञानव्यतिरिक्तालं
बना धीत्वात् स्वप्नधीवत् । विपक्षेचज्ञानाभानेप्यर्थभानप्रसंगोबाधकः । नहिभिन्नयोरश्वमहिषयोःसहोपलंभनियमोस्ति ।
तस्मान्नज्ञानातिरिक्तंसदितिप्राप्तेपरिहारसूत्रं । नाभावउपलब्धेरिति । बाधेनसोपाधिकतानुमानेउपाध्यभावेनसहोपलंभः ।
सारूप्यतोबुद्धितदर्थभेदस्थूलार्थभंगेभवतोपितुल्याः । सूत्रार्थस्तु । नाभावःज्ञानातिरिक्तस्यार्थस्यनासत्वं किंतुव्यवहारदशा
बाध्यार्थक्रियाकारित्वरूपंसत्वमेव । उपलब्धेः ज्ञानातिरेकेणप्रमाणैरुपलब्धेरिति । तदुक्तं । तस्मान्नज्ञानाकारोर्थः किंतु
बाह्यः । सचार्थक्रियाकारित्वसत्वोपेतोपि अद्वैतश्रुतिवशाद्ब्रह्मणिकल्पितोनपरमार्थसन्नितिसिद्धांतस्यसुगतमताद्भेदइति ।
तस्मान्नस्मृतिसूत्रविरोधोस्माकमित्याशंक्यपरिहरति ॥ [१६७।८]नचस्मृतिसूत्रेइति ॥ ननुनतत्सूत्रेस्वप्नवैधर्म्योक्त्ययुक्तिः । तस्या
विमतंनिस्तत्वं तर्कपीड्यत्वात् । मरुमरीचिकाजलवदित्यनुमानेबाध्यत्वप्रमाणागम्यत्वदोषजन्यत्वाद्युपाधिप्रदर्शनपरत्वात् इ
त्याशंक्यनिराकरोति ॥ [१६८।१]सूत्रेइति ॥ निस्तत्वानुमानस्यमिथ्यात्वानुमानसमतयानिस्तत्वानुमाननिराकरणपरयास्वप्नवैधर्म्यो
क्त्यामिथ्यात्वानुमानस्यापिनिरस्तत्वेनस्वप्नवैधर्म्योक्तिर्भवत्प्रतिकूलेत्यर्थः ॥ संवृतिसत्यत्वं आविद्यकसत्यत्वं । श्रुत्यादि
विरोधमुपसंहरति ॥ [१६८।४]तस्मादिति ॥ ननुनप्रमाणैर्विषयसत्त्वंसिद्ध्यति । अतीतादिग्राहकमानेविषयीभूतार्थस्यसत्त्वाभावादि

त्यतआह ॥ [१६८।६] अग्निरासीदिति ॥ नात्रसत्त्वंविद्यमानत्वंकिंतुअबाध्यत्वं । तच्चातीतादिष्वप्यस्तीति अतीतज्ञानस्यापिस्वार्थ सत्वग्राहकत्वमक्षतमेवेतिभावः ॥ [१६८।६] रूप्यमिति ॥ रूप्यस्यसद्विलक्षणत्वेपितद्गतंमिथ्यात्वंसदेवेत्यर्थः ॥ छ ॥ छ ॥ व्यासाद्रि सृवतर्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यांमिथ्यामाऽऽगमबाधिता ॥ विश्वमिथ्यात्वस्यागमबाधः ॥ २० ॥ छ ॥

॥ छ ॥ सत्वसाधकमानापेक्षयामिथ्यात्वसाधकानुमानानांव्याहत्यादिनादौर्बल्यमित्याह ॥ [१६९।२] किंचेति ॥ एतैःदृश्यत्वजडत्वादिघटितैः । प्रतिज्ञारूपवाक्येनप्रापितस्यमिथ्यात्वरूपसाध्यस्यएवंहेतुरूपवाक्यादिभिःप्रापितानांदृश्यत्वादिलिंगादीनांमिथ्यात्वाबोधनेसर्वमिथ्यात्वासिद्धिरित्यर्थः ॥ [१६९।३] व्याहतिरिति ॥ विमतंमिथ्येतिप्रतिज्ञारूपेणवाक्येनपक्षेमिथ्यात्वंविधीयते । अनुमानप्रयोगेणविश्वमिथ्यात्वंसाधयताविश्वांतर्गतस्यमिथ्यात्वरूपस्यप्रतिज्ञार्थस्यबाधितत्वरूपंमिथ्यात्वंसाध्यतइतिव्याहतिरित्यर्थः ॥ [१६९।४] बाधेति ॥ अनुमानप्रयोगस्यव्याप्त्याद्युपेतत्वेनप्रतिज्ञामात्रापेक्षयाबलवत्त्वेनप्रतिज्ञोपनीतसाध्यापहारेचबाधइत्यर्थः ॥ [१६९।४] स्वरूपासिद्धिरिति ॥ हेतुवाक्योपनीतस्यलिंगस्यअनुमानादपहारेस्वरूपासिद्धिः । एवमुदाहरणवाक्यार्थस्यापहारेव्याप्यत्वासिद्धिरित्यर्थः । ननुमिथ्यात्वसाधकेप्रतिज्ञाद्युपनीतपक्षादीनांमिथ्यात्वसाधनेपिव्याहत्यभावः । प्रतिज्ञादिभिस्तेषांत्रिकालाबाध्यत्वरूपसत्त्वाप्रतिपादनादितिचेन्मैवं । एककालेसत्त्वप्रतिपादकैःप्रतिज्ञादिभिःत्रिकालवृत्यभावप्रतियोगित्वरूपमिथ्यात्वानुमानस्यविरोधएव । एककालेसतोपिकालत्रयेऽसत्त्वाभावादित्युक्तत्वात् । नन्वनुमानप्रयोगेणदृश्यत्वादिहेतूनांमिथ्यात्वसा

धनात्पारमार्थिकसत्वापहारेपिप्रकारांतरेणसाधकतोपयुक्तंसिद्ध्यादिकंभविष्यतीत्यतआह ॥ परमार्थेति ॥ तथाचसाधकत्वस्यप्राक्सत्वघटितत्वात् तदन्यथानुपपत्त्यापरमार्थसत्वमायातीतिमिथ्यात्वानुमानस्यविरोधएवेतिभावः ॥ ह्रदइति ॥ ह्रदेह्यपरोक्षभ्रांतिसिद्धेनधूमेनवह्नेःसिद्धिः । प्रपंचेचापरोक्षभ्रांतिसिद्धेनात्यंतावाधेनपारमार्थिकत्वसिद्धिःस्यादित्यर्थः ॥ वह्नित्वेनेति ॥ तथाचतद्धीमात्रादीनांव्यतिरेकव्यभिचारइत्यर्थः ॥ अमृतत्वेनेति ॥ तथाचतेषामन्वयव्यभिचारइत्यर्थः ॥ लोकप्रसिद्धिरिति ॥ सत्त्वेनलोकप्रसिद्धिरित्यर्थः ॥ इष्टसिद्धीति ॥ गौरोहंनीलंनभइत्यादेरपिसत्त्वेनपामरलोकप्रसिद्धेःसत्त्वात्निरस्तमित्यर्थः ॥ निपुणेनेति ॥ कथायांकुशलेनेत्यर्थः । तादृशबौद्धोक्तानांशून्यमद्वितीयमित्यस्मिन्नर्थेहेतूनामपिप्राश्निकादिभिःत्रिचतुरकक्ष्यास्ववाधितत्वेनज्ञातत्वात्तदुक्तैरपिहेतुभिःशून्याद्वैतस्यापिसिद्धिःस्यादित्यर्थः ॥ यादृश्येति ॥ यादृश्याबुध्यातवनभोनैल्यादिधीव्यावृत्तयाघटादौसत्त्वसिद्धिः तादृग्बुद्धिविषयत्वमेवममसाधकत्वेतंत्रमित्यर्थः ॥ प्रत्यक्षइति ॥ तादृशनिर्दुष्टबुद्धिविषयत्वस्यब्रह्मणिसत्त्वाव्यभिचारित्वेनदृष्टतयालाघवेनचसत्त्वस्यैवसाधकत्वेप्रयोजकत्वादित्यर्थः । सत्यत्वंयथाप्रत्यक्षविषयःतथोक्तंप्राक् ॥ अन्यथेति ॥ योग्यानुपलब्ध्यादिनादोषाभावनिश्चयस्तुश्रुत्यर्थइवप्रत्यक्षेसमइतिभावः ॥ तेनेति ॥ स्वार्थानुमानेपराभावादितिभावः । ननुस्वार्थानुमानाभावेपिपरार्थानुमानंभवतीत्यतआह ॥ परार्थेति ॥ परप्रसिद्धेति ॥ एकतरसिद्धसाधनेनसर्वान्प्रतिसाध्यसिद्धिर्नसंभवति । तदुपायाभावादित्यर्थः । ननुसाध्यसिद्धिरपिनसर्वा

न्प्रति । किंतुयंप्रतिसाधनंसिद्धमस्तितंप्रत्येवेत्यतआह ॥ [१७१।४] नचमिथ्यात्वमिति ॥ [१७१।५] बौद्धेति ॥ परसिद्धसाधनेनपरंप्रतिसाध्यसिद्धावपितवमिथ्यात्वविषयतत्वज्ञानंनस्यात् । बौद्धोक्तसाधनेनबौद्धरीत्याऽऽत्मनोमिथ्यात्वेपित्वांप्रत्यात्मनःसत्यत्ववत्प्रपंचस्यसत्यतैवस्यादित्यर्थः ॥ [१७१।६] मिथ्यात्वस्येति ॥ मिथ्यात्वस्यमिथ्यात्वेतद्बोधकस्यनेहनानेतिप्रमाणस्यत्वदभिमतंतत्वावेदकत्वंनस्यादित्यर्थः । ननुमिथ्यात्वस्यमिथ्यात्वेपितत्वावेदकश्रुतिवेद्यत्वोपपत्तिः । सत्त्वेनसतइवमिथ्यात्वेनमिथ्याभूतस्यापिप्रमाणगम्यत्वाविरोधइतिचेन्मैवं । ब्रह्मबोधकवाक्येनब्रह्मणस्तात्विकत्वसिद्धिरिवमिथ्यात्वबोधकवाक्येनमिथ्यात्वस्यतात्विकस्यैवसिद्धेरुचितत्वात् । मिथ्यात्वबोधकवाक्येमिथ्यात्वस्यचमिथ्यात्वेनबोधनेतादृशपदराहित्येनसामर्थ्याभावाच्च । अन्यथा यजमानःप्रस्तरइतिवाक्यंयजमानस्यप्रस्तरत्वंप्रातिभासिकं प्रातिभासिकत्वेनैवबोधयतीतितत्सिद्धिरित्यादिनागौणार्थतानोच्येतेतिभावः ॥ [१७१।६] योपीति ॥ परान्प्रतिअसिद्धःकृतकत्वादिःस्वयंस्वमतेसिद्धत्वेनाभिधीयते । तत्रपरंहेतुसाधनादिप्रतीकारोभवति । स्वतोसिद्धेतुकाक्रिया नप्रतीकारइत्यर्थः ॥ [१७१।८] अन्योन्याश्रयादिति ॥ व्यावहारिकत्वस्यपारमार्थिकभिन्नत्वस्यप्रपंचेपारमार्थिकत्वसंदेहदशायांअसिद्धेरित्यर्थः । ननुब्रह्मज्ञानेतराबाध्यत्वमेवव्यावहारिकत्वं । तच्चनमिथ्यात्वघटितं । अत्यंताबाध्येब्रह्मज्ञानबाध्येचतुल्यत्वात् । अतएवनेदंपरमार्थसत्त्वव्याप्यंपरमार्थसत्त्वस्यसाधकतायामतंत्रत्वेनतदभावेपिनसाधकत्वानुपपत्तिरितिचेन्मैवं । एतदपेक्षयाऽबाध्यत्वस्यैवसाधकत्वेप्रयोजकत्वौचित्यात् । ब्रह्मणोवृत्तिव्याप्यत्वाभावपक्षेजगतोपिब्रह्मज्ञानेतरबाध्यत्वेनतदितराबाध्यत्वस्यत्वन्मतेजगत्यसिद्धेश्च । शुक्तिज्ञानस्यापिब्रह्मज्ञानत्वेनतदितराबाध्यत्वस्यत्वन्मतेशुक्ति

रजतेसत्त्वेनतस्यापिव्यावहारिकत्वापाताच्च । संगृह्णाति ॥ [१७३।२]तथाचेति ॥ व्यावहार्यमबाध्यत्वादिरूपं ॥ [१७३।३]नचेदिति ॥ सत्त्वे नव्यवहारमात्रस्यव्यावहारिकत्वेऽसतःसाधकत्वांगीकारात् । तस्यचदूषितत्वादित्यर्थः ॥ [१७३।३]तस्मादिति ॥ यन्नास्तिशशशृंगादि तन्नास्त्येव । यत्तुवियदाद्यस्तितत्परमार्थतएवास्ति । तस्मात्तत्सत्यमेव । अन्यत्शशशृंगादिकंमिथ्यैव । एवंस्थितेसत्येद्वैविध्यं पारमार्थिकत्वव्यावहारिकत्वरूपंनकल्पनीयं । प्रमाणाभावात् । मिथ्याइत्यस्यसांवृतमित्यस्यचशब्दस्यतुल्यार्थत्वेपिद्वैविध्यक ल्पनारूपोयमुपन्यासःकेवलंस्वशिष्यवंचनार्थमेव । यथालालावक्रासवादिनावालावंच्यंतइत्यर्थः । व्यावहारिकसत्त्वस्यसा धकतायांप्रयोजकत्वेसाक्षिणिव्यतिरेकव्यभिचारमाह ॥ [१७३।५]अज्ञानादेरिति ॥ सिद्धिपर्यंतसाधकइत्यनेनरजतादिसाधकाभासा द्वैषम्यमाचष्टे । व्यभिचारमुद्धरति ॥ [१७३।६]नचेति ॥ अविद्याकाराविद्यावृत्तिःजायते । तस्यांप्रतिबिंबितएवसाक्षीअविद्यादिकं साधयति । सचव्यवहारिकइतिनव्यभिचारइतिभावः ॥ [१७३।१]चैत्ररागइति ॥ चैत्रेच्छास्वविषयकंयदनित्यज्ञानंतदतिरिक्तेनप्र त्यक्षेणसंवेद्या । प्रत्यक्षत्वस्यज्ञानत्वाघटितत्वान्नवैयर्थ्यं । ईश्वरज्ञानवेद्यत्वेनसिद्धसाधनवारणायतत्पदंचैत्रपरं ॥ [१७३।२]अज्ञानेति॥ अज्ञानाद्याकारवृत्तिविलंबेनतज्ज्ञानविलंबादित्यर्थः ॥ [१७३।२]अविद्यावृत्तिमिति ॥ अनवस्थाभयादितिभावः ॥ [१७३।३]साक्षिगतेति ॥ अज्ञानस्वरूपसिद्धौतदधीनंसाक्षिणःसाधकत्वं तस्यसाधकत्वेचाज्ञानस्यप्रातीतिकंसत्वमित्यन्योन्याश्रयइत्यर्थः ॥ [१७३।४]एतेनेति ॥ संतःसाक्षिणएवसाधकत्वेनेत्यर्थः ॥ [१७३।५]नापीति ॥ क्वचित्पारमार्थिकसत्ताक्वचिद्व्यावहारिकीक्वचित्प्रातिभासिकीतिसत्तात्रयमपि

विकल्पेनकारणमित्यर्थः ॥ [१७३।५] अननुगमादिति ॥ व्यभिचारादित्यर्थः । ननुतृणजन्यवह्नेःसकाशात् मणिजन्यवह्नेःवैजात्यवत् इहापिकार्यवैजात्यकल्पनान्नव्यभिचारइत्याशंक्यपरिहरति ॥ [१७३।५] प्रयोज्यइति ॥ [१७४।१] अपरमार्थेति ॥ तथाचसतएवसाधकत्वं न त्वसतोपीतिभावः ॥ [१७४।३] विरोधादिति ॥ अबाध्यत्वादिरूपस्यसत्त्वस्यबाध्यत्वादिरूपमिथ्यात्वाश्रयेमृषार्थेवृत्तिर्नसंभवति । स्वाभाववतिस्ववृत्तेर्विरोधादित्यर्थः । ननुमृषार्थेनबाध्यत्वादिरूपंमिथ्यात्वंकिंत्वन्यदेव । तथाचमृषार्थेप्यबाध्यत्वादिरूपंसत्वसामान्यंभविष्यतीत्यतआह ॥ [१७४।३] अपरमार्थसतइति ॥ अबाध्यत्वादिरूपसत्वाविरोधिनोपारमार्थिकत्वस्यपारिभाषिकत्वापत्त्याअपरमार्थसतोपिवस्तुतोपरमार्थसद्विशेषत्वात् तत्रसद्वैलक्षण्यंनस्यादित्यर्थः ॥ [१७४।५] ब्राह्मण्यामिति ॥ एतच्चात्यंतापकर्षसूचनाय ॥ [१७४।६] निषेधस्यत्विति ॥ प्रतिलोमजानांयज्ञादावनधिकारबोधकस्येत्यर्थः ॥ [१७४।७] तत्फलस्येति ॥ अद्वैतसाक्षात्कारफलस्य पारमार्थिकस्यसिद्धिःस्यादित्यर्थः । पारमार्थिकस्येतिद्वैतादिषुसंबंधनीयं । नचयत्रयत्साधकंव्यावहारिकंतत्रतत्व्यावहारिकं । यत्रतुसाधकंप्रातीतिकं तत्फलमपितथैव नतुव्यावहारिकमितिवाच्यं । प्रातिभासिकेनापिसवितृसुषिरादिनास्वाप्नपदार्थे नचव्यावहारिकस्यानिष्टस्यशुभस्यचसिद्धेस्त्वदभिमतत्वात् ॥ [१७४।९] धर्मीति ॥ यादृशसत्त्ववान्धर्मीतत्रतादृशसत्ववान्हेतुःसाध्यसाधकः । अतोनासिध्यादिरित्यर्थः ॥ [१७४।९] गौरवादिति ॥ सत्येद्वैविध्याभावेनसतएवलाघवेनसाधकत्वात् । धूमाभासेनपारमार्थिकवह्नेःसिद्धिःस्यादित्यत्रपरिहारंशंकते ॥ [१७४।९] नन्विति ॥ [१७५।१] बहुलेति ॥ यथाधूममात्रेनवह्निव्याप्तिः किंतुबहुलत्वोर्ध्वत्वादि

युक्ते । तथाआभासधूमेपिनव्याप्तिः किंतुआभासभिन्नइत्यर्थः ॥ [१७५।३] अस्याइति ॥ असतःसाधकतायांस्वरूपयोग्यत्वे असतः कार्यादर्शनात् व्याप्त्यादिसहकारिवैकल्यकल्पनायाइत्यर्थः ॥ [१७५।३] अन्योन्याश्रयादिति ॥ दृश्यत्वादेरसतःसाधकतायांपरेणो क्तायांचधूमाभासाद्वह्निसिद्धेरभावात्व्यभिचारइतिप्रत्युक्तायांधूमाभासेव्याप्तिप्रयोजकस्याभासविवेकस्याभावात् नवह्निसा धकत्वं । अतोनव्यभिचारइतिकल्पनं । अव्यभिचारेचक्लृप्तेआभासविविक्तत्वंविशेषणमितिअन्योन्याश्रयइत्यर्थः ॥ [१७५।३] आभा सेपीति ॥ तथाचव्यर्थमाभासविविक्तत्वंविशेषणं धूमाभासेव्यभिचारःतदवस्थएवेतिभावः ॥ [१७५।३] प्रकृतेपीति ॥ यथाह्रदादा वारोपितेधूमेनव्याप्तिः किंत्वाभासविविक्तेपर्वतवृत्तिधूमेव्याप्तिः एवंदृश्यत्वेपिब्रह्मण्यारोपितेनव्याप्तिरितिव्याप्तिसिद्ध्यर्थमेव प्रपंचदृश्यत्वस्यसत्त्वंस्वीकर्तव्यमित्यर्थः । साधकत्वार्थंसाधकत्वोपयुक्तव्याप्त्याद्यर्थंवादृश्यत्वादेःसत्त्वमावश्यकमितिभावः ॥ [१७५।४] हेत्वादीति ॥ तथांचसिद्ध्यसिद्ध्यादिविभागायवास्तवहेतुसत्त्वासत्त्वयोरेववक्तव्यत्वादित्यर्थः । ननुवंध्यासुतोनवक्ता अत्यं ताभावप्रतियोगित्वादित्यादौअसतोपिसाध्यसाधनंप्रत्याश्रयत्वदर्शनान्मिथ्यात्वानुमानेनबाधितानामपिपक्षहेत्वादीनांसाध्य व्याप्त्यादीन्प्रत्याश्रयत्वंभविष्यतीत्याशंक्यनिराकरोति ॥ [१७५।५] आश्रयादेरिति ॥ आदिशब्देनपक्षसाध्यसंसर्गादेःयथोचितस्य ग्रहणं ॥ [१७५।५] तुच्छइति ॥ असद्वैलक्षण्यघटितस्यंप्रातिभासिकत्वस्यतुच्छेअभावादित्यर्थः ॥ [१७५।६] गौरवादिति ॥ सत्त्वद्वैविध्यकल्प नमनादृत्यसत्त्वमात्रस्यैवसाधकत्वप्रयोजकत्वेलाघवादितिभावः । नन्वस्तुतत्त्वमेवप्रयोजकंतत्राह ॥ [१७५।६] व्यावहारिकेति ॥ स

त्वानेकत्वमतेसत्त्वस्यव्यक्तिरूपत्वेनाननुगमादित्यर्थः ॥ अतिगौरवादिति ॥ उक्तसत्त्वापेक्षयेत्यर्थः ॥ अन्यथेति ॥ लघू
निसंभवेपिगुरुणोंऽगीकारइत्यर्थः ॥ किंचेति ॥ असतोज्ञानजनकत्वरूपोयोर्थः ससदेवसाधकमितिब्रुवाणंमांप्रतिनसिद्धइति
त्वयासाधनीयइत्यर्थः । नन्वसतोज्ञानजनकत्वमसतैवसाधनीयं । नचप्रतिवादिनंप्रत्यसिद्धिः । असतोज्ञानजनकत्वसाधन
स्याप्यसदंतरेणप्रतिवादिनंप्रतिसाधनादित्यतआह ॥ अनवस्थानादिति ॥ ननुसतःसाधकत्वमपिविप्रतिपन्नत्वात्साधनीयं ।
तत्साधनंचनसता मांप्रत्यसिद्धेः । नाप्यसता तवासिद्धेरित्याशंक्यपरिहरति ॥ नचेति ॥ तथाचसंतःसाधकत्वमुभयसं
मतमित्यर्थः ॥ उक्तंहीति ॥ साक्षिणाअज्ञानादिसिद्धिमिच्छता तेनमायावादिना सतःसाधकत्वंस्वीकृतमेव । तच्चपरंनसं
भवति । अविशेषस्य सर्वशक्तिरहितस्य । साध्यसाधकत्वायोगाच्छून्यवदित्यर्थः ॥ औत्सर्गिकेति ॥ धूमादिग्राहकज्ञानस्य
उत्सर्गतःप्रमाणत्वात् । प्रामाण्यस्यचस्वार्थसत्त्वपर्यंतत्वात् । प्रमाणसिद्धानांधूमादीनांसाधकत्वस्यसत्साधकत्वेपर्यवसानादि
त्यर्थः ॥ स्वच्छायेति ॥ स्वकीयाच्छायायथास्वेनउल्लंघितुंनशक्यते तथाधूमस्यसाधकत्वंनतुवाष्पारोपितधूमस्येत्येवंलोकसि
द्धंयत्सतःसाधकत्वंअसतश्चासाधकत्वंतदप्युल्लंघितुंनशक्यतइत्यर्थः । ननुलोकेऽसतःसाधकत्वंनास्तीतिप्रसिद्धिः सतींसिद्धि
माश्रित्य । मयातुअसतीसिद्धिरुच्यतइतिनममलोकमर्यादोल्लंघनमित्यतआह ॥ नचेति ॥ अन्योन्याश्रयादिति ॥ असतः
साधकत्वेसिद्धेलोकप्रसिद्धेर्विषयांतरपरत्वं । लोकप्रसिद्धेर्विषयांतरपरत्वेचतद्विरोधाभावात् । असतोपिसाधकत्वंसिध्यती

त्यन्योन्याश्रयइत्यर्थः ॥ [१७६।६]अन्यथेति ॥ लोकमर्यादातिक्रमइत्यर्थः ॥ [१७६।६]प्रतीतिरिति ॥ असच्चेन्नप्रतीयेतेतिप्रतीत्यारजतस्यवि
यदादेश्चासद्वैलक्षण्यंसाध्यते तन्नस्यात् । रजतादिप्रतीतेःलोकमर्यादासिद्धायाअप्यत्यंतासत्त्वस्यवक्तुंशक्यत्वादित्यर्थः ॥
[१७७।१]सल्लक्षणेति ॥ सतोयल्लक्षणंपक्षवृत्तित्वंव्याप्तिमत्त्वमित्यादि । तच्चधूमेस्ति । नतुतदाभासइत्यर्थः ॥ [१७७।२]हेत्विति ॥ हेतोरसत्त्वे
ऽसिध्यापातेनासल्लक्षणयोगित्वमेवस्यात् । एवंव्याप्त्यादावपि । असतिहेत्वादौविद्यमानस्यतस्यसल्लक्षणत्वायोगाच्चेत्यर्थः ॥
[१७७।३]तद्वदेवेति ॥ स्वप्नदृष्टधूमादिनावास्तववह्निसिद्धिविरहवदित्यर्थः ॥ [१७७।३]अपरमार्थेनेति ॥ सवितृसुषिरादिष्वपितज्ज्ञानस्यसत
एवसाधकत्वमितिअनुपदमेववक्ष्यमाणत्वादित्यर्थः ॥ [१७७।५]लोकस्यापीति ॥ सदसतोःसाधकत्वासाधकत्वरूपलोकव्यवहाराति
क्रमेविचारस्यदैववशसंपन्नवनस्थवेणुनिःसृतनिस्वनतुल्यत्वंस्यादित्यर्थः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्याया
मृततरंगिण्यांअसत्साधकंबाधनं ॥ ७ ॥ असतःसाधकत्वेबाधकविवरणं ॥ २१ ॥७॥ उभयसिद्धेसद्विविक्तेसाधकत्वदर्शनात्
पारमार्थिकसत्त्वस्यसाधकतायांअप्रयोजकत्वमितिशंकते ॥ [१७७।६]नन्विति ॥ [१७७।७]प्रतिबिंबस्येति ॥ अयंदेशोबिंबवान्उचितस्थलेप्र
तिबिंबवत्त्वात्इत्यादिक्रमेणबिंबानुमापकत्वंप्रतिबिंबेदृष्टमितिसंबंधः ॥ [१७७।७]लौहित्यंचेति ॥ नचलौहित्यंस्फटिकेनमिथ्याकिंतुध
र्ममात्रप्रतिबिंबइतिपृथगुदाहरणानुपपत्तिरितिवाच्यं'। धर्मिभूतमुखादिनैरपेक्ष्येणतद्धर्मभूतरूपादिप्रतिबिंबादर्शनात् । लौहि
त्येस्फटिकस्यारोपेतस्यप्रतिबिंबत्वंस्फटिकेलौहित्यारोपेणतु तस्यमिथ्यात्वमित्यंगीकाराच्च । स्फटिकमणेरेवोपधाननिमित्तोलो

हितिमेतिलोहितिम्नोमिथ्यात्वंदर्शितंप्रतिविंवस्यसत्त्वमंगीकृत्यपंचपादिकायामित्याशयः ॥ [१७८।३]प्रतिबिंबेति ॥ नचप्रतिविंवस्यविं
वात्मनासत्त्वेपिप्रतिविंबाकारेणासत्त्वमितिवाच्यं । तयोरभेदेविंवाकारातिरिक्तस्यप्रतिविंबाकारस्याभावात् ॥[१७८।३]सत्यत्वादिति॥
स्वच्छदर्पणादिषुप्रतिफलनेनपरावृत्तानयनरश्मयोग्रीवास्थमुखेनसंवद्धास्तदेवगृह्णंति । तत्रैवदर्पणस्थत्वग्रीवास्थमुखभिन्नत्वा
दिकंचारोपयंति । यथोक्तं । दर्पणाभिहताद्दृष्टिःपरावृत्यस्वमाननं । व्याप्नुवंत्याभिमुख्येनव्यत्यस्तंदर्शयेन्मुखमिति । लिंगलिं
गिभावस्तुवृक्षशिंशुपादिवदितिपरैरंगीकारादित्यर्थः ॥ [१७८।३]ज्ञानमेवेति ॥ तच्चसत्यमित्यर्थः । ननुस्वाप्नकामिन्यादेःसुखहेतुत्वद
र्शनात् स्वप्नपदार्थस्यसाधकत्वंनतुतज्ज्ञानस्येत्यतआह ॥ [१७८।३]अन्वयेति ॥जाग्रत्यन्वयव्यतिरेकाभ्यांतज्ज्ञानस्यसुखहेतुत्वदर्शनात्स्व
प्नेपितथात्वंकल्प्यतइत्यर्थः ॥ [१७८।४]लौहित्यस्यापीति ॥ लोहितिमविशिष्टजपाकुसुमस्यतदवयवसमुदायस्येत्यर्थः । तेनधर्मिभूत
मुखादिनैरपेक्ष्येणतद्धर्मरूपादेःनीरूपस्यप्रतिविंवोनदृष्टचरइतिचोद्यानवकाशः । ननुप्रतिविंवस्याव्याप्यवृत्तित्वनियमाल्लौ
हित्यस्यस्फटिकेव्याप्यप्रतीतिरयुक्ता । प्रतिविंवस्याभिमुख्यप्रतीतिनियमेनलौहित्यस्या(स्य)तिर्यक्प्रतीतिरप्ययुक्तेतिचेत् मैवं ।
प्रतिविंवस्यानेकविधत्वात् । अतएवगगनस्थितसवितुःस्वच्छदर्पणादौव्यत्यस्तेनापिदर्शनं । तस्यचतवमतेपिप्रतिविंवत्वात् ।
नेक्षेतोद्यंतमादित्यंनास्तंयंतंकदाचन । नोपरक्तंनवारिस्थंनमध्यंनभसोगतमितिनभःस्थादित्यस्यैवउद्यत्त्वादिविशेषणवद्वारिस्थ
त्वेनापिविशेषणाच्च ॥ [१७८।४]रेखेति ॥ लिपिभेदेनरेखाभेदग्रहेपिवर्णाभेदानुभवादितिभावः । नन्वाशैशवंरेखायामयंककारोयंगकार
इत्यभेदानुभवाहितदृढतरसंस्कारवशान्नारोपनिवृत्तिः । अतएवककारंपठतिलिखतिचेतिसार्वलौकिकोव्यवहारइतिचेत् मैवं ।

दृढतरभेदप्रत्ययेनरेखावर्णयोर्नाभेदारोपः किंतुकर्दमलेपनेसतिकृष्णंवस्त्रप्रमितिवदुपचारमात्रत्वात् ॥ दीर्घ[१७८।६]ध्वनीति ॥ ननुध्व
नीनामस्फुरणेपिदीर्घोवर्णइत्यादिप्रत्ययात् नदीर्घध्वनिसाहित्यरूपंवर्णेषुदीर्घत्वमितिचेत् न । ध्वन्यग्रहेदीर्घत्वग्रहासिद्धेः ।
तवापिदैर्घ्यारोपार्थंध्वनेरावश्यकत्वात् योग्यत्वाच्चतद्ग्रहोपपत्तेः । ननुशीतलंशिलातलंसुरभिजलमितिवत् उपाध्यग्रहेपिदीर्घ
त्वभ्रमोभविष्यति । नचयोग्यत्वात्तद्ग्रहः । तथापितन्नियमाभावादित्यतआह ॥ [१७८।६]तद्व्यक्तेति ॥ वस्तुतोदीर्घोयोध्वनिःतद्व्यक्तं
यद्रूपंतदेवदीर्घत्वमित्यर्थः ॥ [१७८।८]सत्यंज्ञानमिति ॥ यथाचसर्वज्ञानस्यसत्यत्वंतथावक्ष्यते ॥ [१७९।२]निरस्तमिति ॥ चक्षुरादेःसाधक
त्वेक्षुसेरसादिषुतदभावेनयोग्यत्वायोग्यत्वेकल्प्येते । असतस्तुसर्वसामर्थ्यविधुरस्यकुत्रापिसाधकत्वादर्शनात् सतएवतत्कल्प्य
तइतिविशेषः । ननुसाधकतावच्छेदकरूपवत्त्वमेवसाधकतायांप्रयोजकंनत्वारोपितत्वं अनारोपितत्वंवेतिचेत् न । आरोपि
तार्थांगीकारेदंडत्वादिसाधकतावच्छेदकस्यतत्रापिसत्त्वेनतद्व्यावृत्त्यर्थमनारोपितत्वस्यापिसाधकतायांप्रयोजकत्वात् । वक्ष्यमा
णरीत्येतिपूर्वमुक्तमुपपादयति ॥ [१७९।४]सवित्रिति ॥ नन्वर्थस्यहेतुत्वेसंभवति नतज्ज्ञानेहेतुत्वंकल्प्यमित्यतआह ॥ [१७९।५]सत्यपीति ॥
[१७५।५]अनुमितिंप्रतीति ॥ प्रमानुमितिंप्रतीत्यर्थः ॥ [१७९।६]थ्यादीति ॥ अतद्गुणसंविज्ञानबहुव्रीहिणाअबाधितत्वमित्यर्थः ॥ [१७९।६]हेत्वा
दीति ॥ अत्राप्यबाधितत्वंहेतुर्नस्यादित्यत्रतात्पर्यं ॥ [१७९।६]तज्ज्ञानेति ॥ अबाधितत्वज्ञानस्येत्यर्थः । तथाचहेत्वाभासव्यावृत्त्यर्थं
अबाधितत्वप्रमायाअनुमितिप्रमांप्रतिप्रयोजकत्वेप्रमात्वघटकस्याबाधितत्वरूपस्यार्थस्यापितत्प्रयोजकत्वमितिभावः । यथाश्रुते

रूपप्रागभावविशिष्टेघटेऽन्याप्त्यादिमल्लिंगजन्यायाअपिअनुमितेःप्रमात्वाभावादसंगतिःस्यादितिबोध्यं । ननुसर्पादिजन्याभया
दिरूपार्थक्रियाकथमसर्पात्तज्ज्ञानात्स्यादतआह ॥ सत्येति ॥ अभिसर्पणेति ॥ भयादिकंतुनसर्पार्थक्रिया सन्निहितेपिसर्पे
तमज्ञानानस्यभयाभावादितिभावः ॥ अतिप्रसंगइति ॥ सर्पाभावज्ञानस्यापिभयहेतुत्वप्रसंगइत्यर्थः ॥ अवच्छिन्नस्येति ॥
अवच्छिन्नस्यज्ञातत्वेअवच्छेदकस्यापिज्ञातत्ववत् अवच्छिन्नस्यहेतुत्वेअवच्छेदकस्यापिहेतुत्वमित्यर्थः ॥ घटस्येति ॥ घटदेश
कालौगृहीत्वातद्भिन्नदेशकालत्वंतदत्यंताभावध्वंसयोर्ग्राह्यं । घटस्यापितद्देशकालभिन्नदेशकालत्वंव्याहतंस्यादित्यर्थः॥घटेति॥
नचघटज्ञानस्यघटेच्छाद्वाराघटजनकत्वेइष्टापत्तिः । तस्यघटकृतावन्यथासिद्धत्वेनघटजनकत्वेमानाभावादितिभावः ॥ ब्रह्मण
इति ॥ ब्रह्मणोवेदांतसाध्यत्वेनित्यत्वविरोधादित्यर्थः ॥ घटंप्रतीति ॥ अस्यवक्ष्यमाणेनहेतुत्वेपीत्यनेनसंबंधः ॥ विहित
निषिद्धकरणाभावयोरिति ॥ विहितकरणाभावस्यप्रत्यवायंप्रतिनिषिद्धकारणाभावस्यचआदिपदार्थप्रत्यवायाभावंप्रतीत्य
न्वयः ॥ अवच्छेदकस्यघटस्येति ॥ घटप्रागभाववत्घटस्यघटजनकत्वेघटतत्प्रागभावयोःसमानकालत्वापत्तिः । तत्प्रागभा
वकालवृत्तित्वस्यतत्पूर्वत्वात् । कारणत्वस्यचतत्पूर्वत्वरूपत्वादित्यर्थः ॥ विशेषदर्शनस्यविहितनिषिद्धकारणयोरिति ॥
विशेषदर्शनादेर्भ्रमादौहेतुत्वेप्रतियोगितदभावयोःसहावृत्त्याभ्रमप्रत्यवाययोरनुत्पत्तिप्रसंगः ॥ स्वर्गस्येति ॥ कामनावत्काम
नाविषयस्यापियागजनकत्वेतस्येच्छावत् प्राक्सत्तापत्त्यातत्कामनैवव्याहन्येत । सिद्धेइच्छाविरहादित्यर्थः ॥ अतीतादेरिति॥

अतीतस्यजनकत्वेकार्याव्यवहितपूर्वसमयेस्वस्वव्याप्यान्यतरसत्त्वापत्तिः ॥ [१८०।७] अत्यंतेति ॥ असतोजनकत्वेनिःस्वरूपत्वव्या
घातः ॥ [१८०।७] घटस्येति ॥ चिकीर्षितघटज्ञानवत्घटस्यघटहेतुत्वेपूर्ववत्घटतत्प्रागभावयोःसमानकालत्वापत्तिः ॥ [१८०।८] उदासीनस्व
भावस्येति ॥ ननुवृत्त्युपहितस्यैवब्रह्मणोवृत्तिविषयत्वं । तस्यचाज्ञाननिवर्तकत्वमस्त्येवेतिचेत् । न । वृत्तेःस्वविषयत्वेस्वप्रका
शत्वस्यअप्रमात्वस्यचापातेनशुद्धब्रह्मणएववृत्तिविषयत्वौचित्यादित्युक्तत्वात् ॥ [१८०।८] ब्रह्मणइति ॥ ब्रह्मणोजगत्प्रतिपत्तिपरिणा
मिकारणत्वेजगतिजडत्वोपलंभानुपपत्तिः ॥ [१८१।१] तटस्थ्येनेति ॥ उपलक्षणत्वेनेत्यर्थः । ननुविशेषणत्वेसंभवत्युपलक्षणत्वायोगः
विशेषणत्वबाधपूर्वकत्वादुपलक्षणत्वकल्पनायाः अन्यथादंडीप्रैषानन्वाह लोहितोष्णीषाऋत्विंजःप्रचरंतीत्यादावपिदंडलौहि
त्यादेःउपलक्षणत्वापत्त्यादंडाद्यभावेप्रैषाद्यनुवचनापत्तिः । सर्वादीनिसर्वनामानीत्यत्रसर्वशब्दस्यसर्वनामसंज्ञानस्यात् ।
जन्माद्यस्ययतइत्यत्रजन्मनोब्रह्मलक्षणत्वंनस्यात् । विशेषणार्थत्वेनतद्गुणसंविज्ञानबहुव्रीहिसंभवेप्युपलक्षणार्थत्वेनातद्गुणसं
विज्ञानबहुव्रीहिस्वीकारप्रसंगाच्च । एवमसिपाणयःप्रवेश्यंतामित्यादिलौकिकप्रयोगेपि । प्रतिविंबादिज्ञानानांजनकत्वेचविशे
षणतयाप्रतिविंबादीनामपिजनकत्वेबाधकाभावात्नोपलक्षणत्वपक्षोयुज्यते । उदाहृतस्थलेतुसर्वत्रबाधकमस्त्येवेतिनविशेष
णत्वमितिचेत् मैवं । धूमाभासादौसाधकत्वाभावस्यसार्वजनीनत्वेनप्रकृतेपिबाधकसत्वात् । तथाहि । सर्पज्ञानादावसतिभ
याद्यभावात् सतिसर्पज्ञानेभयादिदर्शनात् सर्पज्ञानस्यहेतुत्वेस्थितेज्ञानजन्येषुकार्येषुतद्विषयस्योपलक्षणत्वमेवनतुविशेषणत्वं।
व्याघ्र्यादिज्ञानेतथाऽवधारणात् । नचतत्रव्याघ्र्यादेरपिहेतुत्वात् स्वज्ञानंप्रतितस्यविशेषणत्वमितिवाच्यं । व्याघ्रिभ्रमादनु

मित्यभावापत्तेः । नचतत्रापिव्याप्तिरनिर्वचनीयास्त्येवेतिवाच्यं । अतींद्रियव्याप्तिभ्रमेतदभावात् । नचातींद्रियभ्रमेप्यर्थो त्पत्तिरस्त्येव । अन्यथातत्रान्यथाख्यातेरसत्ख्यातेर्वाप्रसंगइतिवाच्यं । अस्तुतावदिदंतथाप्यतीतत्वेननिश्चिताद्धूमादेर्ज्ञानाद नुमितिर्नस्यात् । नहितत्राप्यर्थउत्पद्यते अतीतज्ञानस्यभ्रमत्वाभावात् । विशेषदर्शनस्यसत्त्वात् । तस्माद्यत्रज्ञानस्यहेतुत्वंन तत्रंतद्विषयस्यहेतुत्वं । गौरवात् । दंडीप्रैषानन्वाहेत्यादौतदस्यास्त्यस्मिन्निितिमतुवितिमतुप्प्रत्ययस्यवर्तमानत्वरूपास्तित्वेवि धानात् श्रौतमेवविशेषणत्वं । लोहितोष्णीषाऋत्विजइत्यादावपिमतुपासमानार्थत्वाद्बहुव्रीहेःश्रौतमेवविशेषणत्वं । सर्वादी निसर्वनामानीत्यत्रजन्मांद्यस्ययतइत्यत्रचक्रियान्वितसमस्यमानपदार्थकत्वरूपमुख्यसमासस्यतद्गुणसंविज्ञानस्यसंभवेनानेवंवि धस्यातद्गुणसंविज्ञानस्यानाश्रयणात् । वक्ष्यतेचैतत्स्वप्रकाशत्वभंगे । तस्मात्सर्पज्ञानादौकारणेनसर्पादेर्विशेषणत्वंबाधकव शादेव । किंतुक्षेत्रेकुरूणामिवताटस्थ्येनोपलक्षणत्वं । तस्यगुणभूतस्यापिसम्यग्विज्ञानंयस्माद्भवतिसःतद्गुणसंविज्ञानः । सम्य क्त्वंचविशेष्यक्रियान्वयिन्यन्वयित्वंनोपलक्षणत्वं । ननुतथाप्यसतःसर्पादेर्हेतुत्वंभयादौवाच्यं । तदुत्कर्षेणतदुत्कर्षात् । त थाहि । स्वप्नेजागरेचोत्कृष्टकलधौतदर्शनादुत्कृष्टसुखं उत्कृष्टसर्पादिदर्शनाच्चोत्कृष्टभयादिदृश्यते । विषयस्याकारणत्वेतदुत्क र्षानुविधानंकार्येनस्यात् । नह्यकारणोत्कर्षःकार्यमनुविधत्तइतिन्यायात् । नचज्ञानप्रकर्षादेवतत्रप्रकर्षः । ज्ञानेपिविषयगतं प्रकर्षंविहायान्यस्यप्रकर्षस्याभावात् । नचज्ञानगतजातिरेवप्रकर्षः । चाक्षुषत्वादिनासंकरप्रसंगात् । विषयप्रकर्षेणैवोपपत्तौ चाक्षुषत्वादिव्याप्यनानाजात्यंगीकारेगौरवान्मानाभावाच्चेतिचेन्न । दोषोत्कर्षेणज्ञानोत्कर्षोपपत्तेः । दृश्यतेहिपित्तादिदोषो

त्कर्षात् भ्रमोत्कर्षः । तस्मान्नासतोभयादौहेतुत्वं । संगृह्णाति ॥ [१८।१२] तथाचेति ॥ सर्पपूर्वकंसर्पादिकं ॥ [१८।१२] फलेति ॥ स्वर्गेच्छासाध्येयागादौस्वर्गादिफलस्ययथानकारणत्वमित्यर्थः ॥ [१८।१३] अर्थापीति ॥ सर्पज्ञानेकार्येभयादौसर्पादिहेतुत्वाभावेपीत्यर्थः ॥ [१८।१३] सत्यपीति ॥ तथाचव्यावृत्तिधीजनकत्वरूपंव्यावर्तकत्वंव्यावर्तकत्वेनसंमतेदंडादौनास्तीतिव्यावृत्तिधीहेतुधीविषयत्वरूपमेवव्यावर्तकत्वंवाच्यमित्यर्थः ॥ [१८।१३] नन्वन्यथापीति ॥ ज्ञानस्यभयादिजनकत्वेसर्पाद्यवच्छिन्नत्वमेवकारणतावच्छेदकंवाच्यं । ज्ञानत्वेन ज्ञानजनकत्वेतिप्रसंगात् । तथाचमिथ्यार्थावच्छिन्नत्वाकारेणज्ञानस्यमिथ्यात्वात् भ्रमस्थलेज्ञानमात्रस्यजनकत्वेपिमिथ्याभूतस्यजनकत्वमागतमेव । जनकतावच्छेदकरूपेणचमिथ्यात्वेरूपांतरेणसत्त्वमप्यसत्त्वान्नातिरिच्यते । अनुपयोगात् । तदुक्तंखंडने । अन्यदासत्त्वंतुपांटच्चरलुंटितेवेश्मनियामिकजागरणवृत्तांतमनुसरतीति ॥ [१८।१४] तुच्छेति ॥ असत्सर्पावच्छिन्नज्ञानेयद्यसत्त्वं तर्हितुच्छावच्छिन्नेतुच्छज्ञानेतुच्छाद्वैलक्षण्येचतुच्छत्वंस्यात् । एवंप्रातिभासिकवैलक्षण्यादौज्ञेयं । ननुनावच्छिन्नावच्छेदकयोः सर्वत्रसारूप्यं । प्रकृतेचावच्छेदकइवावच्छिन्नेपिमिथ्यात्वप्रयोजकस्यतुल्यत्वेनसारूप्योपपत्तिरितिचेन्न । मिथ्यात्वप्रयोजकस्य बाधादेरर्थेसत्त्वेपितदवच्छिन्नेअभावात् । दृश्यत्वादेस्तुमिथ्यात्वंप्रत्यप्रयोजकत्वात् ॥ [१८।१७] तत्रेति ॥ तुच्छज्ञानादौअसदादीनांतुच्छादीनांताटस्थ्येउपलक्षणत्वेसर्पज्ञानादावपिविषयउपलक्षणमस्त्वित्यर्थः ॥ [१८।२१] अर्थानवच्छिन्नमिति ॥ एवंचावच्छेदकस्यमिथ्यात्वेतदवच्छिन्नस्यापिमिथ्यात्वादिचोद्यानवकाशइत्यर्थः । ननुविषयातिरिक्तस्यावच्छेदकस्यज्ञानेऽभावात् विषयस्यावच्छेद

कस्यत्वयानंगीकारात् ज्ञानमात्रमेवभयादौहेतुरित्यंगीकृतंस्यात् । तथाचसर्पाभावज्ञानमपिभयादौहेतुःस्यादित्याशंक्यनिराक
रोति ॥ विषयावच्छेदकमिति ॥ स्वरूपातिरिक्तेति ॥ विषयतत्संबंधयोर्ज्ञानेनसहद्विष्ठसंबंधस्यस्वरूपातिरिक्तस्याभावा
दित्यर्थः ॥ असंबद्धस्यचेति ॥ विषयस्यतत्संबंधस्यचज्ञानेनासंबद्धस्यज्ञानंप्रत्यव्यावर्तकत्वादित्यर्थः ॥ संबंधांतरमिति ॥
घटसंयुक्तेपटेस्वरूपसंबंधत्वंमाभूदितिसंबंधांतरमंतरेणेत्युक्तं । आत्मविषयकज्ञानेनात्मनःस्वरूपसंबंधेऽव्याप्तिवारणायोद्देश्य
प्रतीतिनिर्वाहकेतिसंबंधांतरविशेषणं । संयोगादिश्चनविषयत्वादिप्रतीतिनिर्वाहकः । अतोनोक्तदोषः । घटवद्भूतलस्यचत्वरी
याभावेनस्वरूपसंबंधत्वंमाभूदितिविशिष्टप्रत्ययजननेति । विशिष्टप्रत्ययाजनकेअतींद्रियाभावरूपेस्वरूपसंबंधेऽव्याप्तिवारणा
ययोग्येति ॥ ज्ञानमात्रेति ॥ परोक्षापरोक्षज्ञानानुगतःज्ञानेतरव्यावृत्तोधर्मइत्यर्थः ॥ तर्हीति ॥ उक्तसंबंधस्यविषयानिरू
प्यत्वादित्यर्थः ०। नन्वाद्येपक्षेतत्तज्ज्ञानस्वरूपाणामननुगतत्वेनसर्वसर्पज्ञानसाधारण्याभावात् सर्पज्ञानत्वावच्छिन्नस्यासर्पज्ञा
नात्व्यावृत्तिंप्रतिनप्रयोजकत्वं । द्वितीयेतादृशसर्पज्ञानमात्रेधर्मोनजातिरूपः । प्रत्यक्षत्वानुमितित्वादिनासंकरप्रसंगात् । किं
तूपाधिरूपः । सचस्वरूपसंबंधेनाध्यासिकसंबंधेनवासंबंधिभूतविषयादन्योनभवति । मानाभावादितिचेन्मैवं । नतावदाद्यो
दोषः । तत्तज्ज्ञानस्वरूपाणामननुगतत्वेपिसादृश्यविशेषादिनासर्पज्ञानत्वेनानुगतीकृतानांतेषामेवासर्पज्ञानाद्व्यावृत्तिसिद्धेः ।
द्वितीयेपिनदोषः । सांकर्यस्यजातावुपाधाविवबीजाभावेनादोषत्वात् । शशविषाणादेरतीतस्यचज्ञानेविषयादन्यस्यैवतस्यवा

च्यत्वाच्चेतिभावः ॥ [१८३१५] ज्ञानएवेति ॥ एतच्चांत्यपक्षाभिप्रायेण । प्रथमेतुज्ञानमेवविशेषइतिबोध्यं ॥ [१८२१५] सर्पज्ञानमिति ॥ सर्पैर ज्जौवेतिशेषः । स्वाभिमतज्ञानतन्निष्ठधर्मसंबंधावपेक्ष्यसर्पज्ञानस्यवैलक्षण्यंस्वमतेप्यस्तीतिबाधोमाभूदितिधर्मीति । नचज्ञान स्वरूपस्यज्ञानगतधर्मस्यस्वगतधर्माद्यपेक्षयाधर्मित्वादुक्तदोषतादवस्थ्यमितिवाच्यं । धर्मिशब्देनस्वस्वानाश्रितयोर्विवक्षितत्वा दितिभावः ॥ [१८३१६] तज्जनकेति ॥ असर्पज्ञानजनकेयोऽसर्पसन्निकर्षादिस्तद्विलक्षणेनसर्पसन्निकर्षादिनाजन्यत्वादित्यर्थः । ननुघट संयोगःपटसंयोगान्नजात्याभिद्यते । तदवृत्तिजात्यनधिकरणत्वात् । किंतुघटरूपोपाधिनैवेतिधर्म्यंतरसंबंधमपेक्ष्यैवविलक्षणे घटसंयोगत्वावच्छिन्नेसाध्याभाववतिउक्तहेतुसत्त्वाद्व्यभिचारइतिचेन्न । जातिविशेषावच्छिन्नतत्तत्कर्मप्रयोज्यधर्मस्यघटनिरू पितस्यघटसंयोगेपिसत्त्वात् । नानादंडजन्येषुघटेषुविलक्षणजनकतावच्छेदकावच्छिन्नजन्यत्वाभावान्नव्यभिचारः । नचतादृ शतत्तद्घटप्रागभावजन्येषुघटेषुव्यभिचारतादवस्थ्यं । तस्यहेतुत्वेमानाभावात् । भावत्वेनजनकविशेषणाद्वानदोषः । रज्जौ सर्पज्ञानेरज्जुसंयोगजन्येसर्पसंयोगस्यविलक्षणस्यजनकस्याभावेपितथाविधदोषस्यसत्त्वान्नासिद्धिः ॥ [१८३१२] यवांकुरंतद्बीजाभ्या मिति ॥ अवधौपंचमी ॥ [१८३१३] चैत्रादीति ॥ नचेष्टापत्तिः । चैत्रादिसंबंधित्वाज्ञानेपिकलमांकुरत्वतद्बीजत्वदर्शनमात्रेणांकुरांत राद्बीजांतराच्चवैलक्षण्यानुभवस्यसार्वजनीनत्वादितिभावः । ननुविशेषणत्वेसंभवतिनोपलक्षणत्वमंगीकर्तुमुचितमतआह ॥ [१८३१६] अतीतादीति ॥ अतीतादिज्ञाननिष्ठव्यावर्तकतायांव्यावहारिकस्यवानिर्वचनीयस्यवार्थस्याभावेनाकिंचित्करत्वात् सर्वत्रज्ञा

नेउपलक्षणीभूतविषयोपस्थापितस्वाभाविकविशेषेणज्ञानंव्यावृत्तमित्यर्थः ॥ [१८३।८] एवंचयथेति ॥ यथेत्यस्यतथासर्पज्ञानमपीत्यत्र
त्येनतथाशब्देनान्वयः ॥ [१८३।९] अभावांतरदिति ॥ अस्यविलक्षणमित्यनेनाग्रेतनेनलिंगविपरिणामात्संबंधः । ज्ञानांतरादितइत्य
त्रवचनव्यत्ययोपि ॥ [१८४।१] तत्तत्कार्यैति ॥ दोषाभावगुणाद्यभावकार्याणांप्रमाभ्रमादीनांसंकरःस्यादित्यर्थः । अभावादिषुप्रति
योग्यादिकृतादसंकरात्तत्कार्येष्व्यसंकरशंकांनिराकरोति ॥ [१८४।२] नचेति ॥ [१८४।३] ध्वंसादेरिति ॥ ध्वंसादेःकालेप्रतियोगिनोसत्त्वात्कृ
तेःकालेकृतिविषयस्यासत्त्वं । कृतेरविद्यमानविषयकत्वात् । तदुक्तंकृतेःसिद्धवृत्त्यसिद्धविषयत्वादिति । अतीतादिज्ञानकाले
विषयस्यासत्त्वादितियोजना । ननुध्वंसादेःकालेप्रतियोगिनोसत्त्वेपिकदाचित्सत्त्वमस्त्येवेत्यतआह ॥ [१८४।४] पूर्वक्षणइति ॥ कदा
चित्प्रतियोगिनःसत्त्वेपिध्वंसनिर्वाह्यकार्यकालेप्रतियोगिनोसत्त्वेनतत्कृतासंकीर्णस्वरूपस्यप्रध्वंसादेःकारणस्यासिद्ध्याध्वंसादिका
र्याणामसंकरोनस्यात् । एवंकृत्युत्तरकालेविषयस्यसत्त्वेपिकृतिकालेऽसत्त्वेनासंकीर्णस्वरूपस्यालाभात् कृतिकार्याणामसंकरो
नस्यात् । कार्यंपूर्वक्षणेऽसतोविद्यमानस्यासंकीर्णध्वंसादिरूपस्यासंकीर्णस्वकार्यप्रतिनियतपूर्ववृत्तित्वरूपंकारणत्वंव्याहतमित्य
र्थः । ननुध्वंसादिकालेप्रतियोग्यादीनामसत्त्वेपितेषांतत्रोपलक्षणत्वंभविष्यति । तथाचतदुपलक्षणेनैवध्वंसादिस्वरूपाणामसां
कर्येतत्कार्येष्वप्यसांकर्यंभविष्यतीत्यतआह ॥ [१८४।५] उपलक्षणभेदमात्रेणचेति ॥ मात्रशब्दएवार्थः । प्रध्वंसादौप्रतियोग्यादेर्नो
पलक्षणत्वं । उपलक्षणभेदमात्रेणाप्रसिद्धकाकाद्युपलक्षणसकाशात्भेदेनैवकाकादिकंह्युपलक्षणं । स्वोपलक्ष्येणगृहादिनाकदा
चित्संबद्धंतत्रोपलक्षणंदृष्टं । प्रतियोग्यादिकंप्रध्वंसादिनाकदापिनसंबद्धं । अतस्तत्रनोपलक्षणमित्यर्थः । ननुमाभूत्प्रतियोग्या

दिकंप्रध्वंसादावुपलक्षणं प्रध्वंसादिनासंबध्यमानंदेवदत्तादिकंतत्रोपलक्षणंभविष्यतीत्यतआह ॥ विलक्ष[१८४।५]णेति ॥ देवदत्ताद्यु
पलक्षणभेदमात्रेणविलक्षणकार्यजननेऽतिप्रसंगइत्यर्थः । शिलोद्धरणकृतेर्माषोद्धरणकृतितोवैलक्षण्येहेतुमाह ॥ शिलोद्धर[१८४।५]णा
र्थमिति ॥ ननुज्ञानगतधर्मस्यगुणत्वव्याप्यत्वाद्यनुपपत्त्यानिरूपयितुमशक्यत्वादनंगीकार्यतेत्यतआह ॥ उक्त[१८४।६]प्रमाणैरिति ॥
आख्यातुमशक्यत्वात् हेतोःप्रत्याख्यानमशक्यमितिशेषः । तत्रहेतुरुक्तप्रमाणैरित्यादि । ननुज्ञानेस्वतोविशेषोनयुक्तः । घट
ज्ञानमित्यादिविषयेणैवविशिष्टत्वादित्यतआह ॥ घट[१८५।१]ज्ञानमितीति ॥ यथामाधुर्यादेःस्वतोविलक्षणत्वेपिप्रकारांतरेणप्रतिपा
दयितुमशक्यत्वात्क्षीरादिनैवनिरूपणं तथाज्ञानस्यस्वतोविलक्षणस्यापिघटादिनाविषयेणनिरूपणंयुक्तमित्यर्थः ॥ तत्त[१८५।२]द्वृत्ते
रिति ॥ परिणामानांस्वभावविलक्षणत्वादित्यर्थः ॥ नही[१८५।३]ति ॥ घटीयस्वभावस्यतदभावस्येतिसमानाधिकरणं । तस्यघटस्य
तत्तदाकारवृत्तिरूपेज्ञानेतदीयस्वभावेज्ञानेतत्तद्व्यवहारजननशक्तेचज्ञानेक्रमेणगवयाकाररेखाघटीयस्वभावरूपघटाभावः दाह
शक्तिश्चदृष्टांतः । यथागवयाकाररेखायाःकार्येगवयस्यघटाभावकार्येघटस्यदाहशक्तिकार्येवह्न्यादेर्ननिवेशः तथाताहशज्ञानका
र्येविषयस्यननिवेशइत्यर्थः ॥ अधि[१८५।५]केति ॥ दोषजन्यत्वादित्यर्थः । नचसर्पप्रमायागुणजन्यत्वान्नसर्पभ्रमेणसमानंकारणमि
तिवाच्यं । प्रमायागुणजन्यत्वानंगीकारात् । दोषाभावस्यकारणतावच्छेदकत्वेनाकारणत्वादितिभावः ॥ तद्धे[१८५।५]तुजन्यत्वा
दिति ॥ यद्यपिसर्पज्ञानहेतुसर्पसन्निकर्षजन्यत्वंरज्जुसर्पज्ञानेनास्ति । रज्जुसन्निकर्षस्यैवरज्जुसर्पज्ञानहेतुत्वमित्यंगीकारात् ।
यां० १३२ तथापिसर्पज्ञानहेतुर्द्विविधः सर्पसन्निकर्षः तत्संयोगादिव्याप्त्यादिरूपःदोषश्च । रज्जुसर्पज्ञानेचदोषरूपंसर्पज्ञानकारणमस्ती

तिभावः ॥ [१८५।६] तादृशमिति ॥ मिथ्याभूतसर्पाद्यनवच्छिन्नंस्वतएवासर्पज्ञानाद्व्यावृत्तमित्यर्थः ॥ [१८५।६] सदेवेति ॥ ननुस्वरूपेणापि
भ्रमज्ञानस्यमिथ्यात्वं । स्वरूपतोबाधाभावेविषयतोप्यबाधप्रसंगात् । नचगुणजन्यत्वमुपाधिः । तस्याप्यापाद्यमानत्वेनव
ह्न्यनुमानेवह्निसामग्र्याइवसाधनव्यापकत्वेनानुपाधित्वात् । विषयइवमिथ्यात्वप्रयोजकदोषादिसमवहितसामग्र्याज्ञानेप्यवि
शेषाच्चेतिचेन्मैवं । शुद्धचैतन्यस्याबाधितत्वेपितद्विषयस्याज्ञानस्यबाधितत्वेनव्यभिचारात् । अप्रयोजकत्वंच । साध्येसत्यपि
हेतोरभावात् । निर्गुणब्रह्मविषयकदहरादिविद्यानामखंडार्थनिष्ठवेदांतवाक्यस्यस्वरूपतोमिथ्यात्वेनविषयतोपिमिथ्यात्वापत्तेः ।
अबाधात्तद्विषयस्यसत्यत्वेसर्पादिज्ञानस्यविषयिणोपिततएवसत्यत्वं । नायंसर्पःकिंतुतथाज्ञातइतिसर्वानुभवात् । अन्यथा
नायंसर्पइतिवन्नेदंज्ञानमितिबाधोज्ञानस्यापिस्यादिति ॥ [१८६।१] अंतर्भावितेति ॥ एतच्चव्याख्यातंशंकरेण । कारणेसत्ता विशेषण
मुपलक्षणंवा । यदिविशेषणंतदासत्तापिकारणमित्यायातं । सत्तायांचनसत्तेत्यसत्कारणमित्यायातं ॥ [१८६।१] ततइति ॥ सत्ताविशि
ष्टंकारणमित्यभ्युपगमादित्यर्थः । द्वितीयेसत्तोपलक्षितंसत्तारहितंकारणमितित्वयैवाभ्युपगमादित्यर्थः ॥ [१८६।१] ततइति ॥ सतोप
लक्षितंकारणमित्यभ्युपगमादित्यर्थः । यद्वाकारणमित्युभयत्रभावप्रधानोनिर्देशः । सत्तामंतर्भाव्यकारणत्वंवर्ततेनवा । कार
णत्वाश्रयकोटौसत्तावर्ततेनवेत्यर्थः । सत्तायांकारणत्वंवर्ततेनवेतियावत् । आद्येऽसदपिकारणं । सत्तायाःसत्ताविरहेणास
त्त्वात् । द्वितीयेसत्तायाःसदाकारप्रत्ययोनेतितन्मात्रप्रमायाःसत्तायाःलोपेसर्वकारणमसदेवप्राप्तमित्यर्थइत्यस्मिन्पक्षेसत्तायां

कारणत्वस्वीकारास्वीकारौततःशब्दार्थः ॥ [१८६।१] खंडनोक्तेति ॥ यद्यपिखंडनेअनेनवार्तिकेनसत्कारणत्वंनिषिध्यते । असत्कार णत्वंतुप्रागेवोक्तमितितद्व्याख्यातारः । तथाप्यसत्कारणत्वस्यकंठरवेणप्रतीतत्वात्तथोक्तमितिध्येयं ॥ [१८६।२] असत्कारणतेति ॥ एतस्यस्वव्याहतेत्यनेनान्वयः ॥ [१८६।३] अस्यैवेति ॥ त्वद्ग्रंथएवअन्यथाकारमक्षराणिकियंत्यपि । तस्मादस्माभिरप्यस्मिन्नर्थेनख लुदुःपठेतित्वदुक्तन्यायेन । अंतर्भावितसत्वंचेदनसत्कारणंततः । नांतर्भावितसत्वंचेदनसत्कारणंततइति । अकारांतर्भावे णपठितुंशक्यत्वादित्यर्थः । अबाध्यत्वरूपसत्त्वविशिष्टेतदुपलक्षितेवा अबाध्यत्वरूपसत्त्वस्यसत्वात् । दृश्यत्वेदृश्यत्ववदिति भावः ॥ [१८६।३] अंतर्भावितसत्वंचेदिति ॥ सत्ताविशिष्टस्याधिष्ठानत्वेविशेषणीभूतायाःसत्तारहितायाःअपिसत्तायाःअधिष्ठान त्वमायातं । सत्तोपलक्षितस्याधिष्ठानत्वेसत्ताविरहितमधिष्ठानमितित्वयैवाभ्युपगमादित्यर्थः । एवंद्वितीयव्याख्यानमपियोज्यं ॥ [१८६।३] ततइति ॥ सत्ताविशिष्टंतदुपलक्षितंवाऽधिष्ठानमित्यभ्युपगमादित्यर्थः ॥ [१८७।१] कथमिति ॥ असदेवेदमग्रआसीदित्यादिनाअ तःकारणत्वंपूर्वपक्षय्य कथंनुखलुसोम्यैवंस्यात् कथमसतःसज्जायेतेत्यादिनाअसत्कारणत्वंनिषिद्धं ॥ [१८७।२] नासतइति ॥ असतः कारणत्वंन । अदृष्टत्वादितिसूत्रार्थः । अत्रकेचित् । दंडतंतुसाधारणमेकंकारणत्वंनास्त्येव । यत्रतवसत्त्वमवच्छेदकंममतु च्छविलक्षणत्वादिकं । किंतुकार्यतावच्छेदकंघटत्वपटत्वादि । कारणतावच्छेदकंदंडत्वतंतुत्वादि । तद्भेदाच्चकारणत्वंभिन्नं । यथागोर्गवयसादृश्यमन्यत्मातृभगिन्यादिसादृश्यमन्यत् । तत्रनैकमवच्छेदकं किंतुगवयत्वादिकमेव । तद्वदत्रापिदंडत्वा

दिकमेवसत्त्वासत्त्वोदासीनमवच्छेदकंवाच्यं । तथाचजनकत्वाजनकत्वानुसारेणापिनसत्त्वासत्त्वसिद्धिः । तदुक्तंखंडने पूर्वसंबं
धनियमोहेतुत्वेतुल्यएवनौ । हेतुतत्वबहिर्भूतसत्त्वासत्त्वकथावृथेति । अस्यार्थः । नसत्कारणं । नाप्यसत्कारणं । किंतुनियतपूर्व
वृत्तिकारणं । तच्चयथासत्तथाअसदपीतिसदेवकारणमितित्वत्कथावत्असदेवकारणमितिमत्कथाप्यापाततोवृथेत्यर्थः । मैवं ।
दंडत्वतंतुत्वादेःत्वन्मतेदंडाद्याभासेऽतिप्रसक्तत्वेननतस्यहेतुत्वावच्छेदकत्वं । नह्यकारणेविद्यमानंकारणतावच्छेदकं । दंडाभा
सादेश्चाकारणत्वंत्वयाप्यंगीकृतमेव । यथोक्तंवाचस्पत्ये । असत्यत्वाविशेषेपिवर्णदैर्घ्यादिनाअसत्यंज्ञायतेनतुधूमाभासीदिनेति ।
कारणस्यानेकत्वेनदंडत्वावच्छिन्नस्वभावत्वेपिसत्त्वंतत्रप्रयोजकमास्थेयं । ममतुसदसतोरेकसामान्यदंडत्वादेरभावेनसद्विशेषदं
डत्वादेःकारणतावच्छेदकत्वेसत्त्वस्यकारणत्वप्रयोजकत्वमिति । उपसंहरति ॥ [१८७।३]तस्मादिति ॥ [१८७।३]असत्वइति ॥ दृश्यत्वादि
हेतुभिर्हेतुवाक्यादिप्रापितानांसाधनव्याप्त्यादीनांमिथ्यात्वबोधनेनतेषामसत्वमित्यर्थः ॥ ७ ॥ व्यासाद्रिकृततर्कांबुपूरैःपक्षयुगं
युजि ॥ न्यायामृततरंगिण्यामसतोऽहेतुतान्यथा ॥ ७ ॥ असतःसाधकत्वाभावेबाधकोद्धारः ॥ ७ ॥ २२ ॥ दृग्दृश्यसंबं
धानुपपत्तिरूपंपूर्वोक्तंतर्कंनिराकर्तुमुत्थापयति ॥ [१८७।४]अनुकूलेति ॥ मायिभि[१८७।४]क्षैवइति ॥ अस्यआहुरित्यनेनसंबंधः ॥ [१८७।५]अन्यच्चेति ॥
नीलसंविदोभेदेनीलसंविदिनीलस्यभानंनस्यात् । भिन्नस्यापिभानेनीलसंविदिनीलेतरस्यधवलादेरपिभानंस्यात् । ननुनीलसंवि
दिनीलस्यसंबंधोस्तीतिनीलंभासते धवलादेस्तुतत्रनसंबंधइतिनभानमित्यतआह ॥ [१८७।५]नियामकमिति ॥ नीलस्यनीलबुद्धेश्चवक्ष्य
माणरीत्यान्यःसंबंधोनसंभवति । येननियमःस्यात् । तस्मात्संविदिनीलादेरारोपितत्वमेवसंबंधइतिसत्यत्वेनीलादेःदृकृदृश्यसंबं

धानुपपत्तिरूपोबाधकस्तर्कोस्तिविपक्षेइत्यर्थः । आत्मख्यातिवादिभिःविज्ञानवादिभिः ॥ [१८८।१] ग्राह्यलक्षणाभावाख्यमिति ॥ ग्राह्यांशस्यघटादेरलीकत्वमभिदधानाःविज्ञानवादिनोग्राह्यलक्षणाभावंयुक्तिंतत्रवदंति । ग्राह्यस्यघटादेर्विषयस्यलक्षणंविषयत्वं तस्याभावः । तस्माद्विज्ञानात्माअर्थः । अर्थस्यविज्ञानाभ्देदेतत्रविषयत्वंनस्यात् । लक्षणानिर्वचनेसामर्थ्येनापिज्ञानविज्ञान विषयत्वंनसंभवतीत्यादि । एतच्चबौद्धधिकारेस्पष्टं । ननुदृग्दृश्ययोःसंबंधाभावेपिअसंबद्धस्यैवतयाप्रकाशनमस्त्वित्यतआह [१८८।१] दृश्यस्येति ॥ दृक्दृश्ययोराध्यासिकसंबंधंवक्तुंसंबंधांतरंनिराकरोति ॥ [१८८।२] नापीति ॥ [१८८।३] आत्मेति ॥ गुणत्वान्नज्ञेयेनघटादिना संयोगः आत्मगुणत्वान्नसमवायःसंभवतीत्यर्थः ॥ [१८८।४] ज्ञानंजन्यहानादीति ॥ यद्यप्येतत्करिष्यमाणप्रथमपक्षविकल्परीत्याप्र थमपक्षेंतर्भवति । तथापिबुद्धिगोचरत्वमित्यत्रात्माश्रयंवक्तुंपृथग्विकल्पितमितिध्येयं ॥ [१८८।५] ज्ञानंकर्मत्वंवेति ॥ कर्मत्वंचक्रिया जन्यफलाश्रयत्वातिरिक्तंकरणव्यापारविषयत्वादिकमत्राभिमतमतोनप्रथमविकल्पांतर्गतिरितिबोध्यं ॥ [१८९।१] कलधौतेति ॥ रू प्यज्ञानाविषयस्यरूप्यमलादेःरूप्येणसहोपादीयमानत्वाद्रूप्यज्ञानविषयत्वंस्यादित्यर्थः ॥ [१८९।२] तयोरिति ॥ तथाचासंभवइतिभावः ॥ [१८९।३] ज्ञानोदीति ॥ कंटकादिज्ञानंकंटकादिकमेवप्रकाशयति ततःकंटकांतरेऽनिष्टसाधनत्वंजानतःपुरुषस्यपुरोवर्तिकंटकेपितद नुमानंभवति । अनिष्टसाधनत्वाच्चहेयताबुद्धिर्जायतइत्यंगीकारात्हानादिबुद्धीनांकंटकादिप्रत्यक्षजन्यत्वासंभवइत्यर्थः ॥ [१८९।४] विषयत्वेति ॥ अनुमित्यादिविषयेऽव्याप्तिश्चबोध्या ॥ [१८९।५] दृश्यमानतायाइति ॥ दृश्यमानत्वस्यदृग्विषयत्वरूपत्वादित्यर्थः ॥ [१८९।५] योग्यतायामिति ॥ नचयोग्यतायोग्यतांतरंविनैवयोग्यायथादृश्यत्वंदृश्यत्वांतरंविनैवदृश्यमितिवाच्यं । अवच्छेदकरूपा

परिचयेयोग्यतायाएवग्रहीतुमशक्यत्वात् । ननुयस्यांसंविदीत्यत्रसप्तम्यर्थोनविवक्षितइत्यतआह ॥ [१८।१७] संविदइति ॥ [१८।१८] नापीति ॥
यस्यांसंविदिसत्यांयोर्थोवभासतेविषयोभवतीत्यर्थेआत्माश्रयइत्यर्थः ॥ [१८।१९] मत्समवेतमिति ॥ यथारूपज्ञानमिष्टंध्वस्तमित्यादौ
इच्छादीनांरूपज्ञानावच्छेदकत्वंतथामत्समवेतंरूपज्ञानमित्यत्ररूपज्ञानात्मसमवायस्यरूपज्ञानावच्छेदकत्वमस्तीत्यर्थः ॥ तद्वि
[१८।२०] षयत्वेति ॥ इदंरूपमितिज्ञानेविषयत्वापातादित्यर्थः ॥ [१९।१३] तथाचेति ॥ सत्यभूतानामेवघटादीनांस्वाकारवृत्तिद्वाराचैतन्यसं
बंधोस्त्वित्यर्थः । ननुप्रकाशस्यसाक्षात्स्वसंसृष्टप्रकाशकत्वनियमेनचैतन्यस्यपरंपरासंबंधेनविषयप्रकाशकत्वायोगः । नहिप्रदी
पःपरंपरासंबद्धंप्रकाशयतीतिचेन्न । नहिवृत्तिद्वारकइत्यस्यपरंपरासंबंधइत्यर्थः । किंतुसर्वव्यापिचैतन्यस्याविद्यावृतस्यवृत्त्या
वरणेनिवृत्तेअनावृतेनचैतन्येनसत्यानामेवघटादीनांसाक्षात्संबंधोस्तु । किमर्थमाध्यासिकसंबंधकल्पनमित्यर्थः । ननुनवयंप्र
पंचस्यब्रह्मात्मकदृगध्यस्तत्वंवदामहे । येनसर्वस्यसर्वदासर्वप्रतिप्रकाशप्रसंगरूपानिष्टप्रसंगपरिहारायतत्तदाकारवृत्तिद्वारकसं
बंधापेक्षास्यात् । किंतुतत्तदाकारवृत्त्यानावृतेचैतन्येतादृशचैतन्येनसाक्षादेवघटादेःसंबंधोघटते । अतोनतदर्थंवृत्तिरूपद्वारानु
सरणमित्यतआह ॥ [१९।१२] नहीति ॥ [१९।१२] विज्ञानवादिमतइति ॥ यदाहुर्विज्ञानवादिनः । "स्वप्नधीसाम्यतोबुद्धेर्बुद्ध्यार्थस्यसहेक्ष
णात् । तद्भेदेनानिरूप्यत्वात्ज्ञानाकारार्थइष्यता"मिति । भवतांमतेतुदृश्यस्यनतज्ज्ञानेध्यासः । किंतुब्रह्मात्मकदृश्येवे
त्यर्थः । ततःकिमित्यतआह ॥ [१९।१३] सत्यायाइति ॥ तथाचोक्तातिप्रसंगभंगायवृत्तिरनुसरणीयेतिभावः । नन्वस्तुममतेपिघटा

देःतत्तज्ज्ञानएवाध्यासइत्यतआह ॥ [१९३।३] उपाधीति ॥ [१९३।३] मिथ्यात्वेनेति ॥ अधिष्ठेयाधिकसत्ताकत्वस्याधिष्ठानत्वौपयिकस्याभावादितिभावः । ननूपाध्युपलक्षितेप्युपाधिकृतोभेदोप्यस्तीत्यतआह ॥ [१९३।४] कथंचिदिति ॥ [१९३।५] दृश्याप्रतीतेरिति ॥ तथाचवृत्तिरावश्यकीत्यर्थः ॥ [१९३।६] आध्यासिकेति ॥ घटाकारवृत्तिप्रतिबिंबितचैतन्येघटप्रकाशकेघटानध्यासेन दृक्दृश्ययोराध्यासिकसंबंधसत्त्वात् प्रकाश्यप्रकाशभावइतिकल्पनानुपपन्नास्यादित्यर्थः ॥ [१९३।६] आवश्यकेनेति ॥ घटाधिष्ठानभूतचैतन्यंघटप्रकाशकमितिमतेपितदभिव्यक्त्यर्थंघटाकारवृत्तिप्रतिबिंबितस्यचैतन्यस्यानुसरणीयत्वात्तेनैवघटानधिष्ठानेनसत्यस्यघटस्यप्रकाशोस्तु । तरणिकिरणैरिवस्वानधिष्ठितस्यघटादेरित्यर्थः । नचपरोक्षविलक्षणस्फुटतरव्यवहारार्थंविषयाधिष्ठानचैतंन्याभिव्यक्तिकल्पनेतिवाच्यं । आवश्यकेंद्रियजन्यवृत्तिप्रतिबिंबितचैतन्येनैवतदुपपत्तेरितिभावः । अधिष्ठानचैतन्यमधिष्ठेयस्यप्रकाशकमितिमतेदोषांतरमाह ॥ [१९३।७] किंचेति ॥ सत्यस्येत्यधिष्ठानत्वोपपादनाय ॥ [१९३।८] नाभिव्यक्तिरिति ॥ तथाचनतेनघटादेःप्रकाशःस्यादित्यर्थः ॥ [१९३।८] नतदधिष्ठानत्वमिति ॥ तथाचनतदपिघटादिप्रकाशकमित्यर्थः ॥ [१९३।९] आत्माश्रयादिति ॥ स्वावच्छिन्नस्यस्वाधिष्ठानत्वेस्वस्यापिस्वाधिष्ठानत्वप्रसंगेनात्माश्रयइत्यर्थः । यद्वाघटस्याध्यासेसतिघटस्वरूपप्रसिद्धौचैतन्यस्यघटावच्छिन्नत्वं तदवच्छिन्नेचैतन्येसत्यधिष्ठानलाभेघटादेरध्यासइत्यात्माश्रयइत्यर्थः । ननुशुद्धचैतन्यस्यैवघटाद्यधिष्ठानत्वं । तस्यचचरमसाक्षात्कारात्पूर्वंमूलाज्ञाननिवृत्तिरूपव्यक्त्यभावेपितदवस्थाविशेषादिनिवृत्तिलक्षणाभिव्यक्त्यादिविषयप्रकाशोपपत्तिरितिचेन्मैवं । मूलाज्ञानंयदिनावरणं नतर्हितत्सिद्धिः । आवरणार्थमेवत्वयाज्ञानस्यसाधितत्वात् । यदितदावरणं तर्ह्येकावरणनिवृत्तावप्यावरणांतरस्यस

त्त्वेनशुद्धचैतन्यस्यघटाधिष्ठानस्याभिव्यक्तिरितिभावः । दोषांतरमाह ॥ किंचघटेति ॥ घटाधिष्ठानचैतन्यंघटप्रकाशकमितिमतेमिथ्याभूतस्यघटवत्घटाधिष्ठानत्वाभावेनघटाप्रकाशकत्वात्सत्यमेवघटाधिष्ठानंघटप्रकाशकमितिवाच्यं । तस्यचसत्यत्वेनदोषाजन्यतयाऽबाधितार्थकत्वरूपप्रमात्वयोगित्वेनतद्विरुद्धस्वविषयमिथ्यात्वापादनशीलंस्वविषयंप्रत्यधिष्ठानत्वंनसंभवतीत्यर्थः । ननुदोषाजन्यत्वंनप्रमात्वप्रयोजकं । चैतन्यस्यसर्वत्रदोषाजन्यत्वात् । किंतुदोषाजन्यवृत्त्यवच्छिन्नत्वं । प्रकृतेचतदभावान्नविषयस्यसत्यत्वं । अतोमिथ्याभूतस्वविषयंप्रत्यधिष्ठानत्वंसत्यायादृशोऽयुक्तमितिचेन्मैवं । घटाद्याकारवृत्तेरपिसंभावितेंद्रियादिदोषाजन्यत्वात् । अविद्यायाश्चदोषत्वासंप्रतिपत्तेः । अन्यथाअद्वैतागमविषयश्रौत्रादिवृत्तेरपिअविद्यारूपदोषजन्यत्वेनाप्रमात्वापत्त्याऽद्वैतागमस्यासिद्धिप्रसंगादिति ॥ अभाववद्भूतलमिति ॥ अत्रपरस्परासंयुक्तासमवेतेत्यादिकमेवपक्षः । तत्परिचायकत्वेनाभाववद्भूतलमित्यादि ॥ उक्तेति ॥ परस्परासंयुक्तेत्यादिरूपेत्यर्थः ॥ अबाधितेति ॥ अपरोक्षत्वमपिविशेषणं । तेनपरोक्षधीषुनव्यभिचारः । नचोभयत्राध्यासिकसंबंधस्यैवविषयत्वेननिमित्तत्वेनचोपपत्तावर्थांतरमितिवाच्यं । तात्विकसंबंधबाधेआध्यासिकसंबंधसिद्धिः । तथाचसंयोगसमवायातिरिक्ततात्विकसंबंधपर्यंतंनाध्यासिकसंबंधसंभावनेतिनतेनार्थांतरं व्यापकानुपलब्धिबाधश्चनिरसिष्यतइत्यर्थः ॥ विमतेति ॥ आनंदोब्रह्मवास्फुरतिइत्यादिकेत्यर्थः ॥ अबाधितविशेषणेति ॥ संबंधिसमसत्ताकविशेषणविशेष्यसंबंधविषयेत्यर्थः । एतेनब्रह्मज्ञानपर्यंतमाध्यासिकसंबंधस्याबाधितत्वेनसिद्ध

॥१३८॥

साधनं सर्वथाअबाधितत्वेसाध्येसाध्यवैकल्यंदृष्टांतस्येतिनिरस्तं ॥ आनंदस्यस्फुरणस्यब्रह्मणोवायासत्तातद्वतःसंवंधस्यसिद्धेः । नचतत्रविशिष्टबुद्धित्वमसिद्धमितिवाच्यं । घटश्चलतीत्यादिवदस्याअपितथात्वादिति । ननुगोमांश्चैत्रइत्यादौविप्रकृष्टगवीनां तद्वतश्चसंयोगाद्यभावात् अन्यस्यचसंवंधस्यतत्राक्लृप्तत्वाद्विशिष्टबुद्धित्वंतत्रव्यभिचारीतिशंकांपरिहरति ॥ गोमानिति[११२।५] ॥ गोमांश्चैत्रइत्यादावपिसंबधस्यततएवसाधनान्नतत्रव्यभिचारइत्यर्थः । ननुसंयोगादेरेवसंवंधत्वात्तस्यचज्ञानज्ञेययोरभावात्तत्र संवंधानुमानंबाधितमित्याशंकांसंयोगाद्यतिरिक्तसंबंधसाधकाभियुक्तवचसानिराकरोति ॥ उक्तंहीति[११२।५] ॥ षष्ठीस्थानेयोगेति सूत्रेमहाभाष्ये । ननुनेदंसूत्रमारंभणीयं । अस्तेर्भूरित्यादौषष्ठीनिर्देशात् विनापिसूत्रेणास्तेःसंवंधीभूरादेशोभविष्यतीतिचोदयित्वानियमार्थोयमारंभइत्युक्तं । नन्वनेकप्राप्तेरभावात् कथंनियमइत्याशंकामभिप्रेत्यतत्परिहारार्थं एकशतंषष्ठ्यर्थाइत्युक्तमित्यर्थः ॥ तेचेति[११२।६] ॥ षष्ठीदंडकपाठाश्रयणेनैतदुक्तमितिकैयटवाक्यस्यार्थानुवादोयं ॥ षष्ठीदंडकइति[११२।६] ॥ षष्ठीदंडकोनामग्रंथविशेषइतिबृहद्विवरणकारः । ननुसंयोगादेरन्यस्यसंबंधत्वेतस्यक्लृप्तपदार्थेष्वन्तर्भावाभावादाधिक्यंस्यादतआह ॥ प्रमितेति[११३।१] ॥ तादृशसंबंधसमावेशेनैवपदार्थाःपरिगणनीयाइत्यर्थः । उक्तानुमानेषुव्यापकानुपलब्धिबाधंशंकते ॥ नचेति[११३।२] ॥ संबंधद्वित्व[११३।२]मिति ॥ संयोगसमवायान्यद्वित्वव्यापकसंख्यापूरणवृत्तित्वेनसंबधत्वानवगाहित्वंविशेषणविशेष्यसंबंधविषयकत्वरूपसाध्यस्य व्यापकंदंडीशुक्लइत्यादिविशेषणविशेष्यसंबंधविषयबुद्धौदृष्टं । अभाववद्भूतलंज्ञातोघटइत्यादौपक्षीकृतविशिष्टबुद्धौतदभावा

त्साध्यस्यापिबाधइत्यर्थः । एवमनुमानांतरेपिबोध्यं ॥ अन्योन्या[११३।२]श्रयाइति ॥ निरुक्तस्यविशिष्टबुद्धित्वव्यापकत्वेतन्निवृत्त्या पक्षेसाध्याभावसिद्धिः । पक्षेसाध्याभावसिद्धौचव्यभिचाराभावेननिरुक्तस्यविशिष्टबुद्धित्वव्यापकत्वसिद्धिरित्यन्योन्याश्रयइ त्यर्थः ॥ [११३।२]अन्यथेति ॥ एतदप्युक्तदिशाव्याख्येयं ॥ [११३।२]नापीति ॥ विद्यमानमात्रसंबंधिविषयकत्वंसन्निकृष्टमात्रसंबंधिविषय कत्वंवानोक्तसाध्यव्यापकं । येनतन्निवृत्तिर्बाधिकास्यादित्यर्थः ॥ [११३।३]अस्येति ॥ निरुपाधिकहेतुसाध्यसहचारावगतसाध्यव्या प्तिकहेतोःपक्षवृत्तितयापक्षेसंयोगादिविलक्षणसंबंधिकस्यसंबंधस्यसिद्धेः । निरुक्तयोस्तुनोक्तसाध्यव्यापकतासिद्धिः । अन्यो न्याश्रयादनुकूलतर्काभावाच्च । देशकालसन्निकर्षवतीनामपिसपत्नीनांसंबंधाभावात् । विप्रकृष्टानांगोगोमतांसंबंधदर्शनाच्च । नहितयोराध्यासिकःसंबंधोऽस्तीत्याशयः ॥ [११३।४]अन्यथेति ॥ अनुकूलतर्काभावेपिव्यापकताग्रहइत्यर्थः ॥ पृथक्सि[११३।४]द्धयोरेवेति ॥ पृथक्सिद्धसंबंधिविषयकत्वादेरित्यर्थः ॥ [११३।४]संयोगेति ॥ दण्डीत्यादिविशिष्टबुद्धौसंबंधविषयकत्वादिव्यापकत्वग्रहादित्यर्थः ॥ [११३।४]अपृथक्सिद्धिरिति ॥ पृथक्सिद्धसंबंधिविषयकत्वरूपस्य संबंधविषयकत्वव्यापकस्य निवृत्तिरित्यर्थः ॥ [११३।५]समवायेति ॥ स मवायसाधकस्य विशेषणविशेष्यसंबंधविषयेत्यनुमानस्यव्यापकानुपलब्धित्वेनबाधिकास्यादित्यर्थः ॥ [११३।५]ध्वंसादेरित्यादि ॥ अतीतादिनेत्यादीनांवक्ष्यमाणेनासंबंधादित्यनेनसंबंधः । ध्वंसादेरतीतेनप्रतियोगिनासंबंधाभावेतस्यायंध्वंसइतिनियमोन स्यात् । मिथ्यात्वलक्षणांतर्गतस्यात्यंताभावस्यप्रतियोगिनासंबंधाभावेप्रतियोगिनोमिथ्यात्वंनस्यात् । वेदांतनिष्ठशक्तितात्पर्य

योर्ब्रह्मणासंबंधाभावेवेदांतेभ्योब्रह्मसिद्धिर्नस्यात् । जीवाश्रिताज्ञानस्यब्रह्मणासंबंधाभावेजीवो ब्रह्मनजानातीतिनसिध्यति ।
व्यवहारस्यव्यवहर्तव्येनब्रह्मणासंबंधाभावेब्रह्मणोयंव्यवहारइतिनसिध्यति । मुमुक्षायामोक्षेणसंबंधाभावेमोक्षस्यपुरुषार्थत्वंन
स्यात् । त्वदुक्तदोषस्यप्रपंचसत्यत्वादिनादूष्येणसंबंधाभावेतन्निराकरणंनस्यात् । त्वद्वाक्यस्यार्थेनसंबंधाभावेतन्निरर्थकंस्यात् ।
ज्ञानस्यज्ञेयेनसंबंधोनास्तीत्येवंरूपंयत्त्वद्वाक्यं तत्प्रतिपाद्योयोज्ञानज्ञेयसंबंधाभावः तस्यएतद्वाक्यजन्यंयत्ज्ञानं तेनसंबंधा
भावात् ज्ञानज्ञेययोःसंबंधाभावःपरेणज्ञातोनस्यादित्यर्थः ॥ [१९३।८] स्वेन्थायेत्यादि ॥ उक्तरीत्यास्वन्यायविरोधः । ज्ञानज्ञेययोःसं
बंधाभावंप्रतिपादयितुंज्ञानस्यज्ञेयेनसंबंधोनेतिप्रयुक्तंयद्वाक्यं तत्प्रयोगरूपायाक्रियातत्प्रतिपाद्यस्यार्थस्यैतद्वाक्यजन्यस्यज्ञान
स्यसंबंधाभावात् स्वक्रियाविरोधः । ज्ञानज्ञेययोः संबंधाभावरूपार्थस्य ज्ञानज्ञेययोःसंबंधोनास्तीत्येतद्वाक्यजन्यज्ञानेनसंबं
धंबोधयितुंएतद्वाक्यंप्रयुक्तं । ज्ञानज्ञेययोःसंबंधोनास्तीतिवदतीतिस्ववचनविरोधः । तथाचयथाध्वंसप्रतियोग्यादिषुनाध्या
सिकःसंबंधःकिंत्वन्यः तथाज्ञानज्ञेययोरपीत्यर्थः । ननूक्तेषुध्वंसादिष्वध्यासएवसंबंधोभविष्यतीतिसंबंधाभावप्रयुक्ताःस्व
न्यायविरोधादयोनस्युरित्यतआह ॥ [१९४।१] नहीति ॥ [१९४।२] एतेनेति ॥ स्वन्यायविरोधादिनेत्यर्थः ॥ [१९४।२] न्यांथइति ॥ न्यायेदृढेन्यायसा
म्यांत्किंदृढेन्यदपिबाध्यतामितिखंडनपाठः । अदृढेन्यायेत्वयाऽपादितन्यायसाम्यात्किंममदूषणं । दृढेन्यायेप्रतियोग्यभाव
संबंधादिकमपिबाध्यतां । अस्माकंकुत्रापिपदार्थेपक्षपातोनास्तीत्यर्थः ॥ [१९४।३] स्वेत्याहृतस्येति ॥ व्यावहारिकव्यवच्छेदकस्ये
त्यर्थः । मुमुक्षायाश्चमोक्षेणेत्यत्रशंकांपरिहरति ॥ [१९४।४] नचेच्छायाइति ॥ इच्छेष्यमाणयोःसंबंधघटकंतज्ज्ञानजन्यत्वंनतुतदेव

तयोःसंबंधइत्यर्थः ॥ पटेच्छायाइति ॥ पटमात्रेच्छायाइत्यर्थः । नचघटविषयत्वेनघटज्ञानजन्यत्वंतस्यांनेतिवाच्यं । एतस्यविषयसंबंधसिद्ध्यधीनत्वात् गौरवाच्च ज्ञानेतदंगीकारेइच्छायामपितदंगीकारौचित्याच्च । अज्ञानस्याज्ञेयेनेत्यत्रशंकांपरिहरति ॥ अज्ञानस्येति ॥ अस्यासिन्नज्ञानमित्याश्रयविषययोरनुभवादित्यर्थः ॥ स्वीकृतत्वाच्चेति ॥ यथाहुः आश्रयविषयत्वभागिनीति । ध्वंसादेश्चातीतादिनेत्येतदुपपादयति ॥ यदिचेति ॥ तथैवास्त्विति ॥ नतुज्ञानज्ञेययोराध्यासिकःसंबंधइत्यर्थः । ननुप्रतियोग्यभावादीनांसंबंधस्याकल्पितत्वनिदर्शनेननज्ञानज्ञेययोरकल्पितसंबंधसिद्धिः । तत्संबंधस्यापिकल्पितत्वादित्याशंक्यनिराकरोति ॥ भावाभावादेरिति ॥ प्रपंचेति ॥ दृक्दृश्यसंबंधानुपपत्त्याज्ञेयमात्रस्याध्यासिकत्वेसिद्धेतन्मध्यपतितस्यप्रतियोग्यभावादिसंबंधस्यापिमिथ्यात्वंसिध्यति । तन्मिथ्यात्वेसिद्धेकुत्रापिसत्यसंबंधस्याकल्पनात्ज्ञानज्ञेययोरप्याध्यासिकसंबंधःसिध्यतीत्यन्योन्याश्रयइत्यर्थः ॥ घटस्येति ॥ ज्ञानज्ञेययोःसंबंधविचारेदृष्टानुसारित्वात्कल्पनायाः घटतदभावादाविवधर्मिसमसत्त्वस्यसंबंधस्यकल्पनीयत्वादित्यर्थः ॥ अस्तुवेति ॥ मिथ्यात्वमगृह्णतस्तवमतेविषयत्वमपिमिथ्यैव । नचविषयत्वमिथ्यात्वमात्रेणदृश्यस्यविषयस्यमिथ्यात्वंसिध्यति । यथातार्किकाणांमतेविभुद्रव्यादीनांसंयोगस्यमिथ्यात्वेपिनतेषांमिथ्यात्वमित्यर्थः । ननुमिथ्याभूतविषयत्वाश्रयोनवस्तुतोविषयोभवति । नहिमिथ्याभूतघटत्वाश्रयोवस्तुतोघटोभवतीत्यतउक्तं ॥ दृश्येति ॥ विषयत्वस्योपाधेर्मिथ्यात्वेपिवस्तुतस्तदुपहितस्यनमिथ्यात्वं । परिदृश्यमानत्वादित्यर्थः । ननुसंबंधमि

ध्यात्वमेवसंवंधिनोदृश्यस्यमिथ्यात्वमाक्षेप्स्यति । नचविभुद्रव्यादिषुसंयोगमिथ्यात्वमादायव्यभिचारः । संवंधांतरस्यतत्रस त्त्वात् । प्रकृतेदृक्दृश्ययोस्तुनकोपिसंबंधःसंभवतीत्यतआह ॥ [११६।३]ज्ञानस्येवेति ॥ ननुमिथ्याभूतसंबंधप्रतियोगीअपरस्मिन्ना रोपितः । यथाशुक्तौरजतं । यथाज्ञेयंज्ञानेअध्यस्तमित्यतआह ॥ [११६।४]नचेति ॥ मिथ्याभूतसंयोगप्रतियोगिनोरपिदंडचैत्रयोरन्यो न्यस्मिन्ननध्यासादित्यर्थः । ननुतात्विकसंवंधप्रतियोगीअपरस्मिन्नध्यस्तइतिनियमः । नचदंडचैत्रादेःसंवंधस्तात्विकः । अतो नदंडेचैत्रस्याध्यासइत्यतआह ॥ [११६।४]नचाध्यासिकेति ॥ इच्छेष्यमाणादौक्लृप्तस्यविषयविषयिभावसंवंधस्यत्यागेनज्ञानज्ञेययोरा ध्यासिकसंवंधकल्पनंहिज्ञेयमिथ्यात्वसिद्ध्यर्थं । नचतदंगीकारेपिज्ञेयमिथ्यात्वसिद्धिः । तात्विकसंवंधप्रतियोगीत्यादेःस्वरूपा सिद्धेरित्यर्थः । ननुदृष्टानुसारेणघटतदभावादिष्विवधर्मिसमसत्ताकःसंवंधोज्ञानज्ञेययोरस्त्वित्युक्तमयुक्तं । तत्रतादृशसंवंधः संभवतीतिकल्प्यते । ज्ञानज्ञेययोस्तुधर्मिसमसत्ताकःसंवंधोनसंभवति । तथाहि । ज्ञानज्ञेययोःसंवंधोज्ञानसमसत्ताकोवाज्ञे यसमसत्ताकोवा । नोभयथापि । परस्परप्रतिवंधादित्यतआह ॥ [११७।१]नचाभावादेरिति ॥ [११७।१]नियामकेति ॥ संवंधसत्ता संवं धिसत्तयासमाना । नतुयावत्संवंधिसत्तया । नियामकाभावादित्यर्थः । ननुज्ञानज्ञेययोर्धर्मिसमसत्ताकसंवंधेनियामकसत्त्वे ऽपिनतथातत्संवंधकल्पनं । तदकल्पनेवाधकाभावादित्याशंक्यतत्रवाधकमाह ॥ [११७।१]दृग्दृश्ययोरिति ॥ दृग्दृश्ययोःसंवंधोनेति वाक्यप्रयोगरूपक्रियायाःदृग्दृश्ययोःसंवंधोनेत्येतद्वाक्यप्रतिपाद्यार्थस्यैतद्वाक्यजन्यज्ञानेनसंवद्धुं श्रवणादिरूपक्रियायाःश्रोत व्येनव्रह्मणा वृत्तिरूपसाक्षात्कारक्रियायाःसाक्षात्कर्तव्येनव्रह्मणासंवद्धुंयातववाक्यप्रयोगरूपाक्रियासाविरुध्येतेत्यर्थः । असं

वंधेन धर्मिसमसत्ताकसंबंधाभावेन । तथाचोक्तस्थलेतादृशसंबंधासिद्धिरेवज्ञानज्ञेययोस्तादृशसंबंधानंगीकारेवाधिकेत्यभिप्रायः । ननूक्तस्थलेपिनधर्मिसमसत्ताकसंबंधोंगीक्रियते । येनतदसिद्धिर्बाधिकास्यादित्यतआह ॥ [११७।३] नहीति ॥ नन्वस्तिब्रह्मणितत्साक्षात्कारस्यश्रवणादिरूपक्रियायाश्चाध्यासः। तावताचब्रह्मसाक्षात्कारादीनांब्रह्मीयत्वंभविष्यतीतिशंकते॥ [११७।४] ब्रह्मणीति॥ [११७।५] घटेति ॥ घटसाक्षात्कारस्यापिब्रह्मण्यध्यस्तत्वादित्यर्थः । नचाध्यासविशेषस्तदीयताप्रयोजकः । एतदपेक्षयाइच्छादिषुक्लृप्तस्यसंबंधस्यैवलघुत्वादितिभावः ॥ [११७।५] धर्मादाविति ॥ तात्पर्यस्यधर्मादिसंबंधोनस्यादित्यर्थः । ननुतात्पर्यंतत्प्रतीत्युद्देश्यकत्वं प्रतीतेश्चज्ञेयांतरेणेवधर्मेणापिसंबंधोध्यासएवप्रतीतिद्वाराधर्मतात्पर्ययोःसंबंधइतिचेत् मैवं । एतादृशपरंपरासंबंधस्यघटेपिसाम्यादितिभावः ॥ [११७।५] इहापीति ॥ ब्रह्मसाक्षात्कारस्यब्रह्मण्यध्यस्तत्वेनब्रह्मसंबंधवत् घटज्ञानस्यापिघटेअध्यस्तत्वेनघटीयत्वंस्या [११७।६] दित्यर्थः । संगृह्णाति ॥ एवंचेति ॥ तदर्थस्य दृग्दृश्यसंबंधाभावस्य । अन्यः आध्यासिकसंबंधादितिशेषः । ननुज्ञानज्ञेययोराध्यासिकसंबंधाभावेतयोःसंबंधएवनसिद्ध्येत् । तथाहि । ज्ञानं प्रकाशः । तस्यचदेशकालविप्रकर्षादिकंप्रकाश्यसंयोगादिषुवाधकमस्तीत्याशंक्यपरिहरति ॥ [११७।७] यद्यपीति ॥ [११७।७] आंतरत्वेनेति ॥ बाह्यप्रकाशस्यप्रकाश्यसान्निध्यंसंयोगादिहेतुर्नत्वांतरस्यापितस्येत्यर्थः ॥ [११७।७] परोक्षेति ॥ परोक्षवृत्तौसाक्षाद्विषयसंबंधस्यत्वयापिस्वीकारादित्यर्थः । ननुपरोक्षस्थलेयद्यप्यधिष्ठानचैतन्येनसाक्षादेवसंबंधः तथापिविषयाकारवृत्त्यासाक्षात्संबंधाभावात् वृत्त्यवच्छिन्नचैतन्येविषयस्यपरंपरासंबंधएवेतिचेत् मैवं।

अपरोक्षस्थलेपींद्रियजन्यवृत्त्यवच्छिन्नेनचैतन्येनविषयस्यतादृशसंबंधेनैवभानोपपत्तावाध्यासिकसंबंधकल्पनायांमानाभावादितिभावः ॥ [१९८।१]अन्यथेति ॥ प्रकाशेषुवैचित्र्यानंगीकारे ॥ [१९८।१](प्र)दीपवदिति ॥ प्रकाशरूपेप्रदीपेअध्यासादर्शनात् प्रकाश्यस्यज्ञानरूपेपितस्मिन्सनस्यादित्यर्थः । ज्ञानविशेषेज्ञेयेनसहअध्यासातिरिक्तसंबंधस्त्वयाभ्युपगतइतिसर्वत्रज्ञानेसएवास्त्वित्याह ॥ [१९८।१]किंचेति ॥ [१९८।३]अपरोक्षेति ॥ नन्वपरोक्षानुभवैकरसेब्रह्मण्यध्यस्तस्यातीतादेर्व्यावहारिकस्यस्वज्ञानेनुमित्यादिरूपेअनध्यासेपि यस्मिन्चैतन्येतदध्यस्तंतदेवचैतन्यमनुमित्यादिरूपवृत्त्यवच्छिन्नमनुमितिरितिनाध्यासानुपपत्तिः । अतिप्रसंगपरिहारार्थंचैतन्यस्यविषयसंबंधेवृत्त्युपरागापेक्षायामपिनाधिष्ठानत्वेतदपेक्षा । एवमेवस्मृतिस्थलेपीतिचेन्मैवं । अतीतादेर्ज्ञानंहिनतदधिष्ठानचैतन्यमात्रं । किंत्वनुमित्यादिरूपवृत्त्यवच्छिन्नंतत् । तथातस्मिंश्चनातीतादेरनुमेयस्याध्यासइतिनतस्यस्वज्ञानेध्यासः ॥ [१९९।२]तत्प्रतीतेरिति ॥ ननुप्रातिभासिकस्यप्रातिभासिक्यांवृत्तावनध्यासेपि अधिष्ठानविषयकवृत्त्यभिव्यक्तचैतन्यएवाध्यासइतिचोद्यंनिराकरोति ॥ [१९९।२]त्वयापीति ॥ तथाचरूप्यज्ञानाधिष्ठानयोर्भेदान्नरूप्यस्यस्वज्ञानेअध्यासइत्यर्थः । नन्विदमंशाकारवृत्त्यवच्छिन्नमेवचैतन्यंरूप्याकाराविद्यावृत्त्यवच्छिन्नमिति एकावच्छिन्नएवापरावच्छेदेननिरपेक्षोपाधेरिवात्रभेदकाभावाद्रूप्यज्ञानाधिष्ठानयोरेकत्वं । अतएवाभियुक्तैःफलैक्यादैक्यंज्ञानस्योच्यतइति मैवं । अस्तुवस्तुतोवृत्तिभ्यामवच्छिन्नचैतन्यमेकंतथाप्येकैकवृत्त्यवच्छिन्नस्यैवतस्यरूप्याधिष्ठानज्ञानत्वे । नतूभयवृत्त्यवच्छिन्नस्यतेइत्याशयः । ननुअस्तुरूप्याकाराविद्यावृत्त्यवच्छिन्नस्यरूप्यज्ञानस्यरूप्याधिष्ठानत्वमतआह ॥ [१९९।४]रूप्यादेरिति ॥ [१९९।४]रूप्यज्ञानस्याज्ञानेति ॥ रूप्यज्ञानस्यज्ञातैकसत्त्वे

नतत्राज्ञानस्यत्वयाप्यनंगीकारादित्यर्थः ॥ [११९।५]ज्ञानंरूप्यमिति ॥ अधिष्ठानसामानाधिकरण्येनाध्यस्तप्रतीतेर्दर्शनाच्च ज्ञानंरजतमितिधीःस्यादित्यर्थः ॥ [११९।५]घटादेरिति ॥ अध्यासेनघटस्वरूपेसिद्धेघटसन्निकर्षजन्यघटज्ञानरूपघटाधिष्ठानसिद्धिः । अधिष्ठानेचसतितत्रघटादेरध्याससिद्धिरित्यन्योन्याश्रयापातइत्यर्थः ॥ [११५।६]नन्विति ॥ तथाचघटस्यतत्प्रकाशरूपस्यघटज्ञानस्यशुद्धस्यघटाधिष्ठानत्वेनाभिमतस्यचनपरस्परापेक्षेतिनान्योन्याश्रयइत्यर्थः ॥ [११९।७]त्वन्मतेपीति ॥ चैतन्यरूपेज्ञानेसत्यप्यज्ञानानिवृत्तेः वृत्तौसत्यामज्ञाननिवृत्तेरन्वयव्यतिरेकाभ्यांवृत्तेरेवाज्ञानविरोधितयावृत्तेरेवज्ञानत्वं तदतिरिक्तज्ञानेमानाभावादित्यर्थः । ननु नवृत्त्यतिरिक्तेज्ञानेमानाभावः । वृत्त्युदयात्प्रागज्ञातार्थसिद्ध्यर्थंवृत्त्यतिरिक्तज्ञानस्यावश्यमभ्युपेयत्वात् । अन्यथातस्यसाधकाभावेनशशशृंगतुल्यतयासन्निकर्षजन्यज्ञानहेतुत्वेनप्राक्सत्त्वकल्पनानिष्प्रामाणिकीस्यात् । तस्माद्यादृशस्यघटादेरिंद्रियसंनिकर्षाश्रयत्वेनज्ञानकारणत्वं तादृशस्यसाधनंकिंचिज्ज्ञानमवश्यमभ्युपेयं । अन्यथाअन्वयव्यतिरेकयोरग्रहेणकार्यकारणभावाग्रहात्सर्वामानमेयादिव्यवस्थोच्छिद्येत । तच्चमानंनवृत्तिरूपं । तदानींवृत्तिकारणाप्रवृत्तेरितितद्विलक्षणंनित्यंस्वप्रकाशमेकमेवलाघवात् । तदेवनानाविधोपाधिसंबंधान्नानाविधव्यवहारभाग्भवति । नभइवघटमणिमल्लिकाद्युपाधिभेदेनतच्चाज्ञानसाधकत्वात्स्वरूपतोनाज्ञाननिवर्तकं । वृत्त्युपरक्तंत्वज्ञाननिवर्तकमितिनवृत्तेरनुपयोगः । तथाचसर्वाज्ञानसाधकेसाक्षिचैतन्येअस्मिन्घटादेरध्यासः । तदुक्तंसुरेश्वरवार्तिके । सर्वतीर्थदृशांसिद्धिःस्वाभिप्रेतस्यवस्तुनः । यदभ्युपगमादेवतत्सिद्धिर्वार्यतेकुतः । सर्वतीर्थदृशांतावत्सामान्यंमानलक्षणं । अज्ञातार्थावगमनंत्वदुक्तेतन्नयुज्यते । स्वतस्सिद्धोथवासिद्धोदेहादिस्तेभव

द्भवेत् । प्रमाणानांप्रमाणत्वंनोभयत्रापिलभ्यते । प्रमाणान्यंतरेणापिदेहादिश्चेत्प्रसिद्ध्यति । वदप्रमाणैःकोन्वर्थोनहिसिद्धस्यसाधनं । स्वतोसिद्धेप्रमेयेतुनासतोव्यंजिकाप्रमा । नाभिव्यनक्तिकविताशशशृंगमपिस्फुरन्निति । अत्रोच्यते । आस्तांतावदेषाप्रक्रिया तथापिनतावद्घटादेःसाधकवृत्तिंविनाचैतन्यरूपंज्ञानं । सर्वदासर्वस्यसर्वप्रकाशापत्तेः । वृत्त्युदयात्पूर्वमपियोगिवृत्त्यंतरसत्त्वेनतत्सिद्धेरभावात् । अज्ञाननिवृत्त्यादिकार्यंवृत्त्यैवेत्युक्तं । तस्माद्वृत्त्यतिरिक्तघटज्ञानंत्वद्रीत्यानसिध्यतीतिसाधूक्तं । शुद्धस्यघटाधिष्ठानस्यघटप्रकाशकत्वेविरोधमाह ॥ त्वयापीति ॥ आभासस्येति ॥ शुद्धातिरिक्तस्येत्यर्थः ॥ ब्रह्मानुभवतइति ॥ साक्षिरूपादित्यर्थः ॥ घटानधिष्ठानस्येति ॥ वृत्तिप्रतिविंवितस्यविशिष्टस्यघटप्रकाशकस्यघटानधिष्ठानत्वात् घटाधिष्ठानस्यघटप्रकाशकत्वोक्तौत्वदाचार्यवचोविरोधइत्यर्थः । नचवृत्तिप्रतिविंवितचैतन्यस्यघटाधिष्ठानचैतन्येनसहभेदाभावेनतस्यैवतद्भासकत्वमितिवाच्यं । वस्तुतएकत्वेपिकल्पितभेदवत्त्वात् । अन्यथासर्वस्यसर्वदासर्वप्रकाशापत्तिरितिभावः ॥ दृश्यत्वेति ॥ दृक्संवंधान्यथानुपपत्त्येत्यर्थः ॥ अर्थापत्तिरिति ॥ यद्यप्यनुकूलतर्काभावोक्तिप्रस्तावेनार्थापत्तिविकल्पदूषणयोरवसरःतथाप्यर्थापत्तिदूषणस्यतर्केप्युद्भावनीयत्वात्तदुक्तिरित्यविरोधः ॥ तर्कमात्रमिति ॥ अर्थापत्तेःप्रमाणत्वेनार्थसाधकत्वंतर्कस्यस्वतोप्रमाणत्वेननार्थसाधकत्वं किंतुप्रमाणसहकारित्वमितिमात्रशंव्दार्थः ॥ संवंधस्येति ॥ दृक्संवंधरूपदृश्यत्वस्येत्यर्थः ॥ किंत्विति ॥ संवंधिनोमिथ्यात्वेसंवंधस्यानुपपत्तिरेवस्यादित्यर्थः । संवंधिमिथ्यात्वंप्रकृतसंवंधप्रतिकूलंनेत्याशंक्यनिराकरोति ॥ नचेति ॥ अ

ध्यंस्तत्वेति ॥ मिथ्याभूतसंबंधिकसंबंधस्येत्यर्थः । तथाचोक्तरूपस्याध्यस्तत्वरूपसंबंधस्यसंबंधिमिथ्यात्वंनप्रतिकूलं किंतुतादृशसंबंधस्वरूपसंपादकत्वेनानुकूलमेवेतिभावः ॥ तस्येति ॥ संबंधस्यहिअन्यत्रक्लृप्तसत्यसंबंधिकत्वेनैवाक्षेपकता नत्वन्यत्राक्लृप्ताध्यस्तत्वादिरूपेण । तथाचयेनरूपेणसंबंधस्याक्षेपकता तद्रूपाक्रांतस्यआक्षेपकस्यआक्षेप्यसंबंधिमिथ्यात्वंप्रतिकूलमेवेत्यर्थः । दृक्संबंधरूपदृश्यत्वंप्रतिसंबंधिमिथ्यात्वंप्रतिकूलमेव । अध्यस्तत्वरूपसंबंधंप्रतिसंबंधिमिथ्यात्वस्यप्रतिकूलत्वाभावेपितादृशसंबंधस्यासिद्धत्वान्नसंबंधिमिथ्यात्वाक्षेपकतेत्याखंडलार्थः । ननुदृश्यत्वरूपदृक्संबंधंप्रतिसंबंधमिथ्यात्वंनप्रतिकूलं । तादृशसंबंधस्यस्वरूपेणमिथ्यात्वात् । तत्सत्त्वेहिसंबंधिमिथ्यात्वेनतस्यापिमिथ्यात्वापत्त्यातन्मिथ्यात्वंसंबंधप्रतिकूलंस्यात् । नतुतदस्तीत्याशंक्यनिरस्करोति ॥ नचमिथ्याभूतेति ॥ स्वतइति ॥ स्वतःप्रामाण्यप्रत्यक्षादिसिद्धेच्छादिसाधारणस्यविषयत्वरूपसंबंधस्यबाधकमंतरेणमिथ्यात्वायोगादित्यर्थः ॥ अन्योन्येति ॥ दृक्दृश्यसंबंधस्यमिथ्यात्वेसंबंधानुपपत्त्यादृश्यमिथ्यात्वसिद्धिः तत्सिद्धौचसंबंधिभूतदृश्यस्यमिथ्यात्येनतत्संबंधस्यमिथ्यात्वसिद्धिरित्यर्थः । आक्षेप्यस्यप्रमाणांतराविरुद्धत्वंचनास्तीत्याह ॥ प्रत्यक्षादीति ॥ ननुनप्रत्यक्षविरोधः तस्यातत्वावेदकत्वादित्यतआह ॥ नचेति ॥ यथाचनप्रत्यक्षाविरोधस्तथोक्तमधस्तात् । आक्षेपकस्यदृश्यत्वस्यआक्षेप्यंदृश्यमिथ्यात्वंविनानुपपद्यमानत्वमपिनास्तीत्यभिप्रायेणोक्तंप्रत्यक्षादीत्यादि । अन्यथाप्युपपन्नस्यनतदाक्षेपकत्वमित्यर्थः । त्वदभिमतस्यदृगध्यस्तत्वरूपस्यदृश्यत्वस्यमिथ्यात्वाक्षेपकस्यप्रमितत्वमपिनास्तीत्याह ॥ नाप्येकस्येति ॥ प्रमितानेकवस्तुत्यागबाधकेनत्वदभिमतदृश्यत्वस्यनप्रमितत्वं । दृश्यत्वस्याध्यस्तत्वरूपत्वेहि दृश्य

ग्राहकस्यप्रत्यक्षादेःस्वतःप्रामाण्यादित्यागः । अद्वैतागमाद्यनाश्वासइत्यादिवहुविक्लवंस्यादित्यर्थः । नचाक्षेपकेप्रमितत्वमनपे
क्षितं अप्रमितेनापिप्रतिविंवेनविंवाक्षेपदर्शनादितिवाच्यं । प्रतिविंवस्यत्वन्मतेपिसत्यत्वात् । तज्ज्ञानस्यैवाक्षेपकत्वाच्च ॥
२०१।४ अनेकेति ॥ वहुवाधस्यान्याय्यत्वादित्यर्थः । दृश्यत्वंविकल्प्यदूषयति ॥ २०१।४ आक्षेपकमिति ॥ २०१।५ तवेति ॥ नचाध्यासरूपंदृग्वि
षयत्वंममापिसंमतमितिवाच्यं । इच्छादिसाधारणानध्यस्तदृग्विषयत्वेनैवोपपत्तौ अध्यस्तस्यदृग्विषयत्वस्यकल्पनेमानाभा
वात् । ननुइच्छादिसाधारणंविषयत्वमस्तुदृश्ये तदेवदृश्यस्याध्यस्तत्वेमानमित्यतआह ॥ २०१।५ सिद्धौवेति ॥ अतिप्रसंगस्यविष
यत्वसंवंधेनैवभंगादितिभावः ॥ २०१।७ सिद्ध्यसंमतेरिति ॥ दृगधीनसिद्धिकत्वमित्यत्रवहुव्रीह्यर्थस्यसिद्धिसंवंधस्यतद्विषयत्वरूप
त्वादित्यर्थः ॥ २०१।७ नचेति ॥ दृक्संवंधसामान्यंदृश्यत्वंतच्चप्रसक्तसंयोगादिविशेषनिषेधसहकृतं अध्यस्तत्वरूपेविशेषसंवंधेपर्यव
स्यत्संवंधिनोदृश्यस्यमिथ्यात्वमाक्षेप्स्यतीत्यर्थः ॥ २०१।८ तस्येति ॥ घटस्यज्ञानमितिप्रतीतिसिद्धोयोज्ञानज्ञेययोःसंवंधः तंप्रतिअ
ध्यस्तत्वरूपसंवंधस्यविशेषरूपत्वाभावात् प्रथममध्यस्तत्वंसंवंधत्वेनैवनक्लृप्तं । दूरेज्ञानज्ञेयसंवंधसामान्यंप्रतिविशेषत्वेन । त
थाचनपरिशेषेणाध्यस्तत्वेपर्यवसानमितिभावः ॥ २०२।१ नहीति ॥ ज्ञेयज्ञानसंवंधसामान्यंप्रतिअध्यस्तत्वरूपसंवंधस्यविशेषत्वेघटस्य
ज्ञानमित्यत्रयथाज्ञेयज्ञानसंवंधसामान्यव्यवहारेज्ञेयस्यषष्ठ्यंतेननिर्देशः ज्ञानस्यप्रथमांतेन तथाध्यस्तत्वरूपविशेषसंवंधव्यव
हारेपि अध्यस्तस्यषष्ठ्यंतेनअधिष्ठानस्यप्रथमांतेननिर्देशःस्यात् । ननुतथास्तीत्यर्थः । नचरूप्यस्यशुक्तिरधिष्ठानमितिप्रतीत्या

अध्यस्तत्वस्यसंबंधविशेषत्वसिद्धिरितिवाच्यं । घटस्यसंबंधःघटस्यसंयोगइतिसामान्यविशेषसंबंधव्यवहारेपदांतरप्रयोगादर्शनात् । रूप्यस्यकिंचित्शुक्तिरितिसंबंधसामान्यंप्रतिरूप्यस्याधिष्ठानंशुक्तिरित्येतस्यविशेषत्वेपिज्ञेयज्ञानसंबंधंप्रतिनविशेषत्वमित्यर्थः ॥ [२०२।१] तद्वत्तइति ॥ सदसद्वैलक्षण्याभावरूपानिर्वाच्यत्वाभाववतइत्यर्थः । ननुकरणसामर्थ्येनतुच्छेतदाकारवृत्तिसमुल्लासेपिदृक्संबंधरूपंदृश्यत्वंतुच्छत्वविरोधिनतुच्छेस्ति । तुच्छाकारतायावृत्तिगतत्वेपिवृत्तिसंबंधस्यतुच्छगतत्वाभावोपपत्तेरितिचेन्न । वृत्तिसंबंधातिरिक्तस्यदृग्विषयत्वस्यघटादावप्यभावेनापदकासिद्धेः । तुच्छाकारतायावृत्तिगतत्वेतुच्छेपिवृत्तिसंबंधस्यावर्जनी[२०२।३]यत्वाच्च ॥ सत्त्वेपीति ॥ नचब्रह्मणितद्व्यवहारोध्यस्तइतिवाच्यं । घटव्यवहारस्यापिब्रह्मण्यध्यस्तत्वेनतस्यापिब्रह्मव्यवहारत्वा[२०२।४]पातादित्युक्तत्वात् ॥ यःकश्चिदिति ॥ दृक्दृश्ययोर्यावान्संबंधःससर्वोप्यध्यस्तोमिथ्येत्यर्थः ॥ [२०२।५] आद्यइति ॥ दृक्दृश्यइति संबंधस्यसर्वस्यमिथ्यात्वेपिदृश्यइवदृश्यस्याप्यमिथ्यात्वोपपत्तेरित्युक्तत्वादित्यर्थः ॥ [२०२।५] त्वन्मतइतिं ॥ घटादेस्स्वसन्निकर्षजन्या[२०२।६]स्वज्ञानात्पूर्वंसत्त्वेनस्वज्ञानेअध्यासायोगादित्युक्तत्वादित्यर्थः । संगृह्णाति ॥ एवंचेति ॥ [२०२।६] शाब्दवृत्तेरिति ॥ शब्दजन्यायाब्रह्माकारवृत्तौविषयाधिष्ठानचैतन्यादिकल्पनांविनावृत्तिमात्रंप्रतिब्रह्मणोविषयत्वं विषयिण्यांचवृत्तौविषयस्यब्रह्मणोनाध्यस्तत्वं तथाघटादिरपिस्वसन्निकृष्टेंद्रियजन्यवृत्तिविषयएवतादृशवृत्त्यभिव्यक्तचैतन्येनघटादेःप्रकाश्यत्वेपिनचैतन्येनघटस्याध्यस्तत्वं संबंधः । किंतुइष्यमाणेच्छादिवत्विषयविषयिभावःतात्विकःसंबंधोस्तु । ननुशाब्दवृत्तेःसादित्वान्नतत्रब्रह्माध्यासः । ब्रह्म

ण्यनादौदृश्याध्यासोभविष्यतीत्यतोदृष्टांतांतरमाह ॥ अविद्येति ॥ उपसंहरति ॥ तस्मादिति ॥ प्रमाणस्येति ॥ अनुमा
नत्रयस्येत्यर्थः ॥ तल्लक्षणस्येति ॥ संयोगस्यसमवायस्यचयल्लक्षणंतदेवज्ञानज्ञेययोःसंबंधस्यलक्षणंभविष्यतीत्यर्थः ॥ विशे
षसंज्ञायांइति ॥ यथासंयोगःसमवायइतितयोःसंज्ञातथाज्ञेयज्ञानसंबंधस्यापियथारुचिविषयविषयिभावइत्यादिसंज्ञाकर्तव्ये
त्यर्थः ॥ उक्तरीत्येति ॥ संबंधासिद्धिरित्यादिवाक्यजन्यज्ञानस्यैतद्वाक्यप्रतिपाद्येनसंबंधसिद्ध्यभावरूपेणार्थेनसंबंधसत्त्वास
त्त्वाभ्यांव्याहतमित्यर्थः ॥ स्वनिर्वाहकत्वमिति ॥ संबंधांतरंविनैवसंबंधस्यसंबंधत्वमित्यर्थः । अन्यथाध्यासिकसंबंधेपिसंबं
धांतरपरंपरास्यात् । नचाध्यासिकसंबंधस्यमायिकत्वेनमायायाश्चाघटनघटनापटीयस्त्वेनसर्वानुपपत्तिर्भूषणमितिवाच्यं । स
त्यस्यैवेश्वरशक्त्यासत्यज्ञेयस्यस्वज्ञानेनसंबंधस्यचस्वनिर्वाहकतास्तु । नतुमातरीवईश्वरशक्तौभक्तिंत्यक्त्वाकापुरुषस्यकुलटाया
मिवानिर्वाच्यमायायांभक्तिर्युक्ता ॥ यदपीति ॥ विषयत्वंकिंज्ञानजन्यफलाश्रयत्वंवेत्यादिनाकृतमित्यर्थः ॥ प्रकृतानुपयुक्त
मिति ॥ अनुकूलतर्कप्रस्तावेअनुपयोगात् भौतिकविचारमनुसरतीत्यर्थः । उक्तंह्यात्मतत्वविवेके । केनचिद्भौतिकेनराजद्वा
रिद्विरदमवलोक्यविकल्पितं । किमयमंधकारोमूलकमस्ति । आहोस्विज्जलवाहोवलाकावान्वर्षतिगर्जतिच । यद्वावांधवोयं ।
राजद्वारेश्मशानेचयस्तिष्ठतिसवांधवइतिपरमाचार्यवचनात् । अथवायोयंभूमौदृश्यतेतस्यच्छायेति । दूषितंच । नप्रथमः । त
स्यशूर्पयुगलप्रस्फोटनाभावात् । नद्वितीयः । तस्यस्तंभचतुष्टयायोगात् । नतृतीयः । तस्यलगुडभ्रामणाभावात् । नचतुर्थः ।
तस्यनरशिरःशतोद्गिरणाभावात् । अतोनकिंचिदिदमिति । किमेतावताद्विरदस्वरूपमेवनिवर्ततां । किंतुयोद्विरदोस्तिसो

स्त्येव ॥ अनतिप्रसंगायेति ॥ घटदृशिपटस्यदृश्यत्वपरिहारायकरणसन्निकर्षादिद्वारकोदृक्दृश्ययोःसंबंधोवाच्यः । नतुदृश्यगतंविषयत्वमपिनिर्वाच्यमित्यर्थः । ननुप्रकृतस्यदृश्यमिथ्यात्वस्यसिद्ध्यर्थंविषयत्वनिरुक्तिखंडनमित्यतआह ॥ नचेति ॥ विषयस्य दृश्यस्य ॥ विषयित्वस्येति ॥ विषयत्वानिरुक्तौतद्घटितविषयित्वस्याप्यनिरुक्तावपिविषयिण्यादृशोयथासत्यत्वं तथादृश्यस्यापिसत्यत्वमक्षतमित्यर्थः । विषयत्वनिरुक्तिखंडनंसाधनभिन्नएवननिविशते किंतुवाधकेपिनिविशतेतदित्याह ॥ स्वव्याहतंचेति ॥ त्वयैवेति ॥ विवादगोचरापन्नंप्रमाणज्ञानंस्वप्रागभावव्यतिरिक्तस्वविषयावरणेत्याद्यनुमानेविषयत्वस्यव्यवहृतत्वाद्विषयत्वनिरुक्तिखंडनंस्वव्याहतमित्यर्थः ॥ दृग्विषयत्वस्येति ॥ दृश्यत्वस्येत्यर्थः । ननुनवयंविषयत्वंसर्वथानिराकरिष्यामः । अपित्वध्यस्तत्वातिरिक्तं । स्वविषयावरणेत्यादौतुविषयत्वमध्यस्तत्वरूपंमयाव्यवहृतं । तेननस्वव्याहतिरित्याशंक्य निराकरोति ॥ नचेति ॥ स्वविषयावरणेत्यत्रस्वशब्दस्यपक्षीभूतप्रमाणज्ञानपरतयाप्रमाणज्ञानस्यचविषयानध्यस्तत्वपर्यंततया सत्यंस्वविषयंप्रतिनाधिष्ठानत्वं । व्याघातादित्यर्थः । प्रमाणज्ञानेतद्विषयस्याध्यासेदोषांतरमाह ॥ तदज्ञानेति ॥ यदिप्रमाणज्ञानेतद्विषयोध्यस्तःस्यात्तदाप्रमाणज्ञानविषयकाज्ञानेनतज्ज्ञानेनचतद्विषयविषयकाध्यासस्यतज्ज्ञानापरपर्यायस्यजन्मनिवृत्तीस्यातां । प्रमाणज्ञानविषयस्यप्रमाणज्ञानानुविद्धतयाप्रमाणज्ञानविषयइत्यादिरूपेणइदमंशानुविद्धतयाइदंरजतमितिरजतस्येवप्रतीतिःस्यात् । नचैतदस्ति । अन्यादृशंचनाध्यस्तत्वं । तस्मात्प्रमाणज्ञानेनतद्विषयोध्यस्तइत्यर्थः । ननुविषयत्वनिरुक्ति

खंडनंनप्रकृतानुपयुक्तं । तथाहि । दृशंप्रतिदृश्यस्यविषयत्वेखंडितेअन्यस्यसंवंधस्याभावादृगसंबद्धस्यदृश्यस्यदृक्प्रकाश्यत्वानुपपत्तेर्दृगध्यस्तत्वरूपोदृक्संवंधःसिध्यतीतिघटादिदृश्यगतदृक्प्रकाश्यत्वरूपदृश्यत्वोपपादकाध्यस्तत्वसमर्थनार्थत्वादित्याशंक्यनिराकरोति ॥ [२०४।४] नहीति ॥ साधारणं परोक्षभ्रमविषयेविद्यमानं । दृश्यविशेषस्य अपरोक्षज्ञानविषयस्य । दृग्विशेषप्रकाश्यत्वे वृत्तिप्रतिविंवितचैतन्येनवातदभिव्यक्तघटाधिष्ठानचैतन्येनवाप्रकाश्यत्वे । परोक्षभ्रमस्थलेअनिर्वाच्यत्वरूपाध्यस्तत्वे विद्यमानेप्युक्तचैतन्यप्रकाश्यत्वरूपदृश्यत्वाभावान्नाध्यस्तत्वंतस्योपपादकं । नहिसामान्यंविशेषस्योपपादकं । तस्मिन्सत्यभवतस्तदप्रयोज्यत्वात् । तथाचाध्यस्तत्वस्यदृश्यत्वानुपपादकत्वात्तत्सिध्यर्थंनविषयत्वखंडनं । किंतुप्रकृतानुपयुक्तमेवतदिति भावः ॥ [२०५।१] तादृशमिति ॥ चिदात्मनिवृत्तावनध्यस्तेवृत्तिंप्रतिविषयेयादृशंविषयत्वलक्षणंतादृशंज्ञेयंप्रतिज्ञानस्यापितदस्त्वित्यर्थः । विषयत्वलक्षणस्यावश्यंवक्तव्यत्वमाह ॥ [२०५।३] त्वयापीति ॥ [२०५।४] लक्षणस्यापीति ॥ तदुक्तंवौद्धाधिकारे तत्सिद्धौतल्लक्षणमपिकिंचिदस्त्येवेति । तथाचावश्यवक्तव्यस्यविषयत्वलक्षणस्यखंडनंस्वव्याहतमित्यर्थः ॥ [२०५।४] प्रमाणवदिति ॥ प्रमाणवल्लक्षणस्यापीत्यर्थः ॥ [२०५।४] अविद्यादाविवेति ॥ अविद्यावद्विषयस्यापीत्यर्थः ॥ [२०५।४] साधनमिति ॥ विषयत्वस्यत्वदीयहेत्वंतर्गतत्वात् हेतुज्ञानायतदवश्यंलक्षणीयमित्यर्थः । ग्राह्यलक्षणज्ञानवतस्तवतत्प्रत्याख्यानंव्याहतमित्याह ॥ [२०५।५] नचतवापीति ॥ घटादेःपटाद्यसंकीर्णव्यवहारायतद्धेतुभूतंपटाद्यसंकीर्णस्यपृथुवुध्नोदराकारादेर्ज्ञानंतादृशासंकीर्णव्यवहारवत्तवापिवर्तते । असंकीर्णतादृशाकारएवलक्षणं । ज्ञातस्यवस्तुनःत्वयापिकिमपिलक्षणंनिर्वक्तव्यमेवेतितत्खंडनंव्याहतमित्यर्थः । ननुनिरुच्यमानलक्षणस्यज्ञानं

नताद्दशव्यवहारहेतुः। किंतुलक्षणस्य। तावतैवताद्दशव्यवहारसिद्धेरितिशंकते ॥ [२०५।६] नन्विति॥ [२०५।६] तन्निर्वचनेनेति ॥ असंकीर्णाकाररूपलक्षणस्यनिर्वचनेनेत्यर्थः॥ [२०५।६] सममिति ॥ ग्राह्यलक्षणस्यासंकीर्णाकारस्यानिर्वचनेपि ताद्दशाकारज्ञानमात्रेणैवासंकीर्णोग्राह्यव्यवहारोभविष्यतीति तन्निरुक्तिखंडनेपिममानिष्टाभावात्तत्खंडनंप्रकृतानुपयुक्तमितिभावः॥ [२०५।७] इयांस्त्विति॥ अयमांतरालिकोविशेषोप्रयोजकः। असंकीर्णतदाकारज्ञानस्यव्यवहारहेतुत्वादितिभावः ॥ [२०५।७] सइति॥ आकारः। ननुविषयाकारलक्षणस्यानुक्त्याविषयस्यानिर्वचनीयत्वंसिध्यतीत्यतआह॥ [२०५।८] नचेति ॥ नह्यनिरुच्यमानलक्षणकत्वमनिर्वचनीयत्वं। किंतुसदसद्वैलक्षण्यंतत्। तच्चलक्षणोक्त्यनुक्त्योःसममेव । ननुसदसद्वैलक्षण्यरूपानिर्वाच्यत्वंप्रतिदुर्निरूपलक्षणकत्वंप्रयोजकंमयांगीक्रियतइत्यतआह॥ [२०५।९] ब्रह्मणीति ॥ कारणत्वस्यलक्षणंदुर्निरूपमितिब्रह्मणिजगत्कारणत्वस्यासंभवापातादिष्टापत्तिंवारयितुंश्रौतस्येत्युक्तं । यतोवाइमानिभूतानिजायंतइत्यादिश्रुतिबोधितस्यकारणत्वस्यानिर्वचनीयत्वेश्रुतेर्व्यावहारिकमपिप्रामाण्यंनस्यादित्यर्थः॥ [२०६।१] असंभवादिति॥ प्रसंगांतोहेतुः । असंभवप्रसंगादित्यर्थः । ब्रह्मणोपिदुर्निरूपलक्षणत्वादनिर्वचनीयत्वंस्यादित्याह ॥ [२०६।१] त्वयैवेति ॥ प्रत्यगात्मस्वरूपंतत्कीद्दगितिप्रश्नेताद्दशमीद्दशमितिविशिष्यनिरूपणंयत्रनप्रसरतितद्वस्तुप्रत्यक् इत्यवधार्यतामित्यनेनदुर्निरूपत्वोक्तेरित्यर्थः। सुनिरूपलक्षणत्वेपिनसत्यत्वमित्याह॥ [२०६।२] प्रपंचादाविति ॥ त्वद्रीत्याअनिर्वाच्यत्वादिनाप्रपंचस्यलक्षणंसुकरमितिप्रपंचोप्यनिर्वाच्योनस्यात्। सत्यएवस्यादित्यर्थः। ग्राह्यस्यघटादेर्लक्षणखंडनंश्रुतिविरुद्ध

मित्याह ॥ [२०६।२] यत्कठिनमिति ॥ यद्वाननुनिर्दुष्टलक्षणाभावोनिर्वाच्यत्वेहेतुः । प्रपंचगतानिर्वाच्यत्वलक्षणंत्वाधुनिकपुरुषो
त्प्रेक्षितत्वात्संभावितदोषमित्यतआह ॥ [२०६।२] यत्कठिनमिति ॥ निर्दोषश्रुतिसिद्धस्यलक्षणस्यनिर्दुष्टत्वात्तादृशलक्षणानुक्तेरभावा
त्पृथिव्यादीनामनिर्वाच्यत्वंनस्यादितिभावः । ननुग्राह्यलक्षणस्यसत्त्वेतस्यनिर्वचनमपिपृथिव्यादेःकाठिन्यस्येवस्यात् । नच
तन्निर्वचनमस्ति । तस्मान्नग्राह्यलक्षणस्यसत्त्वमित्याशंक्यतदनिर्वचनमन्यथासिद्धयति ॥ [२०६।३] तस्मादिति ॥ इत्थमितिवक्तुमशक्य
त्वमद्भुतत्वादेवयुक्तमित्यन्वयः । असत्त्वादेववक्तुमशक्यत्वंकिंनस्यादित्यतउक्तं [२०६।३] प्रमितस्येति ॥ प्रमितस्यदुरपह्नवत्वादि
त्यर्थः । स्पष्टयाअबाधितदृष्ट्यादृष्टंयदबाधितलक्षणंसंस्थानविशेषरूपंतस्यप्रतिपुरुषमुखेसत्त्वेपियथाद्भुतत्वाद्वक्तुमशक्यत्वं त
थाब्रह्मलक्षणस्यापीति ॥ [२०६।४] अद्भुतत्वादिति ॥ अद्भुतत्वाद्धेतोः इत्थमितिनिर्वाच्यत्वाभावइत्यर्थः । ननुनाद्भुतत्वादनिर्वाच्य
त्वंकिंतुप्रतिभासमात्रत्वादित्याशंक्यव्यतिरेकव्यभिचारेणपरिहरति ॥ [२०६।५] नहिशुक्तीति ॥ यद्विप्रातिभासिकत्वेनानिर्वाच्यत्वं
तर्ह्यनिर्वाच्यत्वाभावेनसुवचत्वेनाप्रतिभासिकत्वंव्यावहारिकत्वरूपंस्यादित्यर्थः । अप्रयोजकत्वंवक्तुंअन्वयव्यभिचारमप्याह
॥ [२०६।६] नवामुखेति ॥ प्रातिभासिकत्वाभावेपिमुखसंस्थानादौविद्यमानस्यानिर्वाच्यत्वस्यतदप्रयोज्यत्वादितिभावः । व्यभिचारां
तरमाह ॥ [२०६।६] नवेति ॥ विषयत्वनिरुक्तिखंडनस्यप्रकृतानुपयुक्तत्वमुक्तमुपसंहरति ॥ [२०६।७] तस्मादिति ॥ [२०६।८] शब्दसाम्यादिति ॥ निरु
यां० १३४ क्तौखंडितायांनिर्वचनाभावरूपमनिर्वचनीयत्वंसिध्यति । निरुक्तिविरहस्यानिर्वचनीयत्वस्यचैकार्थत्वात् शब्दसाम्यमितिभावः

॥ भ्रांतिमूलमिति ॥ निरुक्तौखंडितायांनिर्वचनाभावरूपमनिर्वचनीयत्वंयद्यपिसिद्ध्यति तथापिसदसद्वैलक्षण्यरूपंतन्नसिद्ध्यति । निरुक्तिविरहेपिप्रतिपुरुषमुखवत् इक्षुक्षीरादिमाधुर्यवत्ब्रह्मवत् आनंदादिवत्सत्त्वसिद्धेः । एवंसत्यपिसदसद्वैलक्षण्यरूपानिर्वाच्यत्वसिद्ध्यर्थं यन्निरुक्तिखंडनंकृतंतद्भ्रांतिमूलं । भ्रांतौकारणं । अनिर्वाच्यनिरुक्तिविरहशब्दयोःएकार्थत्वरूपं शब्दसाम्यमित्यर्थः । एतावतानिर्वचनायोग्यत्वमभ्युपेत्यसमाहितं वस्तुतस्तदपिनास्तीत्याह ॥ नचेति ॥ केषांचिदिति ॥ निर्वचनेऽकुशलानामित्यर्थः । नहित्वन्मतेपिमंदेनौपनिषदापदेनभेदवादिनंप्रत्यैक्यंअशक्यनिरूपणमितितन्निर्वचनायोग्यंभवति । अन्येनोपनिषदोरसेनसुनिरूपत्वात् । तथाग्राह्यलक्षणमपीत्यर्थः ॥ उक्तंहीति ॥ वौद्धधिक्कारेहिजगतोनिर्वाच्यदूषणंप्रकृत्यैतदुक्तं परामर्शपाटवाभावेनाप्युपपत्तेः नहिजात्यंधोनीलंज्ञातुंनिर्वक्तुंवानशक्तइत्यज्ञेयानिर्वाच्यमेवतल्लोकइति । वौद्धधिक्कारस्थंवाक्यांतरमप्युदाहरति ॥ दुरवगाहत्वेनेति ॥ अर्थानुवादोयं । तद्ग्रंथपाठस्तु नहिलक्षणापरिज्ञानमात्रेण स्पष्टदृष्टमपिलक्ष्यमपह्नोतुंशक्यते । अपरिज्ञानस्यतद्दुःरवगाहत्वेनाप्युपपत्तेरिति । ननुकेषांचिन्निर्वचनशक्तिरित्यनुपपन्नं मम निर्वचनासामर्थ्येनसर्वेषामेवतत्राशक्तिसिद्धेरित्यतआह ॥ नचेति ॥ सर्वेषामितिशेषः । ग्राह्यलक्षणस्यकुशलमतिभिःसुवचत्वेपितवतत्रासामर्थ्येनसर्वेषामेवतन्निर्वचनाभाववचनंवानरवचनतुल्यं । वानरवचनंतु वौद्धधिक्कारेउक्तम् । पवनतनयवार्तामुपश्रुत्यतत्स्पर्धयाकश्चिद्वानरःकियद्दूरमुत्पत्यमहार्णएवपतितःप्राह । अपारएवायमकूपारः । मिथ्यारामायणमिति । त

दृश्यसंबं. १ । २३

थास्वासामर्थ्येनसर्वेषामेवतत्कल्पयसीत्यर्थः ॥ प्रयोगइति ॥ प्रयुज्यतइतिप्रयोगः कर्मणिघञ् ॥ नचेति ॥ विषयत्वज्ञानेस
तितद्धटितोज्ञानविषयइत्यभियुक्तप्रयोगः । तादृशप्रयोगेचतत्प्रयोगरूपविषयत्वज्ञानमित्यन्योन्याश्रयइत्यर्थः ॥ पूर्वपूर्वेति ॥
यंप्रयोगविशेषंयन्मंत्रत्वमपेक्षतेतन्मंत्रत्वंसप्रयोगविशेषोनापेक्षते किंतुतदतिरिक्तमितिनान्योन्याश्रयइत्यर्थः । नचैतावताज्ञेय
त्वमात्रंसामान्यतःस्यात् नत्वेतज्ज्ञानविषयत्वमितिवाच्यं । एतदर्थातर्भावेणतद्विशेषस्यासिद्धेः । नचसादौपूर्वप्रयोगमपेक्ष्यप्र
योगोनवक्तुंशक्यंते तस्यानादिमात्रविषयत्वादितिवाच्यं । नियामकाभावाल्लिप्यादिसंप्रदायवदुपपत्तेश्च । वैदिकप्रयोगस्यापि
त्वन्मतेमुख्यानादित्वाभावाच्च । ननुप्रयोगोपिस्वविषयेसंबंधइत्यात्माश्रयइतिचेन्न । शब्दरूपस्यतस्यासंबंधत्वात्संबंधत्वेनाप्र
वेशाच्च ॥ करणपाटवेति ॥ एडमूकादीनांअभिलपनरूपव्यवहाराभावेपीत्यर्थः ॥ अस्त्वेवेति ॥ तयाचनतत्राव्याप्तिरि
त्यर्थः । निर्विकल्पकानंगीकारेणतत्राव्याप्तिंपरिहरति ॥ कदापीति ॥ कस्येति ॥ लक्ष्यस्याननुगतत्वाल्लक्षणाननुगमोनदो
षइत्यर्थः ॥ नघटज्ञानमिति ॥ भिन्नविषयतयाघटज्ञानंपटव्यवहारेनहेतुरित्यर्थः । नन्वभिलपनरूपव्यवहारजननयोग्यत्वे
नप्रातिस्विकरूपेणनिर्णेयं । अवच्छेदकत्वस्यफलनिर्णेयत्वात् । प्रतिस्वंचफलादर्शनात् । अजनितफलेप्रातिस्विकयोग्यतायां
मानाभावात् । किंतुतत्रानुगततत्तद्वृत्तिविषत्वेन । तथाचात्माश्रयइतिचेन्मैवं । संशयादिभिन्नज्ञानत्वस्ययोग्यतावच्छेदकत्वे
अन्योन्याश्रयानवकाशात् । नचातिप्रसंगः । विशेषसामग्रीसहितायाएवसामान्यसामग्र्याःकार्यजनकत्वादितिभावः ॥ अतए

वेति ॥ योग्यत्वस्यविवक्षितत्वादित्यर्थः । तदेवोपपादयति ॥ ज्ञानकर्मेति ॥ ननुकर्मत्वस्यजनकत्वापरपर्यायकारकविशेषत्वात्तदतिक्रमदोषइत्यतआह ॥ नहीति ॥ पटमिति ॥ तथाचतत्रद्वितीयाविभक्तिरनुपपन्नास्यादित्यर्थः ॥ सिद्धमिति ॥ पटावयवादिकमित्यर्थः । ननुपटंकरोतीत्यादौसिद्धस्यैवतंत्वादेःकृतिकर्मता । व्यापार्यतयासिद्धस्यैवसर्वैःकृतिकर्मतांगीकारात् । अतएवनिष्पादनावाचिधातुसमभिव्याहृतकर्मपदेशक्यावयवेनिरूढलक्षणामाहुरसत्कार्यवादिनः । सत्कार्यवादिनांतुपूर्वसतोप्यभिव्यंजनीयतयानकारकत्वकृतिकर्मत्वयोरनुपपत्तिरितिचेत्न । पटंकरोतीत्यादौअवयवव्यापार्यत्वातिरिक्तस्यपटीयकर्मत्वादेरननुभवात् । अतएवकृतेःसिद्धवृत्त्यसिद्धविषयत्वनियमइत्याहुः । अन्यथास्वर्गंकुर्यादित्यादौस्वर्गपदस्यतत्साधनयागलक्षणायामनन्वयःस्यात् । क्रियाधीनव्यवहारयोग्यत्वरूपातिशयवत्त्वेनपटंकरोतीत्यादौमुख्यप्रयोगोपपत्तौनिरूढलक्षणानाश्रयणाच्चेतिभावः । आत्माश्रयपरिहारार्थंविषयसप्तमीभ्रमंनिराकरोति ॥ सतिसप्तमीति ॥ योग्यत्वंचेति ॥ योग्यतावच्छेदकंचोक्तमितिनोक्तदोषः ॥ अन्येत्विति ॥ एतस्यइत्याहुरित्यग्रेतनेनसंबंधः ॥ समवायवानिति ॥ अतएवसंबंधांतरंविनेत्यनुक्त्वासंबंधांतरमनपेक्ष्येत्येवोक्तमितिभावः । मत्समवेतंरूपज्ञानमित्यत्रात्मसमवायादीनांरूपज्ञानावच्छेदकत्वादितिपूर्वोक्तामतिव्याप्तिंपरिहरति ॥ यद्यपीति ॥ तदवच्छिन्नस्वभावत्वमुपपादयति ॥ संबंधेति ॥ असंभवशंकांपरिहरति ॥ ज्ञानेति ॥ स्वभावपदप्रयोजनमग्रेवक्ष्यते । ननुज्ञानविषयकानुमितावनुव्यवसायेचाव्याप्तिः ज्ञानानुमितेरनुमित्यनुव्यवसा

यंप्रति अनुव्यवसायस्यचस्वविषयकानुव्यवसायंप्रतिविषयत्वेनास्तिलक्ष्यत्वं । ज्ञानानुमितेःसाध्यरूपंयत्ज्ञानंतदवच्छिन्नस्व
भावत्वात् । अनुव्यवसायस्यचव्यवसायरूपंयज्ज्ञानंतदवच्छिन्नस्वभावत्वाच्चाव्याप्तिरितिशंकांपरिहरति ॥ [२११।१]यद्यपीति ॥
[२११।१]स्वग्राहकेति ॥ स्वस्यज्ञानविषयकानुमितेरनुव्यवसायस्यचयद्ग्राहकंज्ञानंतत्प्रतिविषयभूतमित्यर्थः । एतेनतयोर्लक्ष्यत्वमुक्तं॥
[२११।१]ज्ञानविषयकेति ॥ अनेनज्ञानावच्छिन्नस्वभावत्वंज्ञानानुमित्यनुव्यवसाययोरुक्तं । ज्ञानस्यविषयावच्छिन्नस्वभावत्वात् ।
ज्ञानानुमित्यनुव्यवसाययोस्तुज्ञानविषयकत्वादित्यर्थः ॥ [२११।२]अनुमितीति ॥ अनुमितिश्चअनुव्यवसायश्चेतिविग्रहः । आदिशब्दे
नज्ञानमस्तीत्यादिशब्दजन्यज्ञानपरिग्रहः ॥ [२११।२]ज्ञानावच्छिन्नेति ॥ विषयभूतेनज्ञानेनावच्छिन्नस्वभावमित्यर्थः ॥ [२११।२]स्वयमिति॥
ज्ञानविषयकानुमित्यनुव्यवसायादिकमित्यर्थः ॥ [२११।२]यज्ज्ञानमिति ॥ ज्ञानमनुमिनोमि घटज्ञानंनिश्चिनोमिइत्यादिज्ञानंप्रती
त्यर्थः ॥ [२११।२]तदवच्छिन्नेति ॥ तेनज्ञानानुमित्यनुव्यवसायेनघटज्ञाननिश्चयानुव्यवसायेनवेत्यर्थः । ननुमत्समवेतंरूपज्ञानमि
त्याकारकज्ञानस्यात्मसमवायविषयत्वाभावप्रसंगः । आत्मसमवायस्यसंबंधत्वेनसंबंधिभूतज्ञानावच्छिन्नत्वात् । घटस्यज्ञान
मितिप्रतीत्याघटावच्छिन्नस्वभावत्वंयथाज्ञानस्यतथाज्ञातोघटइतिप्रतीत्याघटस्यापिज्ञानावच्छिन्नस्वभावत्वेनासंभवश्चेतिचेन्न ।
आत्मसमवायस्यस्वविषयकज्ञानेनसंबंधिभूतेनावच्छिन्नत्वेपिनज्ञानत्वेनतदवच्छिन्नता । किंतुसंयोगादिसाधारणसंबंधित्वेन
दुःखादिसाधारणात्मसमवेतत्वेनवा । विषयस्तुनकेनापिरूपेणज्ञानावच्छिन्नस्वभावः । ज्ञातोघटइत्यादौघटादेर्ज्ञानावच्छिन्नत्वे
पिनतदवच्छिन्नस्वभावत्वं । दंडीदेवदत्तइत्यादौदंडस्येवदेवदत्तेज्ञानस्यापिघटादौविशेषणत्वमात्रत्वात् । ज्ञानंतुविषयावच्छिन्नस्व

भावं । विषयेणविनाज्ञानानिरूपणात् । ज्ञानमस्तीत्यादावपिसामान्यतोविषयोनिरूपकोस्त्येव । नजानामीत्यज्ञानेविषयवत् । ज्ञानंविनातुविषयोनिरूप्यतएव । घटोयं घटोयमित्यादि । एतदर्थमेवलक्षणेस्वभावपदमुपात्तमितिभावः ॥ [२११।३] यज्ज्ञानमिति ॥ यदीयत्वंयत्संबंधित्वं । एतेनयदीयमितितद्धितस्ययद्विषयकत्वार्थत्वेआत्माश्रयः । अर्थांतरस्यचाभावइतिनिरस्तं । वस्तुतो विषयत्वस्यसंबंधत्वेनैवज्ञेयत्वात् । नतुविषयत्वेनेति । स्वभावः स्वरूपं । तथाचज्ञानस्वरूपमेवज्ञानस्यार्थेनसहसंबंधः । सामान्यतश्चविषयिताज्ञानस्वरूपं । घटादिविषयतातुसंबंधिनाघटादिनानुगताज्ञानविशेषएव संयोगविशेषाएवघटादीनांसंबंधः । व्यवहारनिमित्तंचज्ञाननिष्ठमर्थसंबंधित्वं । नार्थनिष्ठंज्ञानसंबंधित्वं । अतीतानागतव्यवहारानुरोधादितिबोध्यं । तदुक्तंबौद्धधिक्कारे । लक्ष्यस्तावदत्रविषयविषयिभावः । सचप्रकाशस्यसतस्तदीयतामात्रनिबंधनःस्वभावविशेषः [२११।६] । स्वभावत्वादेवचनोपकारांतरमपेक्षते [२११।६] । तन्मात्रीयत्वादेवचनान्यदीयइति । जन्यज्ञानविषयस्यलक्षणमाह ॥ अथवेति ॥ यत्सन्निकृष्टेति ॥ ज्ञानासाधारणकारणासाधारणकारणप्रतियोगिकसन्निकर्षाश्रयत्वं । आश्रयत्वंचतादृशसन्निकर्षानुयोगित्वं । तेनकरणेनाति [२११।७] व्याप्तिः । आद्यस्यकारणांतरस्यप्रयोजनमाह ॥ [२११।६] नचैवमिति ॥ एवंलक्षणकरणेआकाशेतिव्याप्तिर्नेत्यर्थः [२११।८] ॥ हेतुत्वेनेति ॥ कारणत्वस्यसन्निकर्षविशेषणत्वेनप्रथमतएवाभिधित्सितत्वादित्यर्थः । संपूर्णेपिदोषंशंकते ॥ नन्विति ॥ यद्यप्याद्यइष्टापत्तिः तथापितादृशलिंगधर्मिभावरूपकरणसन्निकर्षाश्रयत्वेनपक्षस्यैवविषयत्वंस्यात् नलिंगिनः । तथाचतत्राव्याप्तिरित्यत्रतात्प

र्यात् । अतएवक्कचित्पुस्तकेएवकारोदृश्यते ॥ [२१२।१] अतीतादीति ॥ तथाचकारणपदेनैवोक्तादोषवारणमितिभावः । कारणपदोपादानेनाप्यात्मन्यतिव्याप्तिर्नेत्याह ॥ [२१२।१] लिंगादीति ॥ द्वितीयस्यासाधारणपदस्यप्रयोजनंवक्तुंशंकामुत्थापयति ॥ [२१२।२] नन्विति॥ [२१२।३] असाधारणेति ॥ आत्मन्यतिव्याप्तिवारणायद्वितीयासाधारणपदस्यकारणविशेषणस्योपादानमित्यर्थः । प्रथमासाधारणपदंप्रयोजनमाह ॥ [२१२।४] तर्हीति ॥ [२१२।५] सन्निकर्षस्यापीति ॥ मनस्यतिव्याप्तिवारणायप्रथमासाधारणपदंसन्निकर्षणविशेषणमित्यर्थः । नचचक्षुर्मनःसंयोगस्यापिचाक्षुषज्ञानासाधारणकारणत्वादुक्तदोषतादवस्थ्यमितिवाच्यं । अर्थसन्निकर्षावच्छिन्नेमनःसंयोगस्यकारणत्वेनचक्षुर्मनःसंयोगस्यहेतुत्वएवमानाभावात्तदसाधारण्यस्यदूरापास्तत्वात् । एकेनैवकार्यकारणभावेनानतिप्रसंगेतत्तदिंद्रियमनःसंयोगरूपानेककारणतदवच्छेदककल्पनेमानाभावाच्च । चालनीन्यायेनविनिगमनाविरहादर्थतत्सन्निकर्षादीनामपिहेतुत्वानपायाच्चेंतिवक्ष्यमालोचयामः । ननुतत्संयोगतदाश्रयतत्समवायानामेवसंयुक्तसमवायत्वाद्घ्राय्वादिसंयोगजन्येवायुस्पर्शवायूपनीतसूक्ष्मगतगंधादिसाक्षात्कारेवाय्वादीनांविषयत्वापत्तिरितिचेत् । योग्यसंनिकर्षस्यहेतुत्वेनवाय्वादीनांसंयोगस्यतत्स्पर्शादिग्रहेअहेतुत्वात् । साक्षादेववाय्वादिस्पर्शादिनाइंद्रियस्यसंवंधसंभवाच्चेतिदिक् । प्रत्यभिज्ञाविषयेतत्तायामव्याप्तिंपरिहरति ॥ [२१२।६] प्रत्यभिज्ञायामिति ॥ यथाचनतस्याःस्मृतित्वंतथान्यतोवगंतव्यं । सन्निकर्षत्वेनाभिमतस्यसंयोगादेरभावात् । परोक्षज्ञानेअव्याप्तिंपरिहरति ॥ [२१३।१] लिंगेति ॥ [२१३।१] तद्व्याप्तेति ॥ तेनव्यापकतावच्छेदकावच्छिन्नेनपक्षसंवंधविशेषवतालिं

गिनाव्याप्तंयल्लिंगंतेनसंबंधः । लिंगिलिंगज्ञानयोर्लिंगलिंगिव्याप्तिद्वारकःसंबंधोस्तीत्यर्थः । व्यापकतावच्छेदकव्यापकसंबंधादीनामप्युक्तक्रमेणलिंगज्ञानेनसंबंधोस्त्येव । तेनव्यापकतावच्छेदकादीनामनुमित्यविषयत्वापत्तिरितिदूषणमनवकाशंवेदितव्यं ॥ [२।३।१] वाक्यज्ञानस्यचेति ॥ वाक्यार्थेनचेतिशेषः । वाक्यज्ञानस्यवाक्यार्थेनसहवाक्यवाक्यार्थतात्पर्यद्वारकःसंबंधोस्तीत्यर्थः । नन्वेवंकूटलिंगज्ञानजन्यानुमितेःसाध्यविषयकत्वंनस्यात् । तद्व्याप्तसंबंधाभावात् । तात्पर्यभ्रमावगतवाक्यार्थस्यचातत्परवाक्यज्ञानजन्यज्ञानंप्रतिविषयत्वंनस्यात् । ननुयथाशुक्तौरजतज्ञानंप्रतिशुक्तेरेवविषयत्वंनतुरजतस्यतथोक्तस्थलेषुसाध्यवत्त्वेनपक्षस्यैवसंसृष्टत्वेनपदार्थानामेवचविषयत्वंनतुसाध्यस्यसंसर्गस्येतिचेन्न । पक्षेणसमंव्याप्तेःपदार्थैःसमंतात्पर्यस्यचाभावात् । नह्यसद्भ्यांतद्व्याप्तितत्तात्पर्याभ्यांतज्ज्ञानयोःसंबंधःसंभवतीतिचेन्न । सर्वसामर्थ्यविकलस्याप्यसतोतीतादेरिवस्वज्ञानेनाभावादिनाचसंबंधस्यांगीकरणीयत्वात् । सार्वजनीनव्यवहारानुसारेणतथैवकल्पनस्योचितत्वात् । एवंधूलीपटलादौजायमानस्यवह्निव्याप्तधूमभ्रमस्यासतापिताद्दशधूमेनसंबंधोस्त्येव । एवंतात्पर्येणाप्यसतोभ्रमस्यसंबंधोस्तीतिनोक्तदोषः । चक्षुरादेस्तुरजतेनासतासंनिकर्षोनसंभवतीतिशुक्तौरजतज्ञानंरजतविषयकमित्युच्यते । अनन्यगत्याज्ञानादेरतीतादिनेवासतासंबंधस्यांगीकारेपिनेंद्रियादीनामतीतादिनेवासतासः । अत्रमतेअसताज्ञानसंबंधेपिनतस्यतद्विषयत्वमितितस्यालक्ष्यत्वान्नतत्राव्याप्तिरितिसर्वमनवद्यं । नन्वेवंव्यापकतावच्छेदकतत्संबंधपक्षव्यापकसंबंधानामनुमितौ स्मर्यमाणस्यस्मृतौविषयत्वंनस्यादित्याशंकांपरिहरति ॥ [२।३।१] एवमिति ॥ यथाचैतत्तथावोचाम । संस्कारादेस्सन्निकर्षत्वाप्रसिद्धिंपरिहरति ॥ [२।३।२] नहीति ॥ [२।३।२] किंत्विति ॥

संयोगादेरादरणंप्रत्यासन्नत्वार्थं । तच्चतत्तादेःसंस्कारादिनापिसंभवतीत्यर्थः । यद्यप्युक्तलक्षणेलिंगज्ञानादेर्नप्रवेशस्तथापिक
२१३।५
रणशब्देनलिंगज्ञानादेरपिपरामर्शादस्तिचोद्यावकाशः । नित्यज्ञानविषयेऽव्याप्तिंपरिहरति ॥ इदंचेति ॥ तस्यालक्ष्यत्वान्नत
२१३।५
त्राव्याप्तिरित्यर्थः । जन्याजन्यज्ञानविषयसाधारणंलक्षणमाह ॥ अथवेति ॥ यथाश्रुतस्यपाकजरूपरहितेवज्रादावव्याप्तत्वे
पिताद्दशायाःपृथिवीत्वजातेस्तत्रापिसत्त्वेननाव्याप्तिरित्यर्थः । तथाज्ञानकारणंयेसन्निकर्षाःतैःसमानाधिकरणोज्ञानावच्छेद
कत्वस्यसाक्षाद्व्याप्योयोधर्मःसत्त्वादिस्तदेवविषयत्वमित्यर्थकरणेननित्यज्ञानविषयेपिजन्यज्ञानविषयेताद्दशसन्निकर्षेणसमाना
धिकरणोज्ञानावच्छेदकत्वस्यसाक्षाद्व्याप्योधर्मोस्तीतिननित्यज्ञानविषयेअव्याप्तिरित्यर्थः । अस्मिन्नपिपक्षेनासतोज्ञानविषयत्व
२१४।१
मितिध्येयं ॥ इतीति ॥ इतिकरणोनानुकूलतर्काभावोपपादनसमापनार्थः । तस्याग्रेसमाप्स्यमानत्वात् । किंतुदिगर्थः ।
तथाहिद्दग्द्दश्ययोःस्वरूपसंबंधएवास्तुकिमाध्यासिकसंबंधेनाक्लृप्तेन । ननुस्वरूपसंबंधइतिकोर्थः । संबंधांतरमंतरेणविशिष्ट
प्रत्ययजननयोग्यत्वंतदितिचेत् आत्मानंजानामीत्यादावव्याप्त्यापत्तेः । तत्रसंबंधांतरस्यसमवायस्यसत्त्वात् । अतींद्रियाभा
वादावव्याप्त्यापत्तेः । नहितस्यविशिष्टप्रतीतिजननयोग्यत्वेमानमस्ति अन्यथातेनविशिष्टप्रतीतिजननापत्तेः । किंचविशिष्टप्रती
तिजननयोग्यत्वंधर्मोवासंबंधः ताद्दशस्वरूपद्वयमेववा । आद्येस्वरूपस्यसंबंधत्वव्याघातः । प्रतीतिघटितस्यास्यचाक्षुषादिज्ञाना
गोचरत्वप्रसंगाच्च । द्वितीयेऽननुगमः । किंचैवमभावभ्रमानुपपत्तिः । तत्रापिविशिष्टप्रतीतिसंभवेस्वरूपसंबंधस्यसत्त्वात् ।

नचप्रमात्वघटितंतल्लक्षणं । वास्तवसंबंधसत्वेप्रमात्वस्यापाद्यत्वात् । अन्यथातत्रतस्याप्रमात्वेसंबंधाभावः । तस्मिंश्चतस्याप्रमात्वमित्यन्योन्याश्रयादितिचेत् । मैवं । संबंधांतरमंतरेणविशिष्टप्रतीतिजननयोग्यतावच्छेदकावच्छिन्नस्वरूपस्यसंबंधत्वात् । संयोगत्वावच्छिन्नस्यदंडीत्यादौसंबंधत्ववत् । विशिष्टबुद्धिश्चावच्छेदकाविषयिण्येवावच्छेद्यसंबंधविषया । अतोनस्वरूपसंबंधगोचरविशिष्टबुद्धेश्चाक्षुषत्वनिरोधः । नचतर्ह्यभावप्रमाभ्रमयोःस्वरूपद्वयमात्रविषयत्वाविशेषात्भ्रमव्यवहारानुपपत्तिरितिवाच्यं । घटाभाववतिघटाभावज्ञानत्वेनतद्भिन्नज्ञानत्वेनचव्यवस्थोपपत्तेः । नन्वतिरिक्ताविषयत्वेतस्यैवानुपपत्तिः । नहिभवद्रीत्यातस्योभयात्मकत्वेनतदुभयसत्त्वेनव्यधिकरणप्रकारत्वरूपभ्रमस्यैवाभावेभ्रमतदन्यत्वाभ्यांव्यवस्थासंभवतीतिचेन्न । घटाभावाभावस्यघटत्वेनतद्वतिघटाभावज्ञानस्यव्यधिकरणप्रकारत्वसंभवात् । किंचभ्रमस्ययद्वस्तुगत्याघटवत्सविषयः । नतुप्रमायाइत्यरिक्तविषयत्वमस्त्येवनचातींद्रियाभावेव्याप्तिः । अत्यंताभावेप्रतियोगिदेशान्यदेशत्वं प्रागभावादौप्रतियोगिदेशत्वेसतिप्रतियोगिकालान्यकालत्वं अन्योन्याभावेप्रतियोगितावच्छेदकदेशान्यदेशत्वं विशिष्टप्रत्ययजननयोग्यतावच्छेदकं । तदवच्छिन्नत्वंचविशिष्टप्रतीत्यजनकेप्यतींद्रियाभावेसुलभं । नह्यरण्यस्थदंडोनघटजननस्वरूपयोग्यइति । ननुनित्यस्यातींद्रियस्याकाशात्यंताभावादेर्विशिष्टप्रतीतिजननयोग्यतावच्छेदकावच्छिन्नत्वेवश्यंविशिष्टप्रत्ययजनकत्वप्रसंगः । नित्यस्यस्वरूपयोग्यस्यसहकारिसमवधाननियमादितिचेन्न । नियमासंमतेः । नित्यस्यान्यथाकरणसामर्थ्यस्यईशसंबंधिनस्तथाविधेश्वरेच्छाविरहेणकार्यानुपधानदर्शनात् । नचाकार्याभावेतथाविधसामर्थ्यसत्त्वेमानाभावः । ऐश्वर्यस्यैवतत्रमानत्वात् । श्रूयतेचसर्वस्य

वशीसर्वस्येशानइति । तस्मादभावादाविवविषयेणस्वरूपसंबंधएव नत्वाध्यासिकःसः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगं युजि । न्यायामृततरंगिण्यामध्यस्तत्वंनयुक्तता ॥ दृक्दृश्यसंबंधानुपपत्तिभंगः ॥ ७ ॥ २३ ॥ दृश्यस्यदृगध्यस्तत्वेप्राति भासिकस्थलइवइंद्रियसन्निकर्षायोगेनत्वदुक्तप्रतिकर्मव्यवस्थायोगइतिवक्तुंप्रस्तौति ॥ यच्चोक्तमिति ॥ कुल्या कृत्रिमजलप्र वाहः । केदाराः क्षेत्राणि ॥ सावयवमिति ॥ अतएवविषयाकारेणपरिणमते । तैजसं । अतएवचक्षुरादिसूक्ष्मद्वारेणनिर्ग च्छति । तत्र एतादृशीवृत्तिरितिमते ॥ जीवचैतन्यमिति ॥ सर्वगतंपरिच्छिन्नमितिमतद्वयमित्यन्वयः । अविद्यायाःस र्वगतत्वात्तदुपाधिकोजीवोपिसर्वगतइत्यर्थः ॥ अंतःकरणेति ॥ अंतःकरणस्यासर्वगतत्वात्तदुपाधिकोजीवोपितथेत्यर्थः ॥ तत्राद्यइति ॥ जीवचैतन्यस्यसर्वगतत्वात्तत्रैवविषयस्याध्यस्तत्वेनजीवचैतन्यमेवविषयप्रकाशकमित्यर्थः ॥ सर्वगतत्वपक्ष इति ॥ असर्वगतत्वंपक्षेस्वनावृतमेवेतिवोध्यं ॥ विषयेति ॥ विषयेणसहोपरागःसंश्लेषविशेषः । सचवृत्तिद्वारकः । आवर णविरहस्यस्वतःसिद्धत्वादितिभावः ॥ आवरणेति ॥ स्वतएवचैतन्यमुपरज्यतइतिनोभयार्थावृत्तिरितिभावः । परिच्छिन्नत्व पक्षेवृत्त्युपयोगमाह ॥ परिच्छिन्नत्वेति ॥ ब्रह्मचैतन्येविषयस्याध्यासात्तदेवविषयप्रकाशकं । जीवोपाधेरंतःकरणस्यपरिणा मेचवृत्त्याब्रह्माकारयाविषयाधिष्ठानब्रह्मचैतन्येप्यावृतेजीवब्रह्मचैतन्ययोरेकांतःकरणोपाधियुक्तत्वेनब्रह्मचैतन्येनसहजीवचैत न्यस्याभेदाभिव्यक्त्याजीवोपिघटप्रकाशकोभवतीत्यर्थवतीवृत्तिरितिभावः । वृत्तिर्विषयोपरागार्थेतिपक्षमुपपादयति ॥ अना

वृतत्वपक्षइति ॥ वृत्त्यैवेति ॥ स्वतइतिशेषः । ननुवृत्तिरुपरागार्थेतिनयुक्तं । असंगस्यापिचैतन्यस्यवृत्त्येवविषयेणाप्युपरागसंभवात् । गोत्वदृष्टांतोप्ययुक्तः तस्यसास्नादिमद्व्यक्त्युपरागोनामतज्ज्ञेयत्वं । ब्रह्मतुनवृत्त्याज्ञायते । किंतुतयाघटादिज्ञानरूपंब्रह्मभवति । प्रभादृष्टांतोप्ययुक्तः । तस्याःप्रकाशकत्वंनामविषयदेशस्थतमोनिवर्तकत्वमेवनान्यत् । एवंप्रभारूपसंसर्गितमोनिवर्तयंतीरूपंप्रकाशयंतीत्युच्यते । तथाआकाशगंधरससंसर्गितमोपिनिवर्तयंतीआकाशादीनपिप्रकाशयत्येव । नह्याकाशादिसंसर्गितमोननिवर्तयति । अन्यथातद्देशेरूपप्रकाशोपिनस्यादित्यतःउदाहारणांतरमाह ॥ केवलेति ॥ तथाचविषयप्रकाशनशक्तिरेवविषयोपरागः । सचचैतन्यस्यवृत्त्यधीनइतिवृत्तिरुपरागार्थेतिभावः । वृत्तिरावरणाभिभवार्थेतिपक्षमुपपादयति ॥ आवृतत्वेति ॥ ननुजीवचैतन्यमसर्वगतमितिपक्षेतदनावृतमित्यंगीकारादावरणविरहस्यस्वतःसिद्धतयावृत्तिर्व्यर्थेतिशंकांपरिहरति ॥ परिच्छिन्नत्वपक्षइति ॥ एतच्चोपपादितं ॥ ब्रह्मचित्त्वेपीति ॥ अस्मिन्पक्षेब्रह्मचित्येवविषयाध्यासादितिभावः ॥ जीवचित्त्वमिति ॥ विषयानुभवस्येत्यनुषंगः ॥ इतीति ॥ इतिशब्दःप्रकाशवचनः । वृत्तिर्विषयोपरागार्थेतिपक्षेआवरणाभिभवार्थेतिपक्षेप्रमातृजीवचैतन्यस्यविषयप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्त्यर्थेतिपक्षेचेतिपक्षत्रयेपीत्यर्थः ॥ प्रतिकर्मेति ॥ व्यापकचैतन्येऽध्यासेपितस्यघटादिकंकर्मप्रतिनियमइत्यर्थः ॥ तन्नेति ॥ स्यादितिशेषः । इतिचयदुक्तंतन्नस्यादितिपूर्वेणान्वयः । दृश्यस्यदृगध्यस्तत्वेप्रातिभासिकस्थलइवइंद्रियसन्निकर्षाधीनाप्रतिकर्मव्यवस्थानस्यादित्यर्थः । ननुवृत्तेः

पूर्वमेवघटादीनांचैतन्येध्यासेनप्रातिभासिकवैलक्षण्यमित्यतआह ॥ [२१७।१] स्वसंन्निकृष्टेति ॥ स्वज्ञानात्पूर्वंघटादेःसत्त्वेप्रतीतिमात्र शरीरत्वाभावेनतस्यकल्पितत्वव्यापकस्यघटादेःसकाशान्निवृत्तौप्रतीतिमात्रशरीरत्वस्यव्याप्यभूतंयत्कल्पितत्वंतदपिघटादौन स्यादित्यर्थः । यद्वासर्वस्यापिदृश्यस्यैकस्यांदृश्यध्यस्तत्वेप्रकाशसांकर्यमाशंक्यवृत्तिद्वाराप्रतिकर्मव्यवस्थयानसांकर्यमितियच्चोक्तं मरैस्तन्नेतियथान्यासमेववाक्यार्थः । विषयेंद्रियसन्निकर्षेबाह्येंद्रियद्वारानिस्सृतांतःकरणीयविषयाकारवृत्तौप्रतिबिंबितचैतन्ये नाभिव्यक्तंविषयाधिष्ठानचैतन्यंघटादिज्ञानमितिपरप्रक्रियांक्रमेणापाकर्तुंप्रथमंसन्निकर्षंदूषयति ॥ [२१७।१] स्वेति ॥ स्वज्ञानात्पूर्वंघटा देःसत्वेकल्पितत्वायोगः असत्वेसन्निकर्षायोगइत्यर्थः । ननुकल्पितस्यैकःसामान्यधर्मःकल्पितत्वं अन्यस्तुप्रातिभासिकत्वंवि शेषधर्मः तत्रविशेषस्यैवप्रतीतिमात्रशरीरत्वंप्रतिव्याप्यतानान्यस्येत्याशंक्यपरिहरति ॥ [२१७।१] नचेति ॥ कल्पितत्वविशेषः कल्पि तत्वात्सकाशाद्विशेषंइत्यर्थः । यथाश्रुतेप्रातिभासिकत्वस्यकल्पितत्वेअवृत्तेर्नतस्यतद्विशेषत्वमितिध्येयं ॥ [२१७।२] गौरवादिति ॥ य द्यपिकल्पितत्वप्रातिभासिकत्ववृत्तिधर्मयोस्तत्तद्वृत्तिव्याप्यवच्छेदकयोर्नैकत्रसमावेशइतिननीलधूमादिवद्गौरवमव्याप्यतावी जंसंभवति तथापिसामान्यस्यैवव्याप्यत्वेसंभवतिनविशेषस्यतथात्वं । यथाकर्तृजन्यत्वव्याप्यंजन्यत्वमेवनतुशरीरजन्यत्वमि तिभावः । नन्वपर्वतीयधूमेधूमत्वस्यापर्वतीयधूमत्वस्यचव्याप्यतावच्छेदकत्वेनप्रसक्तस्यगुरोस्त्यागेनधूमत्वस्यलघोःतदवच्छे दकत्वेसिद्धेधूममात्रस्यवह्निव्याप्यत्वं । प्रकृतेतुनतथेत्यनुशयेनदृष्टांतांतरमाह ॥ [२१७।२] अप्रामाणिकत्वादिकमिति ॥ प्रातिभा

[२१७।३] सिकत्वस्यैवेति ॥ नतुकल्पितत्वस्येत्येवशब्दार्थः । तथाचकल्पितत्वेनाप्रामाणिकत्वानुमानंनस्यादित्यर्थः । ननुकल्पितत्वस्यव्यापकंनप्रतीतिमात्रशरीरत्वं । येनतन्निवृत्त्यातन्निवर्तेत । किंतुज्ञाननिवर्त्यत्वस्येत्याशंक्यपरिहरति ॥ [२१७।३] नचेति ॥ दोषप्रयुक्तभानत्वमादिशब्दार्थः ॥ [२१७।३] प्रतीतिमात्रेति ॥ तस्यापितद्व्याप्यत्वादितिभावः । ननुकल्पितस्यापिदृश्यस्यप्रतीतिःसर्वसिद्धा । साचतदिंद्रियसंनिकर्षविनानुपपन्नेतींद्रियसंनिकर्षार्थंस्वज्ञानात्पूर्वंदृश्यस्यसत्त्वमाक्षेप्स्यतीत्यतआह ॥ [२१८।१] प्रतीतेस्त्विति ॥ अन्यथोपपन्नायादृश्यप्रतीतेर्नतदाक्षेपकत्वमित्यर्थः । ननुकल्पितत्वाविशेषेपिवणिग्वीथीस्थरूप्यस्यशुक्तिरूप्यस्यचपरीक्षितत्वापरीक्षितत्वाभ्यांस्थायित्वास्थायित्वरूपविशेषेसिद्धेस्वज्ञानात्पूर्वसत्वंसेत्स्यतीत्यतआह ॥ [२१८।१] व्यावहारिकत्वस्येति ॥ स्थायित्वादेरित्यर्थः ॥ [२१८।२] भ्रांतीति ॥ स्वप्नेपिपरीक्षादेःसत्त्वादितिभावः । दृश्यस्यदृश्यनध्यासायदृशंनिरूपयति ॥ [२१८।२] तत्तदिति ॥ [२१८।२] अपरोक्षेति ॥ तस्यांचनज्ञेयस्याध्यासइतिभावः ॥ [२१८।३] उक्तमिति ॥ दृश्यत्वभंगइतिशेषः ॥ [२१८।४] अभिव्यक्तेति ॥ एतच्चावरणदशाव्यवच्छेदाय ॥ अपरोक्षैकरसेति घटादिसंबंधेपिनपटादीनामापरोक्ष्यंयथा तथाचैतन्यंसंबंधेपिनस्यादितिशंकापरिहाराय । ननुपरोक्षस्थलेपरोक्षवृत्त्युपरक्तचैतन्यंप्रकाशः । नतुवृत्तिः । अप्रकाशरूपांतःकरणपरिणामरूपायास्तस्याःप्रकाशत्वेमानाभावात् । नचतत्रतद्विषयस्यापरोक्षप्रसंगः । विषयेचैतन्याभिव्यक्तावेवविषयस्यापरोक्ष्यं । नहिपरोक्षस्थलेतदस्ति । विषयेन्द्रियसन्निकर्षाभावेनविषयपर्यंतंवृत्तेरगमनात् । अंतरेवतत्रधीसमुल्लासात् । अपरोक्षस्थलेतुप्रमातृचैतन्याभेदाभिव्यक्ताधिष्ठा

नचैतन्योपरागेविषयेस्ति । अतएवतत्रविषयस्यापरोक्ष्यं । एवंचापरोक्षस्थलेपिवृत्तिर्नविषयप्रकाशः । नतरांपरोक्षस्थलइ
त्याशंक्यप्रथममपरोक्षवृत्तौप्रकाशत्वमाह ॥ [२१८।५] वृत्तेरेवेति ॥ यथेच्छोपादानेअंतःकरणेअविद्यमानमपीच्छात्वं तदुपादेयायामि
च्छायामस्ति तथाप्रकाशत्वमपिवृत्तावस्त्वित्यर्थः । ननुअपरोक्षवृत्तेरस्तुप्रकाशत्वं नतुपरोक्षवृत्तेःप्रकाशत्वमित्यतआह ॥
अन्यथेति ॥ परोक्षवृत्तेरप्रकाशत्वइत्यर्थः । तदितिज्ञानत्वंपरामृश्यते । तेन अपिशब्दःसंबध्यते । तदपि ज्ञानत्वमपि । प
रोक्षानुभवस्यनस्यादित्यर्थः । यथाश्रुतेतुपरोक्षस्थलेपिवृत्तेरप्रकाशत्वस्यपरेणाशंकितत्वादसंगतिःस्यादितिवोध्यं । तस्माद्वृत्ति
भिन्नेघटादिज्ञानेउक्तप्रक्रियायांमानाभावात्सर्वत्रवृत्तिरेवघटादेर्ज्ञानंप्रकाशश्च । तस्यांचनज्ञेयस्याध्यासइतिभावः । वृत्तिभिन्नं
घटादिज्ञानमस्तीत्याशंक्यनिराकरोति ॥ [२१९।१] नचेति ॥ एकस्याएववृत्तेरुभयरूपत्वंविरुद्धमितिभावः ॥ [२१९।२] क्रियैक्यइति ॥ वृत्तेरे
कत्वेपितत्प्रतिपादकशब्दभेदात्कर्मसंवंधप्रतीत्यप्रतीतीनविरुद्धेतिभावः । धात्वोः जानातिकाशत्योः । उपरागः संवंधः ।
ननुअर्थैक्येशब्दभेदमात्रेणनोभयसंभवः । करोतिप्रयततइत्यादावपिनार्थैक्यं । अनुकूलेयत्नोहिकृञ्धात्वर्थः । यत्यर्थस्तुय
त्नमात्रं । एवंमत्यर्थउत्तरसंयोगफलकःस्पंदः । चलत्यर्थस्तुस्पंदमात्रमिति । मैवं । भावनैक्येपिनामपदाख्यातपदाभ्यांकार
कान्वयायोग्यतदन्वययोग्यरूपभावनायाःप्रतीतेराघोषितत्वात् । नहिभवतियोगेनभावनेति भवतितुयागेनकुर्यादिति । त
दुक्तंवार्तिके । यस्मादाख्यातशब्दस्यनव्यक्त्याकृतिवाचितेति । प्रत्ययोभावनायाःव्यक्तिमाकृतिंवानवदति । किंतुअव्यपदे
श्यांभावनांवदतीत्यर्थः । एकमेवचकारकंकारकांतरान्वयायोग्यंतदन्वययोग्यंचविभक्तिकारकशब्दाभ्यामभिधीयते । नहि

यागेनेत्यत्रतृतीयाभिहितेकारकेकारकांतरान्वयोस्ति । कारकशब्दाभिहितेतुकारकेकारकंकारकेणेतिकारकांतरान्वयोद्दश्यते । तदुक्तंवार्तिके । कृदंतेनहिकारकविशिष्टंद्रव्यमेवोच्यते नविभक्तिवत्निष्कृष्टशक्तिः तथाचकरणंकरणेनकरणायेतिकारकांतरयोगोद्दश्यतइतिकरोतियतत्योरपिनभिन्नार्थत्वं । उभयोरपियत्नार्थत्वात् । तदुक्तंमणौ कृञोयत्नार्थत्वात्तेनाख्यातविवरणात्तस्यापियत्नोर्थइतिकुसुमाजलावप्युक्तं कृताकृतविभागेनकर्तृरूपव्यवस्थयायत्नएवकृतिःपूर्वापरस्मिन्सैवभावनेति । यततेर्भावेनङिप्रत्ययेयत्नइतिभवति । करोतेःक्तिनिकृतिरितिभवतीतियत्नकृत्योरेकत्वाच्चतयोरेकार्थत्वमितिभावः॥ ३३९।३ अन्यथेति ॥ शब्दस्वभावानादरइत्यर्थः । परिणतेः परिणामस्य अकर्मकत्वात् । घटःपरिणमतइत्यकर्मकधातुप्रयोगविषयत्वात् । यद्यपिनमतिःसकर्मकःतथाप्यर्थांतरेवर्तमानोऽकर्मकः । यथाहुः धातोरर्थांतरेवृत्तेरित्यादि । सकर्मकज्ञानत्वं सकर्मकजानातिप्रयोगविषयत्वं । तथाचवृत्तेःपरिणामत्वंवासकर्मकजानातिप्रयोज्यत्वंवानस्यादित्यर्थः । ननुएकस्यसकर्मकत्वाकर्मकत्वेएकरूपेणविरुद्धे । नतुरूपांतरेणापि । मानाभावात् । यथा स्थितेरकर्मिकायाअप्यगमनत्वेनसकर्मकत्वं तथापरिणतित्वेनाकर्मिकायाअपिवृत्तेःज्ञानत्वेनसकर्मकत्वंभविष्यतीतिचेत्न । अत्रापिज्ञानत्वप्रकाशत्वाभ्यामुभयरूपतोपपत्तेः । नचतयोरभेदः । तेजोज्ञानयोःसाधारणस्योपाधिरूपस्यप्रकाशत्वस्यत्वयापिवक्तव्यत्वात् । अतएवविवरणेदीपप्रभादृष्टांतीकृताऽविद्यानुमाने ॥

३३९।४ अतीतमिति ॥ वृत्त्यतिरिक्तचैतन्यरूपज्ञानस्यप्रकाशत्वेअतीतेचैतन्यरूपज्ञानाभावेनप्रकाशाभावादतीतंप्रकाशतइतिधीर्नस्यादित्यर्थः । यथाचपरोक्षस्थलेचिद्रूपज्ञानाभावः तथोक्तं । घटादिषुवृत्त्यतिरिक्तचिद्रूपज्ञानानंगीकारेमदिष्टसिद्धिरित्याह

॥ [२१।१४] एवंचेति ॥ अन्यद्वारा वृत्तिद्वारा । तदुपरक्तत्वं अनुभाव्येनसंबद्धत्वं । तत्प्रति अनुभाव्यंप्रति । आदिशब्देनमुख्याज्ञा
नाविरोधिनोपिमुख्यज्ञानत्वादिदृष्टविरुद्धं । इच्छादिषुयादृशंसाक्षादेवेष्यमाणोपरक्तत्वंइष्यमाणंप्रत्यनावृतत्वंइष्यमाणेद्वेषवि
रोधित्वंदृष्टंतदपेक्षयाविरुद्धमित्यर्थः ॥ [२१।१६] अन्यथेति ॥ दृष्टविरुद्धस्यापिकल्पनइत्यर्थः । ननुतमेवभांतमनुभातिसर्वमितिश्रुत्या
ब्रह्मप्रकाशमानमनुसृत्यसर्वस्यप्रकाशउच्यते । अतश्चिद्रूपघटादिज्ञानंसिध्यतीत्यतआह ॥ [२२।१] तमेवेति ॥ मुंडके नतत्रसूर्योभा
तिनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः । तमेवभांतमनुभातिसर्वमित्यत्रप्रकृतस्यसूर्यप्रकाशस्येत्यर्थः । ननुसर्वशब्देन
कारणाभावेसूर्यादिमात्रग्रहोनयुक्तःतस्यसर्वोपस्थापकत्वादित्यतआह ॥ [२२।१३] सर्वशब्दस्येति ॥ [२२।१४] नित्यातींद्रियस्ये(इ)ति ॥ अ
तीतादिषुवर्तमानतादशायांचित्प्रकाश्यत्वेपिनित्यातींद्रियेसर्वदापिचित्प्रकाश्यत्वाभावइत्यभिसंधिः ॥ [२२।१५] प्रकृतेति ॥ अस्य
लोकस्यकागतिरित्यादाविदंशब्दःप्रकृतपरइति प्रकृतांपृथिवींवक्तिप्रश्नस्थंसर्वनामयदितिवदद्भिर्भवद्भिरप्यंगीकारात् । तस्य
भासासर्वमिदंविभातीत्यत्रेदंशब्दस्यप्रकृतपरत्वेसिद्धेतदेकार्थस्यापिसर्वशब्दस्यप्रकृतसूर्यादिपरत्वं नघटादिपरत्वमपीत्यर्थः ॥
[२२।१५] यद्वादित्येति ॥ यदादित्यगतंतेजइत्यादिसूत्रोदाहृतस्मृतौसूर्यादितेजसांभगवदधीनत्वरूपतत्संबधित्वस्यैवोक्तेरित्यर्थः ॥ शा
[२२।१६] तृप्रत्ययस्येति ॥ कर्त्रर्थेलडादेशत्वाच्छतुर्भानकर्त्रुपस्थापकत्वं तस्येतिषष्ठ्यातत्पदार्थस्यब्रह्मणोभासासहसंबंधोबोध्यते । भान
रूपेब्रह्मणिभानकर्तृत्वभानसंबंधस्याप्यसंभवात्तयोरनुपपत्तिः ॥ [२२।१७] प्रपंचइति ॥ तमेवभांतमनुभातिसर्वमित्यत्रप्रपंचकर्तृकभा

नरूपक्रियायाःभांतमिति ब्रह्मज्ञानक्रियातोभेदावगमादनुशब्दस्याप्यनुपपत्तिरित्यर्थः ॥ गच्छंतमिति ॥ अथातोग्निमग्निष्टोमेनानुयजंतीत्यादौसजातीयक्रियाभेदाभावेप्यनुशब्दद्योतितावधेःसकाशात्तदन्वितार्थस्यभेदोस्त्येवेतिभावः । अंतःकरणस्य चक्षुरादिद्वारेणवहिर्निर्गमनंदूषयति ॥ अस्तुवेति ॥ ननुपरोक्षवैलक्षण्यायांतःकरणस्यवहिर्निर्गमनंभविष्यतीत्यतआह ॥ परोक्षादिति ॥ परोक्षस्थलेत्वन्मतेविषयस्याभिव्यक्तापरोक्षैकरसचिदुपरागाभावादपरोक्षस्थलेचतत्सत्त्वात्परोक्षापरोक्षयोर्वैलक्षण्यंस्यादित्यर्थः । ननुविषयस्यवृत्तिसंबंधंविनातस्यचिदुपरागएवनसंभवति । सास्नाद्यवच्छिन्नगोत्वाद्युपरागवद्वृत्त्यवच्छिन्नएवचिदुपरागस्यसत्त्वादित्यतआह ॥ चिदिति ॥ अपरोक्षेति ॥ इंद्रियसन्निकर्षजन्ययावृत्त्यावहिर्निर्गमनंविनाप्यंतरेवविषयाकारेणपरिणतयाविषयस्यइंद्रियसंनिकर्षद्वारासंवद्धत्वमात्रेणतस्मिन्निरुक्तचैतन्योपरागसंभवाद्वृत्त्यवच्छिन्नएवतदुपरागइति कल्पनेमानाभावइत्यर्थः । ननुविषयसंवंधंविनावृत्तेर्विषयावरणनिवर्तकत्वंनसंभवति प्रभायांतथादर्शनादित्यतआह ॥ मत्विति ॥ तुशब्दश्चशब्दार्थे । तदाकारत्वमुक्तहेतुंसमुच्चिनोति । आवरणनिवर्तकत्वेतदाकारत्वंतंत्रं । नतुतत्संश्लेषः । ज्ञानस्यप्रभापेक्षयावैलक्षण्यादितिभावः । वृत्तिसंश्लेषस्यावरणनिवर्तकत्वादौप्रयोजकत्वेबाधकमाह ॥ नेत्रादिति ॥ ममगतेतुनेत्रस्थकज्जलादावतिसामीप्यदोषात् परमाण्वादौचमहत्त्वविशेषादिकारणविरहान्नतदाकारवृत्तिरितिनदोषइतिभावः । अस्तुतर्हिममतेपितदाकारत्वमपितंत्रमित्यतआह ॥ द्वयोरिति ॥ संश्लेषतदाकारत्वयोः । नन्वस्तुतदाकारत्वार्थमेववहिर्निर्गमनं । वहि

र्निर्गमनेनविषयसंश्लेषेसतितदाकारतायाःजायमानत्वादित्यतआह ॥ [२२३।५] तदाकारत्वस्येति ॥ तदाकारतायांतत्संश्लेषस्यप्रयोजकत्वेपरोक्षवृत्तौतदाकारत्वंनस्यादित्यर्थः । मनसोबहिर्निर्गमनंव्यभिचारिचेत्याह ॥ [२२३।६] नचेति ॥ [२२३।६] घटेमानइति ॥ बहिर्निर्गच्छन्मनःसंनिकर्षाभावेनेत्यर्थः । बहिर्निर्गत्यविषयमाश्लिष्यंत्याएववृत्तेर्विषयावरणनिवर्तकत्वमितिनियमानंगीकारआवश्यकइत्याह [२२२।१] एवंचेति ॥ तन्नियमांगीकारेदोषमप्याह ॥ [२२२।१] चक्षुरिति ॥ [२२२।१] नियतेति ॥ नचत्वगिंद्रियस्यसर्वेंद्रियगोलकाधिष्ठानत्वात्तत्तदिंद्रियगोलकद्वारांबहिर्निंगमनंतस्यसंभवतीतिवाच्यं । इंद्रियांतरगोलकस्येंद्रियांतराधिष्ठानत्वेमानाभावात् । एकस्मिन्गोलकेएकेंद्रियस्यैवश्रुतिप्रसिद्धत्वात् । ओषधिवनस्पतयोलोमानिभूत्वात्वचंप्राविशन्नितिनियतस्यगोलकांतरासंकीर्णस्यत्वक्स्थानत्वात् । तस्मान्नत्वगिंद्रियंस्यगोलकांतरद्वाराबहिर्निर्गमनं ॥ [२२३।२] अन्यथेति ॥ नियतगोलकाभावेपि बहिर्निंगमने । चैतन्यंघटादिज्ञानमित्येतद्दूषयितुंप्रस्तौति ॥ [२२३।२] अस्तुवेति ॥ घटप्रकाशत्वेनाभिमतंचैतन्यंपृच्छति ॥ [२२३।२] तथापीति ॥ धीस्था वृत्तिस्था । ब्रह्मचैतन्यं साक्षाज्ज्ञातोघटइत्यादिरूपः ॥ [२२२।४] परागिति ॥ व्याख्यातमेतत् ॥ [२२३।६] अभिव्यक्तमिति ॥ अपगतावरणंसत्साक्षिचैतन्याभेदेनाभिव्यक्तमित्यर्थः । अतात्विकान्यथाभावोविवर्तः ॥ [२२३।६] आध्यासिकेति ॥ वृत्तिप्रतिबिंबितचैतन्येघटादीनां ज्ञानेतेषामनध्यासादित्यर्थः ॥ [२२३।७] आवश्यकेनेति ॥ विषयविवर्ताधिष्ठानचैतन्यावरणनिवृत्त्यर्थमवश्यवक्तव्येनेत्यर्थः । नच विषयाधिष्ठानचैतन्यमेवतत्प्रकाशकमितिनियमात्तथेतिवाच्यं । तन्नियमस्यैवासिद्धेरितिभावः । अंतःकरणपरिणामस्यविषया

कारत्वंदूषयति ॥ [२२२।८]किंचेति ॥ [२२२।९]त्वयैवेति ॥ विषयत्वनिरुक्तिंदूषयतेत्यर्थः ॥ [२२३।१]तयोरिति॥ तदाकारत्वेनहिअस्तीत्यादितद्विषक
व्यवहारप्रतिबंधकाज्ञाननिवृत्त्यादिभवतीत्यर्थः ॥ [२२३।१]तत्त्वेति ॥ प्रयोज्यप्रयोजकयोरेकत्वंनसंभवति । आत्माश्रयादित्यर्थः ।
ननुनात्माश्रयः । तादृशाज्ञाननिवर्तनयोग्यत्वंतदाकारत्वं । तथाचतन्निवृत्तिजननयोग्यतारूपेणतदाकारत्वेनतादृशाज्ञाननि
वृत्तिरूपंफलंभवतीत्यंगीकारादितिचेत् । मैवं । उक्तयोग्यत्वस्यतादृशाज्ञाननिवृत्तिघटितत्वेनतांप्रत्यप्रयोजकत्वात् । तोयत्वपि १ । २४
पासोपशमनसामर्थ्ययोस्तुपरस्पराघटितत्वादितिभावः ॥ [२२३।२]साकारेति ॥ विज्ञानवादिमतेतथात्वादित्यर्थः ॥ [२२३।५]तस्मादिति ॥
हेतुपरामर्शोयं नोपसंहारः ॥ [२२३।५]पक्षत्रयमिति ॥ अविद्योपाधिकंसर्वगतंजीवचैतन्यमविद्यानावृतंविषयप्रकाशकं । वृत्तिस्तुजी
वचैतन्यस्यविषयोपरागार्थेत्येकःपक्षः । उक्तरूपजीवचैतन्यमविद्यावृतंविषयप्रकाशकं । वृत्तिश्चावरणाभिभवार्थेतिद्वितीयः
पक्षः । अंतःकरणोपाधिकमसर्वगतंजीवचैतन्यंनविषयप्रकाशकं । किंतुब्रह्मचैतन्यंतथा । वृत्तिस्तुविषयप्रकाशकब्रह्मचैतन्ये
नप्रमातृजीवचैतन्याभेदस्याभिव्यक्त्यर्थेतितृतीयःपक्षः । इतिपक्षत्रयमप्ययुक्तं । तत्रहेतुःतस्मादिति । उक्तरीत्याचैतन्यस्यघ
टप्रकाशकत्वायोगादित्यर्थः ॥ [२२३।६]तत्रेति ॥ विषयदृक्जीवचैतन्यमितिपक्षइत्यर्थः । विशिष्टे घटादिविशिष्टे ॥ [२२३।६]दृगिति ॥ अ
ध्यस्तस्यघटादेस्तदधिष्ठानस्यब्रह्मणश्चिन्मात्रस्यचविषयदृक्जीवचैतन्याद्भिन्नत्वादित्यर्थः । ननुविषयाध्यासोविषयविशिष्टजी
वचैतन्यएवेत्याध्यासिकसंबंधसिद्धिरित्यतआह ॥ [२२४।१]कल्पितत्वादिति ॥ अध्यस्तानधिकसत्ताकत्वान्नाध्यासाधिष्ठानमित्यर्थः

॥ [२२४।१] अतएवेति ॥ विषयदृक्ब्रह्मचैतन्यमितिपक्षेविषयाध्यासोजीवेवाचिन्मात्रेवानसंभवति । आध्यासिकसंबंधासिद्धेरित्युक्तहेतोरित्यर्थः । ननुविषयदृक्ब्रह्मचैतन्यमितिपक्षेब्रह्मचैतन्यएवविषयाध्यासोस्तु । एवंचनाध्यासिकसंबंधासिद्धिरित्याशंक्यविषयाध्यासाधिष्ठानत्वेनविषयदृक्त्वेनचाभिमतंब्रह्मसविशेषंनिर्विशेषंवेतिविकल्प्यआद्येदोषमाह ॥ [२२४।२] सविशेषस्येति ॥ द्वितीयेदोषमाह ॥ [२२४।२] शुद्धस्येति ॥ [२२४।२] जगदिति ॥ जगतोप्रकाशःस्यादित्यर्थः ॥ [२२४।३] अनवच्छिन्नस्येति ॥ मूलाविद्यानिवृत्त्यभावेनसर्वतआवरणाभिभवाभावेपिघटाद्यवच्छेदेनावरणाभिभवसंभवादांध्यविरहउपपद्यतइत्यर्थः ॥ [२२४।३] अनवच्छिन्नस्येति ॥ वृत्त्याअभिभूतावरणस्यैवघटाद्यवच्छिन्नस्यघटादिदृक्त्वमित्यायातं तस्यचनतदधिष्ठानत्वंतत्रहेतुः [२२४।४] कल्पितत्वेनेति । अध्यस्तानधिकसत्ताकत्वादित्यर्थः ॥ [२२४।४] आत्माश्रयेति ॥ घटस्यघटाधिष्ठानकोटौप्रवेशादित्यर्थः । घटाध्यासेनघटस्वरूपेसिद्धेचैतन्यस्यघटावच्छिन्नत्वसिद्धिः तत्सिद्धौचताद्दशेधिष्ठानेघटाध्याससिद्धिरित्यन्योन्याश्रयोपिद्रष्टव्यः । ननुशुद्धचैतन्यमेकमेव । तदेवाधिष्ठानं । तत्रावच्छेदकमविद्यादिकंनतदधिष्ठानकोटौप्रविशति । ततोनकल्पितत्वादितिशेषः । वृत्त्यापगतावरणेशुद्धेप्रकाशमानेतंत्राध्यस्तंजगदपिप्रकाशतइतिनतदांध्यं । नाप्याध्यासिकसंवंधस्यातंत्रत्वमित्यतआह ॥ [२२४।५] विशिष्टेति ॥ [२२४।५] तद्वैयर्थ्यादिति ॥ चरमवृत्तिवैयर्थ्यादित्यर्थः । ननुनचरमवृत्तिवैयर्थ्यं । उपाध्यविषयकब्रह्मस्फुरणस्यचरमवृत्तिप्रयुक्तत्वेनतस्याःसाफल्यात् । इदानींतनस्फुरणस्यसप्रकारकत्वेनोपाधिविषयत्वात् । एकधैवानुद्रष्टव्यमितिश्रुतिवलात्स्वसमानविषयकज्ञानादेवाज्ञाननि

वृत्तेः । अखंडचिन्मात्रज्ञानस्यैवमोक्षहेतुत्वावधारणादितिचेन्न । ब्रह्मविषयकसप्रकारकज्ञानस्यैवब्रह्मविषयकसप्रकारकसंशया
दिविरोधित्वात् । एकधेतिश्रुतिस्तुज्ञानानंदादिप्रकारेषुतद्विरोध्यज्ञानदुःखादिकंव्यवच्छिनत्ति । अन्यथाप्रकारार्थधाप्रत्ययो
व्यर्थःस्यात् । निवर्तकतायांज्ञानाज्ञानयोःसमानविषयकत्वंतुभिन्नविषयकत्वंनिवारयति । नत्वधिकविषयत्वमपि । अन्यथा
घटपटावितिसमूहालंबनात्घटाज्ञानंनिवृत्तमितिव्यवहारोनस्यात् । तदज्ञाननिवर्तकतायांहितद्विषयकत्वंतंत्रं । नतुतदितरा
विषयकत्वमपि । गौरवादितिभावः ॥ त्वन्मतइति ॥ सुषुप्तावेवांतःकरणस्यलयांगीकारादितिभावः ॥ कृतहानीति ॥
यदंतःकरणावच्छिन्नेनयत्कर्मकृतंतदंतःकरणस्यसुषुप्त्युत्तरकालेऽसत्वेनतत्कर्मजन्यभोगस्यहानिः । परदिनेयदंतःकरणावच्छि
न्नस्यभोगोभवतितदंतःकरणावच्छिन्नत्वेनतद्भोगहेतुभूतंकर्मनकृतमित्यकृताभ्यागमआदिशब्दार्थः । ननुनकृतहान्यादि ।
सुषुप्तावप्यंतःकरणस्यकारणात्मनावस्थानात् । स्थूलसूक्ष्मसाधारणस्यांतःकरणस्यजीवोपाधित्वात् । तदापीतेस्संसारव्यपदे
शादितिसूत्रेचास्यार्थस्यस्फुटतरमुक्तत्वादितिचेन्मैवं । अंतःकरणस्यसूक्ष्मरूपमविद्यैव । अवयवद्वारारंभस्यभवदभिमतत्वात् ।
तंथाचास्यपक्षस्याविद्यावृतत्वपक्षएवांतर्भावापत्तेरितिभावः ॥ प्रतिबिंबितत्वमिति ॥ एतस्मात्प्राक्वृत्तावितिशेषः ॥ अनुद्भू
तेति ॥ उद्भूतरूपवत्त्वस्यप्रतिबिंबनोपाधितायांप्रयोजकत्वादित्यर्थः । नन्वनुद्भूतरूपेपिगुहाकाशादौप्रतिबिंबिनोपाधित्वंदृ
श्यतएवेत्यतउक्तं ॥ शब्दान्येति ॥ ननुनोद्भूतरूपवत्त्वंप्रतिबिंबिनोपाधितायांप्रयोजकं । अस्वच्छेपिलोष्टादौप्रतिबिंबा ॥१५७॥
पत्तेः । किंतुस्वच्छत्वं । तच्चप्रकाशस्वभावत्वेनमनसस्तत्परिणामभूतायावृत्तेश्चास्त्येव । नापिचाक्षुषत्वंप्रतिबिंबत्वेप्रयोजकं ।

अचाक्षुषस्याप्याकाशादेःप्रतिविंवितत्वदर्शनादितिचेत् । मैवं । उद्भूतरूपवत्त्वविशेषातिरिक्तस्यस्वच्छत्वस्याभावादाकाशस्यप्रतिविंबोसिद्धएव । प्रभामंडलस्यैवजलादौप्रतिबिंवनात् । आकाशस्यापिरूपित्वाच्च । अन्यथावाद्यादेरपिप्रतिविंवनापत्तेरितिभावः ॥ [२२५।३] तदात्मनेति ॥ वृत्त्यात्मनेत्यर्थः ॥ [२२५।४] सर्वत्रेति ॥ तथाचाभिव्यक्तत्वरूपोपरक्तत्वस्यचितःसर्वत्रसत्त्वेनचितःस्वतोवृत्तिमात्रोपरक्तत्वमितिप्रतिज्ञाहानिरित्यर्थः। तदंतस्थत्वं वृत्त्यंतस्थत्वं ॥ [२२५।५] प्रभायाइति ॥ यथाप्रभारूपमात्रप्रकाशकत्वेनस्वतोरूपोपरक्तेत्युच्यते तथाचिंदपिवृत्तिमात्रप्रकाशकत्वेनस्वतोवृत्त्युपरक्तेत्युच्यतइत्यर्थः । प्रभायारूपमात्रप्रकाशकत्वंनामरूपमात्रदेशस्थतमोनिवर्तकत्वंवारूपाज्ञाननिवर्तकत्वंवारूपमात्रग्राहिमानसहकारित्वंवेत्यभिप्रेत्यप्रभायामाद्यौनंस्तइत्याह ॥ [२२५।६] प्रभायामिति ॥ तथाचनप्रभादृष्टांतेनचिंतःस्वतोवृत्त्युपरक्तत्वं । चितस्तमोनिवर्तकत्वाभावात् । वृत्तावज्ञानाभावाच्चदार्ष्टांतिकेपिनैतदस्तीतिभावः । तृतीयोयंद्यपिदृष्टांतेप्रभायामस्ति । तथापिदार्ष्टांतिकेचितिनास्तीत्याह ॥ [२२६।३] प्रभायामिति ॥ तथाचप्रभादृष्टांते नचितिवृत्तिमात्रग्राहकमानसहकारित्वंनास्तीत्यर्थः ॥ [२२६।४] चित्संबंधित्वस्येति ॥ अनावृतचित्संवंधस्येत्यर्थः । विषयप्रकाशिकाचिंदनावृतेतिपक्षएववृत्तिरुपरागार्थेत्यभ्युपगमादितिभावः ॥ [२२६।४] सर्वैति ॥ अनावृतचित्संवंधस्यसर्वेषांसत्त्वादित्यर्थः । ननुवृत्तिमात्रंसंवध्यप्रकाशनिवर्तकत्वमेवचितःस्वतोवृत्त्युपरक्तत्वं । नचप्रभादृष्टांतानानुगुण्यं । इष्टापत्तेः । प्रभायाःगंधादिदेशस्थतमोनिवर्तकत्वंतत्संवंधाद्युज्यते । चैतन्यस्यतुस्वभावतोसंवद्धत्वात्तदाकारवृत्त्यातद्देशसंबंधस्योपादानात्कथंसर्वप्रकाशप्र

संगः । स्वभावतोह्यसंगत्वेअसंगोह्ययंपुरुषइतिश्रुतिःप्रमाणं । अतःसर्वैःसहसंबंधाभावान्नसर्वावभासप्रसंगः । किंतुयदाकार वृत्तिस्तस्यैव । अतएवेदंरजतमितिभ्रमेइदमाकारवृत्त्यवच्छिन्नचैतन्येनरजतभानानुपपत्तेरंजताकाराप्यविद्यावृत्तिरभ्युपेयते । स्वतश्चिद्विंबाग्राहकत्वेवृत्तिमंतरेणचैतन्यस्यतदाकारत्वायोगादितिचेन्मैवं । दत्तोत्तरत्वात् । अनावृतायाःसर्वगतायाश्चितोमनःपरिणामेनेवान्येनापिकुलटायाइवसंबंधोपपत्तेः । नहितस्याएकतरस्मिन्पक्षपातोस्तिवृत्तावस्तीतिचेन्न । वृत्तेरपिवृत्त्यंतराधीनचित्संबंधेनवस्थापत्तेः स्वतश्चिद्विंबग्राहकत्वेंऽतःकरणतद्वृत्त्यादौनवृत्त्यपेक्षेतिनानवस्थेतिचेन्न । अनुद्भूतरूपेंतःकरणादौप्रतिविंबिनोपाधित्वमेवनास्ति । नतरांस्वतस्त्वेतु ॥ तस्मात्सर्वसंबंधादनावृतचितःसर्वप्रकाशोदुर्वारः । असंगश्रुतेस्तर्हि कागतिरित्यतआह ॥ असंगइति ॥ ननुसंगशब्दस्यसंबंधेप्रसिद्धत्वात्कथंलेपपरत्वमित्यतआह ॥ सयदिति ॥ ज्योतिर्ब्राह्मणेसुषुप्तिस्वप्नजाग्रत्सुजीवस्यरमयितुश्चारयितुःपुण्यपापेदर्शयितुरीश्वरस्यतत्कर्मलेपोनास्तीत्यत्रंअसंगत्वंहेतुरुच्यते । नतुसर्वासंबंधित्वं । स्वप्नेनशारीरमभिप्रहत्यसुप्तस्सुप्तानभिचाकशीति । शुक्रमादायपुनरेतिस्थानंहिरण्मयःपुरुषएकहंसइतिपूर्वोदाहृतश्लोकेईश्वरस्यप्रकृतत्वात् श्रुतौरत्वेत्यादीन्यंतर्भावितणिजर्थानीति ॥ यथेति ॥ तथासर्वाणिभूतानिमत्स्थानीत्युपधारयेति सर्वसंबंधोक्तेरित्यर्थः । ननुसर्वगतमपिचैतन्यंस्वभावाद्वृत्त्यैवस्वतःसंबध्यतेनविषयैरित्यतआह ॥ अपिचेति ॥ वृत्तितःपूर्वं विषयैश्चैतन्यमेवस्वतःसंबद्धंप्रकाशोपयोगि । संबंधस्तुपूर्वमस्तीतिसर्वप्रकाशोदुर्वारइत्यर्थः ॥ अन्यइति ॥ अनावृतचित्संबं

धादितिशेषः । उपरागः संबंधः । दृश्यत्वे प्रकाशे ॥ [२२६।८] मानेति ॥ वृत्तिद्वाराविषयैःसंबंध्यतत्प्रकाशकत्वात् ॥ [२२७।१] स्वतइति ॥ प्रमाणंविनेत्यर्थः ॥ [२२७।१] सर्वोपादानत्वादिति ॥ तथाचविषयैःसाक्षात्संबंधोसंगस्यापिब्रह्मणोस्तीत्यर्थः ॥ [२२७।२] आध्यासिकेति ॥ विशिष्टनिष्ठेनपरिणामित्वरूपेणसर्वोपादानत्वेनविशिष्टब्रह्मणःसर्वज्ञत्वेयत्रयदध्यस्तंतत्रतदाध्यासिकसंबंधेनप्रकाशतइतिभवद भिमतनियमभंगप्रसंगः । आध्यासिकसंबंधभिन्नेनजगत्प्रकाशांगीकारादित्यर्थः । ननुपरिणामिनिब्रह्मण्येवजगदध्यासोस्त्वि त्यतउक्तं ॥ [२२७।२] विशिष्टनिष्ठेति ॥ विशिष्टस्याध्यस्तसमानसत्ताकत्वान्नाध्यासाधिष्ठानत्वमितिभावः ॥ [२२७।३] अनादीति ॥ उपादा नत्वेनजगत्प्रकाशेऽविद्यांप्रत्युपादानत्वाभावात्तत्प्रकाशोब्रह्मणोनस्यादित्यर्थः ॥ [२२७।३] नापीति ॥ शुद्धनिष्ठेनजगदधिष्ठानत्वरूपेण जगदुपादानत्वेनब्रह्मणोजगत्प्रकाशेशुद्धस्यैवसार्वज्ञापत्तिः । अस्तुशुद्धस्यैवसार्वज्ञमित्यतआह ॥ [२२७।३] सार्वज्ञादेरिति ॥ विशिष्ट निष्ठत्वात् विशिष्टनिष्ठत्वेनांगीकारात् । शुद्धेसार्वज्ञांगीकारेपसिद्धांतइत्यर्थः । वृत्तिरावरणाभिभंवार्थेतिपक्षेदोषमाह ॥ आ [२२७।४] वरणेति ॥ [२२७।४] सदेति ॥ प्रकाशमानेचावरणंनसंभवति । नतरांचावरणनिवृत्तिर्वृत्तेरित्यर्थः ॥ [२२७।५] अन्यस्यचेति ॥ चिन्मात्राद न्यस्याज्ञानकल्पितत्वेनाप्रसक्तप्रकाशतयावरणप्रयोजनाभावेनतत्रावरणाभावादेवनवृत्त्याचिन्मात्रादन्यत्रावरणनिवृत्तिःक्रिय तइत्यर्थः । ननुचिन्मात्रस्याज्ञानादिसाक्षित्वेनसदाप्रकाशेप्यशनायाद्यतीतत्वादिनाप्रकाशाभावादावरणस्यावश्यकत्वात्तन्निवृ त्त्यर्थमर्थवतीवृत्तिरितिचेन्न । युक्तमिदंसविशेषब्रह्मवादे । भावाभावात्मकविशेषगंधविधुरंब्रह्मेतिमतेअशनायाद्यतीतत्वस्यप्र

या० १३६

काशमानब्रह्ममात्रत्वेनतदप्रकाशासंभवान्नतदर्थमावरणमितिभावः । आवरणासंभवमभिधायावरणाभिभवासंभवमाह ॥
[२२७।५] किंचेति ॥ नयनपटलं नयनगतकाचादि ।·पुंगतत्वे प्रमातरिपुरुषेविद्यमानत्वे ॥ [२२७।६] दीपेनेति ॥ चैत्रकृतदीपस्थोघटोयथा
निवृत्तावरणत्वात्सर्वैरपिज्ञायतेतथाचैत्रगतयावृत्त्यानिवृत्ताज्ञानावरणोघटादिःसर्वान्प्रतिप्रकाशेतेत्यर्थः । ननुचैत्रगतवृत्त्याचै
त्रावरकशक्तेरेवाज्ञानगतायानाशितत्वेनचैत्रःपश्यति नमैत्रः तत्प्रतियोगिकावरणशक्तेरनाशात् । आवरणशक्तीनांद्रष्टृविष
यभेदाभ्यांभिन्नत्वात् । त्वमस्तुनतथेत्येकानीतप्रदीपेनाप्यन्यप्रकाशोयुज्यतइतिचेन्न । शक्तीनामज्ञानत्वेनानाज्ञानमतप्रवेशः
तद्भिन्नत्वेसाक्षाज्ज्ञाननिवर्त्यत्वस्यविषयावरकत्वस्यचायोगात् । ज्ञानमज्ञानस्यैवनिवर्तकमितिभवत्स्वीकारात् । शक्तीनामेवा
ज्ञानकार्यकारित्वसंभवेशक्तिमतोज्ञानेअन्यथासिद्धेश्च । गौरवस्यविपरीतत्वेननानाज्ञानवादस्यैवसमीचीनत्वाच्चेतिभावः ।
पक्षद्वयेपिविशिष्यदोषंवक्तुंपृच्छति ॥ [२२७।७] किमिति ॥ किंशब्दस्याज्ञानमेकमित्यनेनान्वयः ॥ [२२७।८] किंवेति ॥ किंवानेकानीत्यन्वयः ।
अज्ञानानीतिशेषः ॥ [२२८।१] यद्यनंतानीति ॥ यदिशब्दोनिमित्तार्थः । यदिरथंतरसामासोमःस्यादैंद्रवायवाग्रान्ग्रहान्गृह्णीयादिति
वत् । ज्ञानानामनंतत्वात्तन्निवर्त्यान्यज्ञानान्यप्यनंतानीत्यर्थः ॥ [२२८।२] शुक्तीति ॥ अज्ञानस्यैकत्वेनमूलाज्ञानस्यैवरजतभ्रमोपादा
नत्वात्शुक्तिज्ञानेनचतन्निवृत्तेरित्यर्थः ॥ [२२८।३] सद्यइति ॥ परमतेमुक्तिर्द्विविधा । सद्योमुक्तिःक्रममुक्तिश्चेति । तत्रक्रममुक्तौउत्क्र
मणादिद्वारेणब्रह्मप्राप्तिः । सद्योमुक्तौनोत्क्रमणादि । नतस्यप्राणाउत्क्रामंतीतिश्रुतेः । शुक्तिज्ञानेनउत्क्रमणादिकमंतरेणसद्यो

मुक्तिःस्यादित्यर्थः । [२२८।२] ननुशुक्तिज्ञानेनमूलाज्ञानंननश्यति । किंतुतद्गतावरणशक्तिरेवनश्यति । तथाचनतज्ज्ञानेनसद्योमोक्षापातइत्यतआह ॥ [२२८।३] अनिवृत्ताविति ॥ सविलासेति ॥ कार्यसहितेत्यर्थः । यथोक्तंअज्ञानस्यवर्तमानेनप्रविलीनेनवास्वकार्येणसहनिवृत्तिर्बाधइति । तथाचाज्ञाननिवृत्तेरभावात् रजतादिबाधाभावेनशुक्तिसाक्षात्कारेपिरजतानुवृत्तिःस्यादितिभावः । अज्ञाननिवृत्त्यभावेइष्टापत्तिंशंकते ॥ [२२८।३] नन्विति ॥ अस्मिन्पक्षे मूलाज्ञानमेवरजताद्युपादानमितिपक्षे । शुक्तिसाक्षात्कारेणरजतोपादानमज्ञानंननिवर्तते । ननुतर्हिंरजतोपादानाज्ञाननिवृत्त्यभावात्तदधीनरजतनिवृत्तिरपिन्नस्यादित्यतआह ॥ [२२८।३] रूप्यादेरिति ॥ [२२८।४] स्वकारणे मूलाज्ञाने । प्रविलयः कारणात्मनाअवस्थानं ॥ [२२८।४] ब्रह्मज्ञानेनेति ॥ श्रवणादिद्वारकेणेत्यर्थः ॥ विरोधित्वादिति ॥ ज्ञानमज्ञानस्यनिवर्तकमेवेतिव्याप्त्याश्रयणादित्यर्थः । एवशब्दस्यनिवर्ततइत्यनेनान्वयः ॥ [२२८।५] ज्ञानस्येति ॥ यतोज्ञानमज्ञानस्यैवनिवर्तकमितिव्याप्त्याश्रयणादित्यर्थः ॥ [२२८।५] रूप्यादीति ॥ रूप्योपादानमूलाज्ञानमनिवर्तयन्शुक्तिसाक्षात्कारः तदुपादेयंरजतंनिवर्तयितुंनशक्तइत्यर्थः ॥ [२२८।६] शुक्तीति ॥ शुक्तिज्ञानेनाज्ञानमनिवर्त्यतद्गतावरणशक्तिमात्रनिवर्तनेबाधेपिशुक्तिप्रकाशोनस्यात् । निवृत्ताज्ञानचित्संबंधरूपस्याभिव्यक्तचैतन्यसंबंधस्याभावात् । नन्वज्ञानगतावरणशक्तिनाशाद्भग्नावरणचित्संबंधरूपोभिव्यक्तचैतन्यसंबंधोस्तीतिचेन्न । आवरणशक्तेरज्ञानातिरिक्तत्वेआवरणत्वायोगात् । अज्ञानरूपत्वेतन्नाशंविनातन्नाशायोगात् । ननुयतोज्ञानमज्ञानस्यैवनिवर्तकमितिव्याप्तिःस्वरूपोच्छेदविषया । स्वकारणेसूक्ष्मरूपेणावस्थानेतदनंगी

कारात् । शुक्तिज्ञानस्यचानवच्छिन्नचैतन्यावरणरूपमूलाज्ञानानिवर्तकत्वेप्यवच्छिन्नचैतन्यावरणरूपतूलाज्ञाननिवर्तकत्वेना भिव्यक्तिचैतन्यसंबंधाद्बाधदशायांरूप्यनिवृत्तिशुक्तिप्रकाशयोरुपपत्तिरितिचेन्न । तस्यरूप्यभ्रमोपादानत्वेतस्यैवाविद्यात्वा पत्तेः । भ्रमोपादानमविद्येतितल्लक्षणात् । तेनैवाविद्यायांअन्यथासिद्धेश्चेत्युक्तत्वाच्च । रूप्यभ्रमानुपादानत्वेतन्निवृत्तावपित दुपादानस्यमूलाज्ञानस्यानिवृत्तेर्बाधदशायामपिरूप्यानिवृत्तिःस्यात् । उपादानानिवृत्तावपिउपादेयनिवृत्तौज्ञाननिवर्तनीयंप्र पंचोपादानमज्ञानंप्रपंचस्यश्रुतज्ञाननिवर्त्यत्वसिद्ध्यर्थंनकल्पनीयंस्यात् । सत्यस्यापिप्रपंचस्योपादानमनिवर्त्यापिज्ञाननिवर्त्यत्वो पपत्तेरिति ॥ [२२८।७] खद्योतेति ॥ खद्योतस्यप्रकाशेनमहांधकारस्यैकदेशेनष्टेतद्देशस्थवस्तुदृश्यतेयथातथावृत्त्याज्ञानस्यैकदेशस्यना शेसतिविषयःप्रकाशतइत्यर्थः ॥ [३३८।१] भीरुभटवदिति ॥ प्रतिभटेप्रबलेदृष्टेभीरुभटोयथातंदेशमपहायापसरति तथावृत्तौसत्याम ज्ञानमपसरतीत्यर्थः ॥ [३३८।८] कटवदिति ॥ कटेवेष्टितेयथाभूतलादिदेशोऽनावृतोभवतितथेत्यर्थः ॥ [३३८।८] अनादीति ॥ अनादित्वेना ज्ञानचैतन्ययोर्निरवयवत्वादेकदेशादिविरहेणखद्योतादिदृष्टांतोनसंभवतीत्यर्थः । अस्मिंश्चपक्षेचैत्रगतवृत्त्यामैत्रस्यापिप्रकाशा प्रत्तिः । खद्योतद्योतितदेशस्थविषयस्यसर्वैरपिदर्शनादितिबोध्यं । दंडादिनागवादीनामिवापसरणंकरादिनाकटादीनामिवसं वेष्टनंचनसंभवति । अज्ञानस्यामूर्तत्वादित्यपिबोध्यं । ननुमण्यादिनावह्नेरिवकार्याक्षमत्वमेवापसरणादीतिशंकांनिवर्तयितुम [२२९।१] धिकदूषणंवक्तुंचशक्तिपक्षंविशिष्योत्थापयति ॥ नेति ॥ यद्वासिद्धांत्युद्भावितसर्वप्रकाशापत्तौपूर्वपक्षिणाशक्तिमंगीकृत्यसमा हितायामभिप्रायतस्तद्दूषणंपूर्वत्र इहतुशुक्तेरप्रकाशेसिद्धांतिनापादितेपूर्वपक्षिणःशक्तेरभिभवात् शुक्तिप्रकाशोभवतीतिसमा

धानमाशंक्यनिराक्रियतइतिनदोषः । ननुशुक्तिज्ञानेनाविद्याशक्त्यभिभवोनयुक्तः । उपादेयेनोपादानाभिभवादर्शनादित्यत
आह ॥ [२२९।२] वृत्त्येति ॥ [२२९।३] अविद्यायाइति ॥ शक्तेरितिशेषः । अविद्यागतावरणशक्तिःकिंशुद्धात्मविषयाउतजडविषयाजडविशि
ष्टात्मविषयावेतिविकल्प्याद्येदोषमाह ॥ [२२९।३] चक्षुरिति ॥ आवरणशक्तेःशुद्धात्मविषयायाःशुद्धात्माविषयकशुक्तिवृत्त्याभिभवो
नसंभवति । तस्याविशिष्टविषयत्वेनभिन्नविषयत्वादित्यर्थः । ननुशुक्तिवृत्तिरपिशुद्धात्मविषयास्त्वित्यतउक्तं ॥ [२२९।३] चक्षुरादिज
न्येति ॥ ननुचक्षुरादिजन्यापिसाआत्मविषयास्त्वित्यतउक्तं ॥ [२२९।३] रूपादिहीनेति ॥ ननुरूपादिहीनस्यरूपादेरिवात्मनोपिचा
क्षुषत्वमस्त्वित्यतउक्तं ॥ [२२९।३] शब्देति ॥ तंत्वौपनिषदंपुरुषंपृच्छामीत्यादिश्रुतेरित्यर्थः । ननुशुक्तिवृत्तेर्विशिष्टविषयत्वेपिविशेष्य
भूतचिद्विषयत्वमस्त्येवेतिततोपितदभिभवोस्तु नीरूपायाश्चितःशुक्त्याद्युपरागेणचाक्षुषत्वंतु राहोरिवचंद्राद्युपरागेणभवती
त्यतआह ॥ [२२९।४] शुक्तिवृत्तेरिति ॥ [२२९।४] तयैवेति ॥ शुक्तिवृत्तेरधिकविषयत्वेपिचिद्विषयत्वस्यत्वयैवस्वीकारादित्यर्थः । द्वितीयंनि
राकरोति ॥ [२२९।४] अविद्येति ॥ [२२९।५] अप्रसक्तेति ॥ सतिपुष्कलकारणेकार्याभावप्रयोजकस्यैवप्रतिबंधकत्वात् जडेचकारणपौष्कल्या
भावादित्यर्थः । तृतीयंनिराकरोति ॥ [२२९।५] जडेति ॥ [२२९।६] विशेष्येति ॥ विशिष्टविषयविधिनिषेधयोर्विशेष्यवाधेविशेषणविषयत्वव
द्विशेषणवाधेविशेष्यविषयत्वस्यापिवासस्वीदर्शनादितिभावः । नन्वविद्याकल्पितेअवच्छिन्नेअस्माभिरविद्यावातच्छक्तिर्वाना
भ्युपेयते । किंतुचैतन्यमात्रएव । तस्मिंस्तुसर्वंजडमध्यस्तमस्तीत्येकाश्रयाश्रितत्वसंबंधाज्जडावच्छिन्नचैतन्यमावृतमितिव्यप

देशः । घटाद्याकारवृत्त्यातुतदधिष्ठानचैतन्याभिव्यक्तौतदवच्छेदेनैवतन्निष्ठावरणाभिभवोजायतइति । नशुद्धात्मप्रकाशापत्तिरितिमैवं वाङ्मात्रत्वात् । यथाहितमसासहएकस्मिन्भूतलेविद्यमानस्यघटस्यप्रकाशसंबंधेसतियत्रतमश्चघटश्चवस्तुतोऽवर्तिषातां तंद्भूतलंप्रकाशतएव तथाघटाकारवृत्त्यातदधिष्ठानचैतन्याभिव्यक्तौयत्रज्ञानंघटश्चाध्यस्तौशुद्धेतदपिप्रकाशतएव । अज्ञानाध्यासाधिष्ठानस्यैवशुद्धत्वात् । एवंचघटाद्याकारवृत्तौघटावच्छिन्नमेवप्रकाशते नशुद्धात्मेतितुवाङ्मात्रमेव । शुद्धात्मप्रकाशापरिहारादितिभावः ॥ प्रच्युतेति ॥ अवस्थांतरंप्राप्ताइत्यर्थः ॥ पार्थिवेति ॥ तेषांचपार्थिवावयवानांवृश्चिकोपादानानांतदुपादेयेनवृश्चिकादिनानाशइत्यर्थः ॥ अवस्थाइति ॥ ग्रीष्मवर्षादिषुनदीनामपचयोपचयाःकार्यविशेषकराद्दृष्टायथातथेत्यर्थः ॥ सांध्यासमिति ॥ रजततद्वृत्तिभ्यांसहेत्यर्थः । तेषां अवस्थाविशेषाणां ॥ अनेकेति ॥ ननुसर्वावस्थानुस्यूतैकाकारतामादायाज्ञानैक्यंस्यादितिचेन्न । अवस्थारूपाज्ञानानामनंतत्वेपिजात्यैक्याद्घटवत्तदैक्यमित्युक्तंस्यात् । तत्रचानेकाज्ञानवादापातोपरिहार्यइतिभावः ॥ नचेदिति ॥ अवस्थाविशेषाणामज्ञानभिन्नत्वे ॥ साक्षादिति ॥ यतोज्ञानमज्ञानस्यैवनिवर्तकमितित्वदभिमतत्वादितिभावः ॥ भ्रमेति ॥ भ्रमोपादानमज्ञानमितितल्लक्षणस्याज्ञानभिन्नेवस्थाविशेषेअतिव्याप्त्यापत्तेरित्यर्थः ॥ तेषामिति ॥ अवस्थाविशेषाणांस्वोपादानमूलाज्ञाननिवृत्तिंविनानिवृत्त्ययोगेनावस्थाविशेषनिवृत्त्यर्थंतदुपादानमूलाज्ञाननिवृत्तेरावश्यकत्वात्शुक्तिज्ञानादेवनिर्मोक्षापत्तिः । उपादाननाशंविनावस्थाविशेषनाशश्चेत्तर्हिरजतोपादानंमूलाज्ञा

नमेवास्तु । तन्नाशंविनैवरजतनाशोस्तु । किमवस्थाविशेषाणांरजतोपादानादिकल्पनयेत्यर्थः ॥ [२३०।६] शुक्त्यज्ञानमिति ॥ अवस्थाविशेषाणां अज्ञानभिन्नानांरजतोपादानत्वेतन्निवर्तकशुक्तिज्ञानेनरजतोपादानमवस्थाविशेषानिवर्ततइत्यभ्युपेयं । तथाच शुक्तिज्ञानेनशुक्त्यज्ञानंनष्टमित्यनुभवविरोधइत्यर्थः । किंचशुक्तिविषयकाज्ञानस्यसर्वेशुक्त्यावरकावस्थाविशेषाएकयाशुक्तिवृत्त्यानिवर्तते यःकोपिवा । आद्येपुनःकदाप्यप्रकाशोनस्यात्शुक्तेः । सर्वतदावरणानांनिवृत्तत्वात् । अंतेशुक्तिवृत्तिकालेपि शुक्तिप्रकाशोनस्यात् । एकस्यावरणस्यनाशेप्यावरणांतरस्यसत्त्वादित्यपिदोषोबोध्यः । तस्मादेकाज्ञानपक्षेमूलाज्ञानस्यैवरजतोपादानत्वेशुक्तिवृत्त्यातदज्ञानानाशेपिरजतस्यप्रविलयात्तददर्शनं । शुक्त्यावरकस्यतस्यानाशेपितस्यैकदेशनाशाद्वा । अपसरणाद्वा संवेष्टनाद्वा मण्यादिनावह्नेरिवशक्तेरभिभवाद्वा बाधकालेशुक्तेःप्रकाशः इत्येतानिसमाधानानिनसंभवंति । अवस्थाविशेषाणांउपादानत्वमित्यपिनसंभवतीतिएकाज्ञानपक्षोनसंभवतीतिभावः । इष्टसिद्धिकारमतेनानाज्ञानपक्षेदोषमाह ॥ [२३०।७] द्वितीयेपीति ॥ [२३०।७] सर्वेति ॥ भाविवृत्तिनिवर्त्यानांतदज्ञानानांरजताद्युपादानशुक्त्यज्ञानानामित्यर्थः ॥ [२३१।१] आद्यइति ॥ शुक्त्यावरणत्वेनसंभावितानामज्ञानानामेकयाशुक्तिवृत्त्यानिवर्तितत्वादित्यर्थः ॥ [२३१।१] कदापीति ॥ वृत्तिनाशानंतरमपीत्यर्थः ॥ [२३१।१] तदापीति ॥ वृत्तिकालेपीत्यर्थः । ननुएकयावृत्त्याएकाज्ञाननाशेपितयैवावरणांतराणांप्रतिबद्धत्वात्यावत्साातिष्ठतितावत्प्रकाशःतस्यामपगतायांपुनरप्रकाशश्चोपपद्यतइति । मैवं । तर्ह्येकाज्ञानपक्षएवास्तुलाघवात् । तस्यैववृत्त्याप्रतिबंधेनविषयप्रकाशोपपत्तेः । श्रवणाद्युपार्जितवृत्तेस्तुमूलाज्ञाननिवर्तकत्वंकल्प्यतामितिकिंनानाज्ञानकल्पनया ॥ [२३१।२] अयंचेति ॥ व्याख्यातमेतत् ॥

[२३१।२] सादीति ॥ शुक्त्यादेरुत्पत्तेःपूर्वमज्ञानस्यनिर्विषयत्वंस्यादित्यर्थः । अस्तुनिर्विषयत्वंतस्येत्यतआह ॥ [२३१।३] निर्विषयस्येति ॥ अस्यास्मिन्नावरणमितिआश्रयविषयोपेतस्यैवावरणस्यप्रतीतेरित्यर्थः ॥ [२३१।३] पूर्वमिति ॥ अनाद्यज्ञानविषयेअनादिचैतन्येतत्तदागंतुकपदार्थोवच्छेदकइत्यर्थः ॥ [२३१।४] शुक्तीति ॥ शुद्धचैतन्यावरणस्यैवाज्ञानस्यशुक्त्यवच्छिन्नावरणत्वात्शुक्तिसाक्षात्कारेणचशुक्त्यवच्छिन्नाज्ञाननिवृत्तौशुद्धचैतन्यावरणाज्ञाननिवृत्तेरपिसत्त्वात्तेनैवमोक्षापातइत्यर्थः । अनेकाज्ञानवादहानिश्चेत्यपिबोध्यं ॥ [२३१।५] प्रतिविषयमिति ॥ यथानेकव्यक्तिविषयाएकैवजातिस्तथाअज्ञानमप्येकमेवस्यात् नतुप्रतिविषयंभिन्नं । तत्रचशुक्तिसाक्षात्कारान्मोक्षापत्तिर्दोषइत्यर्थः । ननुयदवच्छिन्नगोचरावृत्तिः तदवच्छेदेनैवावरणापसरणान्नानवच्छिन्नचैतन्यावरणभंगप्रसंगइतिचेत् मैवं । शाखावच्छेदेनसंयोगाधारस्यवृक्षत्ववत्घटावच्छेदेनभग्नावरणस्यापिशुद्धत्वान्मोक्षप्रसंगोदुर्वारइत्यर्थः ॥ कौमुद्यां वेदांतकैमुद्यां ॥ [२३१।६] ज्ञानेनेति ॥ चैत्रनिष्ठघटज्ञानेनचैत्रनिष्ठघटज्ञानप्रागभावानांसर्वेषांनाशेकदापिघटाप्रकाशोनस्यात् । अनाशेप्रागभावांतरसत्त्वेनघटज्ञानकालेपिघटव्यवहारोनस्यादितिसमोदोषइत्यर्थः ॥ [२३१।६] ततइति ॥ यथातवएकंज्ञानंएकमेवप्रागभावंनाशयति प्रागभावांतरनिबंधनमज्ञानमज्ञानत्वादिव्यवहारंचप्रतिबध्नाति तथाममाप्येकंज्ञानंएकमेवाज्ञानंनाशयति अज्ञानांतरनिबंधनंप्रयोजनंप्रतिबध्नातीत्यर्थः । एकेनज्ञानेनएकएवप्रागभावोनश्यतइतिपक्षमाश्रित्यसमाधत्ते ॥ [२३२।२] तन्नेति ॥ [२३२।३] आवरणानीति ॥ घटज्ञानकार्यस्यव्यवहारादेःविषयभूतस्यघटस्यतज्ज्ञानप्रागभावाःनावरणानीत्यर्थः ॥ [२३२।२] दंडेति ॥ यथादं

डप्रागभावोदंडकार्यस्यघटादेर्नावरणं किंतुघटकारणदंडस्याभावरूपः तथाज्ञानप्रागभावोपिज्ञानकार्यव्यवहारकारणज्ञानस्याभावरूपइत्यर्थः ॥ [२३२।२] नापीति ॥ ज्ञानंस्वकार्यव्यवहारंप्रतियदिज्ञानप्रागभावनिवर्तकत्वेनहेतुर्भवेत्तदाज्ञानांतरप्रागभावसत्त्वेन तन्निवृत्तिरूपकारणाभावादेकस्मिन्ज्ञानेसत्यपिघटव्यवहारोनस्यात् । नतुतदस्तीत्यर्थः ॥ [२३२।३] किंत्विति ॥ यथादंडोदंडत्वेनैवघटंप्रतिकारणंतथाज्ञानमपिव्यवहारादिषुज्ञानत्वेनैवहेतुरितिमयांगीकारादित्यर्थः ॥ [३३२।४] संजातीयेति ॥ प्रागभावस्यज्ञानकार्यव्यवहारविषयानावरकत्वादित्यर्थः । ननुमाभूवन्ज्ञानप्रागभावाआवरणं माचभूत्ज्ञानंप्रागभावनिवर्तकत्वेनहेतुः किंतुस्वरूपेणैवास्तु तथापिज्ञानांतरप्रागभावसत्त्वेनतदभावरूपज्ञानांतराख्यकारणाभावादेकस्मिन्ज्ञानेविद्यमानेपितवापिव्यवहारोनस्यादित्यतआह ॥ [२३२।४] कार्येति ॥ कारणतावच्छेदकावच्छिन्नयत्किंचित्सत्त्वस्यैवतत्रतंत्रत्वादित्यर्थः ॥ [३३२।५] सर्वप्रागभावनिवृत्तिरिति ॥ सर्वसत्त्वमित्यर्थः ॥ [२३२।५] असंभवादिति ॥ अतीतानागतवर्तमानकारणानामेकदाअसत्त्वादित्यर्थः । एवंचममतेज्ञानंस्वप्रागभावनिवृत्तौलब्धस्वरूपंसत्ज्ञानांतरप्रागभावस्यानावरकस्यसत्त्वेपिस्वविषयेस्वकार्यव्यवहारादिकंकरोत्येव । तवमतेत्वेकस्मिन्ज्ञानेसत्यपितद्विषयावरणस्याज्ञानांतरस्यसत्त्वाज्ज्ञानकार्यव्यवहारादिकंज्ञानकालेपिनस्यादित्याह ॥ [३३३।१] त्वन्मतेत्विति ॥ [३३३।१] आवरणेति ॥ अनावृतविषयकत्वसंपादकत्वेनेत्यर्थः । ननुआलोकस्यभूतभावितमोनिवर्तकत्वाभावेपिस्वविषयेयत्किंचित्स्वकालीनतमोनिवर्तकत्वेनैवस्वविषयव्यवहारादिप्रयोजकत्वं यथातथाज्ञानस्यापियत्किंचित्स्वविषयावरणाज्ञाननिवर्तकत्वेनस्व

विषयव्यवहारादिप्रयोजकत्वंभविष्यतीत्याशंक्यनिराकरोति ॥ [२३३।२] नचेति ॥ [२३३।३] हेत्विति ॥ आलोकरूपस्यहेतोरभावइत्यर्थः ॥ [२३३।३] तदिति ॥ आलोकस्यतमोनिवृत्तिरूपत्वान्नतन्निवर्तकत्वेनहेतुत्वमित्यर्थः । स्वरूपेण आलोकत्वेन । ननुयत्किंचिज्ज्ञानसत्त्वेप्यज्ञानांतरनिबंधनाप्रकाशवदालोकसत्त्वेपितमोंतरनिबंधनोप्रकाशःस्यादित्यतआह ॥ [२३३।४] नाप्येकेति ॥ [२३३।५] इहेति ॥ सर्वालोकाभावस्यतमसोयथावरणत्वंतथेत्यर्थः ॥ [२३३।६] वृत्तीति ॥ वृत्तिकालेयःसमुदायनाशःस्थितःसवृत्तिनाशकालेप्यस्तीत्यर्थः । भावस्तमइतिमतेतस्यावरणत्वेप्यालोकस्यस्वसमानाधिकरणसर्वतमोनिवर्तकत्वादालोककालेतमोंतरस्यावरणस्यासत्त्वाद्विषयप्रकाशःज्ञानकालेत्वज्ञानांतरसत्त्वादप्रकाशःस्यादितिभावः ॥ अमूर्तानां अनिविडावयवानां ॥ अनुकूलतर्काभावोपपादनमुपपादयति ॥ [२३४।१] तस्मादिति ॥ ७ ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यांसत्तर्कानमृषानुमा ॥ ७ ॥ प्रतिकर्मव्यवस्थाभंगः ॥ ७ ॥ २४ ॥ [२३४।२] विश्वमिति ॥ मिथ्यात्वानुमानेयःपक्षःसएवेहविश्वशब्देनाभिमतः ॥ [२३४।२] साधिष्ठानेति ॥ सामान्यतोज्ञातत्वेसतिविद्यमानविशेषवत्तयाऽज्ञायमानधर्मिमत्स्यादित्यर्थः । आदिपदेनप्रधानादिकं । अत्रचप्रत्येकंतर्काअभिमताइतिनवैयर्थ्यमितिध्येयं । प्रथमेअप्रयोजकत्वंनिरस्यति ॥ [२३४।३] भ्रांतेरिति ॥ सदृशमित्यधिष्ठानेनसंबध्यते । सत्यमित्यधिष्ठानादिना । सत्यत्वंचकल्पिताधिकसत्ताकत्वं । अतोनदृष्टांतासिद्धिः । आदिशब्देनदेशकालादृष्टादि । यथाश्रुतेप्रथमतर्केआपाद्यस्येष्टत्वंपरिहरति ॥ [२३४।४] निःसामान्यइति ॥ [२३४।५] कात्स्न्र्येनेति ॥ विशेषवत्त्वेनापीत्यर्थः ॥ [२३४।५] अज्ञानइति ॥ सामा

न्यतोपीत्यर्थः ॥ [२३४।५] ज्ञातेति ॥ सामान्यविशेषाभ्यामितिशेषः ॥ [२३४।७] तच्चेति ॥ स्वरूपज्ञानंस्वप्रकाशत्वाद्विशेषाज्ञानंनिर्विशेषत्वाद स्तीत्यर्थः ॥ [२३५।१] संस्कारेति ॥ संस्कारसंप्रयोगदोषरूपकारणत्रयजन्यत्वादित्यर्थः । ननुभ्रमस्यसंस्कारजन्यत्वमधिष्ठानस्वरूपा ज्ञानजन्यत्वेनापिनिर्वक्ष्यतीत्यतआह ॥ [२३५।१] सामान्येति ॥ [२३५।१] असदिति ॥ तथाचबाधकालव्यावृत्तंविशेषाज्ञानंतथावक्तव्यं। तच्च सद्विशेषाणामेवेत्यर्थः । ननुनसत्सामान्यविशेषज्ञानाज्ञानेभ्रमहेतु । सत्त्वांशप्रवेशेऽप्रसिद्धेः । गौरवाच्च । कल्पितसामान्य विशेषवत्त्वंचब्रह्मण्यपिसुलभमेव । नचतत्कल्पनेऽन्योन्याश्रयः । कल्पितसामान्यविशेषाणांप्रवाहानादित्वात् । सत्त्वानंदत्वा दीनामेवकल्पितव्यक्तिभेदेनसामान्यत्वात् । परिपूर्णानंदत्वादीनांचविशेषत्वात् । अतएवसंस्कारोद्बोधोपीतिचेन्मैवं । नह्य धिष्ठानचिन्मात्रस्यसत्त्वपरिपूर्णानंदत्वादीनांनिर्विशेषब्रह्मवादेविशेषोस्ति । येनाधिष्ठानस्फुरणेपितेषामज्ञानं । तस्मादधिष्ठा नज्ञानेसतिनविशेषाज्ञानं तस्मिंश्चनाधिष्ठानज्ञानमित्युभयथापिनभ्रमइतिभावः ॥ [२३५।२] वल्मीकइति ॥ प्रथमंवल्मीकेस्थाणुत्व भ्रमः अनंतरंतत्रैवपुंस्त्वभ्रमः अनंतरंतत्रैववल्मीकत्वप्रमा तयाप्रमयाप्राचीनंभ्रमद्वयंनिवर्तते । प्रमायाःस्वविरोधिभ्रममात्र निवर्तकत्वादित्यर्थः ॥ [२३५।२] अंततइति ॥ चरमंगत्वापीत्यर्थः ॥ [२३५।३] भ्रमेति ॥ पुंस्त्वज्ञानस्यवल्मीकेस्थाणुत्वभ्रमनिवर्तकत्वेपिभ्रम मात्रनिवर्तकत्वंतत्रतस्यनास्त्येव । पुंस्त्वज्ञानस्यापिवल्मीकेभ्रमत्वात् । तेनचतदनिवर्तनादितिभावः । नन्वधिष्ठानगतविशे षप्रमैवभ्रमविरोधिनीतितदभावएवहेतुःस्यादित्यतआह ॥ [२३५।४] विश्वभ्रमेति ॥ [२३५।५] अस्येति ॥ मुख्याज्ञानविरोधिन्यावृत्तेः मुख्य

ज्ञानत्वस्यचिद्रूपज्ञानाविरोधिनोवाअमुख्याज्ञानत्वस्यवापातादित्यादेर्वक्ष्यमाणत्वादित्यर्थः ॥ [२३६।१] तत्तेदंतेइति ॥ एतच्चदृष्टांता
र्थमुक्तं । ननुस्वत्वान्यत्वयोर्भेदग्रहेपिनात्मानात्मनोस्तद्ग्रहइत्यतआह ॥ [२३६।२] स्वयमिति ॥ [२३६।३] प्रकाशमात्रेति ॥ नन्वेकस्यैवानं
दाद्यात्मनातिरोहितस्यसदात्मनाप्रकाशउपपत्स्यते । तदुक्तंवार्तिके । यत्प्रसादादविद्यादिसिध्यतीवदिवानिशं । तमप्यपह्नुते
विद्यानज्ञानस्यास्तिदुष्करमितीतिशंकापरिहारार्थमुक्तं ॥ [२३६।३] मात्रेति ॥ प्रकाशमात्रस्वभावेनिर्विशेषआत्मनिसत्त्वानंदयोःप्रका
शाप्रकाशयोरयोगादितिभावः ॥ [२३६।४] घटादीति ॥ इदमंशानुविद्धतयारजतस्येवात्माघटइतितदनुविद्धतयाप्रतीत्यभावादिति
भावः ॥ [२३६।५] सन्निति ॥ सत्स्फुरणयोरात्मरूपत्वादित्यर्थः ॥ [२३६।५] चाक्षुषादीति ॥ ध्वस्तोघटोरूपीघटइत्यादिवत्घटएवसत्ताप्रती
यते । नतुसदनुवेधोघटस्येतिभावः । ननुरूपादिहीनस्याप्यात्मनःसद्रूपेणचाक्षुषादिज्ञानविषयताभविष्यतीतिचेन्न । घटज्ञा
नादेवमोक्षापातादित्युक्तत्वात् । निर्विशेषेप्रकारभेदाभावाच्च । तदिदमुक्तमित्युक्तं ॥ [२३६।६] इत्युक्तत्वादिति ॥ ननुनात्माचाक्षु
षादिज्ञानेभातीतिब्रूमः किंतुस्वतएवसन्नितिस्फुरति तदनुविद्धतयाचघटोपीतिशंकांपरिहरति ॥ [२३६।६] नचेति ॥ [२३६।७] घटस्येति ॥
प्रकाशमानचैतन्यसंवंधादितिभावः ॥ [२३६।७] वृत्तीति ॥ नचावरणनिवृत्त्यर्थंवृत्तिरितिवाच्यं । तथात्वेधिष्ठानप्रकाशायोगात् ।
प्रकारभेदस्तुनिरस्तइतिभावः ॥ [२३६।८] घटइति ॥ यथादेवदत्तःपचतीत्यत्रदेवदत्तकर्तृकपाकःप्रतीयते नतुपाकानुविद्धतयादेव
दत्तःतथाघटःस्फुरतीत्यत्रापिक्रियाश्रयभूतघटकर्तृकस्फुरणंप्रतीयते नतुस्फुरणानुविद्धतयाघटइत्यर्थः । विश्वंयदिकल्पितंस्यात्

त्तरार्द्धर्चेपिरूपशब्देनप्रत्यभिज्ञायंते । तथाचकाठके । वायुर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोवभूव । एकस्तथासर्वभूतांत
रात्मारूपंरूपंप्रतिरूपोबहिश्च । सूर्योयथासर्वलोकस्यचक्षुर्नलिप्यतेचाक्षुषैर्बाह्यदोषैः । एकस्तथासर्वभूतांतरात्मानलिप्यतेलोक
दुःखेनबाह्यइत्यादिनापुण्यपापदुःखादिसंवंधरहितानिभगवद्रूपाण्युच्यंते नतुतद्वंतिपितृजन्यानिजीवरूपाणि । मंत्रांतरंच ।
रूपंरूपंमघवाबोभवीतिमायाःकृण्वानस्तन्वं१परिस्वां । त्रिर्यद्दिवःपरिमुहूर्तमागात्स्वैर्मंत्रैरनृतुपाऋतावा । अस्यार्थोमाधवीये ।
मघवाधनवानिंद्रोयद्यद्रूपंकामयतेतत्तद्रूपंबोभवीति तत्तद्रूपात्मकोभवति । तत्रकारणमुच्यते मायाःकृण्वानःमायाःप्रज्ञाः ।
तन्नामसुपाठात् । अनेकरूपग्रहणसामर्थ्यानिआविष्कुर्वन् । तर्हितानिरूपाणिपित्रादिजन्यानिकिं नेत्याह तन्वंपरिस्वां पंचम्य
र्थेपरिः । स्वतन्वोःसकाशादाविष्करोति । स्वांतनुंनानाविधरूपोपेतांकरोति । यद्यस्मात्स्वैर्मंत्रैःस्वकीयैःस्तुतिलक्षणैर्वाक्यै
राहूतःअनृतुपाःनकेवलमृतुष्वेवपिबति किंतुअनृतुष्वपिबहुशःसोमंपिबन्नित्यर्थः । ऋतावा । सत्यवान् । सत्यजगत्कर्तेतिया
वत् । तादृशइंद्रःदिवःस्वर्गलोकान्परिमुहूर्तएकस्मिन्नेवमुहूर्ते नानादेशवर्तिषुयज्ञेषु तत्रापित्रिः त्रिषुवसनेषु । आगात् आग
च्छति । एवंमहाभागःपरमेश्वरोनानारूपोभवतीतियुक्तमेव । बोभवीतीतियङ्लुगंतं । आगात् इणोलुङिरूपं । यद्वृत्तयोगा
न्निघाताभावः । तस्मात्पूर्वार्द्धर्चेभगवद्रूपाण्येवरूपशब्देनप्रस्तुतानि । मायाशब्देनप्रज्ञापरपर्यायाशक्तिरुच्यते । माया प्रज्ञा व
[२८८।२६]
युनमितिनैघंटुवचनादित्याह ॥ विचित्रशक्तिभिरिति ॥ हरिशब्देनापिनेंद्रियाणिलक्षणापत्तेः । दशादिसंख्यायाअस्वार
[३८१।२] [३८१।६]
स्यंवा । किंतुरूढ्याभगवद्रूपाणिनिर्दिश्यंतइत्याह ॥ उत्तरंत्रचेति ॥ बुभुत्सितत्वादिति ॥ तथाचमायाव्याख्येयाप्रकृ

तिस्तद्व्याख्यानमित्यर्थः ॥ [२८९।७] सत्येपीति ॥ मंत्रौषधादावित्यर्थः ॥ ७ ॥ ७ ॥ इंद्रोमायाभिरितिश्रुत्यर्थः ॥ ७ ॥ ३७ ॥
ननुएषआत्मांतर्याम्यमृतोतोन्यदार्तमितिवाक्यंतत्रमानंभविष्यतीत्यतआह ॥ [२८९।८] यत्त्विति ॥ स्वभाष्यविरोधादेतदतीवाप्रामा
णिकमित्याह ॥ [२८९।९] अतितुच्छमिति ॥ तथाहिशांकरीयेबृहदारण्यकभाष्ये । अतोस्मादीश्वरादात्मनोन्यदार्तविनाशीतिव्या
ख्यातं ॥ [२८९।१०] समानमिति ॥ इतरत्अंगजातंश्येनसंज्ञकयागेनसमानंतद्वदित्यर्थः ॥ [२८९।११] दुःखीतीति ॥ आङ्पूर्वस्यऋधातोर्दुःख
वाचकत्वादितिभावः ॥ ७ ॥ ७ ॥ अतोन्यदार्तमितिश्रुत्यर्थः ॥ ७ ॥ ३८ ॥ [२८९।१२] असत्त्वोक्तिरिति ॥ तावन्ममेत्यसदवग्र
हआर्तिमूलमित्यादौ ॥ [२८९।१६] अपारमार्थिकत्वोक्तिरिति ॥ मायायदात्मपरबुद्धिरियंह्यपार्थेत्यादौ ॥ [२८९।१८] मिथ्यात्वोक्तिरिति ॥
यत्रत्रिसर्गोमृषेत्यादौ ॥ [२८९।२०] एतेनेति ॥ स्वरादिदुष्टमित्यनेनवाक्येनेत्यर्थः ॥ [२८९।२१] आचष्टइति ॥ काशिकाकारइतिशेषः ॥ अवि
[२८९।२२] द्यमानत्वोक्तिरिति ॥ अविद्यमानोह्यवभातिहिद्वयइत्यादौ ॥ [२८९।२३] स्वप्नादिसाम्योक्तिरिति ॥ ध्यातुर्धियास्वप्नमनोरथोयथे
त्यादौ । अत्रस्वप्नशब्देनस्वाप्नगजादिजाग्रत्त्वमुच्यतेनस्वाप्नगजादितेषांतज्ज्ञानस्यचसत्यत्वेनजगतितत्साम्यस्यानिष्टत्वाभावे
नतस्याव्याख्येयत्वात् ॥ [२८९।२३] अनित्यत्वादेरिति ॥ नित्यत्वाभावादेरित्यर्थः । स्वप्नजाग्रत्त्वस्यभ्रमविषयतयाऽत्यंतासत्त्वेनतत्र
ध्वंसप्रतियोगित्वादिरूपानित्यत्वस्याभावात् । विकारित्वं कूटस्थत्वाभावः । पारतंत्र्यं स्वातंत्र्याभावइतिबोध्यं ॥ [२८९।२४] मायेति ॥

मायामयेवासनायाशयानइत्यादौ ॥ ७ ॥ ७ ॥ जगदसत्त्ववाचिपुराणार्थः ॥ ७ ॥ ३९ ॥ ननुशुक्तिरूप्यादौज्ञाननिवर्त्यतावच्छेदकंनतत्तद्रूप्यत्वादिकं अतिप्रसंगात् । किंतुसर्वानुगतंमिथ्यात्वमेवाज्ञानकल्पितत्वापरपर्यायमवच्छेदकं । अतस्तरतिशोकमात्मविदित्यादिश्रुतिसिद्धज्ञाननिवर्त्यत्वकस्यप्रपंचस्यापिज्ञाननिवर्त्यतावच्छेदकमिथ्यात्वावच्छिन्नत्वमास्थेयं । अन्यथाज्ञाननिवर्त्यत्वानुपपत्तिरित्येतन्निराकरोति ॥ नापीति ॥ ज्ञानेति ॥ ज्ञानस्यनिवर्तकत्वान्यथानुपपत्तिरपिसमानन्यायेन बोध्या । आद्यामनुपपत्तिंदूषयति ॥ ज्ञानमिति ॥ द्वितीयांदूषयति ॥ मिथ्याभूतस्यैवेति ॥ यतोऽयंननियमोतोमिथ्यात्वंनज्ञाननिवर्त्यतावच्छेदकं । मानाभावात् । शुक्तिरूप्यादेर्ज्ञाननिवर्त्यत्वाननुभवेनोक्तयुक्तेरसिद्धेः । श्रुतिस्त्वात्मज्ञानंसंसारनिवर्तकमित्याचक्षाणाऽवच्छेदकविशेषंनान्वेषयतीतिभावः । नन्वस्तुज्ञाननिवर्त्यत्वमात्रेणमिथ्यात्वमित्यतआह ॥ ज्ञानमात्रेणेति ॥ ईश्वरेति ॥ ननुघटादिनिवृत्तेरुपादानशून्यतयोपादानाद्यगोचरमीश्वरज्ञानंनतत्रहेतुरितिचेन्न । कर्तृत्वनिविष्टज्ञानस्योपादानगोचरतयाहेतुत्वेपिसर्वकार्यहेतोस्तस्यतन्नियमाभावात् । ईश्वरेच्छयासर्वंभवतीत्यापृथग्जनमनुभवेनेच्छावत्तत् ज्ञानस्यापिकार्यमात्रनिमित्तत्वात् । ध्वंसस्यभावत्वानुभवेनभावत्वापादानस्यबाधिततयातस्यानुपादानकत्वासिद्धेश्च ॥ प्रत्यभिज्ञानेति ॥ अनित्यात्मविशेषगुणत्वेनधर्मादिवत्संस्कारस्यप्रत्यभिज्ञारूपफलनाश्यत्वावसायादित्यर्थः । अग्निचित् चयनाख्यकर्मकर्ता । तथाचप्रागभावादिषुव्यभिचारात्ज्ञाननिवर्त्यत्वमात्रंनमिथ्यात्वापादकमित्यर्थः । साक्षात्वगर्भोक्तव्याप्तौनव्य

भिचारइतिशंकते ॥ [२९०।६] नन्विति ॥ [२९०।६] अज्ञानेति ॥ सेत्वज्ञानेत्यर्थः । नन्वज्ञाननिवृत्तिःपक्षेपिसमेत्यतआह ॥ [२९०।७] अदृष्टेति ॥ ननुसेतुदर्शनानंतरमेवपापनिवृत्तौबाधकाभावेनादृष्टकल्पनेमानाभावइत्यतआह ॥ [२९०।७] साक्षादिति ॥ प्रागभावादिष्वपिप्रतियोगित्वादिनाज्ञानंनिवर्तकमतस्तत्रापिनव्यभिचारइत्यर्थः ॥ [२९०।८] ध्यानमिति ॥ ध्यानंतुज्ञानभिन्नंमनोवृत्त्यंतरंतवाभिमतमतो ज्ञाननिवर्त्यत्वंप्रपंचेसिद्धमित्यर्थः ॥ [२९०।९] तस्येति ॥ तथाचतवेवममनात्यंतमश्रुतकल्पनेत्यर्थः । ननुनिवर्त्यातिरिक्तानपेक्षज्ञानजन्यध्वंसप्रतियोगित्वंमिथ्यात्वंपापेतुनैवमितिशंकते ॥ [२९०।९] नन्विति ॥ [२९०।१०] किंत्विति ॥ परिषदुपस्थानादिपूर्वकव्रतकलापविशिष्टं छत्रपादुकादिवर्जनस्वदोषोद्घोषणादिसहितंसेतुदर्शनंतथा । अन्यथातत्रत्यम्लेच्छादीनामपिततस्तन्निवृत्त्यापत्तेरित्यर्थः । तदाविद्वान्नामरूपाद्विमुक्तः अथमर्त्योमृतोभवतीतिश्रुतेःप्रपंचनिवृत्तौकालादेर्हेतुत्वादुक्तस्यासिद्धिरितिदोषेसत्येवदोषांतरमाह ॥ [२९०।११] नियमाधीतेति ॥ गुरुमुखोच्चारणानूच्चारणानध्यायपरिपालनादिभिर्मुंडकाध्ययनादौशिरोव्रतादिभिश्चनियमैरधीतेत्यर्थः ॥ [२९०।११] नियमादीति ॥ श्रवणादिनियमस्यप्रयोजनत्वेनकल्प्यमानंयदृष्टमदृष्टंवातत्सहितमित्यर्थः । आदिशब्देनप्रबलप्रारब्धकर्मनिवृत्तिः । वेदांतव्यावर्त्यमाह ॥ [२९०।१०] भाषेति ॥ भाषाप्रबंधोभाषारचितग्रंथः । अधीतव्यावर्त्यमाह ॥ [२९०।११] अनधीतेति ॥ पुस्तकादिपठितवेदांतजन्येनेत्यर्थः । नियमव्यावर्त्यमाह ॥ [२९०।११] अधीतेति ॥ तेन ब्रह्मज्ञानेन । ननुज्ञानस्यस्वप्रागभावनिवर्तन

इवाज्ञाननिवर्तनेपिनान्यापेक्षा । तदुक्तंवार्तिके । प्रत्यग्याथात्म्यधीरेवप्रत्यगज्ञानहानिकृत् । साचस्वोत्पत्तितोनान्यद्ध्वांतध्व स्तावपेक्षतइतीत्यतआह ॥ [२१०।१२] अन्यथेति ॥ अज्ञाननिवृत्तेर्दुरितनिवृत्त्यसाध्यत्वइत्यर्थः ॥ [२१०।१३] वैयर्थ्यमिति ॥ ननुश्रवणादिनि यमादेर्ज्ञानादिनिवर्त्यजिज्ञासाप्रतिबंधककल्मषातिरिक्तब्रह्मनिर्णयप्रतिबंधककल्मषनिवृत्तिद्वारेणब्रह्मज्ञानएवोपयोगोतोनवैय र्थ्यमितिचेन्न । अवघातजन्यवैतुष्यान्यापूर्वस्येवश्रवणादिजन्यब्रह्मज्ञानान्याज्ञाननिवृत्तेरेवनियमादृष्टसाध्यत्वौचित्यात् । न नुममरीत्यारूप्यनिवर्तकेशुक्तिज्ञानेऽज्ञानसमानविषयकप्रमाणत्वेनतन्निवर्तकत्वात्तेनैवरूपेणब्रह्मज्ञानस्यप्रपंचनिवर्तकत्वंकल्प नात्तन्निवर्त्यस्यप्रपंचस्यस्वनिवर्तकज्ञानसमानविषयकाज्ञानोपादानकत्वंसिध्यतीत्याशंक्याह ॥ [२१०।१३] किंचेति ॥ लोकेऽक्लृप्तेनब्रह्म ज्ञानत्वेनब्रह्मज्ञानस्यप्रपंचनिवर्तकत्वमस्तुश्रुतिबलादित्यर्थः । ननुयागेश्रुतस्वर्गसाधनत्वोपपत्तयेऽपूर्वमिवबंधेश्रुतज्ञाननिवर्त्य त्वोपपत्तयेमिथ्यात्वंकल्प्यतइत्यतआह ॥ [२१०।१४] सत्यस्येति ॥ यागवत्प्रकृतेनुपपत्त्यभावात्सत्यस्यापिदुरितादेर्ज्ञानान्निवृत्तिदर्शना दित्यर्थः । एतेननिरुक्तावच्छेदकानादरंसूचयति । ननुलोकदृष्टत्यागएवविपक्षेबाधकइत्यतआह ॥ [२१०।१४] अन्यथेति ॥ शुक्तिब्र ह्मणोर्ज्ञानेवैलक्षण्यस्यसर्वसिद्धत्वादित्यर्थः । वैधर्म्योपपादनमिदं । नतुवैधर्म्येणप्रत्यवस्थानं । अतएवेदंवैधर्म्यसमजातिरि तिपरास्तं । भाषाप्रबंधादिजन्येनासंभावनादिप्रतिबद्धेनवेदांतजन्येनापिब्रह्मज्ञानेनउक्तरीत्याऽज्ञानानिवृत्त्याउक्तावच्छेदक स्यव्यभिचारेणवेदांतविचारादिजन्यस्यविजातीयस्यज्ञानस्यप्रपंचनिवर्तकत्वमित्याह ॥ [२१०।१६] अपिचेति ॥ [२१०।१६] नियमादिति ॥ अज्ञा

नसमानविषयकप्रमाणनिवर्त्यत्वेनस्वनिवर्तकप्रमासमानविषयकाज्ञानोपादानकत्वसिद्धिरस्त्वितिशेषः ॥ [२९०।१७] सत्यतैवेति ॥ रूप्यसाधारणरूपेणज्ञाननिवर्त्यत्वाभावादितिभावः । एतेनशुक्तिब्रह्मणोर्ज्ञानयोःसर्वसुकृतासाध्यत्वतत्साध्यत्ववर्णनंवैधर्म्यसमजातिरितिपरास्तं । अवच्छेदकभेदोक्त्याप्रपंचेमिथ्यात्वापादकाभावस्योक्तत्वात् । वयंतुब्रूमः । अज्ञानसमानविषयकप्रमानिवर्त्यत्वेपिरूप्यादेस्तन्निवर्तकप्रमाया अज्ञानसमानविषयत्वमायाति । नतुरूप्यादेरज्ञानोपादानकत्वं । अज्ञानेव्यभिचारात् । अंधकारोपादानाज्ञानानिवर्तकस्यापिप्रकाशस्यतन्निवर्तकत्ववदुपपत्तेश्चाविरोधस्यफलबलकल्प्यत्वादिति । ज्ञाननिवर्त्यत्वस्यमिथ्यात्वंविनानुपपत्तिरूपव्याप्त्यभावंवक्तुंसंस्कारानिवर्त्यत्वमुपाधिमाह ॥ [२९०।१७] अपिचेति ॥ उपाधेःसाध्येनान्वयव्याप्तिंदर्शयितुंकल्पितइत्यादि । अप्रयोजकत्वनिरासार्थंव्यतिरेकव्याप्तिप्रदर्शनायसंस्कारेत्यादि । उपाधेःस्वव्यतिरेकेणसत्प्रतिपक्षोत्थापनसामर्थ्यंवक्तुंश्रवणादीत्यादि । ज्ञाननिवर्त्यत्वस्यमिथ्यात्वव्यभिचारमप्याह ॥ [२९०।१९] किंचेति ॥ [२९०।२०] अज्ञानंमपीति ॥ तथाचाज्ञानएवव्यभिचारइतिभावः । निवृत्तिंनिवर्त्ययोःसमानसत्ताकत्वनियमोऽसिद्धः । शुक्तिरूप्यतन्निवृत्त्योर्भिन्नसत्ताकत्वेनतत्रव्यभिचारादित्याशंक्यपरिहरति ॥ [२९०।२०] प्रातिभासिकस्येति ॥ प्रकारांतरेणाज्ञानेव्यभिचारमुपपादयति ॥ [२९०।२२] अज्ञानेति ॥ [२९०।२२] दोषेति ॥ तथाचाविद्यारूपदोषस्यापिस्वाधिष्ठानेनब्रह्मणासमसत्ताकत्वमित्यर्थः । नन्वज्ञानेपिज्ञाननिवर्त्यत्वेनमिथ्यात्वमनुमीयतेऽतोनतत्रव्यभिचारइत्यतआह ॥ [२९०।२३] किंचेति ॥ [२९०।२३] श्रुतिबलादिति ॥ तथाचाप्रयोजकत्वान्नाज्ञानेमिथ्यात्वानुमानमितिभावः ॥ स

[२९०।२३] त्र्यस्यापीति ॥ अज्ञानस्येतिशेषः । ज्ञानत्वाज्ञाननिवर्तकत्वयोःसामानाधिकरण्याभावान्नोक्तव्याप्तिसंभवइत्याह ॥ [२९०।२४] किंचेति ॥
[२९०।२५] मुक्ताविति ॥ वृत्तिप्रतिबिंबितचैतन्यस्यमुक्तावभावादित्यर्थः ॥ मुक्तावानंदाज्ञानंचस्यादित्यपिबोध्यं ॥ [२९०।२६] साक्षीति ॥ उक्त
रूपस्याज्ञाननिवर्तकस्यसुखादावभावादित्यर्थः । सुखादौज्ञस्यभावश्चस्यादित्यपिबोध्यं ॥ [२९०।२८] एतेनेति ॥ चैतन्यमात्रस्याज्ञान
रूपबंधानिवर्तकत्वेन । चैतन्यमात्रस्याज्ञाननिवर्तकत्वेदोषमाह ॥ [२९१।२] मोक्षइति ॥ मुक्त्यानंदेसुखादौचचैतन्यमात्रप्रकाश्येत
न्मात्रस्यज्ञप्तित्वेनज्ञप्तेश्चाज्ञाननिवर्तकतयामुक्तानंदस्येदानींप्रकाशापातादित्यर्थः ॥ [२९१।३] नेजाँनामीति ॥ अज्ञानस्यज्ञानकरणेन
विरोधोपिनास्त्यतोंनज्ञानकरणमज्ञाननिवर्तकमित्यर्थः ॥ [२९१।१०] तदधिगमइति ॥ तस्यब्रह्मणोधिगमेज्ञानेसतिज्ञानोत्तरंकृतस्यपा
पस्यअश्लेषोसंबंधः ज्ञानात्पूर्वमुत्पन्नस्यपापस्यविनाशः तद्यथापुष्करपलाशइत्यादौतद्यथेषीकातूलमित्यादौश्रुतौ तथाव्यपदे
शादित्यर्थः । सत्यभूतस्यज्ञानान्निवृत्तौदृष्टांतासिद्धिरित्याह ॥ [२९१।१२] चित्रेति ॥ ननुचित्राख्यरूपस्यैकत्वात्तत्रनीलरूपाद्यभावात्क
थंचित्रावयविनोनीलवैशिष्ट्यमुच्यते । अत्रकेचित् । चित्रावयव्यारंभकनीलविशिष्टज्ञानमित्यर्थः । नचैवंचित्रावयविनीतिपद
वैयर्थ्यं । नीलज्ञानस्यस्वविषयनिवर्तकत्वेचित्रावयविनएवानुपपत्तिरितिप्रदर्शनार्थत्वादित्याहुः । तन्न । नीलावयविनिपीति
मादेरभावेनतद्गतपीतिमादेरित्यस्यासंगत्यापत्तेः । अन्येतु । चित्रावयव्यारंभकपीतावयवेनीलोयमासीदितिज्ञानंनीलज्ञान
मिहविवक्षितं । नचैतज्ज्ञानंवर्तमानंपीतंनिवर्तयति । नचवर्तमानविषयज्ञानमेवस्वविषयविरोधिनिवर्तकमितिवाच्यं । पार

मार्थिकप्रपंचवादिनःतत्कालेतदसंभवेननिष्प्रपंचब्रह्मज्ञानस्यप्रपंचनिवृत्तेःपूर्वंवर्तमानप्रपंचाभावविषयत्वासंभवेनततःप्रपंचनिवृत्त्यसंभवादित्याहुः । तदपिन । चित्रावयविनीत्यस्यास्वारस्यापत्तेः । अपरेतु । नानारूपसमाहारएवचित्रं । तथैवप्रतीतेः । कारणेचित्राभावेनकार्येतदयोगाच्च । शुक्लादिरूपस्यसमानजातीयरूपारंभकत्वनियमात् । नानारूपवदवयवारब्धद्रव्यरूपस्याव्याप्यवृत्तित्वंचानुभवबलात्स्वीकर्तव्यं । अभावांतरेगुणांतरेचादृष्टस्यापितस्यसंयोगेतदभावेचदर्शनबलेनाभ्युपगमात् । एकस्यैवसंयोगात्यंताभावस्यव्याप्याव्याप्यवृत्तित्वाभ्युपगमेकिमपराद्धंरूपेणेत्याहुः । तदपिन । नानारूपसमाहारस्यैवचित्रत्वे नीलधवलारुणेषुकर्बुरार्थकचित्रप्रत्ययापत्तेः । नीलपीतादिषुमिथस्संसृष्टेषु अनारब्धद्रव्येष्वपिकर्बुरप्रत्ययस्तु द्रव्यांतरोत्पादावभिमानात् । तस्मात् नीलादिवत् चित्रमपिरूपांतरमेव । नन्वेकरूपवदवयवसहितस्यावयविन उपलंभेपिचित्रप्रत्ययः स्यादितिचेत् अस्त्येवतत्रचित्ररूपप्रत्ययः । चित्रत्वजातेस्तुन । अवयववृत्तिविजातीयसमाहाराभिव्यंग्यत्वात्तस्याः । अतएवत्र्यणुकेचित्रेकदापिनप्रत्ययः । तथाप्यचित्रेपार्श्वेचित्रप्रत्ययोमाभूत् । धवलप्रत्ययस्तुकुतइतिचेत् अवयवरूपसंचारेणावयविनोपितथाप्रत्ययात् । तस्माच्चित्रावयविनिनीलविशिष्टज्ञानमित्येतदनुपपन्नमेव । तदेतत् बौद्धाधिकारेस्पष्टं ॥ २११/२४ तर्हीति ॥ घटादिज्ञानस्याज्ञानानिवर्तकत्वेज्ञानस्याज्ञाननिवर्तकत्वेदृष्टांताभावात्ब्रह्मज्ञानस्यबंधनिवर्तकत्वेनबंधस्याज्ञानमयत्वंनसिद्ध्येदित्यर्थः ॥ २१२/१४ त्वयापीति ॥ उक्तंचविवरणे । कथंपुनर्लोकेसहाज्ञानेनाध्यासस्यतत्वज्ञानानिवृत्तेरप्रतिपत्तौब्रह्मज्ञानात्सहाज्ञानेनाध्यासस्यनिवृत्तिर्दृष्टद्वारेणकल्पनइतिनैवदोषः । तत्वावभासविरोधिनोऽग्रहणमिथ्याज्ञानादेस्तत्वज्ञानेननिवृत्तिदर्शनादिहा

पितत्वावभासविरोधितयैवभावरूपाज्ञानादेःकल्प्यमानत्वात्तस्यब्रह्मज्ञानान्निवृत्तेरुपपत्तेरिति ॥ [२९२।५] सममेतदिति ॥ प्रकाशेनांधकारस्येवसत्यस्यवंधस्यब्रह्मज्ञानान्निवृत्तिर्विरोधादित्येवांगीकर्तव्यमित्यर्थः ॥ ७ ॥ ७ ॥ ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभंगः ॥ ४० ॥ ७ ॥ ननुबृहदारण्यके तस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यमिति । अन्यत्रापिबृहदारण्यके अथनामधेयंसत्यस्यसत्यमिति प्राणावैसत्यंतेषामेषसत्यमिति ब्रह्मणिसत्यस्यसत्यमितिनामनिर्वचनेनान्यस्यब्रह्मसत्तातोपकृष्टा सत्ताप्रतीयतइत्यतआह ॥ [२९२।१०] नापीति ॥ एषसत्यमिति ॥ एष आत्मा । सत्यं सत्यः ॥ [२९२।१३] लक्षणोक्तीति ॥ ब्रह्मविदाप्नोतिपरमितिसूत्ररूपेवाक्येउद्दिष्टस्यब्रह्मणःसत्यंज्ञानमनंतंब्रह्मेत्यनेनलक्षणान्युच्यंते । तत्रब्रह्मणोन्यस्यसत्यत्वेतत्रैवतल्लक्षणातिव्याप्तिःस्यादित्यर्थः । नात्रसत्यशब्देनाबाध्यत्वरूपसत्यत्वंब्रह्मलक्षणत्वेनाभिमतं । किंतुसर्वनियंतृत्वं । तच्चप्रपंचसत्यत्वेपिनतत्रातिव्याप्तमित्याशयेनदहरप्रकरणेछंदोगोपनिषदिविद्यमानंसत्यशब्दनिर्वचनवाक्यंपठति ॥ [२९२।१३] तस्यहवाएतस्यब्रह्मणोनामसत्यमितितानिहवाएतानीत्यादि ॥ हशब्दद्वयंचउभयत्रप्रसिद्धिद्योतनाय । उक्तंचसत्यशब्दस्यावयवत्रयवत्त्वंबृहदारण्यके । तेदेवाःसत्यमेवोपासतेतदेतदक्षरंसत्यमितिसइत्येकमक्षरंतीत्येकमक्षरमिति । अत्रक्वचित्बृहदारण्यकइतिपठित्वातस्यहवाएतस्येतिवाक्यलिखनं तत्तुलेखकप्रमादात् ॥ [२९२।१६] सत्तासत्ते ॥ मुक्तामुक्तौगोविंदाधीनौ । रथकारादिशब्देरूढ्यर्थयोगत्यागवदिहापितथास्यादित्यतआह ॥ [२९२।१६] श्रौतेति ॥ सत्यपदान्वाख्यानलब्धइत्यर्थः ॥ [२९२।१७] यदाजिमायन्निति ॥ यदाजिमायन्नितिछंदोगानां

ा० १४६

सत्यस्य. १ । ४१

पाठः । अन्यादृशस्त्वयुक्तः एतच्चप्राक्प्रपंचितं ॥ [२९२।१७] शास्त्रस्थावेति ॥ शास्त्रस्थावात्तन्निमित्तत्वादितिजैमिनिसूत्रस्यसंदिग्धार्थकेशास्त्रेशास्त्रांतरस्थाप्रसिद्धिर्ग्राह्या । शास्त्रार्थनिर्णयस्यशास्त्राधीनत्वादित्यर्थः । यथायवमयश्चरुर्भवतीत्यत्रयवशब्देनप्रियंग्वादिकंवादीर्घशूकोवेतिसंशयेपृथक्जनप्रसिद्ध्याप्रियंग्वादीतिप्राप्तेयदान्याओषधयोम्लायंतेऽथतेमोदमानास्तिष्ठंतीति अन्यौषधिम्लानिकालेपिमोदमानानांदीर्घशूकानामेवयवशब्देनग्रहणंतद्वदित्यर्थः । नन्वेवंघटादौसत्यशब्दोनस्यात् । श्रौतयोगस्याभावादित्यतआह ॥ [२९२।१८] वेदइति ॥ यथाश्येनेनयजेतेतिविहितयागेसामानाधिकरण्याच्छ्येननामकत्वेनप्रसिद्धेऽनेकशक्तिकल्पनाभयाच्छ्येनशब्दस्यतद्वाचकभावानभ्युपगमेपि यथावैश्येनोनिपत्यादत्तएवमयंद्विषंतंभ्रातृव्यंनिपत्यादत्तइत्यर्थवादावगतनिपत्यादायकत्वसादृश्येनपक्षिजात्योपमितगौणत्वद्वारेणावाप्तप्रसिद्धिः श्येनशब्दःपुनरितरेषुयागेषुधर्मातिदेशायसमानमितरच्छ्येनेनेतिप्रयुज्यमानोगौणोपिक्लृप्तत्वाद्यागविषयत्वेनैवावसीयते । लोकेतुश्येनत्वजात्यांरूढ्यापक्षिपरः तथालक्षणाद्युक्तौरूढियोगाभ्यांसत्यादिशब्दाब्रह्माभिदधति लोकेरूढिमात्रेणतद्व्यवहारइतिनदोषः । प्रत्युतावाध्यस्वरूपभिन्नेघटादौत्वन्मतएवसत्यशब्दोनस्यादितिभावः । ननुधर्मातिदेशादिव्यवहारसिद्ध्यर्थंकेनचिद्गुणयोगेनश्येनशब्दस्ययागविशेषनामत्वांगीकरणमर्थवत् इहतुसत्यशब्दस्यरूढित्यागेनयोगांगीकारेनविशेषहेतुरस्तीत्याशंकांस्मृतिपादीयवार्तिकसंमत्यापरिहरति ॥ [२९२।१८] उक्तंचेति ॥ गौणं योगादिनालब्धं । यथाश्येनशब्दस्ययागादिः ॥ [२९२।१८] लाक्षणिकमिति ॥ पुरोडाशानलंकुर्वित्यादौपुरोडाशशब्दस्यधानाः

॥ २१९ ॥

करंभःपुरोडाशःपरीवापःपयस्येतिसवनीयहविःपंचकंलाक्षणिकोर्थः । अश्ववालःप्रस्तरइत्यादौकाशानामश्ववालशब्दवाच्यत्वं
तेषांप्रस्तरकार्येविधानमितिवाक्यभेदोपिवेदांगीकृतत्वान्नदोषइत्यर्थः । उक्तंचात्रैववार्तिके । अथापिगौणशब्दत्वंतथापिबलव
त्तरं स्वतंत्रस्यहिवेदस्यगौणत्वंनविचार्यतइति । तस्माच्छास्त्रमतैवैकाप्रतिपत्तिर्बलीयसी । नसमामुक्तकाचारैर्विप्रकृष्टैःससंकरै
रितिच ॥ [२९२।२३] भारतइति ॥ सनत्सुजातयदिदंश्रृणोमिमृत्युर्हिनास्तीतितवोपदेशं । देवासुराअचरन्ब्रह्मचर्यममृत्यवेतत्कतरन्नु
सत्यं । हेसनत्सुजात मृत्युर्नास्तीतितवोपदेशंश्रृणोमि देवासुराःपुनःअमृत्यवेमृत्योरभावायब्रह्मचर्यमाचरन्नितिमृत्योःसत्त्वमव
गम्यते । नह्यविद्यमानस्यमिथ्याभूतस्यवानिवृत्तयेब्रह्मचरणंसंभवति । तथाचमृत्युरस्तिनास्तीत्येतयोःपक्षयोःकतरत्सत्यमि
तिधृतराष्ट्रेणसनत्सुजातंप्रतिपृष्टे उभेसत्येइत्यादिधृतराष्ट्रंप्रतिसनत्सुजातवाक्यं । हेक्षत्रियाद्यमृत्युस्तदभावश्चेत्युभेअपिसत्ये
एवप्रवृत्तेतयोर्मध्येमृत्युःसंसारमोहः । मोहश्चेत्तर्हिमिथ्यास्यान्नेत्याह । प्रमादंवैमृत्युंप्रमादोस्वाभाविकः । क्वचिन्मोहान्मृत्युरिति
पाठः ससनत्सुजातभाष्यविरुद्धः । इतिसनत्सुजातवाक्यस्यार्थः ॥ ७ ॥ ७ ॥ सत्यस्यसत्यइत्यादिश्रुत्यर्थापत्तिभंगः ॥
॥ ४१ ॥ ७ ॥ अत्रकश्चित्शुक्तिरूप्यस्वप्नादिवत्दृष्टिसृष्टित्वान्यथानुपपत्त्याजगतोमिथ्यात्वमितिवक्तुंजगतोदृष्टिसृष्टिरित्याह ।
तन्निराकरोति ॥ [२५२।२५] यच्चेति ॥ दृष्टिसृष्ट्यंगीकारेक्षणिकत्वमर्थतोंगीकृतंस्यादित्याह ॥ [२५२।२५] बौद्धेति ॥ [२९३।१] षंडस्माकमिति ॥ जीवोब्रह्म
विशुद्धाचिद्विभागस्त्वनयोर्द्वयोः । अविद्यातच्चितोर्योगःषडस्माकमनादयइति । नन्वनाद्यतिरिक्तेसृष्टिविषयएवदृष्टिसृष्टिस्वी
कारान्नविरोधइतिचेन्मैवं । विभागादीनांदृष्टिसृष्ट्यामिथ्यात्वासिद्ध्यादृष्टिसृष्ट्याविश्वमिथ्यात्वसिद्धिरितिस्वोक्तिविरोधात् ॥

[२९३।३] स्वर्गाद्यर्थमिति ॥ स्वप्नादिसाम्यज्ञानेसतिज्योतिष्टोमादौप्रवृत्तिर्नस्यात् । ननुस्वाप्नकार्यकारणभाववोधकवाक्यवदुपपत्तिरि
तिशंकांनिराकरोति ॥ [२९३।५] यदीति ॥ स्वप्नवेदांतवाक्यतन्मीमांसासाम्येनजागरेतत्रप्रवृत्तिर्नस्यात् । नचविषयावाधतद्वाधाभ्यां
स्वप्नाद्विशेषः । स्वप्नादविशेषेविषयावाधादेरयोगात् ॥ [२९३।७] शुक्तीदमंशस्येति ॥ यस्तुप्रतिकर्मव्यवस्थामध्यासतटस्थलक्षणंचमं
दाधिकारिकमित्याह सस्वाचार्यप्रक्रियायैनस्पृहयतइत्युपेक्षणीयः ॥ [२९३।८] सत्यस्येति ॥ शुक्तीदमंशस्यापिरूप्यवन्मिथ्यात्वात्सत्यं
वस्तुनास्तीत्यर्थः । ननुदृष्टिसृष्टिपक्षेपिइदमंशावच्छिन्नचैतन्येनमिथ्यारूप्यस्यतेनसहसंभेदावभासोस्त्येवेति । मैवं । इदंवृत्तेः
प्रागिदमोऽभावेनतदवच्छिन्नचैतन्यस्याभावात् । तस्यमिथ्यात्वाच्च ॥ इदंरूप्यमिति[२९३।९]ज्ञानकालइति ॥ शुक्तित्वाज्ञानेशुक्ति
त्वरूपस्यैवाभावात् । तज्ज्ञानेतुतस्यसत्त्वेपिनाज्ञानावच्छेदकत्वं । तस्यज्ञातत्वात् । ननुशुक्तित्वाभावेपितदज्ञानमस्तु । सत्ता
कालइवसत्ताविरहकालेप्यज्ञानाविरोधात् । मैवं । ज्ञानस्यज्ञातैकसत्त्वात् । तज्ज्ञानस्यचतदवच्छेदकविषयकत्वात् तदवच्छे
दकस्यदृष्टसृष्टित्वात् सत्ताविरहकालेऽज्ञानमित्यस्यासिद्धेः । सत्ताकालेऽज्ञानमितितुसुतरामसंगतं । ज्ञानस्यैवतत्सत्तारूप
त्वात् । नचस्थायित्वपक्षेसत्ताकालइतिदृष्टांतः । सत्ताविरहकालेऽज्ञानमित्यस्योक्तविधयाऽसंगतेः ॥ [२९३।१०] भिन्नेति ॥ भ्रमकाले
वाधकालेचेदमंशयोर्भेदात् । नचभेदेपिसारूप्याद्वाधादिव्यवस्थेतिवाच्यं । सारूप्यस्यापिदृष्टिसृष्टित्वेनोभयानुगतस्याभा
वात् ॥ [२९३।११] रूप्यादिवाधस्यापीति ॥ अधिकवलस्यैववाधकत्वात् । एतेनवाधान्यूनसत्ताकत्वमेवावाध्यत्वेप्रयोजकंनत्वधिक

सत्ताकत्वमित्यपास्तं ॥ [२९३।११] सुषुप्तीति ॥ नचजीवादिविभागस्यानादितयानदृष्टिसृष्टिरितिवाच्यं । तस्यमिथ्यात्वासिद्धेरित्युक्तत्वात् ॥ [२९३।१२] सुसंप्रतीति ॥ नचकारणात्मनासंस्कारोस्तीतिवाच्यं । कारणस्यापिदृष्टिसृष्टित्वेनसुप्तौतस्याप्यभावात् ॥ [२९३।१३] मोक्षस्यापीति ॥ अविद्यानिवृत्तिरूपस्येत्यर्थः ॥ [२९३।१३] दृगिति ॥ मोक्षस्यदृग्रूपत्वेऽसाध्यत्वंस्यात् ॥ [२९३।१४] सदेति ॥ अर्थज्ञानस्यसदात्वेनार्थस्यापिसदातनत्वापत्त्यासदाप्रतीत्यापत्तिरित्यर्थः । नचवृत्त्युपहितचैतन्यमेवघटादेर्दृष्टिः वृत्तौतुवृत्तिरेवस्वस्वरूपाचैतन्योपाधिरितिवाच्यं । वृत्तिज्ञानंविनावृत्तिस्वरूपासिद्ध्यावृत्तिविशिष्टचैतन्याभावेनवृत्तिस्वरूपसिद्ध्यर्थंवृत्त्यंतरविशिष्टचैतन्यस्यवृत्तिज्ञानत्वंवाच्यं । एवमन्यस्यान्यस्येत्यनवस्था ॥ [२९३।१५] उक्तन्यायेनेति ॥ नचस्वाप्नवद्देहेंद्रियनैरपेक्ष्येणैवायंभ्रमइतिवाच्यं । अन्वयव्यतिरेकाभ्यांभ्रममात्रेदेहादेर्हेतुत्वेनस्वाप्नभ्रमेपितद्धेतुत्वात् । दोषाज्ञानादेरवश्यंभ्रमहेतुत्वाच्च । अन्यथामोक्षेपिभ्रमः स्यात् ॥ [२९३।१६] घटादेरिति ॥ यदाघटादौदृष्टिसृष्टिरितिज्ञानंनास्तितदाघटादीनांदृष्टिसृष्टेरभावात् ॥ [२९३।१७] ध्रुवाद्यौरिति ॥ यत्त्वत्रआकल्पसंतानाविच्छेदपरत्वंध्रुवपदस्य । अन्यथाध्रुवोराजेत्यादावगतिरितिकेनचिदुक्तं तद्वेदांतार्थज्ञानगंधवैधुर्यनिबंधनं । अनेनसूक्तेनसंग्रामायोद्यतोराजापुरोधसानुसन्नाहनीयः । उक्तंचसूत्रे संग्रामेसमुपोढेराजानंसन्नाहयेदात्वाहार्षमंतरेधीतिपश्चाद्रथस्यावस्थायजीमूतस्येवभवतिप्रतीकमितिकवचंप्रयच्छेदित्यादि । समुपोढे समुपस्थिते । पश्चाद्रथस्यावस्थाय पुरोहितोजपतीतिशेषः । चैत्ययज्ञइतिखंडेयत्रवेत्थवनस्पतइत्येतयर्चेतिऋग्ग्रहणेनऋचंपादग्रहणंइतिपरिभाषायाअनित्यत्वज्ञापनात् आ

त्वाहार्षमंतरेधीतिपश्चाद्रथस्येत्यत्रपादग्रहणेसत्यपिसूक्तस्यैवग्रहणमितिवृत्तिकारोक्तेरत्रचसूक्तेअविचाचलिः मापच्योष्ठाइत्यादिनाराज्ञेस्थिरत्वमाशास्यते । तत्रदृष्टांतोध्रुवाद्यौरित्यादिना । यथाद्यौःपृथिवीपर्वताःविश्वंजगत्ध्रुवंस्थिरंतथात्वमपिराजास्थिरोभवेति । माधवीयेप्येवमेवव्याख्यातं । तत्रकःप्रसंगःसंतानादिकल्पनायाः । अन्यथातत्सत्यमित्यादेरप्येवमेवार्थःकल्प्येतेतिस्पष्टंबौद्धवादःस्यात् । ननुसहोवाचाजातशत्रुर्यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषः एषतदातुकुतएतदागादितितदुहनमेनेगार्ग्यः सहोवाचाजातशत्रुर्यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयस्तदेतेषांप्राणानांविज्ञानेनविज्ञानमादाय यएषोंतर्हृदयआकाशस्तस्मिंच्छेतेइत्याद्युक्त्वा अथयदासुप्तोभवतियदानकस्यचनवेदहितानामनाड्योद्वासप्ततिःसहस्राणिहृदयात्पुरीततमभिप्रतिष्ठंतेताभिःप्रत्यवंसृप्यपुरीततिशेतेसयथाकुमारोवामहाराजोवामहाब्राह्मणोवातिघ्नीमानंदस्यगत्वाशयीतैवमेवैषएतच्छेते । अतिशयेनहंतीत्यतिघ्नीं आनंदस्यावस्थां । सयथोर्णनाभिस्तंतुनोच्चरेद्यथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाःसर्वेलोकाःसर्वेदेवाःसर्वाणिभूतानिव्युच्चरंति । तस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यमिति । अत्रअब्रह्मविदंगार्ग्यंप्रतिक्षत्रियोपिसन् ब्रह्मवित्काश्योब्रह्मबोधयितुंगार्ग्येणसहसुप्तंपुरुषंप्रत्यागम्यतंपाणिनापेष्यवोधयित्वागार्ग्येणकर्तुमर्हंप्रश्नं अज्ञानादकृतंस्वयमेवकाश्योगार्ग्यंप्रतिकृतवान्सहोवाचेत्याद्यकंडिकया। एतदितिक्रियाविशेषः। एषविज्ञानमयोंतःकरणप्रायोयत्रसुप्तोभूत्तदा एषः क्वाभूत्कुतःआगात्। एतत्प्रश्नद्वयंप्रतिवक्तुंगार्ग्योनज्ञातवान् । अतःकाश्यएवतदुत्तरंवक्तिसहोवाचेत्यादिद्वितीयकंडिकया । अंतर्हृदयेविद्यमानोयःआकाशःतस्मिन्शेतइतिसुषुप्तप्रकारनिरूपणाय अथयदासुषुप्तोभवती

त्यादिकंडिका । कुतएवतदागादितिद्वितीयप्रश्नस्योत्तरंतस्मादात्मनःसर्वेप्राणाइत्यादि । तस्मादियंश्रुतिःसुप्तोत्थजीवात्मप्राणा
दीनांसृष्टिंवक्तीतिदृष्टसृष्टौप्रमाणमित्यतआह ॥ [२९३।२२] तस्मादात्मनइति ॥ पाणिपेषादिनाप्रबोधितस्यसुप्तस्यकआधारइतियत्रैष
एतत्सुप्तोभूदित्यादिनाकाश्येनपृष्टस्ययएषोंतर्हृदयआकाशस्तस्मिंच्छेतइत्यादिनाप्रतिवचनंब्रुवताकाश्येनैव आकाशशब्दवाच्यः
परमात्मासुप्तपुरुषाधारत्वेनयउक्तः सएवअस्मादात्मनइत्यत्रइदंशब्देनपरामृश्यतइतिपरमात्मनएवप्राणादिसृष्टिर्नतुसुप्तोत्थि
तात् । परेषांबृहदारण्यकभाष्येपिसुप्ताधारत्वेनात्रोक्तआकाशःपरमात्मैवेतिप्रतिपादितं । अतएवतत्रैवननुएवमेवास्मादात्म
नइतिसंसारिणएवोत्पत्तिंदर्शयतीतिचोदयित्वा यएषोंतर्हृदयआकाशइतिपरस्यप्रकृतत्वादस्मादात्मनइतिपरस्यैवपरामर्शइ
त्युक्तं । ननुयत्रैषइतिप्रश्नवाक्येयत्रेतिनाधारप्रश्नः । किंतुकालप्रश्नः । अन्यथाक्वैषतदाभूदितिपुनर्देशप्रश्नानुपपत्तेः । मैवं ।
तथापिक्वेत्याधारप्रश्नस्यैवोत्तरंयएषोंतर्हृदयआकाशइति । ततएवचसृष्टिः । वस्तुतस्तु यत्रेत्याधारप्रश्नएव । यत्राधारेसुप्तो
भूत्सकिंप्रकारआधारइतियत्रक्वशब्दयोरेकार्थत्वात् ॥ [२९३।२५] अन्यथेति ॥ ननुकेनक्रमेणसुषुप्तोभवंतीत्यपेक्षायांहितानामनाड्यइ
तिसुषुप्त्यव्यवहितकालेनाडीनांसत्त्वंप्रतिपाद्यते । नतुसुप्तिकाले । मैवं । यदासुषुप्तोभवतियदानकस्यचन वेदहितानामना
ड्यइत्यत्रयदेतिनिर्देशात्तदेत्यवश्यमवगतेः सुषुप्तिकालएवहितनामकनाड्यादिसत्त्वावगमात् । पुरीततिशेतइतिपुरीतत्स्थस्य
सुप्ताधारत्वश्रुतेश्च । तस्माच्छ्रुत्यास्वभाष्येणचविरोधान्नजीवात्मप्राणादीनांसृष्टिः । अतिघ्न्यादिशब्दानामर्थास्तु आनंदस्य पर
मात्मनः अतिघ्नीं समीपं कुमारो रुद्रः महाराजो वायुः महाब्रह्मणो ब्रह्मा इत्याचार्योक्ताः । यस्तुभाष्यंमंदाधिकारिकमि

त्याह सस्वयमेवमंदाधिकारी । अस्मादात्मनइतिवाक्येपूर्ववाक्येनविरोधमभिधायस्ववाक्येनविरोधमाह ॥ [२९३।२६] अत्रापीति ॥ [२९४।१] नाड्यादिकमिति ॥ सुषुप्तौनाड्यादिसृष्टेरभावात् ॥ [२९४।१] तंतुविस्फुलिंगेति ॥ जीवस्यतंत्वादिदृष्टिरेवतंत्वादिजन्म । नतुऊर्ण नाभ्यादितस्तंत्वादिजन्मेत्यर्थः । सर्वलोकदृष्टिः सर्वलोकसाक्षात्कारः । तथाचसर्वलोकसाक्षात्काराभावात्सर्वलोकजन्मोक्ति रयुक्तास्यात् ॥ [२९४।२] नचोर्णनाभीति ॥ नहिऊर्णनाभिनाग्निनावातंतूनांविस्फुलिंगानांवादर्शनमेवतयोर्जन्म । किंतुस्वशरीराग्नि ष्कासनमेव । तस्मात्कुतएतदागादितिवाक्येजीवस्यसुप्तिकालेऽविद्यमानंज्ञातृत्वादिकंकुतआगंतमितिद्वितीयप्रश्नस्यसर्वकर्तुः परमात्मनआगतमित्युत्तरंवक्तुंसर्वकर्तृत्वंपरमात्मनउच्यते अस्मादात्मनइतिवाक्ये ॥ ७ ॥ ७ ॥ दृष्टिसृष्टिभंगः ॥७॥ ४२ ॥ [२९४।५] तस्मिन्निति ॥ आंध्यमप्रतीतिः । ननुसुप्त्यभिमानिनोमुख्यजीवस्यहिरण्यगर्भस्यासुप्तत्वान्नजगदांध्यं । तस्मिंस्तुलयकालेसु प्तेजगदप्रतीतिरिष्टैव । अंतःकरणावच्छिन्नेजीवाभासेतुसुप्तेतमेवप्रतिजगदप्रतीतिः । नत्वन्यानपिप्रति । तदुपाधीनामप्रली नत्वात् । मैवं । अंतःकरणावच्छिन्नानांजीवाभासानांचित्त्वेनानाजीववादापत्तेः । अचित्त्वेजगदांध्यापातात् । अतीतहिर ण्यगर्भमुक्तेःप्रमाणसिद्धत्वेनेदानींसंसार्युपलंभायोगादितिवक्ष्यमाणत्वाच्च ॥ [२९४।६] दृष्टिसृष्टीति ॥ कारणात्मनापिसंस्कारावस्था नायोगस्योक्तत्वादित्यर्थः । स्वप्नपुरुषवत् स्वप्नद्रष्टृपुरुषवत् । त्वदितिपंचम्यंतंपर्यनुयोज्यइत्यनेनसंबध्यते । चैत्रमैत्रादिसर्वा भिमानिनोजीवस्यकल्पकत्वेनतवममेत्यादिकल्पनानयुक्तेतितुनिरस्तं ॥ [२९४।११] अनुसंधानापातादिति ॥ ननुभिन्नभिन्नांतःकरण

भेदाध्यासेनतत्तदंतःकरणमादायप्रत्यक्त्वपराक्त्वत्वमित्यादिबुद्धिविषयत्वंसुखानुसंधानाननुसंधानादिकंचोपपन्नमिति। मैवं।
वंधतत्वज्ञानमोक्षावच्छेदकानामंतःकरणादीनांभेदेनानाजीववादापत्तेः । तदभेदेतुदुःखाद्यनुसंधानप्रत्यक्त्वाद्यनुपपत्तेर्दुष्प
रिहरणीयत्वात् । वक्ष्यतेचैतज्जीवभेदप्रस्तावे ॥ यदेवमेभेगवान्वेदेति ॥ एतेनसामान्यतोमोक्षोपयोगिज्ञानविषयचि
त्त्वेनतत्त्वमस्यादिवाक्यवक्तृत्वेनवाकल्पितस्योपदेष्टृत्वमितिनिरस्तं । भेदस्यापिताद्दशज्ञानविषयत्वसंभावनयाविशिष्यज्ञातव्य
त्वात् । भेदवादिनोपितत्त्वमस्यादिवाक्यवक्तृत्वाच्च ॥ मीमांस्यत्वंवदिति ॥ नचतर्केणवेदइवतत्तद्रूपकल्पनयागुरावपि
तत्परिहारइतिवाच्यं । तथाकल्पनासंभवस्योक्तत्वात् ॥ सदुत्तरेति ॥ नचकथायाःकल्पितत्वानिश्चयकालीनत्वेनसमयवंध
विशेषनिवंधनत्वेनताद्दगुत्तरानवकाशइतिवाच्यं । अद्वैतिनःकल्पितत्वनिश्चयवतस्तदनिश्चयसमयवंधविशेषयोरसंभवात् ॥
संप्रदायाभावेनेति ॥ ननुसंप्रदायाभावेप्यपूर्ववदुत्पत्तिरस्त्वितिचेन्मूर्खोसि । नह्यनादौसंसारेऽद्याप्यनुपपन्नजातीयमपूर्वमु
त्पद्यतइतिकोप्यभ्युपैति । किंतूत्पन्नपूर्वजातीयमेवापूर्वमग्रेप्युत्पद्यते । कर्मणांतज्जन्यापूर्वाणांतत्फलानांचनियतत्वात् ॥ तत्व
वित्त्वेनेति ॥ कल्पनाकालएवतत्वस्यज्ञातत्वादुपदेशानर्थक्यादिनेत्यर्थः ॥ इतिपूर्वेणेति ॥ इच्छामात्रंप्रभोःसृष्टिरितिसृष्टौ
विनिश्चिताइतिपूर्ववाक्येवहुवचनेन ॥ उत्तरेणेति ॥ त्रिषुधामसुयत्तुल्यंसामान्यंवेत्तिनिश्चितः । सपूज्यःसर्वभावानांवंद्यश्चैवम
हामुनिरित्युत्तरवाक्येपूजावंदनकर्तृत्वेननिश्चितंचित्तानांभावानामितिवहुवचनेनवहुत्वावगमात्तेनविरोधइत्यर्थः । व्यासाद्रि
सृततर्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यांविश्वंनैकाज्ञकल्पितं ॥ ७ ॥ ७ ॥ एकजीवाज्ञानकल्पितत्वभंगः ॥ ७ ॥

॥ ४३ ॥ जगतोनाविद्यकत्वायाविद्यांप्रतिक्षिपति ॥ [२९७।१] यच्चोक्तमित्यादिना ॥ [२९७।१] अनादीति ॥ शुक्तिरूप्यंउत्तरज्ञाननिवर्त्यज्ञा
नंवाज्ञानप्रागभावं आत्मानंचव्यावर्तयितुंक्रमेणविशेषणत्रनि । चैतन्याविद्यासंबंधंवारयितुंज्ञानपदं । तस्यचनज्ञाननिवर्त्यत्वं
किंतुज्ञानजन्याज्ञाननिवृत्तिनिवर्त्यत्वमितिभावः ॥ [२९७।१] भ्रमेति ॥ अंतःकरणवृत्तेरभ्रमत्वात्तदुपादानेंतःकरणेनातिव्याप्तिरित्यर्थः
॥ [२९७।२] अहंमज्ञइति ॥ एतस्यअन्यविषयकज्ञानाभावविषयत्वंव्युदसितु मन्यंनजानामीत्युदाहृतं । एतस्याप्यन्यार्थज्ञानाभाव
विषयत्वंव्युदसितुंत्वदुक्तमर्थंनजानामीत्युक्तं । एतस्यापितदुक्तार्थसंख्याज्ञानाभावविषयत्वंव्युदसितुंसंख्यांनजानामिशास्त्रा
र्थंनजानामीत्याद्युदाहर्तव्यं । संख्यायांसंख्यांतराभावात्संख्यांनजानामीत्युक्तेःसंख्याज्ञानाभावविषयत्वंविरुद्धं । ननुतत्रापिप
रोक्षतयाज्ञातेऽपरोक्षज्ञानाभावाभिप्रायेणव्यपदेशोपपत्तिरितिशंकानिरासायशास्त्रार्थंनजानामीत्युदाहृतं । नित्यपरोक्षापूर्वा
दौतथाव्यपदेशस्यापरोक्षज्ञानाभावाभिप्रायत्वानुपपत्तिरितिभावः ॥ [२७९।३] प्रमाणज्ञानमिति ॥ अत्रविवादगोचरापन्नंप्रमाणज्ञान
मितिविवरणपाठानुसारेणपठनीयं । धर्म्यंशप्रमाणवृत्तेरिदमित्याकारायाअज्ञानानिवर्तिकायाअपक्षत्वायविवादेतिविशेषणं ।
रूप्यादिज्ञानेऽबाधायप्रमाणपदं ॥ [२९८।१] स्वोत्पादकेति ॥ एतच्चोपलक्षणं । उत्तरज्ञानव्यावर्त्यपूर्वज्ञानवारणार्थमपि । मिथ्याज्ञा
नव्यावृत्त्यर्थंवस्त्वंतरेति । हेतौद्वितीयादिज्ञानेव्यभिचारवारणायाप्रकाशितेति । दृष्टांतेसौरालोकदेशस्थप्रभाव्यावृत्त्यर्थमं
धकारेति । द्वितीयादिप्रभाव्यावृत्त्यर्थंप्रथमेतिविशेषणमित्याहुः ॥ [२९८।२] चैत्रगतेति ॥ एतच्चप्रमाप्रागभावविशेषणं । नप्रमायाः ।

तस्याअंतःकरणसमवेतत्वेनचैत्रगतत्वाभावात् । चैत्रसंबंधित्वमात्रविवक्षायांतुमैत्रनिष्ठचैत्रविषयकप्रमाप्रागभावातिरिक्तघट प्रमाप्रागभावनिवर्तकत्वेनचैत्रप्रमायांसिद्धसाधनात् । पक्षेप्रमाप्रागभावातिरिक्तज्ञाननिवर्त्यानाद्यज्ञानमादायसाध्यसिद्धिः । दृष्टांतेतुचैत्रप्रमाप्रागभावभिन्नमैत्रप्रमाप्रागभावमादायसाध्यसिद्धिरित्यर्थः ॥ एतज्जनकेति ॥ पक्षीभूतभ्रमस्ययदुपादानं तस्यपक्षीभूतभ्रमजनकतयातदतिरिक्तत्वस्यतदुपादानेबाधितत्वेनतदुपादानेऽबाध्यातिरिक्तत्वसिद्ध्यापक्षीभूतभ्रमेऽबाध्याति रिक्ताविद्योपादानकत्वंसिध्यति । दृष्टांतीभूतभ्रमेतुपक्षीभूतभ्रमजनकातिरिक्तोपादानकत्वमादायसाध्यसिद्धिरित्यर्थः ॥ तमआसीदिति ॥ तमोनीहारादिशब्दाअविद्यावाचकाः । तन्मिथ्यात्वंतुनासदासीदित्यादिनासदसतीनिषिध्यतमआसी दित्युच्यमानंतमोविद्याख्यंसदसद्विलक्षणमुच्यतइत्यर्थात्सिद्धं ॥ अव्याप्तिरिति ॥ शुक्त्याद्यज्ञानेष्वितिशेषः । तेषांसादि त्वादित्यर्थः । ननुरूप्योपादानाज्ञानमप्यनादिचैतन्याश्रितत्वादनाद्येववाच्यं । शुक्त्यादिकंतुतदवच्छेदकमितिनतत्राव्याप्ति रिति तत्राह ॥ सादीति ॥ रूप्यस्यशुद्धचैतन्यावरकाज्ञानोपादेयत्वेतदज्ञानस्यशुक्तिज्ञानान्निवृत्त्यभ्युपगमेसद्योमोक्षापातः । अनभ्युपगमेरूप्यादेःसविलासाविद्यानिवृत्तिरूपबाधोनस्यात् । ज्ञानस्याज्ञाननिवर्तनद्वारेणैवान्यनिवर्तकतयाऽज्ञानमनिवर्त्य रूप्यनिवर्तकत्वंासंभवश्चेत्यर्थः ॥ उक्तत्वादिति ॥ प्रतिकर्मव्यवस्थाभंगइतिशेषः ॥ आरोपितेति ॥ अत्यंतंवैजात्येनाभा वंप्रतिभावस्यानुपादानत्वादित्यर्थः । अनादित्वाभावश्चकारार्थः । ननुसर्वथासाजात्येवैजात्येचोपादानोपादेयभावादर्शनेनतथा साजात्यंवैजात्यंवानोपपादयितुंशक्यं । कार्यकारणाकारणतयासतिसादृश्येकार्यकारणभावस्यासंभवःस्यादित्यतआह ॥ अभा

वस्येति ॥ सत्यासत्ययोरपिकिंचित्सादृश्यमस्तीतिभावः । ननुसत्यस्यासत्योपादानत्वेसत्यस्यनिवृत्त्यसंभवेनतदुपादेयस्यास त्यस्यापिनिवृत्तिर्नस्यात् । सत्यस्यापरिणामित्वाच्च । भावस्याभावोपादानत्वेतुनकिंचिद्बाधकमिति । मैवं । समवायिकारण नाशाद्वाविरोधिसन्निपाताद्वाकार्यनाशदर्शनात् । सत्यस्यदुग्धादेःपरिणामदर्शनाच्च ॥ [३०।१४] ज्ञानादिति ॥ त्वद्रीत्येतिशेषः । न केवलमनादित्वाभावोपितुज्ञाननिवर्त्यत्वमपिनास्तीत्याह ॥ [३०।१४] शुद्धमिति ॥ स्वरूपसद्वृत्त्युपहितस्यावृत्तिविषयत्वात् शुद्धस्य वृत्त्यविषयत्वं तदज्ञानस्यज्ञाननिवर्त्यत्वंचोपपन्नमितिभावः । तदेवाह ॥ [३०।१।१] नहीति ॥ उपाधिरूपयावृत्त्यास्वरूपसत्यापिस्वोप धेयेशुद्धेब्रह्मणिकिंचिन्मालिन्यकरणेतस्यशुद्धत्वाभावेननतद्विषयकवृत्तेःशुद्धब्रह्मज्ञानत्वाभावेनतयाशुद्धब्रह्मज्ञाननिवृत्त्ययो गः । किंचिन्मालिन्यकरणेतस्याशुद्धत्वेनवृत्त्यविषयत्वान्नतदज्ञाननिवृत्तिः । नह्यशुद्धब्रह्मज्ञानेनशुद्धब्रह्माज्ञाननिवृत्तिरि त्यर्थः । ननुजीवन्मुक्त्यनुवृत्तस्यसोपाधिकभ्रमोपादानस्यचाज्ञानस्यप्रारब्धकर्मभिरुपाधिनाचप्रतिवंधनान्नपूर्वतनेनसाक्षात्का रेणनिवृत्तिः । नहिप्रतिवंधदशायांकार्याजनकमकारणंभवतीत्याशंक्यनिराकरोति ॥ [३०।१२] नचेति ॥ एतज्जीवन्मुक्त्यनुवृत्ताज्ञान स्याप्युपलक्षणं ॥ [३०।१३] उपाधीति ॥ आरब्धकर्मणामप्युपलक्षणं । ननुप्रतिवंधकाभावस्यकार्यमात्रहेतुत्वात् ज्ञानेसत्यप्यज्ञानवृ त्त्यासोपेक्षितइत्यतआह ॥ [३०।१४] नहीति ॥ अज्ञाननिवृत्तिस्थलेप्रतिवंधकाभावस्यज्ञानेस्वरूपमात्रपर्यवसायित्वादितिभावः । न न्वावरणशक्तेर्नजानामीतिव्यवहारहेतोरपगमान्नतथाव्यवहारइतिचेन्न । शक्तेरज्ञानातिरिक्तत्वेतत्रैवैतल्लक्षणातिव्याप्तिः ।

अज्ञानरूपत्वेतन्निवृत्त्ययोगात् ॥ चैतन्येति ॥ तस्यानादित्वादितिभावः । नचतस्यज्ञाननिवर्त्यत्वंनास्तीत्युक्तमितिवाच्यं । सर्वस्यचैतन्यान्यस्यज्ञाननिवर्त्यत्वमितिपरमसिद्धांतेनास्याभिधानात् ॥ अनादीति ॥ तद्व्यावर्त्यस्यघटादेःसाक्षात्ज्ञाननिवर्त्यत्वाभावादित्यर्थः । नचोत्तरज्ञाननिवर्त्यपूर्वपूर्वज्ञानंवारयितुमनादिपदमितिवाच्यं । निवर्त्यमात्रस्यज्ञाननिवर्त्यतयाज्ञानपदस्याव्यावर्तकतयाज्ञानत्वेनज्ञाननिवर्त्यत्वस्यावश्यवाच्यत्वेततएवतद्वारणात् । नचैवंभावपदमपिव्यर्थमितिवाच्यं । इष्टापत्तेः । ननुलक्षणद्वयेतात्पर्यान्नकोपिदोषइति तत्राह ॥ असंभवश्चेति ॥ ननुकल्पितत्वमात्रंनदोषजन्यधीमात्रशरीरत्वेसादित्वेवातंत्रं । किंतुप्रतिभासकल्पकसमानकालीनकल्पकवत्त्वंवाप्रागभावप्रतियोगित्वंवा । नचतत्प्रकृतेस्तीत्यतआह ॥ उक्तत्वादिति ॥ कल्पितत्वेनप्रागभावप्रतियोगित्वादेरप्यापाद्यमानत्वादित्युक्तत्वादित्यर्थः ॥ ज्ञानेति ॥ नचात्रानुमानेऽजामेकांअनादिमाययेत्यादिशास्त्रविरोधः । आद्यस्यप्रकृतिविषयत्वात् । द्वितीयस्यभगवदिच्छाविषयत्वात् ॥ व्यतिरेकेति ॥ उपाधिंव्यतिरेकवतिपक्षेसाध्यव्यतिरेकस्यसंदिग्धत्वादित्यर्थः । भावत्वमपिनोपाधिः । प्रध्वंसेसाध्याव्याप्तेः । प्रकारांतरेणासंभवमाह ॥ त्वन्मतइति ॥ ननुभावशब्देनाभाववैलक्षण्यमात्रंविवक्षितं । किंचोक्तस्यसादित्वसाधकहेतोरनादित्वसाधकेनज्ञाननिवर्त्यत्वेसतिभावविलक्षणत्वेनहेतुनासत्प्रतिपक्षइत्यतआह ॥ भावेति ॥ परस्परविरोधादित्यर्थः । तथाचस्वरूपासि

ध्यानतुल्यबलत्वमतएवोक्तलक्षणस्यासंभवोपीतिभावः । तृतीयप्रकारसिद्धौनतयोर्विरोधइतित्वन्योन्याश्रयान्निरस्तं ॥ अनि
[३०२।३] वर्त्यत्वमिति ॥ तथाचासंभवइत्यर्थः ॥ [३०२।४] अत्यंताभावइति ॥ प्रतिपन्नोपाधिस्थनिषेधइत्यर्थः । अधिकरणस्वरूपातिरिक्त
स्यात्यंताभावस्यानंगीकारेनेतिनेतीतिश्रौतनिषेधस्यब्रह्मस्वरूपमात्रबोधनपर्यवसानेनपरस्येष्टापत्तिरितिभावः ॥ [३०२।४] असंतीति ॥
नचाभावविलक्षणत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वमितिवाच्यं । असत्यभाववैलक्षण्यस्यापिसत्त्वादितिभावः ॥ [३०२।४] आत्म
नीति ॥ तथाचपक्षेनोपाधिविरहइत्यर्थः । उक्तानुमानेविरोध्यसन्निपातमुपाधिंशंकते ॥ [३०२।५] यदत्रेत्यादिना ॥ [३०२।५] सादित्वमिति ॥
ध्वंसप्रागभावयोर्व्यभिचारात् । भावत्वविशेषणेऽव्यभिचारेपिअभावेप्रयोजकांतरकल्पनापत्तिः । अभावानिवृत्तिप्रयोजके
नानादिभावत्वेनभावविलक्षणाविधायाअनिवृत्त्यापादनायोगश्चेतिभावः ॥ [३०३।२] अनादिभावत्वेनेति ॥ तथाचपक्षेनोपाधिवि
रहइत्यर्थः ॥ [३०३।३] विशेषेति ॥ प्रागभावादिसाधारण्यादितिभावः । परोक्तानुमानेव्यभिचारमाह ॥ [३०३।५] भाववैलक्षण्यादिति ॥
[३०३।५] अत्यंताभावस्येति ॥ अत्यंताभावादेर्निवर्त्यत्वेप्रतियोगिसत्त्वापत्तिरितिभावः । नन्वज्ञानस्यानिवर्त्यत्वानुमानेतन्निवृत्तिबो
धकागमबाधइत्यतआह ॥ [३०३।६] अविद्येति ॥ अज्ञाननिवृत्तिबोधकागमवशात्भावत्वाद्यनंतर्भावेनाज्ञानलक्षणंवाच्यं । इतरथा
तन्निवृत्तिरूपमोक्षासिद्धिःस्यादितिभावः ॥ [३०४।१] प्रतीतिमात्रेति ॥ ननुसुखादेःशुक्तिरूप्यादेश्चस्वभासकेसाक्षिणिसत्येवनिवृत्त्य

भ्युपगमेनसाक्षिभास्यानांयावत्साक्षिसत्त्वमवस्थानंनेष्यते । किंचनकेवलचिन्मात्रंसाक्षि । किंतुअविद्यावृत्त्युपहितं । तथा चास्थिराविद्यावृत्त्युपहितस्यसाक्षिणोप्यस्थिरत्वेनतत्सत्त्वपर्यंतमवस्थानेप्यविद्यादेर्निवृत्तिरुपपद्यते । मैवं । सुखादेरक्षणिकत्व स्यदुःखादिसमानकालीनत्वस्यचत्वयांगीकृतत्वेनतत्प्रतीतिनिवृत्तिमंतरेणतन्निवर्तकाभावेनयावत्प्रतीतिसत्त्वमवश्यं सुखादेर वस्थानंवाच्यं । तदिदमुक्तंप्रतीतिमात्रेशरीरस्येति ॥ अविद्यावृत्त्युपहितचितःसाक्षित्वेऽविद्यावृत्तेर्दोषजन्यत्वेनसुखादिज्ञा नेव्यवहारकालेपिभ्रमत्वापत्तिः वृत्त्यनुपधानदशायामविद्यादेःशुक्तिरूप्यवदसत्त्वापातश्च । नचसादिपदार्थएवायंनियमइति वाच्यं । नियामकाभावात् । अविद्यावृत्तेरपिवृत्त्यंतरप्रतिबिंबितचिद्वेद्यत्वेऽनवस्थादिकंच । विस्तृतंचैतदविद्याप्रतीतिभंगे ॥ अज्ञानस्येति ॥ मिथ्याभूतेरूप्यादौज्ञाननिवर्त्यत्वाननुभवात् । नहिज्ञानेनरूप्यंनष्टमितिप्रतीतिरित्यर्थः ॥ उक्तत्वादिति ॥ ज्ञाननिवर्त्यत्वभंगइतिशेषः ॥ अभ्रमेति ॥ नच योग्यत्वंविवक्षितं अभ्रमपूर्वकप्रमानिवर्त्याज्ञानेसहकारिवैकल्यात्कार्यानु त्पादकेपितद्योग्यतास्त्येवेतिवाच्यं । योग्यतावच्छेदकापरिचयेतदग्रहात् । नचाद्यलक्षणमेवतदवच्छेदकं । तस्यनिरस्तत्वादि तिभावः ॥ गौरवादिति ॥ एतच्चोपलक्षणं । भावविलक्षणेऽभाववैलक्षण्यस्याप्यभावइत्युक्तं । यत्त्वन्वयिकरणत्वमुपादान त्वेतंत्रमिति । तन्न । तत्रकिमन्वयित्वं । नभावत्वं । असिद्धेः । नाप्ययुतसिद्धत्वं । अज्ञानेऽसिद्धेः । भ्रमंविविच्यतस्याज्ञा नोपादानकत्वंदूषयति ॥ अपिचेति ॥ अर्थस्येति ॥ नाज्ञानमुपादानमित्यनेनान्वयः ॥ अन्यथेति ॥ भावविलक्षणस्या

प्युपादानत्वइत्यर्थः ॥ [३०७।२] तत्वज्ञानेति ॥ नचप्रागभावस्यप्रतियोगिमात्रजनकत्वेनमभ्रमंप्रतिजनकत्वं ।.नतरांचोपादानत्वमि
तिवाच्यं । धर्मिकल्पनागौरवेणक्लृप्तप्रागभावएवतत्कल्पनौचित्यात् । नचैकाविद्यातिरिक्तानंतप्रागभावेमानाभावः । उत्प
न्नस्योत्पत्त्यदर्शनेनतस्यावश्यकत्वात् । तस्याभांवविलक्षणंत्वाभावाच्च ॥ [३०७।४] यद्यदनुविद्धेति ॥ नचरूपंघटइतिप्रतीत्यभावान्ना
यंनियमइतिवाच्यं । शुक्लोघटश्चलतिघटइतिविशेषानुवेधस्यसत्त्वात् । नचप्रकृत्याद्यनुवेधःपरमतेपिनास्तीतिप्रकृत्युपादानक
त्वमपिनस्यादितिवाच्यं । मृद्धटइत्यादेरेवतदनुवेधात् । भ्रांतेस्तुनकेनापिरूपेणाज्ञानानुवेधःसंभवतीतिभावः ॥ [३०८।२] भावव्या
प्यइतीति ॥ अभावाभावोभावइतिमतेज्ञानप्रागभावनिवृत्तेः ज्ञानरूपायाःनज्ञानजन्यत्वमितिज्ञानजन्यनिवृत्तिप्रतियोगि
त्वरूपंज्ञाननिवर्त्यत्वंज्ञानप्रागभावेनास्ति । प्रतियोगिव्याप्याप्रतियोगिभिन्नाप्रतियोगिजन्याप्रागभावस्यनिवृत्तिरितिमते प्रा
गभावस्यसाक्षाज्ज्ञानेनिवर्त्यत्वमस्तीतितत्रातिव्याप्तिरित्यर्थः ॥ [३०८।३] अन्यथेति ॥ प्रागभावस्यज्ञाननिवर्त्यत्वाभावेस्वनिवर्त्येतिवि
शेषणेनैवतद्व्यावृत्तिसिद्धौस्वप्रागभावव्यतिरिक्तेत्याद्यविशेषणमविद्यानुमानेव्यर्थंस्यादित्यर्थः ॥ छ ॥ व्यासाद्रिसृततर्कांबुपूरैः
पक्षयुगंयुजि । न्यायामृततरंगिण्यामविद्यालक्षणक्षतिः ॥ छ ॥ छ ॥ अविद्यालक्षणभंगः ॥ ४४ ॥ छ ॥ [३०८।४] त्वन्मतइति ॥
अहमज्ञइतिप्रतीतेर्ज्ञानाभावविषयत्वंत्वयापिवाच्यं । अन्यथातस्याःप्रामाण्यंनस्यादित्यर्थः । नन्वहमर्थस्याज्ञानानाश्रयत्वेपि
तदाश्रयीभूतचैतन्येंतःकरणतादात्म्याध्यासेनैकाश्रयसंबंधेनस्थूलोगच्छतीतिवदहमज्ञइतिप्रतीतिर्भावरूपाज्ञानविषयैवेतिचे
न्न । शुद्धचैतन्यस्याज्ञानाश्रयतयाविशिष्यप्रतीत्यसंभवेनान्यस्यमुख्यतत्प्रत्ययस्याभावेनाहमज्ञइत्यस्यैवमुख्यप्रत्ययत्वेवाच्ये अ

ह्मर्थस्याज्ञानाश्रयतयातस्यज्ञानाभावविषयत्वंत्वयापिवाच्यमित्यर्थात् । स्पष्टयिष्यतेचैतदविद्याश्रयभंगे ॥ [३०८।६] साक्षीति ॥ न
चस्वस्मिन्विद्यमानेसाक्षिवेद्येसुखादौस्वभ्रमसिद्धेरूप्यादौचनजानामीतिनव्यवहारः । परसुखादौतथाव्यवहारस्तुपरोक्षज्ञान
निवर्त्त्येनप्रमातृगताज्ञानेनैवोपपन्नइतिवाच्यं । अर्थावोधात् । स्वसमवेतेस्वभ्रांतिसिद्धेचातीतसुखादौरूप्यादौचनजानामी
तिव्यवहारस्यसर्वसिद्धस्यसुखादावज्ञानमनिच्छतात्वयापि ज्ञानाभावविषयत्वेनसमर्थनीयत्वादित्यर्थात् । विषयेप्रमातरिचा
ज्ञानस्यैकत्वाच्च । आवृतंविषयमजानन्प्रमाताज्ञइत्युच्यते । अतएवपरोक्षज्ञानेनप्रमातृगताज्ञानेनाशितेपिविषयगताज्ञान
सत्वेपिननजानामीतिव्यवहारापत्तिः । प्रमातृगताज्ञानकार्यस्यनजानामीतिव्यवहारस्यविषयगताज्ञानेनापादयितुमशक्यत्वा
दितिनिरस्तं । तच्छक्तेरप्येकत्वाच्च ॥ [३०९।३] विक्षेपइति ॥ विपर्ययइत्यर्थः ॥ अपरोक्षं[३०९।४]तइति ॥ विक्षेपरूपकार्यस्याज्ञानविषयत्वं
प्रत्यप्रयोजकतयाजडेनजानामीत्यस्यनाज्ञानविषयत्वमित्यर्थः ॥ निरसिष्यमा[३०९।५]णत्वादिति ॥ तस्याज्ञानकल्पितत्वेनान्यो
न्याश्रयात् स्वयमेवप्रकाशहीनेतत्कृत्याभावाच्चेत्यादिनाविद्याविषयभंगइतिशेषः ॥ [३०९।६] वृत्तिरिति ॥ विषयप्रकाशकंसर्वगतजी
वचैतन्यमविद्यानावृतमितिमतेर्वृत्तेश्चिदुपरागार्थत्वादित्यर्थः । ननुमयिज्ञानंनास्तीतिप्रतीतिरपिनज्ञानाभावविषया । त
थाहि । अत्रहिज्ञानाभावेज्ञानत्वावच्छिन्नप्रतियोगिताकत्वमनुभूयते । तच्चतज्ज्ञानविशेषनिष्ठानांकथंचिदनुगतीकृतानांत
त्तद्विशेषाभावकूटप्रतियोगिताकानांज्ञानत्वस्यावच्छेदकत्वेनवा । विशेषाभावकूटातिरिक्तसामान्यधर्मावच्छिन्नप्रतियोगिता

काभावविषयत्वेनवा । प्रकारांतरासंभवात् । तदुभयमपिनसंभवति । अभावज्ञानकारणधर्म्यादिज्ञानेसतिनतदुभयविधा भावज्ञानं । प्रतियोगिभूतज्ञानज्ञानस्यतुस्वविषयीभूतज्ञानविषयविषयकत्वेनतस्यैवतज्ज्ञानत्वात् । तयोर्यत्किंचित्प्रतियोगि व्यक्तिविरोधित्वेनतद्वतितयोरसंभवात् । धर्म्यादिज्ञानाभावेतुकारणाभावादेवतयोर्नज्ञानं । अतोमयिज्ञानंनास्तीत्यपिनज्ञा नाभावज्ञानं । किंतुभावरूपाज्ञानज्ञानमेवेति । मैवं । यत्किंचिद्विशेषाभावस्यैवतथाप्रतीत्युपपत्तेः । नचतत्प्रतियोगितान ज्ञानत्वावच्छिन्नेतिवाच्यं । अवच्छेदकत्वंहिनानतिरिक्तवृत्तित्वादिकं । अवच्छेदकत्वाभिमतघटत्वादिसमनियतकंबुग्रीवत्वा द्यतिप्रसक्तेः । किंतुस्वरूपसंबंधविशेषएव । तच्चास्तिसामान्यधर्मस्यापिविशेषप्रतियोगितया । नन्वेवंवायौरूपंनास्तिपुरोदेशे रजतंनास्तीत्याभासवाक्यजन्यप्रतीत्यनंतरमपितत्संशयादिनिवृत्तिर्नस्यात् । एकविशेषाभावबोधनेपिविशेषांतरमादायसंश योपपत्तेरितिचेत्प्रथमंनकथंचित् । अपशवोवाअन्येपशवोगोश्वेभ्यइत्यादाविवविशेषपरत्वशंकायाःसकलरूपाद्यभावतात्पर्या वगमान्निवृत्तौउक्तवाक्यात्संशयादिनिवृत्तेः । किंचवायौरूपंनास्ति मयिज्ञानंनास्तीतिसमानाकारप्रतीत्योःकथंविषयवैजात्यं । ननुप्रतियोगिज्ञानाज्ञानाभ्यामनुपपत्त्याऽगत्यातत्कल्प्यतइतिचेन्न । तर्हिततएवयावदभावकिंचिदभावविषयत्वमेवकल्प्यतां । एवंचप्रतीतिसारूप्यमपिसमर्थितंस्यात् । त्वद्रीत्याएकस्याअभावविषयकत्वमन्यस्याअभावविलक्षणाज्ञानविषयत्वेसर्वथातद्बा धएवभावरूपाज्ञानवादेपीति । ननुश्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्यज्ञानेपिप्रतियोगिज्ञानाज्ञानाभ्यांनव्याहतिः । नहिश्रवणादिसाध्यत्वमोक्षहेतुत्वादिप्रकारकंब्रह्मज्ञानज्ञानमपिसत् श्रवणादिसाध्यंमोक्षहेतुर्वा । येनतस्मिन्सतिताद्दक्ज्ञान

प्रागभावोव्याहन्येतेतिचेन्न । तद्विषयकज्ञानेसत्येवतद्विषयकज्ञानाभावस्यनिरूपणंत्वयापिवाच्यमित्यत्रतात्पर्यात् । श्रव
णादिसाध्यमोक्षहेतुज्ञानंनिष्प्रपंचात्मविषयकमतस्तादृशात्मज्ञानस्यज्ञानमपिनिष्प्रपंचात्मज्ञानस्यज्ञानमितितस्मिन्सतिकथंतादृ
शज्ञानप्रागभावस्तिष्ठेत् । निष्प्रपंचात्मविषयतयात्मसाक्षात्कारस्यतस्मिन्सतिकथंप्रपंचनिवर्तकता । ननुश्रवणादिजन्य
त्वेनाधिष्ठानतत्वसाक्षात्कारेसति । निरुपाधिभ्रमादर्शनादितिभावः । अतएवसाक्षात्कारभिन्नंशंकते ॥ [३१०।५] नचेति ॥ अनु
[३११।१] पलंभ्यावेति ॥ वाशब्दोऽनास्थायां । अनुमित्यभावेतात्पर्यात् । ननुज्ञानाभावस्यझडितिप्रतीतिःस्वकारणस्यझडितिसमव
धानमाक्षेप्स्यति नतुंस्वस्यानुमितिभिन्नत्वमित्यतआह ॥ [३११।२] त्वन्मतइति ॥ ननुजडेज्ञानाभावोनप्रत्यक्षः । ज्ञानरूपप्रतियोगि
ग्राहकस्यमनसोबहिरस्वातंत्र्येणयावत्प्रतियोग्युपलंभकसमवधानरूपयोग्यतायुक्तप्रतियोग्यनुपलब्धिविरहात् । अतोजडेलिं
गांतरमेवज्ञानाभावानुमापकमितिचेन्न । घटोयद्यवच्छेदकविशेषेणज्ञानाधारःस्यात् प्रत्यङ्स्यात् । तादृशज्ञानत्वेनोपलभ्य
मानत्वस्यप्रत्यक्त्वादित्यनुपलंभप्रतियोग्युपलंभापादनसंभवात् ॥ [३११।२] अपरोक्षंतइति ॥ लिंगांतरंतुनानुसंहितमितिभावः ॥
[३११।३] दुःखादाविति ॥ स्ववृत्त्यतीतदुःखादिज्ञानाभावस्येत्यर्थः । भावरूपाज्ञानेनलिंगेनज्ञानाभावोनुमीयतइत्यत्रदूषणांतरमाह
[३११।४] ॥ प्रतियोगीति ॥ विषयावच्छिन्नज्ञानरूपविशेषणज्ञानंविनाविशिष्टज्ञानानुदयादित्यर्थः । भावरूपाज्ञानसमानविषयकज्ञान
सदसद्भावाभ्यामज्ञानज्ञानंतवापिदुर्लभमित्याह ॥ [३११।५] अपिचेति ॥ अज्ञानस्यज्ञानविरोधित्वेनप्रतीत्यनियमंपरिहरति ॥ [३१३।१] मुग्धे

इति ॥ नञोप्रयोगेपिनञर्थानुभवोऽस्तीत्यर्थः ॥ [३।२।१] अतएवेति ॥ मुग्धादिशब्देषुनञर्थप्रवेशसद्भावादेवेत्यर्थः ॥ [३।२।२] उक्तंचेति ॥
अज्ञानविषयाश्रययोरभेदेभिहितेऽस्यास्मिन्नज्ञानमित्याश्रयविषयभेदप्रतीत्याविरोधइतिशंकायांतत्प्रतीतिमन्यथयितुमुक्तमित्य
र्थः ॥ [३।२।२] अज्ञानमिति ॥ ज्ञानस्यद्वयसापेक्षत्वात्तत्प्रतियोग्यज्ञानस्यापितत्सापेक्षत्वप्रथाघटतइत्यर्थः ॥ [३।२।२] अन्यथेति ॥ अज्ञान
स्यज्ञानविरोधित्वेनप्रतीतिनियमाभावइत्यर्थः । ननुज्ञानाज्ञानंविरोधनिरूपकज्ञानज्ञाननियतज्ञानं । तमोनीहारादिशब्दैस्तेन
विनापितज्ज्ञानादित्यतआह ॥ [३।२।४] ज्ञानाभावोपिहीति ॥ अज्ञानज्ञानवदेवज्ञानाभावस्यापिसामान्येनज्ञानेज्ञानज्ञानमनपेक्षि
तमितिभावः । ननुनज्ञानमज्ञानमित्यज्ञानशब्दोनयौगिकः येनावयवार्थज्ञानविरोधभानमावश्यकमित्यतआह ॥ [३।२।४] एतेनेति ॥
[३।२।५] वृत्तिज्ञानेति ॥ मोक्षण्यादिशब्दवदलब्धात्मकरूढ्यपेक्षयायोगस्यैवबलवत्त्वमित्यर्थः । अस्त्वज्ञानशब्दोऽज्ञानेयौगिकोरू
ढोवा । प्रत्यक्षेणतुज्ञानविरोधित्वेनैवाज्ञानंप्रतीयतइत्याह ॥ [३।२।६] शब्देति ॥ अन्यथाऽज्ञानस्यज्ञानविरोधोनसिध्येदितिभावः ।
उभयत्रपरिहारंशंकते ॥ [३।३।२] नन्विति ॥ [३।३।३] साक्षिरूपमिति ॥ ननुवाह्योविषयःकथंसाक्षिभास्योऽसंबंधादित्याशंकांपरिहर्तुंज्ञाना
वच्छेदकस्येत्याद्युक्तं । तदुक्तंविवरणे । सर्ववस्तुज्ञाततयाऽज्ञाततयावासाक्षिचैतन्यस्यविषयएव । तत्रज्ञाततयाविषयःप्रमा
णव्यवधानमपेक्षते । अन्यस्तुसामान्याकारेणविशेषाकारेणवाऽज्ञानव्यावर्तकतयासदावभासतइति ॥ [३।३।३] नतदिति ॥ साक्षि

३।३।३ ३।३।४

णोज्ञानसाधकत्वान्नतद्विरोधित्वमित्यर्थः ॥ वृत्तेरेवेति ॥ प्रमाणवृत्तेरित्यर्थः ॥ सममिति ॥ ननुभावरूपाज्ञानवत्ज्ञानाभावोनसाक्षात्साक्षिवेद्यः । येनज्ञानावच्छेदकविषयस्यज्ञानद्वारासाक्षिवेद्यत्ववत् अभावप्रतियोगिज्ञानावच्छेदकविषयस्याभावद्वारासाक्षिवेद्यत्वंस्यात् । ज्ञानवत्तदभावस्यसाक्षिवेद्यत्वेप्निविषयःसाक्षिवेद्योऽसंवंधात् । नचप्रतियोगिभूतंज्ञानंसाक्षात्साक्षिवेद्यमितितद्वारातदवच्छेदकविषयोपिसाक्षिवेद्यःस्यादितिवाच्यं । उत्पन्नंहिज्ञानंसाक्षिवेद्यं । तस्मिंश्चोत्पन्नेतद्विषयोपिस्फुरतीतिकुतस्तज्ज्ञानाभावः । अनुत्पन्नस्यज्ञानस्यसाक्ष्यसंवंधान्नतेनज्ञानग्रहणं । नतरांतद्वारातद्विषयग्रहणमितिचेत् । मैवं । विरोधिनिरूपकाज्ञानोत्पत्त्यनुत्पत्तिभ्यांभावरूपाज्ञानसत्त्वस्यज्ञानद्वारकज्ञानविषयविषयकसाक्षिज्ञानंस्यवासंभवेनसाम्यात् । नन्वज्ञानविशेषणतयाऽनुत्पन्नमपिज्ञानंतद्विषयश्चसाक्षिवेद्यइतिचेत् क्वेदमवगतंभवता । ननुघटंनजानामीत्यनुभवादितिचेन्न । एतस्यत्वदभिमताज्ञानविषयत्वेऽसंमतेः । तस्मान्नजानामीतिज्ञानविरोधिकिंचित्साक्षिणानुभूयते । तद्वाराविषयोपीत्येतावत्सिद्धं । तस्याभावविलक्षणत्वंप्रकल्प्यतद्वाराविषयानुभवइतिकल्पनापेक्षयाक्लृप्तेऽभावेविषयानुभावकताकल्पनैवोचिता॰। लाघवात् । भावविलक्षणस्यद्वारत्ववदभावस्यापितत्संभवाच्च । वाह्यविषयस्यसाक्षिणाग्रहणेऽतिप्रसंगभंगायस्वसंवद्धाभावप्रतियोगिज्ञानविषयंत्वस्यनियामकस्यसंभवाच्च । नन्ववच्छेदकस्यविषयादेःप्रागज्ञानेकथंतद्विशिष्टाभावज्ञानमितिशंका तत्परिहारश्चअभाववुद्धौप्रतियोगित्वानुयोगित्वादिवत्पूर्वानुपस्थितस्यापिविशेषणस्यविशिष्टवुद्धौभानसंभवेनविशिष्टज्ञानस्यविशेषणज्ञानजन्यत्वेमानाभावइत्येवंरूपोपिसमः । विशेषणतावच्छेदकप्रकारकज्ञानंविनाकथंविशिष्टवैशिष्ट्यज्ञानमित्यपिन । प्रत्यक्षत्वा

दिरूपेणपृथक्क्लृप्तकार्यकारणभावेनैवोपपन्नस्यार्थसमाजसिद्धस्यविशिष्टवैशिष्ट्यज्ञानत्वस्यकार्यतानवच्छेदकत्वेनतत्रकारणांतरा
कल्पनात् । इहचविशेष्येविशेषणंतत्रचविशेषणांतरमितिन्यायेनविशिष्टवैशिष्ट्यज्ञानसंभवादिति । साक्षिणाविशेषतोज्ञायमा
नेपिविषयेऽज्ञानमितिपक्षेज्ञानाभावेनान्यथासिद्धिमुक्त्वासामान्येनविषयज्ञानेविशेषतस्तज्ज्ञानमितिपक्षेपिज्ञानाभावेनान्यथा
सिद्धिरित्याह ॥ [३।३।५]तस्मादिति ॥ [३।३।५]अवच्छेदकस्येति ॥ विरोधनिरूपकज्ञानंप्रत्यज्ञानंचप्रत्यवच्छेदकस्येत्यर्थः । ननुविशेषज्ञा
नाभावेविशेषज्ञानत्वावच्छिन्नंप्रतियोगीतितस्यज्ञानेसविशेषोपिज्ञातएवेतिविशेषज्ञानाभावव्याघातइत्यतआह ॥ [३।४।१]तद्विशेषेति ॥
[३।४।१]तत्सामान्येति ॥ निरूपणीयाभावप्रतियोगिज्ञानविषयीभूतविशेषसमानाधिकरणसामान्यधर्मविषयकज्ञानमित्यर्थः । ननु
विशेषज्ञानाभावंप्रतिसामान्यज्ञानंतत्प्रतियोगिज्ञानंवाऽप्रतियोगीतिकथंतस्यविशेषज्ञानाभावज्ञानंप्रतिहेतुताप्रयोजकतावास्या
दित्यतआह ॥ [३।४।१]अन्वयेति ॥ निरूपणीयाभावप्रतियोगिविज्ञानव्यक्तिज्ञानंविनापिसामान्येनतज्ज्ञानेसत्येवविशेषज्ञानाभाव
ज्ञानस्यानुभूयमानत्वादित्यर्थः ॥ [३।४।२]नत्विति ॥ यस्याःज्ञानव्यक्तेरभावोनिरूप्यतेतज्ज्ञानव्यक्तिस्तत्ज्ञानंवातदभावज्ञानेननहेतु
रित्यर्थः ॥ [३।४।३]अपरइति ॥ त्वदुक्तमर्थंनजानामीत्यादावितिशेषः । अत्रमतेनिरूपणीयाभावप्रतियोगिज्ञानापेक्षया अभावज्ञान
हेतौज्ञानेव्यक्तिभेदेप्रकारभेदेसत्यपिसमानविषयत्वंलभ्यतइत्यर्थः ॥ [३।४।४]केचित्त्विति ॥ त्वदुक्तमर्थंनजानामीत्यादौभासमानध ॥२२९॥
र्मातिरिक्तोव्यावृत्त्यधिकरणतावच्छेदकोधर्मोविवक्षितः । तेनत्वदुक्तत्वस्यमदुक्ताद्व्यावर्तकत्वेनसामान्यतोव्यावर्तकधर्मविष

यत्वंनिषेद्धुमशक्यमितिनिरस्तं ॥ [३१५।३] तद्विशेषणतयेति ॥ तत्रविशिष्टार्थविषयकेज्ञानेप्रमाणज्ञानविशेषणतयेत्यर्थः । ज्ञानावच्छेदकविषयाग्रहेज्ञानग्रहसंभवादभावग्रहोभविष्यतीत्याह ॥ [३१५।५] किंचेति ॥ [३१५।५] अनुमानादीति ॥ विषयाभावेनानुमितिरूपवृत्त्यसंभवादित्यर्थः ॥ [३१५।५] रहस्यमिति ॥ शब्दवृत्तेरज्ञानविषयत्वस्यानुभूयमानत्वादित्यर्थः ॥ [३१५।७] आद्यइति ॥ अज्ञानविषयकानुमित्यादिवृत्त्याऽज्ञानावच्छेदकविषयस्यग्रहणेतयैववृत्त्यातदज्ञाननाशापत्तिरित्यर्थः ॥ [३१५।७] त्वन्मतइति ॥ साक्षिणोऽज्ञानाविरोधित्वेपिवृत्तेस्तद्विरोधित्वस्यत्वयापिस्वीकारादित्यर्थः ॥ [३१६।१] यदिचेति ॥ परोक्षवृत्त्याअज्ञानाभिभवेवाप्रमातृगताज्ञाननाशेपिवाविषयावरकाज्ञाननिवृत्त्यनंगीकारइत्यर्थः ॥ [३१६।१] तांविनेति ॥ अज्ञाननिवृत्तिंविनेत्यर्थः ॥ [३१६।२] उक्तमिति ॥ दृश्यत्वहेतुभंगे ॥ [३१६।२] परोक्षेति ॥ गुंजापुंजेवह्निभ्रमानंतरमुष्णस्पर्शानुमितेःकंठधार्यमाणत्वादिलिंगजन्यानुमित्यादिनेत्यर्थः ॥ [३१६।२] भ्रमेति ॥ भ्रमोपादानस्याज्ञानस्यसत्त्वादित्यर्थः ॥ [३१६।३] तस्येति ॥ अज्ञानाकारप्रतीतेरुभयत्रसमत्वादितिभावः । ननुपरोक्षवृत्तेरज्ञाननिवर्तकत्वेउपादानाभावादपरोक्षभ्रमोनस्यादित्यतआह ॥ [३१६।३] परोक्षतइति ॥ अस्मन्मतेह्यज्ञानस्यभ्रमानुपादानत्वादितिभावः । तवमतेतस्यापिदोषस्यवोद्धव्यत्वादित्याह ॥ [३१६।५] त्वन्मतइति ॥ अज्ञानविषयकानुमित्यादिवृत्त्यातदवच्छेदकोविषयोनगृह्यतइतिपक्षेआह ॥ [३१६।५] अंत्यइति ॥ परामर्शः स्मरणं । सुषुप्त्यवस्थायांज्ञानाभावानुभवाभावान्नतस्यजागरेपरामर्शःसंभवतीत्याशंक्यपरिहरति ॥ [३१६।७] नचेति ॥

धर्म्यादिज्ञानाभावनिमित्तकःसुषुप्त्यवस्थायांविशेषरूपेणज्ञानाभावाननुभवइत्युच्यते सामान्यरूपेणवा । आद्यआह ॥ [३।६।७] भाव रूपेति ॥ तथाचसुषुप्त्यवस्थायांतेनरूपेणज्ञानस्याप्यननुभवात्तस्यापिपरामर्शोनस्यादित्यर्थः ॥ तदपेक्ष[३।६।८]णादिति ॥ अज्ञानावच्छेदकविषयविषयकविरोधनिरूपकज्ञानस्यापेक्षणादित्यर्थः । द्वितीयेत्वाह ॥ [३।६।८] सामान्येति ॥ विरोधनिरूपकंज्ञानमज्ञानविषयंसामान्यरूपेणोल्लिखतीतिनविशेषरूपेऽज्ञानविरोधइत्यर्थः ॥ [३।७।१] तर्हीति ॥ अभावप्रतियोगिभूतंज्ञानमपिस्वविषयंसामान्येनोल्लिखदभावनिरूपकमस्त्वित्यर्थः । द्वितीयपक्षेज्ञानेनसाम्यंवक्तुंशंकते ॥ [३।७।१] नन्विति ॥ [३।७।२] सममिति ॥ अज्ञानज्ञानाभावयोः साक्षियोग्यत्वतदयोग्यत्वाभ्यांवैषम्यमितिशंकांपरिहरत्यपिशब्देन । नन्वभावस्यससंबंधिकत्वात्स्वरूपेणज्ञानमेवनास्तीत्यत आह ॥ [३।७।२] अभावस्यापीति ॥ ज्ञानाभावस्यज्ञानग्राहकग्राह्यत्वेपिसुषुप्तौनतद्ग्रहः । तस्याएवप्रतिबंधकत्वादित्यतआह ॥ [३।७।३] यद्वेति ॥ [३।७।३] किंत्विति ॥ सुषुप्तौज्ञानाभावःस्थितइतिजाग्रत्यनुमीयतइत्यर्थः ॥ [३।७।४] अवस्थेति ॥ संप्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमययोरंतरालकालमनुमायतत्कालेऽहंज्ञानाभावात् अवस्थाविशेषवत्त्वात् व्यतिरेकेणजाग्रदहमिवेत्यनुमानेनेत्यर्थः । नचज्ञानाभावमंतरेणावस्थाविशेषोवक्तुमशक्यइतिवाच्यं । श्रुतिसिद्धप्राज्ञपरिष्वंगविशेषकालस्यसुषुप्त्याख्यस्यज्ञानाभावभिन्नस्यसुवचत्वात् ॥ [३।७।४] सामग्र्यभावस्येति ॥ ननुज्ञानसामग्रीविरहस्यज्ञानरूपकार्यविरहानुमेयत्वेनान्योन्याश्रयइत्यतउक्तं [३।७।४] इंद्रियेति ॥ इदानींतनेंद्रियप्रसादेनसुषुप्तिकालीनेंद्रियोपरमानुमानमित्यर्थः । नचेंद्रियप्रसादस्यसुखानुभव

हेतुकस्यतदुपरमहेतुकत्वमसिद्धमितिवाच्यं । स्वरूपसुखानुभवस्यैंद्रियोपरमंप्रत्यप्रयोजकत्वात्इंद्रियविषयानुभवजन्यसुखानुभ
वस्यतदानीमभावात् ॥ [३१।७।४] तत्तुल्येति ॥ तुल्यत्वंचानुपेक्षणीयत्वं । तेनोपेक्षणीयेनव्यभिचारः । तदंशेसंस्कारानुद्बोधेनास्मर्य
माणेव्यभिचारवारणायनियमेनेति ॥ [३१।७।५] त्वन्मतइति ॥ सुषुप्तावहमर्थाभावेनतदातस्याननुभूततयानकिंचिदवेदिषमितिजाग्र
त्कालीनज्ञानस्याहमर्थेपरामर्शत्वंनसंभवतीत्यर्थः ॥ [३१।७।६] अन्येनुभूतइति ॥ अहमर्थानवच्छिन्नस्यसुषुप्तावज्ञानद्रष्टृत्वंतदवच्छि
न्नस्यजाग्रतितत्परामर्ष्टृत्वमित्यसंभवेनअहमर्थावच्छिन्नस्यैवजाग्रत्यज्ञानानुभवएवायमित्यस्यैववक्तव्यत्वादित्यर्थः । संस्कारा
भावान्नाज्ञानांशेपरामर्शइत्याह॥ [३१।८।१] सुषुप्तावित्यादिना॥ विनष्टस्यज्ञानस्यस्मरणजननायोगेनतेनसंस्कारोजननीयः । अविनश्यत्तु
साक्षादेवस्मरणजननयोग्यमितिनतेनसंस्कारोजन्यते । नहिसंस्कारःप्रत्यक्षः । येनकार्यान्यथानुपपत्तिंविनापिसकल्प्येतेत्य
भिप्रायेणोक्तंनित्यज्ञानस्येत्यादिना । अविद्यावृत्तेरनित्यत्वात्तदुपहितसाक्षिरूपस्याज्ञानज्ञानस्याप्यनित्यत्वात्तस्यसंस्कारजनक
त्वंभविष्यतीतिशंकापरिहारायोक्तं ॥ [३१।८।१] अविद्यावृत्तीत्यादि ॥ नचाज्ञानविषयकाज्ञानाभावेननतत्रसंशयादिरितिवाच्यं ।
अज्ञानगोचरज्ञानाभावेनतत्राज्ञानस्याप्यापाद्यमानत्वादितिभावः । ननुप्रमाणस्यानाशेपिप्रमेयस्यनाशात्संस्कारोपपत्तिः । त
थाहि सुषुप्त्याख्यायास्तामस्याअज्ञानवृत्तेर्नाशेनजाग्रतितद्विशिष्टाज्ञानस्यसाक्षिणानुभूयमानत्वाभावेनसंस्कारजन्याविद्यावृत्तौ
सुषुप्तिविशिष्टाज्ञानभानात्परामर्शत्वोपपत्तिरितिचेत् न । सुषुप्त्यवस्थायाअविद्यावृत्तित्वेमानाभावात् दोषाजन्यत्वात्व्यवहा
रदशायामेवाध्यत्वाच्चसुषुप्तेर्नाविद्यावृत्तित्वं । तथापिकेवलाज्ञानांशेसुषुप्तिजागरयोःतुल्यसामग्रीकत्वात्धारावाहिकबुद्धित्वमे

०  १४८

वनपरामर्शत्वं । अतएवाव्याकृतप्रक्रियायांवार्तिकउक्तंनसुषुप्तिगविज्ञानान्नाज्ञासिषमितिस्मृतिः । कालाद्यव्यवधानत्वान्नह्या
॥ २३१ ॥ त्मस्थमतीतभाक् । नभूतकालस्पृक्प्रत्यङ्नचागामिस्पृगीक्षते । स्वार्थदेशपरार्थोर्थोविकल्पस्तेनसस्मृतइति । एतत्सर्वमभि
संधायोक्तं ॥ जागरणादावपीति ॥ यदिसुषुप्तौसुषुप्त्यवस्थाविशिष्टमनुभूयेततर्हिजागरेपितथैवानुभूयेतेत्यर्थः । तत्तानुल्ले अविद्यानु.
खाच्चनायंपरामर्शः । किंतुज्ञानाभावानुभवएव । अतएवअभावप्रत्ययालंबनावृत्तिस्सिद्धेतियोगसूत्रमिति । ज्ञानाभावानुमाना १ । ४६
नभ्युपगमेबाधकमाह ॥ अन्यथेति ॥ इच्छादाविति ॥ इच्छादावज्ञानाभावादित्यर्थः । तदा सुषुप्तौ ॥ नहीति ॥ विरो
धिपदार्थानुभवेनैवंतदभावानुमानस्यत्वयांगीकारादित्यर्थः ॥ ज्ञानाभावादेवेति ॥ अज्ञानानुमितादितिशेषः ॥ तदभा
वेति ॥ प्रकाशमानेआत्मादौज्ञानाभावाभावेनतत्ररागाद्यभावोनसिध्येदित्यर्थः ॥ ७ ॥ व्यासाद्रिसुततर्काबुपूरैःपक्षयुगं
युजि ॥ न्यायामृततरंगिण्यामज्ञानाक्षमभावगं ॥ ७ ॥ ७ ॥ भावरूपाज्ञानप्रत्यक्षभंगः ॥ ७ ॥ ४९ ॥ तस्याइति ॥
साक्षिणोऽज्ञानसाधकत्वेनतदनिवर्तकत्वादित्यर्थः । परोक्षवृत्तेःस्वविषयेऽज्ञानानिवर्तकत्वेसंमतिमाह ॥ उक्तंचेति ॥ अती
तादेर्ज्ञानंप्रतिकारकत्वंनास्तीत्युक्तेतर्हितद्वदेवविषयत्वमपिनस्यादित्याशंकायांतदपिनास्तीत्युत्तरितेविषयत्वस्योपलभ्यमानत्वा
त्कथंतदभावइतिपुनःशंकायांअतीतादिषुविषयत्वाभावंदर्शयितुंविषयशब्दार्थकथनपरमिदंविवरणवाक्यं । विषयत्वंनामानुमे ॥ २३१ ॥
येषुसुषुप्तिव्यावृत्तिः । साचाभावस्तद्धर्मोनभवति । विज्ञानाकारतापिनविषयव्यापारः । किंतुविज्ञानस्यैवेति नातीतेर्थेक्रिया

कारित्वमिति । एतच्चतत्वप्रदीपनेव्याख्यातं । सुषुप्तिव्यावृत्तिस्तद्विषयाज्ञाननिवृत्तिः । साचानुमेयधर्मोनभवति । किंत्वज्ञानस्यात्माश्रितत्वात्तन्निवृत्तिरप्यात्माश्रितैवेति । अन्येतु सुषुप्तिव्यावृत्तिरित्यस्यसाधकाद्यभावात्विषयस्ययापूर्वसंशययोग्यतातस्याःनिवृत्तिरित्यर्थः । सचनातीतादौ । असतस्तदाश्रयत्वायोगादित्याहुः । केचित्तु परोक्षस्थलेविषयावच्छिन्नाभावावरणतत्कार्यसद्भावेपिप्रमात्रवच्छिन्नासत्त्वावरणनिवृत्त्यानुमेयादौव्यवहारोपपत्तिः । इदमेवसुषुप्तिव्यावृत्तिशब्देनोक्तमित्याहुः । सर्वथापिविषयावच्छिन्नप्रमेयचैतन्यगताज्ञानंननिवर्ततइत्यविवादं । तदिदमुक्तं तस्याःस्वविषयेऽज्ञाननिवर्तकत्वइति । तथाचपरोक्षवृत्तौस्वविषयावरणस्यस्वनिवर्त्यत्वाभावाद्बाधइत्यर्थः । ननुधर्म्यंशाज्ञानेपिभ्रमोपादानत्वयोग्यतास्तीतितत्रनाव्याप्तिरित्यतआह ॥ [३१९।७] नहीति ॥ धर्म्यंशाज्ञानेसतिधर्मिणोज्ञानाभावात्भ्रमोनस्यादित्यर्थः ॥ [३१९।७] धारावाहिकेति ॥ नचास्मन्मतेधारावाहिकाबुद्धिरेवनास्ति । एकस्यैवज्ञानस्यतावत्समयस्थित्युपपत्तेरितिवाच्यं । तथापिप्रतिपाद्यंनैयायिकंप्रतिबाधःस्यादेव ॥ बाधमुपपादयति ॥ [३१९।८] तस्याइति ॥ असिद्धिमुपपादयति ॥ [३२०।१] सूक्ष्मेति ॥ [३२०।५] रूपादिहीनस्येति ॥ स्वरूपायोग्यस्यकिंचिदवच्छिन्नस्यापिनचाक्षुषत्वमितिभावः ॥ [३२०।५] उक्तत्वाच्चेति ॥ परिच्छिन्नत्वहेतुभंगइतिशेषः । एतेनरूपहीनस्यापितार्किकाभिमतात्मनः प्रत्यक्षत्ववद्रूपस्यापिरूपस्यचाक्षुषत्ववच्चसन्घटइतिसदर्थस्यब्रह्मणश्चाक्षुषत्वमविरुद्धमितिनिरस्तं ॥ [३२०।५] अयंघटइति ॥ यथाशाब्दज्ञानेनचैतन्यंविषयस्तथातत्समानविषयेऽपरोक्षज्ञानेपिनतद्विषयइत्यनात्मविषयापरोक्षवृत्तौबाधइतिभावः ॥ [३२०।६] आत्मविष

 

येति ॥ साचांततश्चरमवृत्तिरेवेतिभावः ॥ यंतईति ॥ प्रागभावस्याज्ञानभिन्नत्वान्नज्ञाननिवर्त्यत्वमित्यर्थः ॥ अभावेति ॥ प्रमाणज्ञानंस्वप्रागभावनिवृत्तिरेवनतुतन्निवर्तकमितिनप्रमाणज्ञानप्रागभावस्तन्निवर्त्यइत्यर्थः । नचप्रतियोग्यतिरिक्ताप्रागभावनिवृत्तिरितिमतेनैतदुक्तमितिवाच्यं । तस्याप्रामाणिकत्वात् ॥ शेषेति ॥ नचप्रतियोगिविशेषणत्वेनाखंडाभावसंपादकतयानवैयर्थ्यमितिवाच्यं । तत्वनिर्णयकथायांलघुनासाध्यनिर्देशेनसाध्यसिद्धौसंभवंत्यामखंडाभावांतर्भाविनःसाध्यस्यानिर्देश्यत्वात् । अन्यथाअखंडाभावन्यायेनाखंडोपाधावपितदनापत्तेः ॥ आवरणत्वायोगादिति ॥ तथाचतद्विशेषणविशिष्टंसाध्यंपक्षेबाधितमित्यर्थः । नन्वज्ञानादिसाक्षितयाचितोभासमानत्वेप्यस्तिप्रकाशतइतिव्यवहाराभावेनतदंशेऽज्ञानावरणमस्तीतिशंकानिरासायोक्तं ॥ निर्विशेषेति ॥ सत्ताप्रकाशयोःप्रकाशमानचिन्मात्रत्वेनतादृशव्यवहारानुपपत्तेरित्यर्थः ॥ स्वोत्पादकादृष्टेति ॥ अदृष्टस्यावरणत्वाभावादित्यर्थः ॥ शेषेति ॥ स्वविषयेत्यस्येत्यर्थः । एतेनयददृष्टंस्वजनकंविषयांतरज्ञानप्रतिबंधकतयातदावरकंतादृशादृष्टपूर्वकत्वेनार्थांतरवारणायस्वविषयेतिविशेषणमितिनिरस्तं । स्वजनकंस्वविषयज्ञानांतरप्रतिबंधकतयास्वविषयावरणंचादृष्टविशेषमादायार्थांतरतादवस्थ्यांच्च ॥ वृत्तिरिति ॥ वृत्तिश्चिदुपरागोर्थेतिमतेचितोऽनावृतत्वेनवृत्तेरावरणनिवर्तकत्वंनास्तीत्यर्थः ॥ घटाकारेति ॥ घटाकारवृत्त्यादिनैवघटप्रकाशकघटाधिष्ठानचैतन्यस्यावरणाभिभवरूपाभिव्यक्तेर्जातत्वेनघटज्ञानरूपस्यघटाधिष्ठानचैतन्यस्यावरणनिवर्तकत्वंनास्तीत्यर्थः । ननुवृत्तिस्तत्प्रतिबिंबितचैतन्यंवाघट

प्रकाशकं । तच्चघटाधिष्ठानचैतन्यस्यप्रमेयभूतस्यावरणंनिवर्तयतीतिशंकांपरिहरति ॥ [३२।१।६] वृत्तिरिति ॥ ज्ञानेज्ञेयाध्यासस्यानुक्ते रित्यर्थः ॥ [३२।१।७] चरमेति ॥ नचचरमसाक्षात्कारप्रतिबंधकादृष्टेसतिनतदुत्पत्तिरितिप्रथमंतन्निवृत्तिः । कारणात्मनावस्थितस्यतस्य ज्ञाननिवर्त्यत्वाच्चमिथ्यात्वमपीतिवाच्यं । तावतापिज्ञाननिवर्त्यत्वाव्याहतेः ॥ [३२।२।१] अज्ञानस्येति ॥ वृत्त्यादिरूपस्यज्ञानस्याज्ञा नाश्रयचिन्मात्रानाश्रितत्वादित्यर्थः । नन्वंतःकरणस्यचिदाश्रितत्वेनतद्वृत्तिस्तत्प्रतिबिंबितचैतन्यंवाज्ञानंचिन्मात्राश्रितमेव । किंचिदवच्छिन्नाश्रितस्याप्यवच्छेद्याश्रयत्वानपायात् । कर्णशष्कुल्यवच्छिन्नाकाशाश्रितस्यशब्दस्याकाशाश्रितत्ववत् । मैवं । त्वन्मतेऽवच्छेद्यावच्छिन्नयोर्भेदात् । अन्यथाविशिष्टनिष्ठयोर्दृश्यत्वमिथ्यात्वयोर्विशेष्यनिष्ठत्वंस्यात् । किंचवृत्तिस्तत्प्रतिबिं बितचैतन्यंवानघटादिज्ञानं । तत्रतदनध्यासात् । किंतुवृत्त्याद्यभिव्यक्तंघटाधिष्ठानचैतन्यंघटादिज्ञानं । तच्चनाज्ञानाश्रय चिन्मात्राश्रितं । तदिदमुक्तं तदभिव्यक्ताधिष्ठानचैतन्यस्यवेति । प्रमाणज्ञानस्यांतःकरणनिष्ठत्वादावरणस्यविषयनिष्ठत्वान्न तयोःसमानदेशत्वमित्याह ॥ [३२२।२] त्वन्मतइति ॥ [३२२।३] आद्येति ॥ नचाद्यविशेषणेनप्रागभावोव्यवच्छिद्यतेस्वनिवर्त्येत्यनेनत्वत्यंता भावइतिवाच्यं । स्वप्राक्पदविरहितेनाद्यविशेषणेनैवोभयव्यवच्छेदसंभवादित्यर्थः ॥ [३२२।४] अविद्येति ॥ अज्ञानसिद्धिरेवस्यान्नतु सिद्धसाधनादिकमित्यर्थः । ननुअस्तिप्रकाशतइतिव्यवहारविरोधित्वरूपमावरणत्वंभावाभावसाधारणमतआह ॥ [३२३।६] तथात्व इति ॥ [३२३।१] तस्येति ॥ असाधारण्येनव्यपदेशाभवंतीतिन्यायेनवामात्रशब्दांतर्भावेणवास्वविषयमात्रावरणत्वरूपार्थलाभसंभवा

दितिभावः । यत्तुस्वप्रागभावव्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकमित्येकंसाध्यं स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकमितिद्वितीयंसाध्यमितिसाध्यद्वयेतात्पर्यमिति । तन्न । उक्तरीत्याज्ञानाज्ञानयोःसमानदेशत्वाभावात् । प्रागभावस्यस्वनिवर्त्यत्वाभावेनप्रथमसाध्येस्वप्रागभावव्यतिरिक्तेत्यस्यवैयर्थ्याच्च । द्वितीयसाध्येआवरणपूर्वकमित्येतावतैवपूर्णत्वाच्च ॥ [३३३।२] अप्रयोजकतेति ॥ एतच्चोपलक्षणं । यादृशसाध्यनिर्देशंविनाविवादपदसाध्यसिद्धिर्नभवति तादृशंसाध्यंनिर्देष्टव्यमित्यर्थः । तेनार्थांतरादिवारकविशेषणानांनानुपादानप्रसंगः । एतेनईश्वरानुमानेऽदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगीतिविशेषणंविनाभाव्यकार्यत्वहेतोरप्रयोजकत्वाभावात्तद्विशेषणमप्यनुपादेयंस्यादितिनिरस्तं । अदृष्टप्रागभावेत्यादिविशेषणंविनाऽर्थांतरापत्त्यातद्वारकत्वेनतत्सार्थक्यात् । अतएवब्रह्मस्वसमानसत्ताकजीवप्रतियोगिकभेदवत् अभ्रांतत्वादित्यनुमानेकल्पितभेदवत्तयार्थांतरनिवृत्तयेस्वाभिमतसाध्यसिद्धयेयथास्वसमसत्ताकेतिविशेषणंतथात्रापीतिनिरस्तं । तत्रार्थांतरवारणात् । प्रकृतेतदभावात् ॥ [३२४।२] शब्दसाम्येनेति ॥ पर्वतमहानसवृत्तिधूमव्यक्त्योर्भेदेपिधूमत्वस्यैकत्ववत् ज्ञानप्रभयोरेकंप्रकाशत्वंनास्तीत्यर्थः । पक्षदृष्टांतयोरनुगतोहेतुर्नास्तीत्यत्रोपष्टंभकमाह ॥ [३२४।३] उक्तंचेति ॥ अहंकारस्यात्मव्यतिरिक्तत्वसाधकसंविदभिन्नस्यस्वात्मनःस्वप्रकाशत्वंसाधयितुंसंविदोस्वप्रकाशत्वेविश्वस्यानवभासप्रसंगइतिदूषणेऽभिहिते नन्वप्रकाशमानमेवज्ञानंचक्षुरादिवद्विषयमवभासयेदितिकुतोविश्वस्यानवभासइतिशंकितेविषयप्रकाशजननेनचक्षुषःप्रकाशकत्वं संवेदनंतुस्वयमर्थप्रकाशएवप्रदीपवदवभासमानमेवार्थंप्रकाशयतीतिपरिहृते ननुप्रदीपालोकस्याप्यर्थानुभवजननेनैवचक्षुरादिवदर्थप्रकाशकतास्त्वितिपुनः

शंकायां ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोन्यदेवालोकप्रकाश्यत्वंतमोविरोधितयाप्रसिद्धं । तदव्यवधानेनालोकेनक्रियतइत्यादिनाचक्षुरपेक्षयाआलोकसंवेदनयोर्वैलक्षण्यमभिधायआलोकसंवेदनयोरपिप्रकाशकत्वेवैलक्षण्यमस्तीतिविवरणेऽभिहितमित्यर्थः ॥ [३२४।५] प्रमाणस्येति ॥ चरमवृत्तेरित्यर्थः ॥ [३२४।६] अध्यासेति ॥ प्रकाशमानस्यैवाधिष्ठानत्वादित्यर्थः । नन्वधिष्ठानचित्प्रकाशेप्यस्तिप्रकाशतइत्यादिरूपेणनप्रकाशइतिचेन्न । निरस्तत्वात् ॥ [३२४।६] अस्याइति ॥ अज्ञानविषयिण्याः ॥ [३२४।७] प्रकाशितेति ॥ विशेषणाभावाद्विशिष्टहेतोरभावेप्रकाशितप्रकाशकत्वंविशेष्याभावात्तदभावेऽप्रकाशकत्वंस्यादित्यगत्यानुमितौविशिष्टाभावस्यासंभवइत्यर्थः ॥ [३२४।७] उभयथेति ॥ आद्येसिद्धसाधनंद्वितीयेबाधादनुमितिर्व्यर्था । अर्थविषयानभवतीत्यर्थः । तर्कितानुमितौविकल्पनान्नव्याघातः ॥ [३२४।८] तद्वदिति ॥ अप्रकाशितेत्यर्थः ॥ [३२४।८] अत्रैवेति ॥ पक्षवह्निर्भावेव्यभिचारःपक्षत्वेतुबाधइत्यर्थः । केचित्तुविवादगोचरापन्नमित्यनेनजन्यसविकल्पकाजन्यचाक्षुषघटप्रमाणज्ञानंविवक्षितं । परमतेजन्यज्ञानमात्रस्यसविकल्पकजन्यत्वात्सविकल्पकस्यजन्यज्ञानजन्यत्वाच्चपक्षाप्रसिद्धिवारणायजन्यसविकल्पकाजन्येत्युभयोपादानं । अनेनधारावाहिकद्वितीयादिबुद्धिव्युदासः । पराभिमतेश्वरज्ञानव्यावृत्तयेचाक्षुषप्रमाणज्ञानेति । साध्येचस्वशब्दःसमभिव्याहृतपरः । स्वप्रागभावपदेनस्वसमानाधिकरणप्रागभावःकथ्यते । स्वविषयावरणेतिस्वजननायोग्यं । स्वनिवर्त्यैतिस्वजन्यध्वंसप्रतियोगि । स्वदेशगतेतिस्वाश्रयेवर्तमानं । एवंचपक्षीभूतज्ञानस्यघटपटादेःसंशयजनकत्वसंभवात् तत्प्रागभावस्तन्निवर्त्यइतिसंशयादिप्रागभावात्मत्वस्वजनकादृष्टेच्छाप्रागभावपूर्वकत्वेनार्थांतरत्वव्यावृत्तयेप्रातिलोम्येनविशेषणानि । अज्ञानंचैवंविधमितिनबाधः । अथवाप्र

माणज्ञानस्यप्रागभावएवस्वप्रागभावःस्वविषयेसंशयादिजनकतायोग्यमेवस्वविषयावरणं । स्वसत्ताक्षणनियतध्वंसप्रतियोगि स्वनिवर्त्यं । ततश्चप्रागभावोपिपरमतेविशेषादर्शनतयासंशयादिजनकइतिस्वप्रागभावस्वजनकादृष्टांधकारादिव्यावृत्तयेस्वप्रागभावेत्यादिविशेषणानि । परमतेमनःसंयोगपूर्वकत्वेनार्थांतरनिवृत्तयेस्वनिवर्त्येतीति । अत्रब्रूमः । पटबुभुत्सयोन्मीलितेन चक्षुषांदैवात्घटपटसंयोगेसतिइच्छाप्राबल्यात् पटज्ञानानंतरंजायमानेघटचाक्षुषज्ञानेपटज्ञानपूर्वकत्वेनसिद्धसाधनं । पटज्ञानंहिस्वशब्दनिर्दिष्टघटज्ञानसमानाधिकरणप्रागभावव्यतिरिक्तंस्वजननायोग्यं स्वजन्यध्वंसप्रतियोगिस्वाश्रयगतंचभवति । द्वितीयसाध्येपियत्रघटेपाषाणादिसंशयानंतरंविशेषदर्शनंविनैवसमीपागमनादिनाघटइतिप्रमाणज्ञानंचाक्षुषंजायतेतत्रपूर्वतनसंशयमादायसिद्धसाधनं । घटविषयकसंशयोपिधर्मिज्ञानकोटिज्ञानत्वादिनाघटविषयकसंशयांतरजननयोग्यइतिघटप्रमाविषयावरणंभवति । स्वसत्ताक्षणनियतध्वंसप्रतियोगीचभवतीति । यथाश्रुतेनस्वविषयावरणपूर्वकमित्यनेनैवसाध्यसिद्धेरुक्तकुसृष्टेरनाश्रयणीयत्वाच्च । ग्रंथस्वारस्यस्यत्वयापित्यक्तत्वाच्च । नन्वंधकारनिवृत्त्यव्यवहितोत्तरकालीनंचाक्षुषज्ञानंपक्षत्वेनाभिमतं । साध्यंचस्वसमानाधिकरणप्रागभावव्यतिरिक्तेत्यादिविवक्षितमितिचेन्न । स्मृत्यभावमात्रेणास्मृतस्यस्मृत्यनंतरंस्मृतत्ववत्पूर्वंप्रकाशाभावमात्रेणाप्रकाशितस्यतस्मिन्सतिप्रकाशितत्वोपपत्त्याऽप्रयोजकत्वात् । एतच्चआकरएवस्पष्टं । अंधकारनिवर्तकत्वंचोपाधिः ॥ [३३५।३] अनादित्वेसतीत्यादि ॥ नन्वनादिभावत्वस्यनिवर्त्यावृत्तित्वेप्यविद्यायाभावविलक्षणायानिवर्त्यत्वोपपत्तेर्नविरोधइतिचेन्न । अनादित्वेसत्यभावविलक्षणत्वेनानिवर्त्यत्वस्यापिप्रसंगेनाभावविलक्षणनिवृत्तौसादित्वस्यैवप्रयोजकत्वात् ।

नचद्वितीयानुमानेअनाश्रितमात्रवृत्तित्वमुपाधिः । ध्वंसत्वेसाध्याव्याप्तेः ॥ [३२५।३] निवर्त्यत्वंचेति ॥ नचैतयोःसफलनिवर्त्यावृत्तित्वमुपाधिः । विनाशसामग्रीयुक्तत्वेसाध्याव्याप्तेः । नचविनाशसामग्रीयुक्तत्वेनादिभावनिष्ठत्वस्यवा अनाद्यभावविलक्षणनिष्ठत्वस्यवाअभावोनेति नतत्रसाध्याव्याप्तिरितिवाच्यं । अभावविलक्षणस्यविनाशेसादित्वस्यप्रयोजकत्वेनअनादिभावेविनाशसामग्रीयुक्तत्वस्याभावात् । साध्यव्यापकोपाधिव्यतिरेकनिश्चयवतिविनाशसामग्रीयुक्तत्वेऽनादिभावनिष्ठत्वादेःसाध्यव्यतिरेकस्यसंदिग्धत्वेननिश्चितव्यापकाभाववतिव्याप्यसंशयरूपव्यभिचारसंशयेनोपाधेर्व्यतिरेकव्याप्यसिद्धेश्च ॥ [३२५।४] अनादित्वंचेति ॥ कारणाजन्यत्वमित्यर्थः । नचात्रसकलानाद्यवृत्तित्वमुपाधिः । निश्चितोपाधिव्यतिरेकवतिप्रागभावप्रतियोगित्वादौसाध्यस्य संदेहेनोपाधेर्व्यतिरेकव्याप्त्यसिद्धेः ॥ [३२५।५] प्रमाणज्ञानंचेति ॥ नचात्रप्रतियोग्यप्रसिद्ध्यासाध्याप्रसिद्धिरितिवाच्यं । आवाभ्यामप्रसिद्धप्रतियोगिकस्याप्यभावस्यस्वीकारात् ॥ [३२६।६] आत्मगतत्वाभावादिति ॥ नचवृत्तिरूपैकोपाध्यारूढत्वेनप्रमायाश्चैत्रगतत्वमितिवाच्यं । तथासतिप्रमातृप्रमाणप्रमेयसांकर्यापत्त्यातत्परिहारायकल्पितभेदमादायव्यवस्थायास्त्वयापिवाच्यत्वेनप्रमातत्प्रागभावयोश्चैत्रगतत्वाभावादित्यर्थः ॥ [३२६।८] साध्यइति ॥ चैत्रप्रमायाःपक्षीकृतायाप्रमामात्रप्रागभावनिवर्तकत्वनिश्चयेनप्रमापदस्याव्यावर्तकत्वादित्यर्थः ॥ [३२७।१] प्रकरणसमताचेति ॥ तेनैवहेतुनासत्प्रतिपक्षइत्यर्थः । ननुसत्प्रतिपक्षानुमानेचैत्रासमवेतत्वमुपाधिः । चैत्रप्रमाचैत्रगतानादिनिवर्तिकानप्रमात्वात् । मैत्रप्रमावदित्यनुमानेनचैत्रप्रमाप्रागभावोपिनसिध्येदित्याभाससाम्यमित्यतआह ॥ [३२७।१] नचात्रेति ॥ आत्मत्वादौसाध्याव्याप्तेरित्यर्थः । आभाससाम्यंपरिहरति ॥ [३२७।२] उक्तेति ॥ ननुजन्यमा

त्रेचैत्रगतप्रमाभावातिरिक्तस्वप्रागभावनिवर्तकत्वेनोपाधिसाध्ययोःसत्वात्तद्व्यतिरेकसहचाराग्रहइत्यतआह ॥ [३२७।३] व्यतिरेकेति ॥ [३२७।४] प्रागभावइति ॥ आकाशादिरप्युत्पन्नइतिपक्षेप्रागभावः । मतांतरेत्वाकाशादिरप्युपसंहारस्थलमितिबोध्यं ॥ [३२७।४] चैत्रप्रमेति ॥ अनेनप्रागभावद्वयसिध्यापत्तिः ॥ [३२७।५] घटइति ॥ अनेनप्रागभावातिरिक्तमनादिभूतंघटविरोधिसिध्यति ॥ [३२७।५] चैत्रेच्छावेति ॥ अनेनप्रागभावद्वेषाभ्यामतिरिक्तंइच्छाविरोधिभूतंअप्रमाप्रागभावाज्ञानाभ्यामतिरिक्तमप्रमानिवर्त्यंचसिध्यतीत्यतिप्रसंगइत्यर्थः ॥ [३२८।१] चैत्रनिष्ठत्वेंसतीति ॥ एतच्चनिवर्तकत्वविशेषणं । चैत्रप्रमायांचैत्रनिष्ठत्वस्यविशेषणत्वस्यसत्त्वेनतद्विशिष्टस्यचैत्रप्रमाभावातिरिक्तानादिनिवर्तकत्वस्यानधिकरणत्वेसाध्यमानेविशेष्यभूतस्यनिरुक्तनिवर्तकत्वस्यानधिकरणत्वंसिध्यतीत्यर्थः । नन्वत्रचैत्रावृत्तित्वमुपाधिरित्यतआह ॥ [३२८।३] नचेति ॥ [३२८।३] एतदुपाधित्वेसतीति ॥ एतच्चसाध्यव्यापकत्वस्यविशेषणं । साध्यव्यापकत्वानधिकरणत्वमादायपक्षेसाध्यसिद्धिः ॥ [३२८।४] अतएवेति ॥ आभाससाम्यसत्प्रतिपक्षादिनेत्यर्थः ॥ [३२८।५] किंचेति ॥ अभावभ्रमादौव्यभिचारेण । ज्ञानस्यभ्रमानुपादानत्वादित्यर्थः ॥ [३२८।६] एतज्जनकेति ॥ *एतज्जनकबाध्यातिरिक्तोपादानकइतिपर्यवसितार्थः । नचबाध्यस्याजनकत्वादेतज्जनकबाध्याप्रसिद्ध्यातदतिरिक्ताप्रसिद्धिरितिवाच्यं । प्रतियोग्यप्रसिद्धेरभावप्रसिद्धिंप्रतिगुणत्वेन

* इदंवाक्यंविगीतोविभ्रमः एतज्जनकबाध्योपादनकोनेति न्यायामृतपाठमनुसृत्यप्रवृत्तं ॥

दोषत्वाभावात् ॥ [३२।१।३] प्रथत्नान्यत्वेसतीति ॥ एतच्चप्रवृत्त्यभावएवनिवृत्तिरितिमतमाश्रित्यप्रयत्नेव्यभिचारवारणाय । मतांतरे तुप्रवृत्तेर्निवृत्त्यानिवृत्तेश्चप्रवृत्त्यासमानाधिकरणत्वेनसाध्यसत्त्वाद्व्यभिचाराभावेनतदनुपादेयमितिध्येयं । नन्विच्छाविरोधि द्वेषसिद्धावपि अनिच्छायथानसिध्यतितथाज्ञानविरोधिनःसिद्धावपिकथमज्ञानसिद्धिरित्यतआह ॥ [३२।१।४] ज्ञानेति ॥ [३२।१।५] अप्रयोजक त्वादिति ॥ स्मृत्यभावमात्रेणास्मृतत्ववदित्यादिनोक्तस्येतिशेषः ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृत तरंगिण्यांनानुमाऽज्ञानसाधिका ॥ ७ ॥ ७ ॥ अविद्यानुमानभंगः ॥ ७ ॥ ४६ ॥ ननुछांदोग्येदशमेऽध्यायेदहरप्रकरणे तइमेसत्याःकामाअनृतापिधानास्तेषांसत्यानांसतामनृतमपिधानंयोयोह्यस्येतःप्रैतिनतमिहदर्शनायलभतेऽथयेचास्येहजीवाये चप्रेतायच्चान्यदिच्छन्नलभतेसर्वंतदत्रगत्वाविंदतेऽत्रह्यस्यैतेसत्याःकामाअनृतापिधानास्तद्यथापिहिरण्यनिधिंनिहितमक्षेत्रज्ञा उपर्युपरिसंचरतोनविंदेयुरेवमेवेमाःसर्वाःप्रजाअहरहर्गच्छंत्यएतंब्रह्मलोकंनविंदंत्यनृतेनहिप्रत्यूढाइत्यत्रअनृतशब्दवाच्यमिथ्या भूताज्ञानवद्धत्वंचेतनानांप्रतीयतइतिश्रुतिरविद्यायांमानमित्यतआह ॥ [३३।०।१] अनृतेनहीति ॥ ऋतशब्दस्य ऋतंपिबंतौसुकृतस्य लोकइत्यादौसत्कर्मपरत्वादनृतशब्दोदुष्कर्मपरइत्याह ॥ [३३।०।१] ऋतमिति ॥ ऋतशब्दस्यपरिणामिपरत्वेप्रमाणमाह ॥ [३३।०।२] अनृत मिति ॥ ननुउत्तरत्रप्रजापतिवाक्येयआत्मापहतपाप्माविजरोविमृत्युरित्यादिनाऽपहतपाप्मत्वोक्तेःकथंतस्यदुष्कर्मपरत्वमिति चेन्न । अपहतपाप्मन्यज्ञानसंबंधस्याप्यभावात् । आविर्भूतस्वरूपापेक्षयातदुक्तौतुदुष्कर्मण्यपिसमानं । नन्वविद्यायामनेक आगमः तथाचोक्तंपंचपादिकायां येयंश्रुतिस्मृतीतिहासपुराणेषु नामरूपव्याकृतमविद्यामायाप्रकृतिरग्रहणमव्यक्तंतमःका

रणंलयःशक्तिर्महासुप्तिर्निंद्राक्षरमाकाशमितिचतत्रतत्रवहुधागीयते चैतन्यस्यस्वतएवावस्थितलक्षणब्रह्मरूपतावभासंप्रतिवध्य जीवत्वापादिकाऽविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिः सुषुप्तेप्रकाशाच्छादनविक्षेपसंस्कारमात्ररूपस्थितिरनादिरविद्येति। अत्र अविद्याकर्मपूर्वप्रज्ञेति भ्रांतिकर्मपूर्वानुभवसंस्काराउच्यंते । विवरणेप्युक्तं । समानेवृक्षेपुरुषोनिमग्नोऽनीशयाशोचतिमुह्यमा नइतिंस्वभावसिद्धेश्वरस्यानीश्वरत्वंतद्भावाप्रतिपत्तिरेववस्तुनोनपायात्ततश्चेश्वरभावाप्रतिपत्तेः शोकस्यचनिमित्तंमोहंदर्शयति। तथा नतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूव । नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंति । नीहारंतमोऽज्ञान मित्यनर्थांतरं । तेनप्रावृतत्वमेवजीवानांब्राह्मापरिज्ञानेजल्प्यत्वाद्यध्यासेचनिमित्तंदर्शयति । तथा अविद्यायामंतरेवर्तमानाः नान्यच्छ्रेयोवेदयंतेप्रमूढाइतिश्रेयोरूपब्रह्मापरिज्ञानेक्रियाकारकाद्यध्यासेचनिमित्तभूतामविद्यांदर्शयति । अज्ञानेनावृतंज्ञान मित्याद्याःस्मृतयश्चेति । मंत्रार्थस्तुमाधवीयभाष्ये हेनराःयःविश्वकर्माइमानिभूतानिजजानउत्पादितवान् तंविश्वकर्माणं न विदाथ नजानीमः तत्रहेतुःयुष्माकंअन्यदेवअंतरंव्यवधानंबभूव । तदुच्यते नीहारेणनीहारसदृशेनअज्ञानेनप्रावृताःकिंच जल्प्या अहंमनुष्योहंदेवइत्याद्यनृतजल्पनशीलाः असून्प्राणान्तर्पयंतिदेहपोषकाः उक्थशासः उक्थशब्देनस्तोत्रशस्त्रादि कंलक्ष्यते नानाविधपक्षेपूक्तं प्रउगनिष्कैवल्यादिकंशंसंति । ऐहिकामुष्मिकभोगमात्रपराइत्यर्थः । तदेतन्निराकरोति ॥ [33०।3] अज्ञा नेत्यादिना ॥ संत्येवोदाहृतवाक्येष्वज्ञानादिशब्दाः । परंतुतेप्रकृतिपरामर्शाइत्यर्थः। ननुमिथ्याभूताप्रकृतिरेवास्माकमविद्ये त्यतआह ॥ [33०।3] नचेति ॥ उदाहृतवाक्येषुप्रकृतिमिथ्यात्वप्रतिपादकशब्दाभावादित्यर्थः । प्रत्युतवाक्यांतरेप्रकृतेःसत्यत्वमेवो

च्यतइत्याह ॥ तमंईति ॥ गौः प्रकृतिः । ननुतस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चातेविश्वमायानिवृत्तिरित्यत्रज्ञाननिव र्त्यत्वेनश्रुतायामायायामिथ्यात्वसिद्धिरित्यतआह ॥ विश्वेति ॥ तरंणमिति ॥ मायायांसत्यामेवतत्कृतपराभवाभावइत्यर्थः ॥ मायिनइति ॥ नचोपाधेःप्रतिबिंबपक्षपातित्वेनेश्वरासार्वज्ञानापादकत्वमितिवाच्यं । त्वन्मतेबिंबातिरिक्तस्यप्रतिबिंबस्या भावेनतत्पक्षपातोनसंभवतीतिवक्ष्यमाणत्वात् ॥ मायाशब्दस्येति ॥ चिंतिपूजीत्यत्रचकारादङ्प्रत्ययोव्याख्यातव्यः । ननु एवमेवैषामायास्वाव्यतिरिक्तानिपरिपूर्णानिक्षेत्राणिदर्शयित्वाजीवेशावाभासेनकरोति मायाचाविद्याचस्वयमेवभवतीतिश्रुत्या मायाविद्ययोरैक्यप्रतिपादनादज्ञानमेवमायेतिचेन्न । जीवस्यपरब्रह्मबोधतिरोधायिकाभगवच्छक्तिरत्रप्रतिपाद्यते नतुत्वदभि मतानिर्वचनीयामाया ॥ वेदेति ॥ नचज्ञानाकारपरिणामित्वादज्ञानस्यापिज्ञानत्वमुपपन्नमितिवाच्यं । उपादानोपादेययोः साम्यदर्शनेनतथापरिणामसिद्धेः ॥ ख्यातत्वादिति ॥ आत्मशक्त्यामायाख्ययेत्यनेनेत्यर्थः ॥ तदप्रयोगादिति ॥ प्रामाणिकानामितिशेषः । तेननवज्रादौपृथिवीशब्दाप्रयोगसाम्यं ॥ सत्येति ॥ अस्मायामेधास्रजोविनिरितिमत्वर्थेविनप्रत्य यविधानादित्यर्थः । ननुमंत्रौषधादिनिर्मितेसर्पादौमिथ्याभूतेमायाशब्दप्रयोगान्नतस्यसत्यवाचित्वनियमइत्यतआह ॥ मिथ्या भूतईति ॥ गौणत्वहेतुभूतमुख्यसंबंधस्योपपादनं ॥ मायाधीनेति ॥ ज्ञानंनिवर्त्यत्वोक्तीति ॥ नचतरणोक्त्यनुपपत्तिः। तत्रेश्वरीयबंधकशक्तेस्तरणोक्तेः । अत्रतुप्रकृतेर्विनाशइतिभेदात् ॥ सत्यस्यैवेति ॥ रूप्यादौज्ञाननिवर्त्यत्वादर्शनादित्यर्थः ।

 

नन्वेकस्यविरुद्धसत्त्वादिगुणवत्त्ववचनमनिर्वचनीयत्वमावेदयतीत्यतआह ॥ [332।1] दैवीह्रीति ॥ सत्त्वादीनांपरस्परंसंभिन्नत्वेनत द्विरोधोसिद्धः । अजामेकांलोहितशुक्लकृष्णांवह्वींप्रजांजनयंतींसरूपामितितत्सामानाधिकरण्यश्रुतेरितिभावः । सत्त्वं स त्यत्वं । ननुमायायास्त्वयाप्यंगीकारात्कथंतन्निराकरणमित्यतआह ॥ [332।3] तस्मादिति ॥ ७ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगं युजि०॥ न्यायामृततरंगिण्यांपराविद्याह्वनागमा ॥ ७ ॥ श्रुतेरनिर्वाच्याविद्यापरत्वभंगः ॥ ४७ ॥ ७ ॥ भ्रमशब्देनज्ञा नंवाअर्थोवा । नाद्यइत्याह ॥ [332।5] द्वितीयेति ॥ अंतःकरणस्यैवतदुपादानत्वसंभवादितिभावः । नचांतःकरणस्यप्रमाणसापेक्ष स्यैवज्ञानजनकत्वेनप्रमाणाविषयेशुक्तिरूप्यादौनज्ञानजनकत्वमितिवाच्यं । शुक्तिविषयप्रमाणसहितेनांतःकरणेनदोषवशाद्रू प्यविशिष्टशुक्तिगोचरपरिणामविशेषजननसंभवात् । द्वितीयंनिराकरोति ॥ [332।5] किंचेति ॥ सोपादानत्वव्यापकसकर्तृकत्वस्या भावान्नरूप्यंसोपादानमित्यर्थः ॥ [332।6] सत्यस्येति ॥ ननुप्रधानस्यसावयवत्वेऽनादित्वभंगः निरवयवत्वेपरिणामायोगइत्यतआह ॥ [332।7] अविद्यायांइति ॥ अविद्यायामविद्यात्वेनैवसर्वानुपपत्तिपरिहारे सत्येप्रधानेईश्वरशक्त्यातदस्त्वित्यर्थः ॥ [333।2] अतात्विकेति॥ नचाविद्यामंतरेणातात्विकान्यथाभावलक्षणविवर्तएवनसंभवतीतिवाच्यं । अविद्यांतरंविनैवातात्विकाविद्यावदविद्यांविनैवा तात्विकवियदादिविवर्तसंभवात् ॥ [333।2] अन्यथेति ॥ उपादानापेक्षस्यवियदादिरूपविकृत्तस्यतात्विकब्रह्मातिरिक्तोपादानकल्पना यामित्यर्थः ॥ [333।3] अन्यदिति ॥ सद्वितीयमतात्विकमित्यर्थः । ननुवियदादिर्ब्रह्मणोविवर्तोऽविद्यायाःपरिणामः तथाचपरिणाम

स्यपरिणामिनंविनाऽयोगादविद्याकल्पनमित्यतआह ॥ [३३३।४] नचेति ॥ सत्यंभूतपरिणामस्यैवस्वोचितपरिणाम्यपेक्षा नत्वसत्यस्यत
स्येत्याह ॥ [३३३।५] असत्यस्येति ॥ तत्वतोऽसंसारिणःसंसारित्ववत्तत्वतोऽपरिणामिनोपिमिथ्याभूतपरिणामित्वेबाधकाभावाद्ब्रह्म
णएवपरिणामित्वोपपत्तिरित्यपिबोध्यं । ननुघटादौस्वसमसत्ताकोपादानदर्शनाद्रूप्यादेरपितथाविधोपादानमविद्याकल्प्यतइ
त्यतआह ॥ [३३३।५] नचकार्येति ॥ [३३३।६] कार्यस्येति ॥ रूप्यस्यघटादेश्चेत्यर्थः ॥ [३३३।७] अनपेक्षत्वेनेति ॥ दृष्टत्वादितिशेषः । नचतदभि
ध्यानादेवतुतल्लिंगात्सइत्यनेनन्यायेनघटादेरपिमृदवस्थचैतन्योपादानकतयातादृशोपादानापेक्षत्वमसिद्धमितिवाच्यं । घटा
दौचैतन्योपादानकत्वेमानाभावात् । रूप्यस्यघटादिदृष्टांतेनस्वसमानसत्ताकोपादानकल्पनायांघटादेरिवतत्रस्वसमानसत्ताकनि
मित्तकल्पनाप्यापद्यतइत्याह ॥ [३३४।१] रूप्यइति ॥ रूप्यस्यस्वसमानसत्ताकनिमित्तकत्वंनस्यात् तथाचाधिष्ठानस्यसादृश्यादेश्चनि
मित्तत्वंनस्यादित्यर्थः । तेनउत्तरोत्तरभ्रमेपूर्वपूर्वभ्रमस्यनिमित्तत्वेनेष्टापत्तिरितिनिरस्तं ॥ [३३४।२] भेदेनेति ॥ तद्दूषणाभासस्यनिरसि
ष्यमाणत्वादितिभावः । नचममेवतवमतेब्रह्मणिविशेषोस्तीत्याह मात्रशब्देन ॥ ७ ॥ अविद्यार्थापत्तिभंगः ॥ ४८ ॥ ७ ॥
[३३४।७] प्रमाणैरिति ॥ ननुप्रमाणैरज्ञानस्वरूपाग्रहेप्यसद्व्यावृत्तिमात्रंक्कचिद्गृह्यते तदुपनीतासद्व्यावृत्तिविशिष्टाज्ञानंतुसाक्षिणागृह्यत
इतिचेन्न । यत्रयद्गृहीतंतत्रतद्विशिष्टग्रहेतद्ग्रहउपनायकः । अज्ञानेऽसद्व्यावृत्त्यग्रहेतदुपनयासंभवात् । शुक्तौरूप्यस्यज्ञानेच
प्रामाण्यंयथानोपनयस्तथोक्तमन्यत्र । ननुप्रमाणसिद्धस्यापिरूप्यस्यप्रामाणिकत्वाभावादज्ञानस्यापितदस्त्वित्यतआह ॥ नच

प्रमाणानीत्यादि ॥ ननुप्रमाणसिद्धमप्यज्ञानंज्ञाननिवर्त्यत्वादप्रामाणिकमित्यतआह ॥ ज्ञानेति ॥ छ ॥ सामान्येनाविद्याप्रमाणभंगः ॥ ४९ ॥ छ ॥ शुद्धेति ॥ मोक्षकालीनानंदसाक्षिणेत्यर्थः । ननुसाक्षीनशुद्धचैतन्यं । किंत्वविद्याप्रतिबिंबितं । ततस्तस्यनिर्दोषत्वाभावान्नतद्वेद्याज्ञानस्यपारमार्थिकत्वमितिचेन्न । प्रतिबिंबनोपाधिंप्रतिसत्त्वंप्रयोजकं । अविद्यासत्त्वंचप्रातीतिकमितिसाक्षिरूपाविद्याप्रतीतौसत्यांतत्सत्त्वसिद्धिः तत्सिद्धौचाविद्याप्रतिबिंबितचैतन्यरूपसाक्षिलक्षणाविद्याप्रतीतिसिद्धिरित्यन्योन्याश्रयात्शुद्धचैतन्यमेवसाक्षीतिवाच्यं । तथाचतद्वेद्याविद्याकथंनपारमार्थिकीतिभावः ॥ कदाचिदिति ॥ वृत्त्यभावकालइत्यर्थः ॥ इहोभयाभावेनेति ॥ अविद्यायाःप्रातिभासिकत्वेनेंद्रियसन्निकर्षाभावात्प्रमाणाभावः । स्वस्मिन्स्वस्यादोषत्वात् । अविद्यायामविद्यांतराभावाच्चदोषाभावइत्यर्थः ॥ छ ॥ अविद्याप्रतीतिभंगः ॥ ५० ॥ छ ॥ अविद्याश्रयश्चेति ॥ परमतइतिशेषः । गोचरः विषयः । ननुचिन्मात्राश्रिताज्ञानेनचिन्मात्रेस्वकार्यसंसारापादनेजीवइवबिंबभूतब्रह्मानुगतचिदंशेपिसंसारःस्यादतआह ॥ दर्पणस्येति ॥ विरोधादिति ॥ चैतन्यं नाज्ञानाश्रयः तद्विरुद्धत्वात् यथा प्रकाशस्तमसइतिसामान्यव्याप्तिः । ननुविरोधाद्घटतदत्यंताभावयोरिवशुद्धचिदज्ञानयोःसामानाधिकरण्यंमाभूत् । आश्रयाश्रयिभावस्तुतद्वदेवस्यादेवेतितत्रैवव्यभिचारइत्यतआह ॥ एकविषयेति ॥ नात्रविरोधस्तदभावरूपत्वं । येनोक्तोव्यभिचारःस्यात् । किंतुतन्निवर्तकत्वमित्यभिसंधायतदनुगुणंदृष्टांतमाह ॥ तमःप्रकाशयोरिति ॥ ननुचैतन्यस्याज्ञानानिवर्तकत्वा

दुःखहेतुरसिद्धइत्यतआह ॥ नहीति ॥ विवक्षितस्याज्ञानत्वसिद्ध्यर्थंचैतन्यस्यावश्यंतन्निवर्तकत्वमास्थेयं । तथाचनासिद्धिरित्यर्थः । ननुअज्ञानस्यचैतन्यानिवर्त्यत्वेपिनतस्याज्ञानत्वाभावः । वृत्तिरूपज्ञाननिवर्त्यत्वेनाप्यज्ञानलक्षणवत्तयाऽज्ञानत्वोपपत्तेरित्याशंक्यपरिहरति ॥ नचेति ॥ विवरणइति ॥ आत्मनःस्वप्रकाशत्वंसाधयितुंप्रमाणीकृतायामत्रायंपुरुषःस्वयंज्योतिरितिश्रुतौ ननुज्योतिःशब्देनप्रकाशगुणाभिधानेतदभिन्नात्मनोपिगुणत्वप्रसंगइतिप्रकाशगुणवद्द्रव्यंज्योतिःशब्देनाभिधातव्यं । तथाच जन्यज्ञानाख्यप्रकाशेनात्माप्रकाशगुणइतिनेयंश्रुतिःस्वप्रकाशत्वेप्रमाणमितिशंकायांसर्वसाधारणस्यप्रकाशगुणवत्त्वरूपज्योतिष्ट्वस्यव्यावर्तनायश्रुतौस्वयमितिविशेषणोपादानात्स्वयमेवज्योतिर्नतुज्योतिष्मानित्यर्थावगमाद्भवतिश्रुतिस्तत्रप्रमाणमितिपरिहृतायां ननुकारकांतरानपेक्षयास्वयमेवस्वात्मनिज्ञानंजनयतीतिस्वयमितिविशेषणंकिंनस्यादितिपुनःशंकायांज्ञानजन्मप्रयुक्तत्वात्कारकापेक्षायास्तदभावेऽपेक्षैवनास्तीतिपरिहृतायां ननुविमतंजन्मवत्ज्ञानत्वात्विषयज्ञानवदितिज्ञानजन्माशंकायांविषयज्ञानवदित्यत्रज्ञानशब्देनस्वरूपज्ञानंवाविवक्षितंवृत्तिर्वा आद्येसाध्यवैकल्यंलोकेवेदेचस्वरूपज्ञानेजन्मादर्शनात् द्वितीयेसाधनवैकल्यं ज्ञातुरर्थप्रकाशस्यस्फुरणरूपस्यज्ञानत्वादितिपरिहृतायां ननुवृत्तावपिज्ञानशब्दोदृश्यतइतिपुनःशंकायां अंतःकरणपरिणामेज्ञानत्वोपचारादित्युक्तं चैतन्यैक्याध्यासाद्वृत्तौज्ञानत्वमुपचर्यतेदग्धत्वमिवायःपिंडइत्यर्थः ॥ अज्ञानेति ॥ चैतन्यस्यज्ञानत्वसिद्ध्यर्थमपितस्याज्ञाननिवर्तकत्वंवाच्यं । अन्यथाविमतं नज्ञानं अज्ञानाविरोधित्वात् घटवदितितस्यज्ञान

त्वंनस्यात् । तथाचनासिद्धिरित्यर्थः । उक्तानुमानेव्यवहाराजनकत्वमुपाधिमाशंक्यपरिहरति ॥ [३३८।१] नचेति ॥ साधनव्यापकत्वान्नोपाधिरित्याह ॥ [३३८।१] अज्ञानेति ॥ असिद्धिमेवपुनराशंक्यनिराकरोति ॥ [३३८।१] नचेति ॥ कथंतर्ह्यज्ञानेज्ञाननिवर्त्यत्वरूपलक्षणयोगइत्यतउक्तं ॥ [३३८।३] ज्ञानकारणविरोध्येवेति ॥ ज्ञानाविरोधिनोपिचैतन्यस्यज्ञानत्वाभावापत्तिंनिराकरोति ॥ [३३८।३] नतुज्ञसीति ॥ करणविरोधित्वेनाननुभूयमानस्यज्ञप्तिविरोधित्वेनानुभूयमानस्याज्ञानस्यदुरपह्नवत्वादित्याह ॥ [३३८।३] नज्ञानामीतीति ॥ चैतन्यस्याज्ञाननिवर्तकत्वेसुखादौतन्निवर्तकस्यान्यस्याभावात्तत्राज्ञानानुभवःस्यादित्याह ॥ [३३८।४] साक्षिवेद्यइति ॥ [३३८।४] सौरेति ॥ दिवाभीतेनयथासौरप्रकाशेमिथ्याभूतोंधकारःकल्प्यतेतथाचैतन्येमिथ्याभूतमज्ञानंकल्प्यतइत्यर्थः ॥ [३३८।६] अज्ञानांतरस्येति ॥ तत्सत्त्वेचतदेवसत्यभूतंजगत्कारणमस्तुकिंमिथ्याभूतेनतेनेत्यर्थः ॥ [३३९।४] अन्योन्याश्रयादिति ॥ अहमज्ञइतिधर्मिग्राहकमानबाधाभावेऽज्ञानस्यचैतन्याश्रितत्वसिद्धिः तत्सिद्धौचाहमज्ञइत्यस्यायोदहतीतिवद्गौणत्वेनाप्युपपन्नस्यचैतन्याश्रिताज्ञानकल्पनायामबाधकत्वमित्यर्थः । भ्रांतित्वायोगादित्युपलक्षणं । साक्षात्संबंधविषयत्वाच्चेत्यपिद्रष्टव्यं । ननुदोषाजन्यत्वमसिद्धं बाधकाद्दोषजन्यत्वानुमानादित्यतआह ॥ [३३९।५] बाधकाभिमतस्यैवेति ॥ नन्वहमज्ञइतिधीर्नाज्ञानेसाक्षात्संबंधेनाहंकाराश्रितत्वंविषयीकरोति । अहंकारभिन्नेऽज्ञानस्यसाक्षात्संबंधग्राहकमानबाधितत्वादित्यतआह ॥ [३३९।६] मिथ्यारूप्येति ॥ धर्मिग्राहकेणयत्रयस्यसंबंधोगृह्यते तत्रैवतस्यसाक्षात्संबंधइतिनाहंकारभिन्नेऽज्ञानस्यसाक्षात्संबंधसिद्धिरित्यर्थः ॥ [३४०।१] अहमर्थइति ॥ आत्मभिन्नत्वेन

पराभिमतइतिशेषः । तेनाकल्पितस्याज्ञानाश्रयस्यैवात्मत्वादिष्टापत्तिरितिनिरस्तं । ननुनिरवद्यइत्यादौनिर्दोषत्वमुच्यते । नत्वज्ञानराहित्यं । अतःकथंश्रुतिविरोधइत्यतआह ॥ [३४०।१३] नहीति ॥ मुक्तइत्यनेनाप्यज्ञानराहित्यमुच्यतइत्याह ॥ [३४०।१३] नापीति ॥ ननुपरसमयप्राप्तमप्यसत्कारणादिवन्निषिध्यतामित्यतआह ॥ [३४०।१४] जीवेपीति ॥ मोहमत्येतीतिश्रुतौमोहशब्दवाच्यस्याज्ञानस्य निषिद्धत्वान्नचिन्मात्रेतत्संभवइत्याह ॥ [३४०।१५] मुक्तीति ॥ मोहनिषेधस्यान्यविषयत्वंव्यवस्थाप्यचिन्मात्रेव्यावहारिकमोहांगीकारे समानन्यायतयातथाविधशोकोपिचिन्मात्रेप्रसज्येतेत्यर्थः । ननुशोकस्यनिषिद्धत्वान्नतस्यव्यावहारिकस्याप्यंगीकारोयुक्तः । मोहमत्येतीत्यत्रनमोहनिषेधः किंतुतत्कार्यनिषेधइतिमोहस्यानिषिद्धत्वात्तस्यव्यावहारिकस्यांगीकारोनविरुद्धइत्याशंक्याह ॥ [३४०।१६] नचश्रुताविति ॥ [३४१।१] बिंबस्थानीयेति ॥ विवेचनाज्ञानमंगीकुर्मइतिनश्रुतिविरोधइतिभावः ॥ [३४१।१] जीवेपीति ॥ चिन्मात्रस्याज्ञानाश्रयत्वेननिरनिष्टत्वाभावात्तच्छ्रुतेर्बिंबस्थानीयब्रह्मपरत्वेततएवजीवेप्यज्ञानाभावेनजीवेऽज्ञानंप्रतिपादकश्रुतिविरोधइत्यर्थः ॥ [३४१।१] ज्ञाऽज्ञाविति ॥ जानातीतिज्ञःज्ञश्चाज्ञश्चज्ञाज्ञौईशानीशावित्यन्वयः । नचजीवस्याज्ञानाश्रयत्वेपितत्तत्कार्ययोगितयाऽज्ञत्वव्यपदेशइतिवाच्यं । जीवेऽज्ञानप्रतिपादकश्रुत्याविरोधेसतिचिन्मात्रेऽज्ञानसिद्धिः तत्सिद्धौचजीवेज्ञानप्रतिपादकश्रुतेगौणार्थकल्पनमित्यन्योन्याश्रयापत्तेः । ननुचिन्मात्रेऽज्ञानप्रतिपादकश्रुतेःसत्वाज्जीवेतत्प्रतिपादिकायाःश्रुतेर्गौणत्वंकल्प्यते ।

अतोनान्योन्याश्रयइत्यतआह ॥ [३४१।३] नचेति ॥ अज्ञानस्यभ्रांतिसामानाधिकरण्यंनियमेपरेषासंमतिमाहं ॥ [३४१।६] उक्तंहीति ॥ भ्रां
त्यज्ञानयोःसामानाधिकरण्यंशंकते ॥ [३४१।७] चिन्मात्रेपीति ॥ चिन्मात्रेऽज्ञानसिद्धौतत्रज्ञातृत्वाध्याससिद्धिः तत्सिद्धौचज्ञानाज्ञा
नयोर्वैयधिकरण्यरूपबाधकपरिहारसिद्ध्याचिन्मात्रेऽज्ञानसिद्धिरित्यन्योन्याश्रयइत्याह ॥ [३४१।७] तस्येति ॥ [३४१।८] चैतन्येइति ॥ चैत
न्येबुद्धिगतभोक्तृत्वाध्याससिद्ध्यर्थंतत्रबुद्धिगतकर्तृत्वस्याप्यध्यासोयथांगीक्रियते तथाचैतन्येबुद्धिगतज्ञातृत्वस्याध्याससिद्ध्यर्थं
बुद्धिगतमेवाज्ञानमध्यस्यतामितिबुद्धिरेवाज्ञानाश्रयःस्यादित्यर्थः । तदुक्तंविवरणेभोक्तृत्वाध्यासःकर्तृत्वाध्यासमपेक्षतेअकर्तु
र्भोगाभावादिति । नन्वध्यस्तज्ञातृत्वेनसमानाधिकरणमज्ञानमित्यंगीकुर्मः । बुद्धौतुज्ञातृत्वंनाध्यस्तंकिंतुस्वतएवेत्यतआह ॥
[३४१।९] देहादावपीति ॥ [३४२।१] बुद्ध्यवच्छिन्नइति ॥ बुध्यवच्छिन्नचैतन्यस्यज्ञातृत्वादित्यर्थः ॥ [३४२।२] तदभावाच्चेति ॥ ज्ञातृत्वाध्यासाभा
वादित्यर्थः । तथाचअर्थाऽप्रकाशस्याज्ञानस्यबुध्यवच्छिन्नाध्यस्तज्ञातृत्वावच्छिन्नेअध्यासःस्यात् । नचिन्मात्रइत्यर्थः ॥ चि
[३४२।२] न्मात्रएवेति ॥ नतुबुध्यवच्छिन्नेचिन्मात्रेपीत्येवशब्दार्थः ॥ [३४२।२] ज्ञातृत्वादिमत्येवेति ॥ ज्ञातुरर्थाऽप्रकाशरूपस्याज्ञानस्यशु
क्त्याद्यज्ञानवत्ज्ञातृनिष्ठत्वांगीकारादित्यर्थः । ननुनाज्ञानंज्ञातृनिष्ठं । दृष्टांताभावात् । नचशुक्त्यज्ञानंदृष्टांतः । तस्यापि
ज्ञात्रनाश्रितत्वादित्याशंक्यपरिहरति ॥ [३४२।३] नचशुक्तीति ॥ [३४२।४] अहंजानामीति ॥ ननुद्विविधमज्ञानं । एकंशुक्त्यज्ञानंशुक्त्यव
च्छिन्नचैतन्याश्रितंतद्गतापरोक्षभ्रमजनकं तद्विषयापरोक्षप्रमानाश्यं । अपरंचपरोक्षभ्रमजनकंप्रमामात्रनाश्यंप्रमातृत्वप्रयो
जकोपाध्यवच्छिन्नचैतन्याश्रितं । तत्रप्रमातृत्वप्रयोजकोऽध्यवच्छिन्नचैतन्यगताज्ञानेविद्यमानेपिमातृगताज्ञानविषयकोऽनु

भवः । तेनप्रमातृनिष्ठत्वंविषयस्यनविरुध्यते । अतएवचैतन्यगताज्ञानेविद्यमानेपिप्रमातृगताज्ञाननाशेननजानामीतिव्यवहाराभावइति । मैवं । नजानामीत्यनुभवसिद्धप्रमातृगताज्ञानस्यैवशुक्त्यादिगतापरोक्षभ्रमहेतुत्वोपपत्तेस्तदतिरिक्तप्रमातृगताज्ञानसद्भावेमानाभावात् । नहिनजानामीतिधीस्तत्रत्वन्मतेमानांतरं । रक्तपटाभावेपिशुक्लपटसत्त्वेनपटोस्तीतिबुद्धिवत्प्रमातृगताज्ञानाभावेपिविषयगताज्ञानसत्त्वात्नजानामीतिव्यवहारापत्तेश्चसंसारतत्वज्ञानाभ्यामज्ञानस्यसामानाधिकरण्यमाशंक्यपरिहरति ॥ [३४२।५] नचविशेष्येति ॥ [३४२।५] विशिष्टइति ॥ विशिष्टनिष्ठंयत्तत्वज्ञानंतेनविशेष्यनिष्ठमज्ञानंनिवर्ततइत्यर्थः ॥ [३४२।६] ब्रह्मण्यपीति ॥ संसारहेत्वज्ञानाश्रयस्यचिन्मात्रस्यजीववत्ब्रह्मापेक्षयापिविशेष्यत्वादित्यर्थः । विशेष्यनिष्ठेनकारणेनविशिष्टेकार्यजननेतिप्रसंगमाह॥ [३४२।६] देहमिति ॥ [३४२।७] विशेष्यस्यमुक्तेरिति ॥ एतच्चोपलक्षणंचैतन्यगतेनाज्ञानाविरोधेनवृत्तिविशिष्टेपितदविरोधापाताच्चेतिद्रष्टव्यं । विशिष्टेब्रह्मण्यपिसंसारापातइत्यत्रपरिहारमाशंक्यपरिहरति॥ [३४३।१] नचोपाधेरिति॥ चिन्मात्रजीवयोर्विशेष्यविशिष्टभावोनास्तीत्याह॥ [३४३।२] प्रतिबिंबस्येति॥ [३४३।३] अचाक्षुषस्येति ॥ नचरूपंरूपमित्यादिश्रुतिबलात् चितःप्रतिबिंबेसिद्धेतत्रैवव्यभिचारान्नेयंव्याप्तिरितिवाच्यं । उक्तश्रुतेस्त्वदभिमतप्रतिबिंबपरत्वाभावात् । श्रुत्यर्थस्योक्तत्वाच्च ॥ प्रतिबिंब[३४३।४]त्वइति ॥ नचोपाधिबिंबसंबंधानादित्वादनादित्वोपपत्तिरितिवाच्यं । उपाधिसंबंधस्यानादित्वेस्वाभाविकत्वापत्तेः । अनादिभावस्याविनाशाच्च॥ [३४३।४] सूर्यस्येति॥ नन्वध्यस्तस्यस्फटिकलौहित्यस्यदर्पणेप्रतिबिंबदर्शनान्नप्रतिफलनीयसमानसत्ताकत्वनियमइति.चेन्न । कुसुमयोगेनस्फटिकेलौहित्यांतरोत्पत्ते

र्नतत्रतस्याध्यस्तत्वमित्यर्थः ॥ [३४३।६] आभिमुख्येति ॥ प्राच्यत्वप्रतीच्यत्वादिरूपमित्यर्थः । एतेनचैतन्याविद्ययोर्व्यापकत्वादाभि
मुख्यमस्तीतिनिरस्तं ॥ [३४३।६] उपाधेरिति ॥ अपरिच्छिन्नाकाशादिपरिणामार्थंसर्वेषामप्यविद्यांशानांविकृतत्वादित्यर्थः । एतेनप्र
तिबिंबप्रयोजकरूपाविरोधिपरिणामस्यप्रतिबिंबाविरोधित्वेनप्रतिबिंबानपायइतिनिरस्तं ॥ [३४४।१] मुखमात्रेति ॥ दर्पणादिसंबं
धात्पूर्वकालीनंमुखंमुखमात्रमित्यर्थः ॥ [३४४।२] चिन्मात्रेति ॥ अविद्यासंबंधस्यानादित्वादित्यर्थः । एतेनअपरामृष्टभेदस्यमुखादे
र्मात्रार्थत्वेनानुगतधर्मातिरेकसंभवइतिनिरस्तं । नन्वज्ञानंस्वाश्रयएवभ्रांत्यादिकरोतीत्येषानविशेषव्याप्तिः । विवादविषया
ज्ञानातिरिक्तेऽदर्शनादित्यतोदृष्टांतमाह ॥ [३४४।२] अनादीति ॥ अज्ञानंज्ञाननिवर्त्यमितित्वदुक्तव्याप्तेरप्यज्ञानातिरिक्तेऽदर्शनान्नवि
शेषव्याप्तित्वंस्यादित्यर्थः ॥ [३४५।३] ज्ञानक्रियेति ॥ ज्ञानरूपक्रियाजन्यःसंस्कारइत्यर्थः । नन्वविद्यालक्षणोपाधेरपिबंधरूपस्वधर्मप्र
तिभासकत्वमस्तीत्याशंक्यनिराकरोति ॥ [३४५।५] अविद्येति ॥ अविद्यायाअबद्धत्वात्तस्याबंधोनास्तीत्यर्थः ॥ [३४५।६] विच्छेदादेरिति ॥ उपा
धिकार्यस्योभयत्रदर्शनान्नतस्यप्रतिबिंबमात्रपक्षपातित्वमित्यर्थः ॥ [३४५।७] मुखस्थेति ॥ उपाधिनास्वकार्यंप्रतिबिंबएवावभास्यतइत्यंगी
कारादित्यर्थः ॥ [३४६।१] प्रतिमुखेति ॥ तथाचयदुपाधिकार्यंविच्छेदादिनतत्प्रतिबिंबमात्रे यच्चप्रतिबिंबमात्रेसंसारादिनतदुपाधिकार्यमि
त्यर्थः ॥ [३४६।२] एवमिति ॥ यत्तुस्वनिष्ठस्थौल्याभासकत्वेनादर्शस्येवबुद्धेरपिस्वनिष्ठधर्मावभासकत्वेनतत्पक्षपातित्वसंभवादिति तत्तुच्छं।
नहिस्फटिकोजपाकुसुमस्यप्रतिबिंबः स्वधर्मावभासकत्वमात्रेणप्रतिबिंबपक्षपातित्वोक्तौतुतस्यबिंबपक्षपातित्वमेवकिंनोच्यते ।

नन्वतिशयेनप्रतिबिंबेकार्यकरत्वमेवतत्पक्षपातित्वं । तथाचविच्छेदादिरूपकार्यस्योभयत्रसाम्येपिस्थौल्याद्यवभासरूपकार्यकरत्वेनदर्पणस्येवकर्तृत्वभोक्तृत्वरूपसंसारकरत्वेनाविद्यायाःप्रतिबिंबपक्षपातित्वमिति । मैवं । बिंबेपिबिंबत्वादेरसाधारण्यस्योपाध्यधीनत्वेबिंबपक्षपातित्वापातात् ॥ [३४६।६] अवच्छेदपक्षइति ॥ अंतःकरणाद्यवच्छिन्नोजीवइतिवा अविद्याप्रतिबिंबितोजीवइतिवापक्षइत्यर्थः ॥ [३४७।१] तन्मतइति ॥ तार्किकमते आत्मादुःखाधारःआधारतावच्छेदकंदेहादिइतिवत् अत्रापिचिन्मात्रेऽज्ञानमितिमतेपिइत्यर्थः ॥ [३४७।२] नहीति ॥ कल्पितस्याविद्यकत्वेननित्यमुक्तत्वाभावादित्यर्थः ॥ [३४७।६] यादृशइति ॥ कल्पितोपियादृशोनर्थरूपादिरितियोजना ॥ [३४७।८] अन्यथेति ॥ संसारवत्यपिनित्यमुक्तत्वश्रुतेरुपपत्तौशोकवत्यपिशोकाभावश्रुतेरुपपत्तौतच्छ्रुतिवलात्मुक्तौशोकनिषेधोनस्यादित्यर्थः ॥ [३४७।१] असर्वज्ञत्वादिनेति ॥ ब्रह्मैवस्वाविद्ययासंसरतीतिपक्षेजीवातिरिक्तस्यबिंबस्थानीयस्यब्रह्मणोभावात्जीवस्यासर्वज्ञत्वेनानुभूयमानत्वात् सर्वज्ञत्वस्यापिकल्पितत्वाकल्पितत्वाभ्यांव्यवस्थायाअप्यसंभवादित्यर्थः ॥ [३४८।१] ब्रह्मभावेति ॥ कल्पितेनापिसंसारेणासृष्टस्यचैतन्यस्याभावेसंसारिब्रह्मप्रतीतिरेवमुक्तिरित्यापातेनेत्यर्थः । ननुबहुजीववादेमुक्तेस्सत्वेनैतद्दूषणप्राप्तावपिनैकजीववादेऽयंदोषइत्यतआह ॥ [३४८।१] एकजीवेति ॥ अस्मिन्पक्षेजीवातिरिक्तचैतन्यस्यकल्पितभेदयुक्तस्याप्यभावादित्यर्थः ॥ [३४८।२] तयोरिति ॥ अद्वैतवादेव्यावहारिकभेदेनजीवान्यचैतन्यसत्वे द्वासुपर्णेत्यादिभेदप्रतिपादकश्रुत्यादीनांतद्विषयत्वेनाविरोधःस्यात् त्वन्मतेतुव्यावहारिकोपिभेदोनास्तीतिभेदश्रुत्यादिविरोधइत्यर्थः ॥ [३४८।३] आत्मनीति ॥

यआत्मनितिष्ठन्नात्मनोंतरइत्यादिश्रुतिः आत्मनःसकाशादंतरः भिन्नः ॥ [३४८।४]शारीरश्चेति ॥ शारीरो जीवोपिनांतर्यामी । उ
भये काण्वाःमाध्यंदिनाश्च । एनं अंतर्यामिणं । जीवाद्भेदेनपठंतीतिसूत्रार्थः ॥ [३४८।८]आत्माश्रय इति ॥ ननुभेदस्यस्वभेदकत्व
वदज्ञानमेवाज्ञानउपाधिरितिचेन्न । भेदस्यस्वरूपत्वेनभेदकत्वानंगीकारात् ॥ छ ॥ व्यासाद्रिस्मृततर्कांबुपूरैःपक्षयुगंयुजि ॥
न्यायामृततरंगिण्यांनचिन्मात्राश्रयाज्ञता ॥ छ ॥ छ ॥ अज्ञानस्यविवरणोक्तचिन्मात्राश्रयत्वभंगः ॥ ५१ ॥ छ ॥ ननु
बिंबभूतंब्रह्मसर्वज्ञंतच्चनाज्ञानाश्रयइत्यतआह ॥ [३४९।२]सविशेषमेवेति ॥ [३४९।२]तुरीयमिति ॥ जाग्रदाद्यवस्थातीतंशुद्धंतुरीयमि
त्यर्थः । नतुसर्वदृक्पदेनसर्वेषांदृग्भूतंचैतन्यमुच्यते । नतुसर्ववेत्ता । सर्वपदवैयर्थ्यात् । तुरीयंप्रतिसर्वस्याभावाच्च ॥ छ ॥
सर्वज्ञस्याज्ञानाश्रयत्वभंगः ॥ ५२ ॥ छ ॥ [३५०।६]व्यामोहनीयेति ॥ व्यामोहक्रियायाःकर्मकारकापेक्षत्वात्परस्मिन्नन्यथाबुद्धि
जननरूपव्यामोहनस्यचव्यामोहनीयदर्शनापेक्षत्वाच्चेतिभावः ॥ [३५०।७]कल्पितेति ॥ भ्रांतेश्चमायांविनाऽयोगात्तस्याश्चाद्याप्यसि
द्धेरित्यर्थः ॥ [३५०।८]तस्यापीति ॥ कल्पितत्वेनरूपेणव्यामोहनीयदर्शनस्येत्यर्थः ॥ [३५०।९]जीवेति ॥ मायायाःमायाविनंप्रत्यव्यामोहक
त्वात् ॥ छ ॥ परोक्तब्रह्ममायावित्वभंगः ॥ ५३ ॥ छ ॥ संतानीति ॥ तत्तद्बीजांकुरव्यक्तयःसंतानिरूपाः । वीजांकुर
परंपरासंतानः ॥ [३५१।८]निराश्रयेति ॥ घटाकाशसिद्धिंविनापिघटसिद्धिवज्जीवसिद्धिंविनाऽज्ञानसिद्धेरभावादित्यर्थः ॥ [३५०।११]स्वतंइति॥

घटादिसंबंधंविनापि । जीवस्त्वज्ञानसंबंधंविनानसिद्धइतिभावः ॥ [३५२।६] प्रमेयत्वेति ॥ प्रमितस्यअभिहितस्यैवतत्तदभावाधिकरणत्वात्अन्यथाव्याहतिःस्यादित्यर्थः ॥ [३५२।८] सिद्धेति ॥ अन्यथासिद्धेत्यर्थः ॥ [३५२।९] तत्कल्पकस्येति ॥ तथाचशुद्धाश्रितमज्ञानमितिस्यादित्यर्थः । नन्वज्ञानाधीनोपिजीवोहमज्ञइतिप्रतीतिवलादेवाज्ञानाश्रयइत्यंगीक्रियतइत्यतआह ॥ [३५३।१] प्रतीतीति ॥ ज्ञानमेवाज्ञानमितीति ॥ [३५३।१०] अज्ञानविषयप्रश्नाभावेदौर्घट्यंहेतुश्चेत्तर्ह्यज्ञानविषयकविरोधानुद्भावनेपिदौर्घट्यंहेतुरितितत्रविरोधोद्भावनमपिनस्यादित्यर्थः ॥ [३५३।१६] वक्तृत्वादिति ॥ वक्तुरेवप्रष्टव्यत्वादितिशेषः ॥ ७ ॥ अज्ञानस्यवाचस्पत्युक्तजीवाश्रितत्वभंगः ॥ ६४ ॥ ७ ॥ [३५४।४] आवरणकृत्येति ॥ करणल्युटसत्त्वाआवरणमज्ञानं । तत्कृत्यमावृत्तिः । एवमग्रेपि । विषयासंबंधइत्यत्रविषयशब्देनघटादिकंवाचैतन्यरूपंवा । आद्यआह ॥ [३५४।७] विज्ञानस्येति ॥ विज्ञानस्यविषयसंबंधाभावेस्वरूपहानिःस्यादित्यर्थः । द्वितीयआह ॥ [३५४।७] स्वयमिति ॥ चैतन्यस्यस्वयमेवस्वज्ञानरूपत्वेनस्वसंबंधानपेक्षणादित्यर्थः ॥ [३५५।३] आवरणसाध्यत्वेनेति ॥ अत्रावरणशब्दोभावसाधनः । तेनावरणशब्देनावृत्तिलक्षणमावरणकार्यंलभ्यते । तेनआवरणकृत्यनिरूपणेइदमसंगतमितिनिरस्तं ॥ [३५५।३] आवरणत्वेति ॥ आवृतित्वेत्यर्थः ॥ [३५५।४] उक्तेति ॥ आवृतिसाध्यभ्रांतिसाध्यःशब्दप्रयोगइत्यर्थः ॥ [३५५।५] सुषुप्ताविति ॥ उक्तव्यवहारस्यावरणकृत्यस्यसुषुप्तावभावात्तत्सिद्धिर्नस्यादित्यर्थः । ननुअस्तिप्रकाशतइत्यादिव्यवहाराभावआवरण

या० १५० कृत्यं । सचसुषुप्तावप्यस्तीत्याशंक्यनिराकरोति ॥ [३५५।५] नाप्यस्तिप्रकाशतइत्यादीति ॥ व्यवहारोभिज्ञावाऽभिलपनंवा । आद्ये

पिस्वरूपाभिज्ञावा वृत्तिर्वा । नाद्यइत्याह ॥ व्यवहारस्येति ॥ तथाचेदानीमप्यावरणंनसिध्येदितिभावः । नेतरइत्याह ॥ वृत्तेरिति ॥ तथाचमोक्षेप्यावरणंसिध्येदितिभावः । द्वितीयंदूषयति ॥ अभिलपनंत्वइति ॥ आवरणकार्यस्याभिलपनरूपव्यवहाराभावस्यमोक्षेपिसत्त्वादितिभावः ॥ तयोरिति ॥ उक्तयोर्योग्यत्वायोग्यत्वयोः ॥ आवरणमिति ॥ आवरणमावृतिः । आवरणकृत्यमितियावत् । आरोपितस्यरजतादेःशुक्त्याद्यावरणंविनाऽदर्शनादत्रापितदपेक्षायामात्माश्रयःस्यादिति भावः । ननूक्तयोग्यतायाअज्ञानसंबंधरूपायाअनादित्वेनचित्प्रकाश्यत्वेनोत्पत्तौज्ञप्तौस्थितौचस्वानपेक्षणान्नात्माश्रयइतिचेन्न । उक्तयोग्यतायाआवरणानपेक्षणेतदधीनतायाअयोगस्योक्तत्वात् । अन्यथानादित्वेनाज्ञानंविनैवजीवब्रह्मविभागापन्नोजीवो ब्रह्मवाअज्ञानस्यविषयःस्यादितिचिन्मात्रमज्ञानविषयइतिनादरणीयंस्यात् ॥ अद्वितीयत्वादीति ॥ तथाचयत्राद्वितीयत्वादिविशिष्टेसंशयादिकमावरणंकल्पकमस्ति तत्रत्वयानावरणंकल्प्यते । यत्रचिन्मात्रेआवरणंकल्प्यते तत्रचसंशयादिकमावरणकल्पकंनास्तीत्यर्थः ॥ इदानीमपीति ॥ उक्तयोग्यत्वादिरूपस्यावरणस्यमोक्षकालेयथाऽभावस्तथेदानीमपितदभावो स्तीतीदानीमप्यावरणमेवस्यादित्यर्थः ॥ स्वरूपस्येति ॥ अज्ञानावच्छिन्नस्यस्वप्रकाशत्वापाताच्चेत्यपिद्रष्टव्यं ॥ इच्छाद्यवच्छिन्नेति ॥ ननुशुद्धायाश्चितःप्रकाशमानत्वेपि तस्याएवपरिपूर्णाद्याकारेणाप्रकाशमानत्वात्तदर्थंतस्याएवावरणकल्पनंपरिपूर्णाद्याकारस्यमोक्षदशानुवृत्तत्वेनशुद्धचिन्मात्रत्वादितिचेन्मैवं । निर्विभागचितिप्रकाशमानाप्रकाशमानाकाराभावात् । नचा

वरणमहिम्नैवपरिपूर्णाद्याकाराप्रकाशोऽध्यासाधिष्ठानादिनाप्रकाशमानताचाविरुद्धेतिवाच्यं । आवरणस्यासिद्धत्वेनान्योन्याश्रयात् ॥ [३५७।१] सुखादेरिति ॥ तथाचव्यवहारयोग्यत्वरूपस्वप्रकाशत्वेनव्यवहारायोग्यत्वरूपमावरणंविरुद्धं । अविरोधहेतोःप्रकारभेदस्याभावादित्यर्थः ॥ [३५७।३] एतेनेति ॥ स्वप्रकाशत्वेनसहव्यवहारायोग्यत्वस्यविरुद्धत्वेनेत्यर्थः ॥ [३५७।३] आवरणकृत्यमिति ॥ आवरणरूपंकृत्यमित्यर्थः ॥ [३५७।४] नचोक्तेति ॥ स्वप्रकाशत्वंसत्यमावरणंमिथ्येतिनविरोधइत्यर्थः ॥ [३५७।५] सुखादीति ॥ शुक्तावियंनशुक्तिरित्यनुभवस्यशुक्त्यारोपसाधकस्यैवस्फुरणरूपेप्रकाशेऽप्रकाशारोपसाधकस्यस्फुरणंनप्रकाशतइत्यनुभवस्याभावेनेत्यर्थः । आरोपितेनावरणेनवस्तुसदावरणकार्यंनसंभवतीत्याह ॥ [३५८।१] वह्नाविति ॥ विरोधादपिप्रकाशेआरोपितोप्यप्रकाशोनसंभवतीत्याह ॥ [३५८।२] सतइति. ॥ आरोपितानारोपितयोर्विरोधाभावेप्यनारोपिताधिष्ठानप्रकाशस्यसर्वेणाप्यारोपितेनविरोधइत्यर्थः ॥ [३५८।३] अन्यथेति ॥ अधिष्ठानप्रकाशेपियद्यारोपस्तर्ह्यारोपनिवर्तकांतराभावात्तन्निवृत्तिर्नस्यादित्यर्थः ॥ [३५८।५] इत्यविरोधइति ॥ तदत्यंताभावानधिकरणस्यैवतत्प्रागभावाधिकरणत्वादित्यर्थः ॥ [३५८।५] स्वरूपेति ॥ तथाचनतत्प्रागभावमादायाविरोधइत्यर्थः ॥ [३५८।५] इदानीमिति ॥ प्रकाशात्यंताभावानधिकरणेप्रकाशप्रागभावस्याप्रकाशोपपादकत्वेनध्वंसस्यापितदुपपादकत्वंस्यादित्यर्थः ॥ [३५८।६] भवतिह्वीति ॥ प्रागभाववद्ध्वंसस्यापियोग्यतयाविरोधाभावादितिभावः ॥ अर्हे योग्ये ॥ [३५९।१] किंचेति ॥ चैतन्यं आवृताभिमतकालेपिस्वयंप्रकाशते प्रकाशत्वात् दीपवत् प्रकाशरूपेचनावरणमितिभावः ॥ [३५९।४] आवरणंविनेति ॥ अम्रियमाणसिद्धावावरण

सिद्धिः तत्सिद्धौचतत्कल्पितभेदंजीवचैतन्यंप्रतिचिन्मात्रस्याव्रियमाणस्यसिद्धिरित्यन्योन्याश्रयइत्यर्थः। भेदावरणयोरनादित्वेपिपरस्परापेक्षायामन्योन्याश्रयएवेत्युक्तत्वाच्च ॥ [३५।१५] योमोक्षइति ॥ तथाचजीवचैतन्यंप्रतिचिन्मात्रावरणमप्रयोजकमितिभावः ॥ [३५।१६] नच्चदीपेति ॥ तथाचोक्तानुमानेस्वविषयत्वमुपाधिरित्यर्थः ॥ [३५।१७] मोक्षेपीति ॥ अप्रकाशंप्रत्यावरणसत्त्वस्याप्रयोजकतयातत्प्रयोजकस्यस्वविषयत्वस्यमोक्षेपिसत्त्वादित्यर्थः। अतएवाह ॥ [३५।१८] अज्ञानेति ॥ प्रकाशमानएवाज्ञानमित्यत्रहेतुमाह ॥ [३६।१२] अज्ञानावच्छेदकस्येति ॥ अज्ञाने ज्ञानाभावे ॥ [३६।१३] सामान्यस्येति ॥ तथाचसामान्येनज्ञानमप्रयोजकमितिभावः ॥ [३६।१४] तदवच्छेदकस्येति ॥ तथाचविशेषेप्रकाशमानएवाज्ञानंदृश्यतइतिभावः। ननुचैतन्यस्याज्ञानाविरोधित्वेनतन्निवृत्तिर्नस्यादित्यतआह ॥ [३६।१५] अविद्येति ॥ सजातीययोःप्रकाशकत्वेतदभावेचदृष्टांतमाह ॥ [३६।१६] सौरचाक्षुषेति ॥ [३६।१८] आवरणेति ॥ आवरणस्यकृत्यमित्यर्थः ॥ [३६।१।१] त्वयापीति ॥ अनवच्छिन्नानंदश्चप्रकाशमानस्वरूपमात्रमेवेतिनतदप्रकाशार्थतावारणस्येतिभावः ॥ [३६।१।२] अपिचेति ॥ प्रकाशमानेप्यज्ञानस्यानुभवबलात्क्वचित्स्वीकारेपिनसर्वत्रतथा। तत्कल्पकस्यानुभवस्याभावात्। अतोनत्वदुक्तोदृष्टांतइत्यर्थः। दृष्टांतेपिनप्रकाशमानेऽज्ञानमित्याह ॥ [३६।१।३] किंचेति ॥ [३६।१।४] अज्ञानेति ॥ विशेषाज्ञानेत्यर्थः ॥ [३६।१।५] नहीति ॥ विशेषरूपेणप्रकाशमानएवाज्ञानमितिवदतात्वयापिपरचित्तगतोऽज्ञातोर्थोबुभुक्षापिपासादिवत्तद्विशेषरूपेणनह्यनूद्यतइत्यर्थः। नन्वज्ञानजातस्याज्ञानावच्छेदकविशेषाविषयत्वेपितदवच्छेदकविशेषस्याज्ञानेकथंतदवच्छिन्नाज्ञानज्ञानमुत्पद्येतेत्यतआह ॥ ए

३६१।५ वंचेति ॥ विशेषावच्छिन्नाज्ञानज्ञानंप्रतिविशेषज्ञानमेवहेतुःकिंनस्यादित्यतआह ॥ ३६१।७ नहीति ॥ ननुविशेषाज्ञानंप्रतिसामान्य
स्यानवच्छेदकतयाकथंविशेषावच्छिन्नाज्ञानज्ञानंप्रतिसामान्यज्ञानंहेतुःस्यादित्यतआह ॥ ३६२।१ अवच्छेदकज्ञानस्येति ॥ अज्ञान
ज्ञानंप्रत्यज्ञानानवच्छेदकस्यसामान्यस्यैवज्ञानंहेतुर्दर्शनबलादेवेत्यर्थः । नन्वज्ञानानवच्छेदकत्वाविशेषात्सामान्यस्येवान्यस्या
पिज्ञानंविशेषाज्ञानज्ञानेहेतुःस्यादित्यतआह ॥ ३६२।१ सामान्येति ॥ यस्यविशेषरूपेणाज्ञानंतस्यैवसामान्यरूपेणज्ञानंविशेषाज्ञान
ज्ञानहेतुरित्यर्थः । अवच्छेदकाविषयकस्याप्यवच्छिन्नविषयत्वमित्यत्रदृष्टांतमाह ॥ ३६२।२ युक्तंचेति ॥ ३६२।२ द्वेषस्येति ॥ स्वातंत्र्येणेति
शेषः ॥ ३६२।३ द्विष्टस्येति ॥ अत्रापिस्वातंत्र्येणेतिशेषः । येनरूपेणद्वेषस्येच्छाविषयत्वं तेनरूपेणनद्विष्टस्येच्छाविषयत्वमित्यर्थः ।
एतेनइच्छातावत्ज्ञानसमानविषयाज्ञानंचावच्छेदकतयाद्विष्टमपिविषयीकरोतीतीच्छापिद्विष्टविषयाभवत्येवेतिनायंदृष्टांतइ
तिनिरस्तं । स्ववृत्तित्वसाध्यत्वादिनाद्वेषस्येवद्विष्टस्येच्छाविषयत्वाभावात् । अन्यथाइच्छाद्वेषयोरेकत्रसांकर्येतयोर्विरोधोन
स्यात् ॥ ३६२।३ ईश्वरस्येति ॥ सत्त्वेनेतिशेषः । तेनईश्वरोपिभ्रमविषयमगृहीत्वाभ्रमंगृह्णातीतिनिरस्तं ॥ ३६२।४ अस्मदादीनामिति ॥
विशेषरूपेणेतिशेषः । तेनसर्वपदादिनासर्वज्ञानमस्माकमप्यस्तीतिनिरस्तं । ननुघटसंयोगज्ञानंप्रतिनघटाज्ञाननिवृत्तिर्हेतुः ।
तस्याःघटसंयोगावच्छेदकघटज्ञानेनान्यथासिद्धत्वादित्यतआह ॥ ३६२।७ अज्ञानावच्छेदकतयाज्ञानेपीति ॥ ३६३।४ किंचेति ॥ अज्ञा
नावच्छेदकविशेषविषयाज्ञानस्ययथातद्विषयकज्ञानेननविरोधः तथातद्विषयकज्ञानाभावस्यापिनाज्ञानज्ञानेनविरोधइत्यर्थः ।

नन्वज्ञानंविशेषावच्छिन्नतयाभासतेवासामान्यावच्छिन्नतयावा । आद्येविशेषेभांसमानत्वमागतमेव । नहिविशेषमनवभास यन्विशेषाज्ञानमवभासयति । द्वितीयेतुसामान्यज्ञानेंन्नतदवच्छिन्नतयैवगृहीतस्यांज्ञानस्यविशेषसंवंधित्वेमानाभावेनभासमा नेसामान्यएवाज्ञानमागतमित्याशंक्यद्वितीयपक्षमंगीचिकीर्षुस्तत्रदोषंपरिहरिष्यन्नाह ॥ [३६३।५]अज्ञानविषयविशेषावच्छेदसि द्धिस्त्विति ॥ यथातमसाऽऽव्रियमाणोविशेषस्तमःकालेतमोविषयत्वेनाज्ञातेपितमोनिवृत्त्यनंतरंतयाज्ञायतेतद्वदित्यर्थः । त थाचसामान्यरूपेणाज्ञानस्यविशेषसंवंधित्वेएतावंतंकालममुमर्थमित्थंनाज्ञासिषमित्यनुभवस्यैवमानत्वमितिभावः । ननुयद्य ज्ञानंस्वकालेविषयावच्छिन्नतयानभासतेतदात्वदुक्तमर्थंनजानामीतिविषयावच्छिन्नाज्ञानस्यवर्तमानप्रत्ययोविरुध्येतेतिचेन्न । स्थूलकालमादायंतथोपपत्तेः । अन्यथात्वदुक्तमर्थंनजानामीत्यनुभवेनवर्तमानकालासंवंध्यज्ञानंसिध्येत् ॥ [३६४।१]वृत्तिरिति ॥ चैतन्यस्याप्यज्ञानांनिवर्तकत्वेतदनिवृत्तिरेवस्यादितिभावः । नन्वज्ञाननिवर्तकमित्यनेनतन्निवृत्तिप्रयोजकंविवक्षितं । तच्चसं वंधसंपादनद्वारास्मिन्पक्षेवृत्तिज्ञानस्याप्यस्तीतिचेन्न । तथासतिचैतन्यमेवाज्ञाननिवर्तकमित्यापातात् ॥ [३६४।१]अज्ञानस्येति ॥ नचमोक्षदशायामज्ञाननिवृत्तिश्रवणेनतस्यस्वविरोधिज्ञानप्रागभावमात्रव्यापकत्वमितिवाच्यं । तच्छ्रवणस्यचैतन्येऽज्ञानवि रोधित्वेनाप्युपपत्त्यासामान्यव्यापकत्वत्यागेनतस्याविशेषपरंत्वकल्पनायोगात् ॥ [३६४।३]ज्ञानसामान्येति ॥ ननुघटादिमात्रविरो धिनोघटाभावादेर्भावसामान्यविरोधित्वेनाभावत्वेनप्रतीतिवत्ज्ञानविशेषविरोधिनोप्यज्ञानस्यज्ञानविशेषविरोधित्वेनप्रतीति रुपपन्नैव । नह्यभावपदादिनाऽभावप्रतीतौघटाभावोनभासतइतिचेन्मैवं । तत्रपटादिविरोधिप्रतीतिवदत्रापिचैतन्यविरोधिप्र

तीतेरवश्यवाच्यत्वात् । नह्यभावपदादिनाघटाभावमात्रधीः । तत्रघटाभावपटाभावादीनामनेकत्ववदिहाज्ञानानेकत्वाभावे नैकस्यैवोभयविरोधित्वस्यवाच्यत्वाच्च । ननुज्ञानसामान्यविरोधित्वानुभवेनापिवृत्तिविरोधित्वमेवपर्यवस्यति. । नतुज्ञप्तिविरोधित्वमपि । तयोरेकज्ञानत्वाभावादित्यतआह ॥ [३६४।४] ज्ञप्तीति ॥ ज्ञाधातोर्जादेशविधानादित्यर्थः । ननुजानातेर्ज्ञप्त्यर्थत्वेपि वृत्तेरेवज्ञप्तित्वात्तद्विरोधित्वमेवाज्ञानस्येत्यतआह ॥ [३६४।४] त्वत्पक्षइति ॥ ननुवृत्तिप्रतिबिंबितचैतन्यमेवजानामीतिव्यवहारविषयः । तथाचनजानामीत्यनेनवृत्तिचितोरुभयोरप्यज्ञानविरोधित्वंविषयीक्रियतइत्यतआह ॥ [३६४।४] चैतन्यस्येति ॥ दृश्यस्यदृश्यध्यासानुसारेणशुद्धचितएवदृक्त्वात्तस्याएवजानात्यर्थत्वादित्यर्थः । ननुचितोज्ञप्तित्वेपिनाज्ञानविरोधित्वं नजानामीत्यनुभवस्तुवृत्त्यारूढचिदचिंदभिप्रायेणेत्यतआह ॥ [३६४।५] चैतन्येति ॥ मुख्यंज्ञानत्वमज्ञानत्वंवानस्यादित्यर्थः ॥ [३६४।७] तत्त्वेनेति ॥ अज्ञाननिवर्तकतौपयिकार्थप्रकाशकत्वेनेत्यर्थः । यत्तु प्रमाणवृत्त्युपारूढप्रकाशत्वेनाज्ञाननिवर्तकत्वंब्रूमः नतुजातिविशेषेणवाप्रकाशत्वमात्रेणवा । अतोनेच्छादिनिवर्त्यद्वेषादिवदेतन्निवर्त्यानांसत्त्वापत्तिरिति । तन्न । अत्रप्रकाशस्यैवतन्निवर्तकत्वेशेषवैयर्थ्यात् । व्यभिचारमप्याह ॥ [३६४।८] त्वन्मतइति ॥ [३६४।९] स्फुरणस्यैवेति ॥ प्रकाशरूपस्येत्यर्थः । ननुपरोक्षवृत्तेर्विषयपर्यंतत्वाभावेननविषयगताज्ञाननिवर्तकत्वं सुखादौचज्ञातैकसत्त्वादज्ञाननिवृत्तिंविनैवाज्ञानादर्शनमतोन्वयव्यतिरेकावन्यथासिद्धावितिचेन्न । ततएवपरोक्षवृत्तेःस्वविषयेव्यवहारजनकत्वमपिनस्यात् । सुखादावज्ञानविरोधिनंविनातस्यज्ञातैकसत्त्वानुपपत्तेः । नन्वस्तुप्रकाशकत्वेनैवाज्ञा

नविरोधित्वं । चैतन्यंतुनप्रकाशइतिनाज्ञानविरोधीत्यतआह ॥ [३६५।१] स्वेति ॥ नचंपरिपूर्णत्वादिनाप्रकाशविधुरत्वाभावेपिअध्यासाधिष्ठानत्वादिनाप्रकाशमानतयाऽप्रकाशविधुरत्वसंभवइतिवाच्यं । निर्विशेषेतदसंभवस्योक्तत्वात् ॥ [३६५।१] वृत्तीति ॥ सौरालोकज्ञानयोरित्यादिनेत्यर्थः । ननुसाक्षिणोऽज्ञानसाधकत्वेनतदविरुद्धत्वमित्यतआह ॥ [३६५।३] अनुभूयतेहीति ॥ अज्ञानविषयकानुमित्यादेरज्ञानसाधकत्वेपि यथाऽज्ञानविरोधित्वंतथाचैतन्यस्यापितद्विरोधित्वंयुक्तमित्यर्थः ॥ [३६५।५] अन्यथेति ॥ साक्षिणोऽज्ञानाविरोधित्वेऽन्यस्यतद्विरोधिनोऽभावाच्चैत्रेच्छादौमैत्रस्येवचैत्रस्याप्यज्ञत्वंस्यात् । नोचेन्मैत्रस्याप्यज्ञानंनस्यादित्यर्थः । ननु साक्षिविषयेसुखादावज्ञानाप्रसक्तिरेवेति नतत्रतद्वारापेक्षा । वृत्तिस्तुविषयेप्रसक्ताज्ञाननिवृत्तिकेतिवैषम्यंतयोरित्याशंकते ॥ [३६५।७] इच्छादाविति ॥ [३६६।३] अन्यथेति ॥ आत्मनोऽज्ञानाविरोधित्वेतस्यजडत्वापत्त्याघटादिसाम्यमित्यर्थः । एतेनप्रकाशांतरापेक्षायांजडत्वमुपाधिरितिनिरस्तं । चैतन्यरूपप्रकाशस्यकुत्राप्यज्ञानविरोधित्वादर्शनात् । प्रकाशमानेपितस्मिन्नज्ञानमविरुद्धमितिशंकांनिराकरोति ॥ [३६६।४] नचेति ॥ साक्षिवेद्येसुखादावज्ञाननिवारणंचवृत्त्यैवेतिभावः ॥ [३६६।७] अंतःकरणेति ॥ तथाचपरिशेषेण केवलसाक्षिवेद्यत्वमेवसुखादीनामिति ततएवसुखादावज्ञाननिवारणमित्यर्थः ॥ [३६७।१] अन्यथेति ॥ स्वसत्तायामप्रकाशबुद्धिविधुरेपिसुखादौवृत्त्यपेक्षायामित्यर्थः ॥ [३६७।२] एतेनेति ॥ सौरालोकचाक्षुषप्रकाशयोरिववृत्तिचितोर्वैलक्षण्याभावेनेत्यर्थः ॥ [३६७।२] एतेनैवेति ॥ साक्षिणोऽज्ञानविरोधित्वेनेत्यर्थः ॥ [३६७।४] वृत्तिरेवेति ॥ प्रमाणवृत्तिरित्यर्थः ॥ [३६७।५] विवरणइति ॥ अविद्योपाधिकंसर्वगतंजीवचैत

न्यंविषयप्रकाशकमितिपक्षेप्रतिकर्मव्यवस्थायुक्ता अंतःकरणोपाधिकत्वाज्जीवःपरिच्छिन्नोनसर्वमवभासयतीति जीवस्यपरिच्छिन्नत्वपक्षेपिप्रतिकर्मव्यवस्थायामुक्तायां ननुअहंकारावच्छिन्नचैतन्यस्यविषयचैतन्यसंबंधाद्विषयभानासंभवइत्याशंकायांजीवावच्छेदनिमित्तांतःकरणपरिणामसंसर्गकृताभिव्यक्तित्वाद्विषयावच्छिन्नचैतन्यस्यजीवचैतन्यताचनविरुध्यते । विषयप्रमातृचैतन्ययोरेकांतःकरणपरिणामसंबंधादभेदेनस्फुरणं ततोविषयप्रकाशउपपद्यतइतिपरिहृतायां ननुप्रत्यग्ब्रह्मणोरप्येकांतःकरणसंबंधाद्ब्रह्मणोपिप्रत्यक्त्वेनस्फुरणंस्यादितिपुनःशंकायां किंब्रह्माकारपरिणतांतःकरणसंसर्गात्तत्स्फुरणमुतांतःकरणमात्रसंसर्गात् । नाद्यः । ब्रह्माकारपरिणतांतःकरणसंसर्गाभावान्ननित्यवद्ब्रह्मणःप्रकाशप्रसंगः । नद्वितीयः । नह्यंतःकरणस्वरूपमात्रसंसर्गिणोभिव्यक्तिरंगीकृता । तद्गतधर्मादीनामपिप्रसंगादितिपरिहृतायां नन्वंतःकरणमात्रसंसर्गात्प्रत्यग्व्यक्तिवद्ब्रह्मव्यक्तिरपिकिंनस्यादितिपुनःशंकायां अंतःकरणमात्रसंसर्गात्प्रत्यग्व्यक्तिर्नास्त्येवतथाचदृष्टांतासिद्धिरित्युच्यते विवरणवाक्येजीवाकारावृत्तिरित्यत्रेत्यवगंतव्यं ॥ [३६७।५] जीवाकारेति ॥ जीवविषयाअहंप्रकारिकायावृत्तिस्तदात्मनापरिणतंयदंतःकरणं अहमाकारांतःकरणपरिणामभूतज्ञानरूपयावृत्त्याजीवविषयिण्या जीवोभिव्यज्यतेव्यवहारविषयेभवतीत्यर्थः । नचेयमविद्यावृत्तिरितिवाच्यं । दोषाजन्यत्वात् । अंतरविषयत्वेनांतःकरणवृत्तेर्बहिरिंद्रियद्वारानपेक्षणात् ॥ [३६७।६] अन्यथेति ॥ अहंकारवृत्त्यभावदशायांसुषुप्तेःसत्त्वादित्यर्थः । नन्विंद्रियवृत्तिरेवाज्ञानविरोधिनीत्यतआह ॥ [३६७।७] अयंघटइतीति ॥ [३६८।१] विशिष्टेति ॥ विशेष्याद्विशिष्टस्यभिन्नत्वादित्यर्थः ॥ [३६८।३] दंडीति ॥ तस्यास्तदविषयत्वापातइत्यपिबोध्यं ॥ [३६८।५] आकाशांशस्येति ॥ अंशांशिनोर्भेदादि

त्यर्थः ॥ [३६८।७] अतिप्रसंगादिति ॥ अपीतसाक्षात्कारस्यपीतभ्रमानिवर्तकत्वं किंतुतच्छ्रवणादिजन्यपीतसाक्षात्कारस्यैवतथात्व
मित्यादिस्यादित्यर्थः ॥ [३६९।१] सत्यत्वेति ॥ श्रवणादिजन्यवृत्तेरनधिकविषयायाप्यविद्यानिवर्तकत्वेनेच्छादिनिवर्त्यद्वेषादिवदज्ञान
स्यसत्यत्वंस्यादित्यर्थः । एतेनाविद्यागतोऽवस्थाविशेषोवाशक्तिविशेषोवाघटादिज्ञानेननिवर्तते प्रपंचनिदानभूतमज्ञानंतुश्रव
णादिजन्यतत्वमस्यादिवाक्यजन्याखंडार्थगोचरवृत्त्यानिवर्ततइतिनिरस्तं । यत्तुयदवच्छिन्नाज्ञातृत्वप्रयोजकाज्ञानविशेषस्तद
वच्छिन्नज्ञाननिवर्त्यइति तन्न । यावंतिज्ञानानितावंत्यज्ञानानीत्यत्रनिरस्तत्वात् ॥ [३७०।१२] काकवदिति ॥ वाक्यवदिति ॥ वेदां
तानामित्यनुषंगः ॥ [३७०।१३] प्रकाशमानस्येति ॥ प्रकाशमानेआत्मन्यज्ञानमनुचितं अप्रकाशमानेद्वितीयाभावेतुतदुचितमित्यर्थः
॥ [३७०।१४] निर्विशेषइति ॥ चिन्मात्रस्यस्वयंप्रकाशत्वात्तत्रसत्यभूतधर्मस्याभावान्मिथ्याभूतधर्मस्याज्ञानसिद्ध्युत्तरकालीनत्वादज्ञाना
वृतंकिमपिनसंभवतीत्यर्थः ॥ [३७०।१६] न्यूनापीति ॥ अंगुलिश्चक्षुरादिसंबंधिन्यावरणंतदपेक्षयानन्यूनेत्यर्थः । वक्ष्यमाणाक्षेपार्थमाह
॥ [३७०।१७] तस्मादिति ॥ छ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यामविद्याविषयोनचित् ॥ छ ॥ अविद्या
विषयभंगः ॥ ५९ ॥ छ ॥ अहमर्थोनात्माआत्मनिप्रकाशमानेप्यप्रकाशमानत्वादित्यत्रविशेषणासिद्धिमाह ॥ [३७०।१८] पश्चादित्या
दिना ॥ विशेष्यासिद्धिमाह ॥ [३७०।१९] अनेवंविधस्येति ॥ अप्रकाशमानस्य अथातइत्यादिछांदोग्येभूमप्रकरणे यत्रनान्यत्पश्यति
नान्यच्छृणोतिनान्यद्विजानातिसभूमेत्यादिनोक्तभूमानं सएवाधस्तात्सउपरिष्टात्सपश्चात्सपुरस्तात्सदक्षिणतस्सउत्तरतःसएवेदं

सर्वमितिसर्वात्मकत्वेनोक्त्वा अथातोहंकारादेशएवाहमेवाधस्तादहमुपरिष्टादित्यादिनाहंकारंचसर्वात्मकत्वेननिरूप्य अथात आत्मादेशएवात्मैवाधस्तादात्मैवोपरिष्टादित्यादिनाहंकारोपदेशादात्मनउपदेशांतरादहंकारोनात्मेत्यर्थः ॥ [३७१।१] आत्मानुबंधीति ॥ आत्मत्वनियतः । अनात्मानुबंधी अनात्मत्वव्याप्यत्वान्नियतः ॥ [३७१।२] चिदचिदिति ॥ शुद्धचिद्रूपत्वाभावादित्यर्थः । विशेष्यासिद्धिंपरिहरति ॥ [३७१।२] यदिचेति ॥ [३७१।३] ह्यस्तनइति ॥ यथापूर्वदिनेहमित्यनुभूतोहमर्थोद्यस्मर्यतेतथासुषुप्तावहमर्थोनुभूतश्चेत्सुप्तोत्थितेनस्मर्येतेत्यर्थः ॥ [३७१।३] आत्मेति ॥ आत्मनानतिभिन्नत्वादित्यर्थः । आत्माहमर्थयोरभेदवादिनंप्रत्यात्मनःप्रकाशेसत्यहमर्थस्याप्रकाशइत्येतदसिद्धमित्यभिसंधायाह ॥ [३७१।४] तत्रेति ॥ [३७१।४] अहमर्थइति ॥ अहमर्थस्याप्रकाशमानात्मान्यत्वेनसुषुप्तौनप्रकाशसिद्धिः तत्सिद्धौचतथाविधात्मभिन्नत्वसिद्धिरित्यर्थः ॥ [३७१।६] अहमर्थइति ॥ सुप्तोत्थितमात्रस्यात्मपरामर्शोहमर्थगोचरः आत्मपरामर्शत्वात् यथासंप्रतिपन्नइत्यन्वयव्यतिरेकव्याप्तिकमनुमानमित्यर्थः । हेतौव्यभिचारंपरिहरति ॥ [३७१।७] अस्वाप्समितीति ॥ अभिज्ञाभिलप्नयोःसमानार्थत्वादित्यर्थः ॥ [३७२।१] अंतःकरणेति ॥ स्वयंप्रकाशस्यज्ञानांतरागम्यत्वात्तद्विनाशप्रयुक्तसंस्काराभावात्स्वरूपस्यचाविनाशादविनाशिनःसंस्काराभावान्नात्मनिप्रत्यभिज्ञासंभवतीत्याशंक्योक्तंविवरणेअंतःकरणविशिष्टइत्यादीत्यवगंतव्यं । निष्कलंके निष्कलंकात्मस्वरूपमात्रे । ननुविवरणवाक्यस्यनिरुपाधिकात्मपरामर्शनिषेधेतात्पर्यंनत्वहंकारविशिष्टतद्वि

धानइतिचेन्न । अंतःकरणस्यान्वहंविनाशात्तद्विशिष्टस्यापिविनाशित्वमितिनप्रत्यभिज्ञाविषयत्वमितिशंकोत्तररूपेणसंसाराव स्थायामंतःकरणविशिष्टरूपानपायादित्युत्तरविवरणवाक्येनविरोधात् । ननुनिश्चयेसतिसंशयाभावनियमेपिनिश्चयाभावेसंश यनियमोसिद्धइत्यतआह ॥ [३७२।३] नन्विति ॥ कदाचिदपितादृशसंशयःस्यादित्यर्थः । ननुपरामृश्यमानात्मनिप्रत्यक्त्वनिश्चयान्नतत्र तद्विरुद्धपराक्त्वरूपान्यत्वसंशयइतिशंकते ॥ [३७२।४] नन्विति ॥ प्रत्यक्त्वनिश्चयएवाहंत्वनिश्चयइतिवक्तुमाह ॥ [३७२।५] प्रत्यक्त्वमिति ॥ [३७२।५] निर्भास्येति ॥ निर्भास्यंदृश्यंपराक् तत्प्रतिकूलंचित्त्वंप्रत्यक्त्वमित्यर्थः ॥ [३७२।५] अन्यत्वेति ॥ अन्यत्वंपराक्त्वं तद्विरुद्धंस्वत्वंप्र त्यक्त्वमित्यर्थः।आद्यआह॥ [३७२।६] चिदिति॥ द्वितीयआह ॥ [३७२।६] स्वयमिति॥ द्वितीयेदोषांतरमाह॥ [३७२।७] घटादिरिति ॥ घटादिरपिप्रत्यगर्थः स्यादित्यर्थः ॥ [३७३।१] विवरणइति ॥ अहंकारस्यपराक्त्वसापेक्षत्वादात्मनश्चानपेक्षत्वान्नतयोरभेदइत्युक्तेतर्ह्यात्मनोपिपराग्व्यावृ त्त्यासापेक्षत्वान्नात्मत्वंस्यादितिशंकायांविवरणेउक्तमात्मनइति । सर्वात्मकत्वात् । पूर्णत्वात् ॥ [३७३।३] घट्टकुटीति ॥ केचिद्वणिजः शुल्कमदित्संतःशुल्कग्रहणस्थलंवंचयित्वाऽन्येनपथाजिगमिषंतोविस्मृतमार्गाः यत्रघट्टेशुल्कग्राहिणांकुटीस्थितातत्रैवप्रभातेआ गताः । सोयंघट्टकुटीप्रभातवृत्तांतः ॥ [३७३।३] नन्विति ॥ आत्मांशेपरामर्शोऽहमर्थेत्वनुभवइत्यर्थः ॥ [३७३।४] नकिंचिदिति ॥ अज्ञानांशे परामर्शस्तुतवापिसंमतः । अतएवनकिंचिदवेदिषमित्यादावित्युक्तं । ननुसुषुप्तावज्ञानस्यसत्त्वात्तदनुभवेनतस्यपरामर्शोयु

॥ संस्कारेति ॥ शब्दाभासादिजन्यस्यज्ञानस्यनसंस्कारजनकत्वंप्रमाजन्यएवसंस्कारोहेतुरितिप्रागुक्तत्वाद्वा । अन्यथातत्रा प्यनिर्वाच्यगोचरसंस्कारादनिर्वाच्यांतरमेवकथंनोत्पद्येत । यत्तुसंस्कारस्यनतावत्साक्षात्प्रतीतावुपयोगः । स्मृतित्वापत्तेः । किंत्वर्थोत्पत्तिद्वारा । तथाचसंस्कारनियामकताप्यनिर्वाच्यपक्षएवेति । तन्न । अर्थस्यस्मृतित्वापत्त्यातुल्ययोगक्षेमत्वात् ॥ नृशृंगादिशब्दैरेवेति ॥ शब्दशक्तिभ्रमविरहकालइतिशेषः । तेनशशशब्दस्यनरिभ्रमदशायांनृशृंगशब्देनेवशशशृंगशब्दे नापिनृशृंगस्यप्रतीयमानत्वेननृशृंगशब्देनैवप्रतीयमानत्वंनतस्यविशेषइतिनिरस्तं ॥ अन्यथेति ॥ सत्त्वप्रकारकभ्रांतेःसत्त्व सापेक्षत्वेतवमतेपिरूप्यस्यसद्विलक्षणत्वात् साभ्रांतिर्नस्यादित्यर्थः ॥ संबंधादाविति ॥ तथाचतवमतेपिरूप्यस्यज्ञानेनसं बंधः । भातीत्यादौकर्तृत्वादिकंचनस्यात् ॥ दुष्टादिति ॥ स्वरूपयोग्यस्यसहकारिविशेषसमवधानेसतिकार्यविशेषजनकत्वद र्शनादिंद्रियस्याप्यसन्निहिततत्तादिज्ञानजनकत्वेनयोग्यत्वात् ॥ प्रमायामेवेति ॥ नचसन्निकर्षोपिसामान्यसामग्र्यैवेति वाच्यं । सन्निकर्षेसतिक्वाप्यप्रमायाअदर्शनेनप्रत्युतप्रमायाएवदर्शनेनेंद्रियवदुभयानुगत्यभावेनसन्निकर्षस्यसामान्यसामग्री त्वाभावात् । अतएवोक्तंमणिकृता । असन्निकृष्टमपिदोषवशाद्भासतइत्युपेयमिति ॥ अन्यथेति ॥ अपरोक्षज्ञानमात्रेसन्नि कर्षस्यहेतुत्वे ॥ अयंदोषइति ॥ अनिर्वाच्यस्यापरोक्षज्ञानंह्यविद्यावृत्तिर्वातत्प्रतिबिंबितःसाक्षीवा । नोभयमपिसन्निकर्ष जन्यं । तथात्वे अनिर्वाच्यत्वे ॥ तस्येति ॥ रूप्येप्रतीतस्येदंत्वस्यव्यावहारिकत्वस्यचसत्त्वेनप्रतीतिंविनाप्रातिभासिकत्वासं

भवादित्यर्थः ॥ तदपीति ॥ रूप्येप्रतीतेदंत्वादौयत्सत्त्वंप्रतीतंतस्याप्यनिर्वाच्यस्यप्रातिभासिकत्वायसत्त्वांतरवत्तयाप्रतीतिर्वाच्या । एवंसत्त्वेप्रतीतसत्त्वस्यापिप्रातिभासिकत्वायसत्त्वांतरवत्तयेत्यनवस्था ॥ तयोरपीति ॥ रूप्येनिषिध्यमानेइदंत्वपारमार्थिकत्वेसतीवाऽसद्विलक्षणेवाऽसतीवा । आद्येनिषेधायोगः । द्वितीयेऽनवस्था । असद्विलक्षणयोःस्वरूपेणनिषेधायोगात्तयोरपिपारमार्थिकत्वांतरेणनिषेधोवाच्यः । तद्गतपारमार्थिकस्याप्यसद्विलक्षणत्वेपारमार्थिकत्वांतरेणेत्यनवस्था । तृतीयेसतः सत्त्वेनापरोक्षप्रतीतिर्दुर्वारेत्याह ॥ तेचेति ॥ रूप्येनिषिध्यमानेइदंपारमार्थिकत्वे ॥ सत्त्वेनापरोक्षेइति ॥ सत्त्वनिषेधस्य सत्त्वप्रसक्तिपूर्वकत्वात्प्रकृतेचपरिशेषात्प्रत्यक्षरूपैवप्रसक्तिरितिभावः ॥ अन्यथात्वमिति ॥ अन्यप्रकारत्वमन्यरूपत्वमिति यावत् । अनिदंरूप्येइदंत्वमव्यावहारिकेव्यावहारिकत्वं । तस्य अपारमार्थिकेनिषिध्यमानस्यपारमार्थिकत्वादेः । सुधायांतुशुक्तिकेदमंशस्यरजतत्वसंसर्गोरजतस्यचेदंतासंसर्गोऽन्यथात्वशब्दार्थः । सत्त्वशब्देनरजतेशुक्तिकासत्त्वसंसर्गइतिव्याख्यातं । अत्रानिर्वचनीयेरूप्येप्रतीयमानयोरिदंत्वव्यावहारिकत्वयोः । तत्रनिषिध्यमानपारमार्थिकत्वस्यासतएवापरोक्ष्यमनवस्थाभयात्त्वरंप्रतिस्वयमापादितं । सुधायांतुइदंतारजतत्वयोरितरेतरसंसर्गस्यरजतेशुक्तिकासत्त्वसंसर्गस्यचानिर्वचनीयस्यतथैवप्रतीतौ प्रवृत्त्ययोगाद्व्यावहारिकतयाप्रतीतिर्वाच्या । तद्व्यावहारिकतायाःसत्त्वेउक्तसंसर्गद्वयस्यप्रातिभासिकत्वायोगादसत्याएवतस्या आपरोक्ष्यमायातं । तस्याअप्यनिर्वाच्यत्वेतथैवतस्याःप्रतीतौप्रवृत्त्ययोगादनिर्वाच्यायास्तस्याःव्यावहारिकत्वेनापरोक्ष्यंवाच्यं ।

अनिर्वचनीयव्यावहारिकतागतव्यावहारिकत्वस्यसत्त्वेतदाश्रयव्यावहारिकतायाअनिर्वाच्यत्वायोगादसदेवव्यावहारिकत्वमप
रोक्षतयाप्रतीयतइतिवाच्यं । तद्व्यावहारिकत्वस्याप्यनिर्वाच्यत्वेउक्तरीत्यानवस्थेत्युक्तमित्याह ॥ [४२०।१९] टीकायांत्विति ॥ इदंत्व
मिदंत्वसंसर्गः । सत्वंसत्वसंसर्गः ॥ [४२०।२०] सत्त्वायोगादिति ॥ इदंत्वादिसंसर्गद्वयस्यानिर्वाच्यत्वविरोधात् । नहियस्यसत्त्वंसत्तद
निर्वाच्यमितिसंभवतीत्यर्थः ॥ [४२०।२०] प्रवृत्तीति ॥ नह्यनेनानिर्वाच्यंक्वचिदर्थक्रियासूपयुज्यमानंदृष्टं । येनतद्भावंप्रतीत्यापिप्रवर्तेत
॥ [४२०।२०] सत्त्वेनेति ॥ व्यावहारिकत्वेनेत्यर्थः ॥ [४२०।२३] सत्वइति ॥ व्यावहारिकत्वे । अत्रपक्षद्वयेपीदंत्वादेरेवासत्त्वमुक्तं । अनवस्थो
पपादनभेदेनतुपक्षभेदइतिवोध्यं ॥ [४२०।२३] अनिर्वाच्येति ॥ सद्विलक्षणस्येत्यर्थः । एतेनसत्त्वस्यसत्त्वप्रतीतावतिरिक्तसत्त्वानपेक्षे
तिनिरस्तं । सत्त्वप्रतीतिंविनासत्त्वस्वरूपासिद्धेः ॥ [४२०।२४] असतःसत्त्वस्येति ॥ ननुतत्सत्वंस्वरूपतोनसत् । विज्ञानतोपिनसत् ।
सत्त्वेनाप्रतीतेः । तथाचसतिकथंतन्निबंधनोव्यवहारइतिचेन्न । सत्त्वेनाप्रतीतस्यासतोपिसत्त्वस्यप्रतीतिमात्रादेवव्यवहाराद्यु
पपत्तेः । नहिममतेप्यर्थोहेतुः । येनासतोर्थस्यस्वरूपसिद्ध्यर्थंसत्त्वेनतज्ज्ञानमपेक्षेतेति । ननुरूप्यस्यसदसदात्मकत्वेसद्रूप्य
मितिज्ञानस्यभ्रमत्वंनस्यात् । रूप्यस्यसद्रूपत्वादित्यतआह ॥ [४२०।२६] असदेवेति ॥ तवमतेरूप्यस्यासद्विलक्षणत्वेप्यसदेवरू
पा० १५४ प्यमितिबाधस्यभ्रमत्वंयथानायातितस्यतत्रविद्यमानसद्वैलक्षण्यविषयत्वात् , एवंसद्रूप्यमितिभ्रमस्याविद्यमानासद्वैलक्षण्यविष

यत्वेनभ्रमत्वमक्षतमेव । तथाचप्रातीतिकमपितत्रसत्त्वंमास्तुवाधोसत्त्वविषयकोस्तु ॥ [४३।१।३] सदसदात्मकत्वमिति ॥ सद
सदात्मकत्वंयत्सत्वंतद्भ्रांतौविषयोस्तु । नन्वेवंसच्चासच्चरजतमित्याकाराप्रतीतिःस्यात् । न । वस्तुतोरजतस्यतथात्वेपि
प्रतीतेस्तदाकारत्वाभावात् । अन्यथातवमतेपिसदसद्विलक्षणमित्याकाराप्रतीतिःस्यात् । बाधकालेत्विष्टापत्तिरित्याह ॥
[४३।१।३] अन्यथेति ॥ [४३।१।७] प्रथमोपस्थितत्वादिति ॥ अभावापेक्षयाभावस्यप्रथमंबुद्धिस्थत्वात् ॥ [४३।१।७] कल्पकत्वादिति ॥ भावप्रयोज
ककल्पनानंतरमभावेनजिज्ञासाभवतीतिभावप्रयोजककल्पनाभावेप्रयोजकस्यकल्पिकाभवतीत्यर्थः ॥ [४३।१।८] बाधप्रतीत्योरिति ॥
नचप्रतीतौनसत्त्वंतंत्रं । उभयमतेपिरूप्येऽभावादितिवाच्यं । रूप्यएवसत्त्वस्यप्रतीत्यापाद्यमानत्वात् । तदिदमाह ॥ [४३।१।९] सत्त्वा
[४२।१।१०] त्प्रतीतिरिति ॥ नन्वसत्त्वंनबाधेप्रयोजकं । नृशृंगादावसत्त्वेपिवाधादर्शनादित्यतआह ॥ नृशृंगादाविति ॥ यथातवम
तेनृशृंगादावबाध्येबाधप्रयोजकत्वेनाभिमतस्यसद्वैलक्षण्यस्यसत्त्वेपितस्ययथाबाधंप्रतिप्रयोजकत्वाक्षतिः तथाऽसत्त्वस्यनृशृंगा
दौसत्त्वेपिनक्षतिरित्यर्थः ॥ ७ ॥ ७ ॥ अनिर्वाच्यसाधकख्यातिबाधान्यथानुपपत्तिभंगः ॥ ६१ ॥ ७ ॥ [४३।१।१५] प्रागभावा
दीति ॥ यस्तुप्रागभावादिदशायांघटादेस्तत्प्रतियोगित्वमेवनास्तीत्याक्रोशतिसतुशास्तायदूनांभविता । कंसवधाख्यानमित्या
दिवचःश्रावणीयः । योपिचानागतवर्तमानातीतावस्थाःक्रमेणाविर्भावयंस्तिरोभावयंश्चानिर्वाच्योघटःकालत्रयेप्यनुस्यूतइत्याह
सतुकरकेभग्नेपातुंकरकांतरंनाददीत ॥ [४३।१।१६] सत्त्वस्येति ॥ ब्रह्मणिबाधप्रसंगस्त्वसद्विलक्षणत्वस्यबाध्यत्वेतंत्रत्वेपिसमानइति
भावः । नन्वनिर्वाच्येपिसत्त्वमस्ति । न । बाधानुपपत्तेः । पारमार्थिकसत्त्वाभावाद्बाधोभविष्यतीतिचेत् तर्हिपारमार्थिकस

त्त्वाभावरूपमसत्त्वमेववाध्यत्वात्सिद्धं ॥ अन्यथेति ॥ कुत्रचित्सतएवान्यत्रसत्त्वमितिकल्पने ॥ सत्त्वंचेति ॥ युक्तमित्यनेनसंवध्यते । भ्रमविषयोपिप्रामाणिकइत्यतआह ॥ नहीति ॥ दुष्टेति ॥ दोषयुक्ता । तस्यांदुष्टसामग्र्यांसत्यांशृंगानुपलंभोनास्तिशृंगस्यैवोपलंभात् । शृंगानुपलंभनेसाशृंगोपलंभकसामग्रीनास्ति । तथाचयोग्यतायांनानुपलब्धिरनुपलब्धौचनयोग्यतेत्यर्थः ॥ शृंगानुपलब्धिरिति ॥ नचैवंशृंगाभावग्राहिण्येवयोग्यता नतुशशशृंगाभावस्येतिवाच्यं । शृंगसामान्याभावग्रहसामग्र्याएवविशेषाभावग्रहसामग्रीत्वात् ॥ अभावप्रत्यक्षत्वइति ॥ अन्योन्याभावस्यात्यंताभावस्यच । ननुशृंगाभावग्रहसामग्र्यैवकथंशशशृंगाभावग्रहइत्यतआह ॥ कथमन्यथेति ॥ प्रतीतिवलादेवतथाकल्प्यतइत्यर्थः । प्रतीतेरन्यथासिद्धिमाशंक्यनिराकरोति ॥ नचशशइति ॥ शशशृंगशब्दस्यशशेशृंगमित्यर्थत्वेशशशृंगोल्लिखिताभूरित्यादावपिविशकलितपदार्थसत्त्वादप्रसिद्धिर्नस्यात् ॥ गवीति ॥ शशान्वितशृंगस्यगविनिषेधप्रतीतेः । अन्यथागोपदार्थानन्वयप्रसंगात् । एतेनगवाधिकरणकशृंगेशशीयत्वंनास्तीत्यर्थः । तेननगोपदार्थानन्वयइतिनिरस्तं । गोरेवाधिकरणत्वप्रतीतेः ॥ भूतलइति ॥ भूतलेघटसंसर्गविशेषोसन्नेवयोनिषिध्यतेतथाशशेपिशृंगसंसर्गोसन्नेवेत्यर्थः । ननूभयत्रापिघटमात्रंशृंगमात्रंचनिषिध्यतामित्यतआह ॥ अन्यथेति ॥ शब्दाभासेति ॥ एतच्चोपलक्षणं । शृंगेशशीयत्वग्रहस्यैवशशीयत्वावच्छिन्नशृंगग्रहत्वात् ॥ संसर्गाभावोविषयइति ॥ ननुयन्निवंधनायत्प्रतीतिस्तदभावनिवंधनैवतदभावप्रतीतिः । इहचघटास्तित्व

प्रतीतिःसंयोगनिबंधनेतितद्भावप्रतीतिःसंयोगाभावनिबंधनैव । सचसंयोगस्तात्विकएवेत्यतआह ॥ [४२२।२६] भूतलेघटोस्तीति ॥ नहिभूतलेघटोस्तीतिबुद्धिःसंयोगमात्रविषया । किंतुभूतलघटसंयोगविषया अतोऽभावधीरपितत्संयोगविषयैव । सचसंयोगो सन्नेव । तदिदमुक्तं ॥ [४२२।२६] तत्संबंधेति ॥ [४२२।२६] तदभावेतिच ॥ [४२३।२] प्रागभावादिर्नसिध्येदिति ॥ नास्तिनष्टोनभविष्यतीतिविलक्षणव्यवहारोपितत्तत्कालरूपविशेषणवैलक्षण्यादितिभावः ॥ [४२३।३] संसर्गस्येति ॥ अतएवभूतलेघटोनास्तीतिधीः । अन्यथाघटो नास्तीत्येवस्यात् ॥ [४२३।७] अन्यएवेति ॥ अत्रएवशब्दात्परंवाशब्दानुषंगः । तेनपक्षत्रयंबोध्यं ॥ [४२३।१०] नद्वितीयइति ॥ द्वितीयतृतीय समुदायेद्वितीयशब्दः ॥ [४२३।११] इष्टेति ॥ असत्त्वात्संयोगस्य ॥ [४२३।११] दंडइति ॥ दंडीनास्तीतिबुद्धिंप्रतिविशेषणासंकीर्णविशेष्यस्याभावप्रतियोगित्वानुभववदिहसंयोगासंकीर्णस्यघटस्याभावप्रतियोगित्वाननुभवात्संयोगमात्रस्यैवाभावप्रतियोगित्वंकल्प्यतइत्यर्थः । क्लृप्तैरित्यादिनातृतीयपक्षनिराकरणं ॥ ७ ॥ ७ ॥ अनिर्वाच्यसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभंगः ॥ ६२ ॥

॥ ७ ॥ [४२३।१५] पंचभूतेति ॥ पृथिव्यप्तेजांसिसच्छब्दानिवाय्वाकाशावसच्छब्दौ ॥ [४२३।१५] अप्रसक्तेति ॥ नचनोसदासीदित्यनेनसद्भिन्नत्वेउक्तेऽसत्त्वस्यप्रसक्तिरितिवाच्यं । श्रुत्याप्रसक्तस्यश्रुत्यानिषेधायोगात् । अन्यथाषोडशिग्रहणेविकल्पोनस्यात् । अतएव ॥२६८॥ नतौपशौकरोतीत्यत्रनञःप्रतिषेधार्थत्वेस्थितेतस्यप्राप्तिपूर्वकत्वादाज्यभागयोश्चपशौशास्त्रादन्येनप्राप्तेरभावाच्छास्त्रप्राप्तस्यच

सर्वथानिषेधायोगात्तशावाच्यभागयोर्विकल्पइतिदशमेभिहितं । असतोप्रसक्तेर्ननिषेधइतिस्वोक्तिविरोधश्च ॥ तदानीमित्य
स्येति ॥ असतःसदासत्त्वात् । नचतदानीमित्यस्यरजःप्रभृतिभिरन्वयइतिवाच्यं । सच्छब्दस्यपंचभूतपरत्वेतदानीमित्यस्य
सर्वान्वयेनवाक्यार्थसंभवेप्रक्रमभंगकल्पनायोगात् । अतएवतदानींप्रलयकालेवस्थितंतदस्यमूलकारणंतन्नासदित्यादिनातदा
नींशब्दस्यासंदाद्यन्वयोमाधवीयभाष्येभिहितः । सच्छब्दस्यप्रसिद्धसत्यपरत्वेदोषमाह ॥ नोसदिति ॥ नचनासदासीदित्यस्य
पारमार्थिकसत्यपरत्वेनव्यावहारिकसतोरजःप्रभृतेर्निषेधस्यततःप्राप्त्यभावइतिवाच्यं । तर्हिप्रातिभासिकनिषेधार्थमन्यद्वाच्यं
स्यात् ॥ ब्रह्मापीति ॥ नन्वतदेकंब्रह्मसदासीन्नतुसदसद्विलक्षणमासीदित्यर्थे नब्रह्मणोनिर्वाच्यत्वप्रसंगइतिवाच्यं । तर्हितद
नंतरवाक्याभिहितेतमसिसदादिवैलक्षण्याभावएवसन्निधानादन्यायेन । नतुसदादिवैलक्षण्यं ॥ ७ ॥ श्रुत्यर्थापत्तिभंगः
॥ ६२ ॥ ७ ॥ असदेवरूप्यमभादितीति ॥ नचासदात्मनासदभादितिबाधस्याकारःस्यादितिवाच्यं । एकदेशबाधेनैववि
शिष्टबाधसंभवात् ॥ विमतमित्यादि ॥ नचाद्यानुमानेशब्दैकसमधिगम्यत्वं द्वितीयतृतीययोश्चपरोक्षत्वमुपाधिरितिवाच्यं ।
प्रथमोपाधौशाब्दज्ञानानुव्यवसायविषयेनृशृंगादौद्वितीयेतथाविधानुव्यवसायादौसाध्याव्याप्तेः । उपाधिमतिब्रह्मणितज्ज्ञाने
वासाध्याभावादप्रयोजकत्वंच ॥ इदमंशानिष्ठत्वेनाग्रहइति ॥ रूप्यतादात्म्येरूप्यत्वसंसर्गेचेदमंशनिष्ठत्वमसदेवेत्यर्थः ॥
इष्टाभेदेति ॥ पुरोवर्तिनीष्टाभेदस्यासत्त्वात् । भेदाग्रहस्यत्वप्रयोजकत्वात् ॥ सन्मात्रेति ॥ नचव्यधिकरणप्रकारकत्वेना

प्रामाण्यमितिवाच्यं । व्यधिकरणप्रकारकत्वंहितदुल्लेखित्वंवातस्यज्ञानेनस्वरूपसंबंधोवा । उभयमप्यव्यधिकरणंप्रकारंव्यधि करणत्वेनोल्लिखतिज्ञानेप्यस्ति । तस्मात्तथाविधप्रकारस्यपुरोवर्तिनिष्ठत्वेनग्रहणमेवव्यधिकरणप्रकारकत्वं । तच्चासदेवेत्यस द्विषयसत्तानिश्चयत्वेनैवाप्रामाण्यमितिवयमालोचयामः ॥ [४३४।५]तस्यापीति ॥ तद्वैशिष्ट्यविषयकत्वावच्छेदेनैवविशेषणज्ञानस्यज नकत्वादित्यर्थः ॥ [४३४।६]उक्तत्वादिति ॥ इदंचरूप्यंचजानामीतितदाकारापत्तेरुक्तत्वात् ॥ [४३४।६]निष्प्रकारकत्वेनेति ॥ विशेषणज्ञा नजन्यत्वाभावान्निष्प्रकारकत्वापातेनेत्यर्थः ॥ ७ ॥ स्वाभिमतान्यथाख्यातिसमर्थनं ॥ ६४ ॥ ७ ॥ [४३४।७]तथात्वइति ॥ ननूत्पादादिप्रतीतिरियंभ्रांतिकालेआपाद्यतेबाधसमयेवा । नाद्यः । पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतयाग्रहस्यैवप्रतिबंधकत्वात् । नद्वितीयः । अत्यंताभावग्रहस्यैवप्रतियोगिग्रहइवैतदुत्पादादिग्रहेप्रतिबंधकत्वात् । नहितदत्यंताभावाधिकरणत्वेनप्रतीतेउ त्पादविनाशप्रतीतिरस्ति । मैवं । इदानीमुत्पन्नरूप्याभेदेनेदंविशिष्टरूप्येउत्पत्त्यादिप्रत्ययस्यचोदितत्वात् । समारोप्यधर्मस्यै वविषयेप्रतीतेश्च । उत्पादादिप्रत्ययेनैवात्यंताभावप्रतीतिप्रतिबंधसंभवेनबाधासिद्धेश्च । नहितदुत्पत्त्यधिकरणेतदत्यंताभाव धीरस्ति ॥ [४३५।१]पारमार्थिकत्वस्यापीति ॥ ननुनप्रतीतिकालप्रतीतंपारमार्थिकत्वंनिषिध्यते किंत्वन्यत्रवृत्तेरेवेतितेनाकारेणरज तस्यैवनिषेधइतिचेन्न । येनाकारेणानिषेधस्तेनरूपेणप्रतियोगिप्रसक्तौपारमार्थिकत्वस्यरूप्यतुल्यत्वात् । नचव्यधिकरणधर्मा वच्छिन्नाभावप्रतीतौनविशिष्टप्रसक्तिरुद्देश्या । प्रत्येकप्रसिद्ध्यैवतत्प्रतीत्युपपत्तेरितिवाच्यं । तथापिनिषिध्यमानस्यनिषेध्यताव च्छेदकवैशिष्ट्येनप्रतीतिंविनानिषेधायोगेननिषिध्यमानस्यानिर्वचनीयस्यतदवच्छेदकपारमार्थिकत्ववैशिष्ट्यज्ञानमवर्जनीयमिति

पारमार्थिकत्वमपिरजततुल्यमेव ॥ [४२४।१०] नेहनानेति ॥ प्रातिभासिकनिषेधस्यव्यावहारिकविषयत्वेव्यावहारिकनिषेधस्यतात्विक
विषयत्वंस्यात् ॥ [४२४।११] तस्येति ॥ आपणस्थरूप्यस्य । ननुभ्रमेणैवतत्प्रसक्तिरस्त्वित्यंतआह ॥ [४२४।११] अन्यथेति ॥ नन्वप्रसक्तस्यैवाप
णस्थरूप्यस्यनिषेधोस्तु तथापिनातिप्रसंगइतिशंकते ॥ [४२४।११] आभासस्येति ॥ यत्प्रतीतमितिप्रतीतिनिषेधयोर्वैयधिकरण्यस्य
त्वयांगीकृतत्वात्तवतत्सामानाधिकरण्यप्रतीतिविरोधइत्यर्थः ॥ [४२४।१२] प्रतिपन्नेति ॥ शुक्तौप्रतीतरूप्यस्यानिषिद्धत्वात् ॥ [४२४।१२] प्रसक्ते
स्येति ॥ नचतस्यस्वरूपेणनिषेधेतस्यासत्त्वापत्तिः । इष्टत्वात् ॥ [४२४।१३] निषेधसंभवइति ॥ निषेधज्ञानजनकप्रतियोगिप्रसक्तिवि
षयस्यैवाभावप्रतियोगित्वात् । एतेनस्मृतिरूपाप्रसक्तिःसंभवतीतिनिरस्तं । नन्वधिकरणेनिषेध्यारोपंविनैवप्रतियोगिस्मरणा
धिकरणानुभवादिनैवनिषेधज्ञानमस्त्वित्यतआह ॥ [४२४।१४] अनारोपेति ॥ अन्यथातस्यबाधत्वानुपपत्तेः । तदुक्तं प्रसक्तप्रतिषेधा
त्माबाधोख्यातौनयुज्यतइति ॥ [४२४।१५] तत्रापीति ॥ अनाभासेपि ॥ [४२४।१६] निषेधस्यप्रसक्त्यर्थमिति ॥ निषेधोपपादकप्रसक्त्यर्थं
॥ [४२४।१६] त्वन्मतइति ॥ अन्यथाख्यातिभयादितिभावः ॥ [४२४।१६] तदारोपमिति ॥ स्मर्यमाणघटारोपंविना । नन्वाभासस्यप्रसक्त्याऽ
नाभासस्यप्रसक्तिः । किमिदंरजतमित्याकारेणवारजतमित्याकारेणवा । नाद्यइत्याह ॥ [४२४।१७] आभासइतीति ॥ इदंरजतमित्य
प्रसक्तेः । द्वितीयमाशंक्यनिराकरोति ॥ [४२४।१८] नचेति ॥ ननुशुक्तिरूप्यस्यापणस्थरूप्येणप्रातीतिकस्यसामान्यस्याभावेतदर्थिप्रवृ

त्यनुपपत्त्यातदुभयसामान्यमेकमावश्यकमितिप्रतियोगितावच्छेदकप्रकारकंज्ञानंप्रतियोग्यविषयकमप्यभावप्रतीत्युपयुक्तंसंवृत्तमितिमैवमित्याह ॥ [४३४।१८] आभासेति ॥ उभयानुगतसामान्यंकिमाभासएववाऽनाभासएववोभयावच्छेदेनोभयरूपंवा । नाद्यौ । उभयोराभासत्वस्यानाभासत्वस्यवाऽऽपातात् । नतृतीयः । दृष्टविरोधादविभ्यतैकमनुगतंरूप्यमेवतथेतिस्वीकर्तव्यत्वात् । तेनसामान्येनापणस्थरूप्यस्यैवपुरोवर्तिनिप्रतीतिसंभवाच्च । प्रवृत्तिंप्रतितुनरूप्यत्वसामान्यंहेतुः । किंतुरूप्यज्ञानमेव । नन्वाभासानुगतसामान्याभावेप्यनाभासस्यरजतत्वसामान्यप्रत्यासत्त्याभानमस्तु । नचान्यथाख्यात्यापत्तिः तस्यस्वरूपेणैवभानात् । पुरोवर्तितादात्म्येनभानस्यान्यस्यानिर्वचनीयत्वादित्यतआह ॥ [४३४।१९] फलबलेनेति ॥ अतिप्रसंगः सार्वज्ञादिप्रसंगः ॥ [४३४।२०] सकर्तृकत्वस्येति ॥ नचेष्टापत्तिः । जीवस्येश्वरस्यवातत्कर्तृत्वासंभवात् । ननुभट्टमतेक्षित्यादेरकर्तृकत्वेपिसोपादानत्ववद्रूप्यस्यापितथास्त्वित्यतआह ॥ [४३४।२०] अविद्येति ॥ सोपादानत्वेप्यज्ञानोपादानत्वंनाध्यस्तस्यसंभवतीत्याह ॥ [४३४।२१] इदमिति ॥ [४३४।२२] तदनन्तुविद्धस्येति ॥ एतेनशुक्त्यज्ञानमन्वयव्यतिरेकाभ्यांकारणमितितदेवोपादानमितिनिरस्तं । अन्वयव्यतिरेकयोर्निमित्ततायामुपपत्तेः ॥ [४३४।२२] परोक्षधीरिति ॥ नचप्रमातृगताज्ञाननाशेपिविषयगतंतदस्तीतिवाच्यं । पीतभ्रमकालेशंखेश्वैत्यासिद्ध्याश्वेतार्थिप्रवृत्त्यनुपपत्तेः । भ्रमानुत्पत्तिप्रसंगेइष्टापत्तिंपरिहरति ॥ [४३४।३५] अयंघटइत्यत्रेति ॥ ननुयदाघटत्वंपटत्वविरुद्धतयावगतंतदातद्दर्शनंविरोधिदर्शनमेवेतिकथंनेष्टापत्त्यवकाशः । यदाघटत्वस्यपटत्वविरुद्धतयानज्ञानंतदाघटत्वज्ञानेनतदज्ञानना

शेपिपटत्वविरुद्धत्वाज्ञानस्यसत्त्वात्तदुपादानकएवभ्रमइत्यतआह ॥ [४२४।२६] युक्तैवेति ॥ घटत्वस्यपटत्वविरुद्धतयावगमेपिपुरोवर्ती
दंत्वपटत्वयोर्विरुद्धत्वानवगमादाप्तिगौरवादयंपटइतिवाक्याभासात्पुरोवर्तिनिपटत्वबुद्धेरनुभवसिद्धत्वात्सायुक्तैव ॥ [४२४।२६] साक्षि
वेद्यइति ॥ नचाज्ञानस्यसुखादीनांचस्वरूपेणसाक्षिवेद्यत्वेपिज्ञानाभावभिन्नत्वेदुःखाभावभिन्नत्वादिनानतद्वेद्यत्वं । किंत्वनु
पलब्धिवेद्यत्वं । तथाचतदज्ञानमेवभ्रमोपादानमितिवाच्यं । अज्ञानत्वस्याभावविलक्षणत्वादिरूपतयाऽज्ञानत्वेनावगतेऽज्ञा
नेसुखत्वस्यानुकूलत्वादिरूपतयासुखत्वेनावगतेचसुखादौज्ञानाभावदुःखाभावत्वाद्यारोपस्यानुभूयमानत्वात् ॥ [४२५।१] परोक्षेति ॥
नचपरोक्षाध्यासंप्रतिप्रमातृगताज्ञानमेवोपादानं तच्चपरोक्षज्ञानेनापिनिवर्ततइतिवाच्यं । श्वैत्यानुमित्याप्रमातृगताज्ञाननाशे
सतिशंखेपीताध्यासोनस्यात् ॥ [४२५।२] रूप्यंदृष्ट्वेति ॥ ननुरूप्यतद्धियावुदीच्यज्ञानेनस्वोपादानेप्रविलीयेते । उपादाननिवृत्तिःपरं
नभवति । अधिष्ठानतत्वज्ञानाभावात् । रूप्यबुद्ध्यंतरोत्पत्तिस्त्विदमाकारांतःकरणवृत्तिसद्भावेऽनुत्पन्नाधिष्ठानेतत्वसाक्षात्का
रस्यभवत्येव । तदभावेतुतद्विलंबादेवविलंबइति । मैवं । प्रविलयःकिंध्वंसोवापिशाचादिवत्तिरोधानंवा । आद्येतस्यपुनरुत्प
त्त्यसंभवात्तज्ज्ञानासंभवः । नद्वितीयः । पिशाचादिवद्रूप्येतिरोधानशक्तेरभावात् ॥ [४२५।५] स्वगोचरेति ॥ स्वविषयव्यवस्थापक
त्वादित्यर्थः ॥ [४२५।५] अर्थेति ॥ भ्रमभिन्नज्ञानस्यैवस्वविषयशूरत्वमित्यर्थः ॥ [४२५।७] तात्विकत्वेति ॥ नचापरोक्षप्रतीत्यांत्रिकालाबाध्य

त्वरूपंतात्विकत्वंनविषयइतिवाच्यं । स्वकालेसत्ताग्राहकस्यत्रिकालेऽसत्त्वाभावग्राहकत्वस्योक्तत्वात् ॥ ७ ॥ ७ ॥ आविद्य करजतोत्पत्तिभंगः ॥ ६८ ॥ ७ ॥ त्वन्मतइति ॥ नन्विदमंशस्याध्यस्तत्वेपिनैदमितिव्यात्मकं । इदंत्वाधिष्ठानस्यचस्वप्र काशत्वात् । नहिवयंसर्वत्राध्यासेव्यात्मकतांब्रूमः । अपित्वंतःकरणवृत्तिसापेक्षाधिष्ठानप्रकाशाइति । मैवं । इदमंशाधिष्ठान स्यस्वयंप्रकाशःइदमंशावच्छिन्नस्यवृत्तिकृतइतिव्यात्मकतास्पष्टैव ॥ स्वाप्नेति ॥ ननुस्वप्नेशुक्तीदमंशरूप्ययोरुभयोरप्यध्यस्त त्वादविद्यावच्छिन्नचैतन्यरूपाधिष्ठानस्यस्वप्रकाशत्वान्नचरूपत्वमितिचेन्मैवं। स्वप्नेइदमंशस्याबाधेनतदंशेउत्कृष्टाऽविद्यावृत्तिः। रूप्यस्यस्वप्नएवबाधेनतदंशेऽपकृष्टासेतिव्यात्मकता अविद्याधिष्ठानचिन्मात्रेस्वयंप्रकाशः स्वप्नाधिष्ठानेऽविद्यावच्छिन्नेऽविद्या वृत्तिप्रयुक्तःप्रकाशइतिचतुरात्मतायादुर्वारत्वात् ॥ चाक्षुषत्वादीति ॥ नचचाक्षुषेदंवृत्त्यवच्छिन्नचैतन्यस्याविद्यापरिणा मत्वेनचाक्षुषत्वोपचारइतिवाच्यं । इदंपश्यामीतिवत्पीतंपश्यामीत्यनुभवेनोपचारकल्पनेमानाभावात् ॥ अध्यस्तत्वनिय मादिति ॥ तथाचनकेवलसाक्षिभास्यत्वमितिभावः ॥ अनवस्थानादिति ॥ नन्वविद्यावृत्तिप्रतिभासकेचैतन्येऽविद्यावृत्तेः स्वतएवोपाधित्वेनवृत्त्यंतरानपेक्षत्वान्नानवस्थेतिचेन्मैवं । अविद्यावृत्तेःप्रातिभासिकतयाप्रतीतिंविनासत्त्वायोगेनतत्प्रतीतौत स्यासत्त्वंसत्त्वेचतस्याउपाधित्वमित्यन्योन्याश्रयात् । ननुज्ञानाकारेणैवसविषयकत्वेसाकारवादापातोतीतविषयवदुपपादने प्यपरोक्षत्वानुपपत्तिरित्यतआह ॥ ज्ञानगताकारेणैवेति ॥ ज्ञानस्वरूपमात्रेणेत्यर्थः । अविद्यावृत्तेःपरोक्षवृत्तिविलक्षणाका रत्वेनार्थंविनाप्यपरोक्षत्वोपपत्तेः ॥ अन्यथेति ॥ दोषाणांस्वाश्रयजन्यएवातिशयाधायकत्वाभावे ॥ पीतत्वेति ॥ पीतत्वा

दिविषयोविद्यावृत्तिरूपोभ्रमःस्यात् ॥ ज्ञानैक्यानुभवविरोधादिति ॥ एकत्वप्रयोगसमर्थनेप्यनुभवविरोधस्यापरिहारात् ॥ एकविषयेति ॥ एकविषयकप्रत्यक्षानुमित्यादीनामप्यैक्यापातादित्यपिबोध्यं ॥ कल्पितस्येति ॥ बाधकालेऽर्थैक्याभावेपिज्ञानैक्यानुभवादित्यर्थः ॥ बाधकालइति ॥ इदंवृत्त्यवच्छिन्नचैतन्यतादात्म्येनाननुभवादित्यपिबोध्यं ॥ भेदधीप्रसंगादिति ॥ नचभेदग्रहसामग्रीभेदान्नभेदग्रहः । कदाचिदपिबाधकालेवृत्तेर्भेदग्रहस्यासिद्धेः । सर्वदाभेदग्रहसामग्रीविरहस्यवक्तुमशक्यत्वात् । यत्तुभ्रमकालेविषयैक्यग्रहनियमवज्ज्ञानैक्यग्रहनियमः । तंविनापिप्रवृत्त्याद्युपपत्तेः । तथाचबाधकालेनतद्भेदग्रहइति । तन्न । नहिप्रवृत्त्यादिप्रतिबंधार्थंवृत्तिभेदग्रहमाचक्ष्महे । किंतुबाधेनार्थयोरिवज्ञानयोरपिभेदग्रहं । अर्थतथात्वव्यवस्थापकत्वाद्बाधस्य ॥ इदंवृत्तेरिति ॥ नन्विदंवृत्तेर्ज्ञातैकसत्त्वेनतदवच्छिन्नचैतन्यविषयकाज्ञानाभावेपीदंवृत्त्यवच्छिन्नचैतन्याश्रितंशुक्त्यवच्छिन्नचैतन्यगोचरमज्ञानमस्त्येव । तथाचेदंवृत्तिराश्रयावच्छेदिका । नतुविषयावच्छेदिकेति । मैवं । अधिष्ठानावरणंविनाऽन्यथाभावरूपविवर्तायोगात् । आवरणंचतद्विषयकत्वंविनानयुक्तमितीदंवृत्तिविषयकाज्ञानस्यैववक्तव्यत्वात् ॥ शुक्तितत्वमिति ॥ ननुशुक्तितत्वाज्ञानस्यैवोभयपरिणामित्वाच्छुक्तितत्वज्ञानेचतदज्ञाननाशाद्रूप्यतद्वृत्त्योर्निवृत्तिरिति । मैवं । अज्ञानद्वयविवर्तत्वोक्त्ययोगात् ॥ रूप्यंप्रतीतेति ॥ रूप्यमुद्दिश्य । ननुमिथ्याभूतशुक्तेर्नाधिष्ठानत्वं । सत्यस्यैवाधिष्ठानत्वात् । मैवं । शुक्तेरपिसत्यत्वात् । त्वन्मतेशुक्त्यवच्छिन्नचैतन्यस्यापिसात्विकत्वाभावाच्च ॥

[४२५।२६] अविद्यावृत्तेरिति ॥ अज्ञाननिवर्तकस्यैवज्ञानत्वादितिभावः ॥ [४२५।२६] परोक्षेति ॥ अविद्यावृत्तिस्तुनज्ञानं । तत्प्रतिफलितचैतन्यमपिपरोक्षाध्यासेनास्तीतिकिंकृतस्तत्रजानामीतिव्यवहारःस्यादित्यर्थः ॥ [४२६।१] अपवादादिति ॥ इदंवृत्तेःसर्वत्रप्रमात्वादविद्यावृत्तेरज्ञानत्वाज्ज्ञानेप्रमात्वनियमएवस्यादित्यर्थः । नचात्रज्ञानपदेनेच्छाजनकवृत्तिरेवविवक्षितेतिवाच्यं । अविद्यावृत्तेर्ज्ञानत्वाभावेइच्छाजनकत्वस्यैवासंभवात् । किंचकिमविद्यावृत्तेर्मुख्यज्ञानत्वंनास्त्यौपचारिकमपिवा । आद्यआह ॥ [४२६।२] विवरणइति ॥ व्याख्यातमेतत् । द्वितीयंत्वविद्यावृत्तावप्यस्तीत्याह ॥ [४२६।३] प्रकाशकेति ॥ इच्छादिविलक्षणवृत्तित्वेनैवचैतन्यप्रतिफलनोपाधित्वात् ॥ [४२६।४] फलैक्येनेति ॥ भासकचैतन्यंफलं ॥ [४२६।६] तदभिव्यक्ताभ्यामिति ॥ एतच्चाधिष्ठानचैतन्यविशेषणं ॥ [४२६।९] एतेनेति ॥ इदंरूप्याधिष्ठानयोश्चितोर्भेदेन ॥ [४२६।१०] क्रमिकयोरिति ॥ एतेननावच्छेदकभेदेनफलभेदः किंतुव्यंजकभेदेनेतिनिरस्तं । तस्य चैतन्यस्य ॥ [४२६।११] अन्यथेति ॥ अतदाकारवृत्तावप्यन्याधिष्ठानचैतन्यप्रतिफलने । ननुयत्रविशेष्यस्यरसनाद्यवेद्यत्वंतत्ररासनस्य रसादेःकथमध्यासइतिविशेष्यांशेव्यावृत्तिरितिभ्रमेवृत्तिद्वयसिद्धिरित्यतआह ॥ [४२६।१३] तिक्तइति ॥ विशेष्योपनयसहकृतंरसनादिविशेष्येविशेषणवैशिष्ट्यंगृह्णातीत्येकमेवज्ञानं । अन्यथामधुरोगुडइत्यादावपिवृत्तिद्वयस्वीकारापत्तिस्तुल्यन्यायत्वादित्यर्थः ॥ ७ ॥ व्यासाद्रिस्रुततकांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यामनिर्वाच्यस्यखंडनं ॥ ७ ॥ ७ ॥ भ्रमस्याद्वैत्यभिमतज्ञानद्वयात्मकत्वभंगः ॥ ६६ ॥ ७ ॥ [४२६।१६] स्वाप्नशुक्ताविति ॥ स्वप्नेबाधाबाधाभ्यामपकर्षोत्कर्षौ । एतेनस्वप्नेपीदमंशस्यना

॥ २७२ ॥

धिष्ठानतावच्छेदकत्वं । तुल्यवदारोप्यत्वात् । किंत्वविद्यायाइतिनिरस्तं । इदमंशस्यतदनवच्छेदकत्वेपिस्वप्नेबाधाभावेनतत्रा
ध्यस्तरूप्यादुत्कृष्टत्वात् ॥ [४२६।१७] पंचमप्रकारेति ॥ नचसंसारकालेसत्त्वस्यायंविभागइतिवाच्यं । मुक्तिदशानुगतब्रह्मसत्त्वासंग्रहा
पातात् । यत्त्वविद्यानिवृत्तौसत्त्वमेवनास्तीतिनतत्संग्रहइति । तन्न । तस्यास्तुच्छत्वापत्तेः । ब्रह्मस्वरूपत्वेत्वसाध्यत्वं ॥ ता
[४२६।१९] त्विकस्येति ॥ ब्रह्मणःशुक्तिरूप्यात्विभागस्यातात्विकत्वेब्रह्मणोपिरूप्यवदतात्विकत्वंस्यात् । क्वचिच्छुक्तिरूप्यादिवेतिपाठः।
सत्वयुक्तः । ननुबाधगम्यत्वंनतात्विकत्वेप्रयोजकं । किंत्वबाध्यत्वं । तच्चनब्रह्मातिरिक्ते । नेहनानेतिश्रुतिविरोधादित्यत
आह ॥ [४२६।२१] अन्यथेति ॥ अस्थूलमनण्वित्यादिप्रपंचाद्विभागश्रुतिः । नेहनानेतिश्रुत्यर्थस्तूक्तः । सत्त्वस्यानुगतस्याभावात्तदवां
तरभेदोनसंभवतीत्याह ॥ [४२७।२] नांत्यइति ॥ ननुसंक्षेपशारीरकेआकाशादौसत्यतातावदेका प्रत्यङ्मात्रेसत्यताकाचिदन्या तत्सं
पर्कात्सत्यताकाचिदन्या व्युत्पन्नोयंसत्यशब्दस्तुतत्रयथाप्रातिभासिकरजतेज्ञातैकसदेकंरजतत्वं लौकिकपरमार्थरजतेचापरंरज
तत्वं तदुभयानुगतंचारोपितानारोपितसाधारणंरजतत्वंरजतशब्दावलंबनं एवमाकाशादावारोपितैकासत्यता । चिदात्मनि
चानारोपितापरा । तदुभयसाधारणीचान्याव्यावहारिकीसत्यतासत्यशब्दावलंबनमित्युक्तत्वेनारोपितानारोपितयोरपिसामा
न्यमस्तीतिचेन्मैवं । उभयानुगतसामान्यस्योभयात्मकतायाविरोधस्योक्तत्वात् । व्यावहारिकंकिमारोपितकोटावुत्कृष्टंवाऽना
पा० १५५ रोपितकोटौवा । आद्येश्रुत्यादेरुत्कृष्टभ्रांतिहेतुत्वं । द्वितीयेअव्यावहारिकस्येति । उभयत्रहिर्भावेचविरोधइतिभावः । अवा

ध्यस्यपारमार्थिकत्वेदोषमाह ॥ [४२७।५]जगद्बाधकस्येति ॥ तथाचजगद्बाधकज्ञानविषयीभूतप्रकारस्यपारमार्थिकत्वंस्यादित्यर्थः
॥ [४२७।६]तदभावादिति ॥ मायायामायिकत्वस्याविद्यायाआविद्यकत्वस्याभावात् ॥ प्रातिभासिके[४२७।७]त्वांचेति ॥ व्यावहारिकत्वा
भावात् ॥ [४२७।८]असाधारणस्येति ॥ तत्तद्देहावच्छेदेननियतस्य ॥ [४२७।८]व्यावहारिकत्वाचेति ॥ प्रातिभासिकत्वाभावात् ॥ त्वयै[४२७।८]
वेति ॥ रूप्यस्यमायिकत्वंवर्णयता ॥ [४२७।९]अर्थगतेति ॥ अर्थेविशेषेसतितन्निबंधनावर्थक्रियाकारित्वतदभावौ ·। नत्वर्थक्रियाका
रित्वतदभावरूपएवार्थेविशेषइत्यर्थः ॥ [४२७।११]आत्माश्रयादिति ॥ स्वप्नांगनालिंगनादौप्रातिभासिकेपिव्यावहारिकार्थक्रियादर्श
नादित्यपिबोध्यं ॥ [४२७।१३]ब्रह्मधीति ॥ अधिष्ठानधीबाध्यत्वादध्यस्तस्य ॥ [४२७।१२]त्वन्मतइति ॥ तथाचब्रह्मपदंव्यर्थं । ननुब्रह्ममात्र
गोचरायाधीस्तद्बाध्यत्वंविवक्षितं । तादृशीचरमवृत्तिरेवेत्याशंक्यनिराकरोति ॥ [४२७।१५]तज्ज्ञानस्येति ॥ विशेष्यमात्रगोचरज्ञान
स्याबाधकत्वादित्याशंक्यनिराकरोति ॥ [४२७।१६]चरमधीति ॥ [४२७।१८]महावाक्येति ॥ तादृशज्ञानस्याप्रसिद्धिरित्यपिबोध्यं ॥ अन्योन्ये
[४२७।२१]तरत्वाभ्यामिति ॥ व्यावहारिकप्रातिभासिकयोरन्योन्यंविद्यमानेयेइतरत्वेताभ्यामित्यर्थः ॥ भेद[४२७।२३]काभावइति ॥ अन्यथा
स्वापेक्षयास्वस्येतरत्वप्रसंगः । ननुव्यावहारिकगतेनेतरत्वेनप्रातिभासिकइतरत्वसिद्धिः प्रातिभासिकगतेनचतेनव्यावहारिके
तत्सिद्धिरिति भेदकाभावेपीतरत्वसिद्धिरित्यतआह ॥ अन्योन्या[४२७।२३]श्रयाचेति ॥ परिच्छेदार्थमुपसंहरन्वक्ष्यमाणमुपक्षिपति 
[४२७।२२]॥ तस्मादिति ॥ ७ ॥ ७ ॥ जात्याद्युक्तबलेक्षणानुमितिसत्सूत्रागमानायतोन्यकारच्छिदसिद्धिपूर्वसकलाभासाक्षपक्षक्षितं ।

ब्रह्मैवेदमितिश्रुतिप्रमुखसन्मातृप्रियत्वच्युतंदृश्यत्वादिकुवादिहेतुवटकंकोवाऽऽद्रियाददिहृत् ॥ १ ॥ विश्वंभद्रमवन्तियद्दि विषदःसत्यंतदित्यादिकंश्रुत्यातर्कमुदर्कएववहुलाभद्रादिशब्दंश्रिता । शंकासिद्धिमहांशुकाहनकशाशंकालवोत्सर्गतःप्रामाण्ये नद्दढेक्षणेनविमतेस्तत्वंचितीवस्थितं ॥ २ ॥ शुकादिदिग्गोभिरपींद्रसंपदोयदिच्छयाकाकणिकाधरीकृताः । सवल्लवीपल्लववेल्लितांगुलिर्मुरांद्विषंस्तुष्यतुमेवचःश्रिया ॥ ३ ॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि । न्यायामृततरंगिण्यांसत्तात्रैविध्यखंडनं ॥ ४ ॥ सत्तात्रैविध्यभंगः ॥ ६७ ॥

नविद्याभीराभीरवगतिबिभत्साभिरबुधाजिगीषाभिःकिंतुस्ववचसिशुश्रुत्साभिरकृषि ।
तरंगिण्याख्यांतांबुधजनघनःसूक्तिसलिलैर्नयेत्पूर्णप्रज्ञोदितनिगमसिद्धांतजलधिं ॥ ५ ॥
सद्योजातजटाजपावनसरिद्गोदावरीतीरतोगव्यूतिर्वसतिःसतांकुलवतामंचापुरीतत्रये ।
व्यासाख्याउपमन्युगोत्रजबुधास्तेष्वास्तयोमुद्गलस्तत्राजायतयेमुरारिचरणाव्यासाभिधानाबुधाः ॥ ६ ॥
तेभ्योजायतविश्वनाथइतियस्सज्ज्ञानरत्नाकरस्तस्मादाविरभूत्सुरद्रुमयशाआचार्यनारायणः ।
रामाचार्यइतीरितस्तदनुजोयस्तत्ववादांबुधेरातानीत्सतरंगिणीमिहपरिच्छेदोयमाद्योपियः ॥ ७ ॥

इतिश्रीव्यासरामाचार्यविरचितायांन्यायामृततरंगिण्यांप्रथमःपरिच्छेदः ॥ १ ॥



श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ श्रीर्भूरितिव्यूह्यनिदर्शयंतीस्वात्मातरात्मानमपींदिरायं । अगूढगूढांगवराःसुरास्तंमयामुरारिंनमयंतुनम्याः ॥ १ ॥ विहंगमानांचभुजंगमानामिनौश्रुतीशौजहितोविरोधं । यमेत्यकैमुत्यनयाविरुद्धश्रुतिश्रितंस्वार्थतयात्रसोर्थः ॥ २ ॥ विश्वनाथाख्यपितरंनारायणपदाग्रजं । पित्राप्तविद्यंचगुरुंनौम्याचार्यकशालिनं ॥ ३ ॥ वेदांतानामखंडार्थपरत्वान्नतेसंसर्गस्यवोधकाः नतरांगुणानांनतमामनंतानामित्याशंकते ॥ [३।१] नन्विति ॥ [३।१] एतदिति ॥ प्रथमपरिच्छेदांतेतस्मादित्यादिनायदुक्तंतदित्यर्थः ॥ [३।१] ऐक्यमिति ॥ एकंपदार्थनिष्ठंअपरमैक्यरूपवाक्यार्थनिष्ठमित्यन्वयः । पदार्थनिष्ठमपिद्विविधमित्याह ॥ [३।३] यथासत्यमिति ॥ जगत्कर्तृत्वादियुक्तस्यपुण्यपापादिविदूरस्यचतत्पदार्थस्यानेवंविधत्वं । पदार्थैनैक्यवोधनासंभवपरिहारायसत्यविज्ञानादिमात्रएवायंतत्पदार्थः । जगत्कर्तृत्वादिकंतुतस्यमायामयंमिथ्याभूतमित्येतदर्थप्रतिपादनपरं तस्माद्वाएतस्मादात्मनआकाशःसंभूतः सोकामयतवहुस्यां तदात्मानंस्वयमकुरुत तस्मात्तत्सुकृतमुच्यतइति यद्वैतत्सुकृतंरसोवैसःइत्यादिवाक्यैरेकवाक्यतापन्नंसत्यज्ञानादिवाक्यंतत्पदार्थंशोधयतीतिकृत्वातत्पदार्थपरमित्युच्यंते । तथा त्वंपदार्थोपिज्ञानादिमात्रएव पुण्यपापादिकंतुतस्यमिथ्याभूतमित्येतदर्थप्रतिपादनपरं ससमानःसन्नुभौलोकावनुसंचरति अनन्वागतंपुण्येनानन्वागतंपापेनअसंगोह्ययंपुरुषइत्यादिवाक्यैरेकवाक्यतापन्नंयोयंविज्ञानमयःपुरुषइत्यादिवाक्यंत्वंपदार्थंशोधयतीतित्वंपदार्थपरमित्यर्थः ॥ निर्भेदार्थनिष्ठत्वंकिंभेदाभावप्रकारकधीजनकत्वंवा । वस्तुतोनिर्भेदोयोर्थसद्बोधकत्वंवा । आद्येदोषमाह ॥ [३।५] भेदाभावेति ॥ [३।६] स्वरूपेति ॥ शुक्तिकामुद्दिश्येदंरजतंवहुमूल्यमित्यादिवाक्य

स्ययथारजतत्वाद्यपेतशुक्तिकापरत्वं तथा एषसर्वेश्वरएषभूताधिपतिरित्यादिवाक्यस्यवस्तुतोयदनेवंविधंब्रह्मतत्परत्वमित्यर्थः । उभयत्रदोषमाह ॥ प्रकृष्टेति ॥ तस्यभेदाभावप्रकारकज्ञानाजनकत्वात्तदर्थस्यचंद्रादेर्भिन्नत्वाच्चेत्यर्थः ॥ पर्यःपावकेति ॥ अनेकप्रातिपदिकार्थपरत्वादस्यालक्ष्यत्वंधर्मिभेदप्रतिपादकस्याखंडार्थत्वायोगादित्यर्थः ॥ तथापीति ॥ घटःकलशइत्यादौसंसर्गाप्रतिपादकेएकार्थपरेऽतिव्याप्तिवारणायापर्यायेति । अप्राप्तयोःप्राप्तिःसंयोगइत्यादिसंयोगलक्षणेऽखंडार्थकेऽव्याप्तिवारणायसंसर्गपदस्यपदार्थसंसर्गपरतयापदार्थसंसर्गागोचरपदार्थस्मृतिहेतुपदसमुदायेतिऽव्याप्तिपरिहारायज्ञानजनकत्वमित्यनुक्त्वाप्रमाजनकत्वमित्युक्तं । तत्रापिनयथार्थत्वप्रवेशः । संसर्गागोचरज्ञानस्ययथार्थत्वनियमात् । निर्विकल्पकपक्षेइंद्रियेतद्वारणायशब्दानामिति । यत्तुवहुवचनेनसंभूयैकार्थप्रतिपादकत्वस्यलाभान्नधवखदिरपलाशाइत्यादावतिव्याप्तिरिति । तन्न । तत्रशक्त्यावालक्षणयावोपस्थितसाहित्यसंसर्गस्यावश्यंप्रतीतेः । प्रकृतपदार्थप्रतियोगिकस्यपदार्थांतर्भूतस्यसंसर्गस्यानुभावकेयौगिकेपंकजादिपदेतिव्याप्तिवारणायवहुवचनं । एकेनापिपदेनप्रकृतिप्रत्ययार्थयोरन्विताभिधानमितिमतेपर्यायपदेष्वतिव्याप्तिवारणायापर्यायशब्दानामिति ॥ तेषामिति ॥ अखंडार्थपदानामपिविशिष्टार्थकत्वात्तेषांप्रातिपदिकार्थमात्रवाचकत्वमसंभवीत्यतस्तत्पर्यवसायित्वमित्युक्तं ॥ संमतवदिति ॥ कोघटइतिप्रश्नोत्तरभूतमयंघटइत्यादिवाक्यंसंमतशब्दार्थः । ननुतत्रापिनममसाध्यसंमतिरित्यतआह ॥ नहीति ॥ प्रश्नोत्तरयोर्वैय्यधिकरण्यप्रसंगेनत्वयापितत्रावश्यंसाध्यस्यांगीकर्तव्यत्वादित्यर्थः ॥ अकार्यकारणेति ॥ मृद्घटःगुणगुणिनोरभेदपक्षेनीलोघटःदेवदत्तस्यघटइत्यादावव्यभिचारा

यक्रमेणविशेषणानि ॥ संसर्गेति ॥ संयोगलक्षणेत्यर्थः ॥ संसर्गप्रतियोगित्वेमेति ॥ संसर्गस्यतात्पर्यविषयत्वेनतदप्रतिपादनेवाक्यप्रामाण्यायोगादित्यर्थः । ननुपदवृत्तिस्मारितातिरिक्तमत्रसंसर्गपदेनविवक्षितं । तथाचापर्यायशब्दानांपदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वंलक्षणं । तथाचनसंयोगलक्षणेऽव्याप्तिः । तत्रसंयोगस्यपदवृत्तिस्मारितत्वात् । संयोगसंसर्गस्यचतत्रापिममतेऽप्रतिपादनात् । अत्रपदज्ञाप्येत्युक्तेऽर्थापत्त्यापदज्ञाप्यमनिष्टसाधनत्वमादायविषंभुंक्ष्वेतिवाक्येऽतिव्याप्तिःस्यात्तद्वारणायवृत्तीति । तथाप्यन्विताभिधानवादिमतेशक्त्याभिहितान्वयवादिमतेचलक्षणयावाक्यार्थभूतसंसर्गस्यवृत्तिज्ञाप्यत्वात्सर्वत्रप्रमाणवाक्येतिव्याप्तिःस्यात्तद्वारणायोक्तंस्मारितेति । आद्यपक्षेकुब्जशक्त्यंगीकारात् । द्वितीयपक्षेचाज्ञातायाएवपदार्थनिष्ठलक्षणायां वृत्तित्वांगीकारान्नसंसर्गस्यपदस्मारितत्वं किंत्वनुभाव्यत्वमित्यतिव्याप्तिपरिहारइति । अत्रब्रूमः । ज्ञेयत्वादिवत्पदवृत्तिस्मारितत्वस्याप्यभिधेयत्वपर्यवसन्नस्यकेवलान्वयित्वेनतदतिरिक्ताप्रसिद्धिः । स्ववृत्तिस्मारितेतिविवक्षायांस्मारितातिरिक्तागोचरप्रमाजनकत्वंकिमतिरिक्तगोचरप्रमाजनकभिन्नत्वंवास्मारितमात्रगोचरप्रमाजनकत्वंवा । नाद्यः । घटःकर्मत्वमित्यादावतिव्याप्तेः । स्वशब्देनगवादिपदंतद्वृत्तिस्मारितायेपदार्थास्तदतिरिक्तोयस्तत्संसर्गस्तद्गोचरप्रमाजनकंयद्गामानयेत्यादिवाक्यंतद्भिन्नत्वाद्घटःकर्मत्वमित्यादिवाक्यस्यशब्दपदस्यप्रमाणशब्दपरत्वेत्वपर्यायेतिव्यर्थं । तवमते आकांक्षादिराहित्येनपर्यायाणामप्रामाण्यात् । नद्वितीयः । सत्यादिवाक्यस्यानुवादकत्वापातेनासंभवात् । तवमतेसत्यादिवाक्यानांविशिष्टशक्तत्वेनतस्यैवपदस्मारिततयाऽखंडस्यस्मारितभिन्नत्वाच्च । तदुक्तंकल्पतरौ । अविशिष्टमपर्यायानेकशब्द

प्रकाशितं । एकंवेदांतनिष्णाताअखंडंप्रतिपेदिरइति । वक्ष्यमाणरीत्याघटशब्दवाच्येकलशशब्दवाच्यत्वसंसर्गपरत्वात्पर्याय शब्दानामतोपर्यायशब्दानामितिव्यर्थमेव । ननुशीतोष्णेत्यादिप्रत्येकमेकैकार्थपरत्वात्संग्राह्यमेवेत्यतआह ॥, नचेति ॥ द्वंद्वावगतभेदवतोखंडत्वायोगात् । तथाचाहुरेकंवेदांतानिष्णाताअखंडंप्रतिपेदिरइति । एकंनिर्भेदमित्यर्थः । नचात्रशीतस्पर्शे पयउष्णस्पर्शःपावकइतिवाक्यद्वयमेव । तत्रचनभेदावगमइतिवाच्यं । चंद्रेकलंकःसुजनेदरिद्रताविकासलक्ष्मीःकुमुदेषुचंचला । मुखंप्रसादःसधनेषुनित्यंयशोविधातुःकथयंतिखंडितमित्येकस्मृत्युपारूढानांचंद्रादीनांवहुत्वान्वयवदिहाप्यन्वयोपपत्तेः ॥ यौगिकाश्चेति ॥ औपगवादिवनाद्यर्थानांविशिष्टरूपत्वान्नाखंडत्वं. । अतःश्यामादिवाक्यंनाखंडार्थमतोनलक्ष्यं । लक्षणवाक्यत्वाच्चुत्वद्रीत्यापदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकंचेतितत्रातिव्याप्तिरित्यर्थः ॥ प्रकृष्टादीति ॥ प्रकृतपदार्थसंसर्गरूपयोग्यतादिमतएववाक्यत्वाद्वाक्यत्वाखंडार्थत्वयोर्विरोधेनैकत्रासंभवइत्यर्थः ॥ असंभवादिति ॥ चंद्रब्रह्मादिशब्दानामज्ञातज्ञापकत्वायसंसर्गप्रतियोगित्वेनैवचंद्रब्रह्मादिज्ञापकतयाएकप्रातिपदिकार्थपर्यवसानाभावादित्यर्थः । ननु प्रातिपदिकार्थस्यैकत्वंनामस्वांतर्गणिकभेदशून्यत्वरूपमेकमात्रव्यक्तिकत्वंन । किंत्वेकधर्मावच्छेदेनवृत्तिविषयत्वं । तच्चसंसर्गप्रतियोगिन्यपिचंद्रादावस्त्वेव । अतएवौपगवादिवाक्यमप्यखंडार्थमेवेतिनतत्रातिव्याप्तिः । मैवं । विशिष्टस्याप्यखंडत्वांगीकारेऽविशिष्टमखंडमितित्वन्मतहानिः । ब्रह्मतद्गुणानामभेदेनब्रह्मत्वाद्येकधर्मावच्छेदेनोपस्थितैकप्रातिपदिकार्थेसगुणब्रह्मणिसत्यादिवाक्यपर्यवसानरूपाखंडार्थत्वस्यममानिष्टत्वाभावाच्च । अनंताखंडशुद्धादिशब्दानामपर्यायत्वाभावात्तेषूक्तलक्षणा

व्याप्तिरित्यभिसंधायाह ॥ प्रवृत्तीति ॥ तद्भेदइति ॥ इह अनंतादिशब्दे । सत्यादिशब्दप्रवृत्तिनिमित्तापेक्षयाभिन्नंस्वतात्पर्यधर्मिसमसत्ताकंप्रवृत्तिनिमित्तंनास्तीत्यर्थः । अनंतादिशब्दानांप्रवृत्तिनिमित्तमेवासंभवि दूरेतद्भेदइत्याह ॥ अनंतत्वादीनामिति ॥ अन्यत्रेति ॥ तत्रानंतत्वस्यप्रातिभासिकत्वेनोक्तविधत्वाभावादित्यर्थः ॥ अनंतादीति ॥ गंगापदलक्षितेगंगात्वसिद्धिवदनंतादिपदलक्षितेशुद्धेऽनंतत्वाद्यसिद्धिः । अनंतादिशब्दानांशुद्धेलक्षणानंगीकारेऽनंतत्वसंसर्गस्यानंतादिशब्दैः शुद्धेबोधनेनतेषुसुतरामव्याप्तिरितिचकारार्थः ॥७॥७॥ व्यासाद्रिसृततर्कांबुपूरैःपक्षयुगंयुजि ॥ न्यायामृततरंगिण्यांनाखंडार्थत्वलक्षणं ॥७॥ अखंडार्थत्वलक्षणभंगः ॥१॥७॥ प्रत्यक्षादिनेति ॥ निर्विकल्पकस्याप्रामाणिकत्वादितिभावः । यत्तुप्रमात्वंसंसर्गागोचरवृत्तिसकलप्रमावृत्तित्वादभिधेयत्ववदितिसामान्यतस्तत्प्रसिद्धिरिति । तन्न । अप्रयोजकत्वात् । विशेष्याविषयवृत्तित्वस्यापिततएवसुसाधत्वेनाभाससाम्याच्च ॥ असिद्धिश्चेति ॥ सत्यत्वादेर्जातिरूपस्यघटादावलिव्याप्त्याऔपाधिकस्यलक्ष्येब्रह्मण्यसंभवेनातात्विकस्यानात्मन्यतिव्याप्त्यालक्षणत्वायोगेनसत्यादिवाक्येलक्षणवाक्यत्वासिद्धिरित्यर्थः ॥ अतिरेकेपीति ॥ नचैतावतास्थायित्वास्थायित्वव्यवस्थास्यान्नस्वरूपादिरूपेतिवाच्यं । स्थायिधर्मस्यैवस्वरूपांतर्गतत्वात् । यथोक्तं यावद्वस्तुनभेदवदिति । यावद्धर्मिस्थायिनिधर्मेभेदाभेदौनस्तः । किंतुसविशेषाभेदइत्यर्थः । पार्थिवरूपादौस्वरूपलक्षणत्वंनैवेष्टं ॥ वक्ष्यमाणेति ॥ सामान्यतोपिचंद्रादेर्ज्ञानाभावेतद्बुभुत्सासंशयादिनस्यादितिवक्ष्यमाणरीत्या । नचज्ञानमात्रेऽस्यद्वारत्वाभावेपिसंशयादिनिवर्तकतज्ज्ञानेद्वारत्वमितिवाच्यं । विषयविशेषानवगाहनेपूर्वोत्तरज्ञानयोःसंशयानिवर्तकत्वतन्निवर्तकत्वायोगात् । ननुकिंच

द्रलक्षणमित्यादेरुत्तरेप्रकृष्टादिवाक्येपिचंद्रस्वरूपमात्रंप्रतिपाद्यतेनतुचंद्रधर्मसंयोगोपीत्यतआह ॥ [१।१] नचधर्मइति ॥ यत्तुना
त्रचंद्रस्वरूपपरत्वं किंतुप्रकर्षाश्रयोयःप्रकाशस्तत्स्वरूपपरत्वं । तथाचप्रकर्षोपलक्षितप्रकाशव्यक्तिस्वरूपमात्रप्रतिपादकत्वेना
खंडार्थत्वमेवेति । तत्राप्येतंदेवोत्तरं । नचधर्मइति । धर्मे चंद्रसंबंधिनिधर्मे । स्वरूपमात्रं धर्मस्वरूपमात्रं । तथाचात्रचंद्र
संबंधिधर्मप्रश्नाच्चंद्रसंबंधिप्रकाशएववाच्योनप्रकाशस्वरूपमात्रमित्यर्थः । ननुचंद्रेऽसाधारणधर्मप्रश्नस्यापिचंद्रस्वरूपमात्रप्र
तिपादनपरमुत्तरमुचितं । समानविशेष्यकत्वादित्यतआह ॥ [१।१] नचप्रश्नेति ॥ [१।२] सप्रकारकमिति ॥ ननुनसप्रकारकज्ञानंसंशया
दिनिवर्तकं । भ्रमकालीनानुवृत्ताकारज्ञानस्यसप्रकारकत्वेपिततःसंशयाद्यनिवृत्तेः । किंतुव्यावृत्ताकारज्ञानमेव । ज्ञानस्याज्ञा
नसमानविषयकत्वेनैवतन्निवर्तकत्वं । अज्ञानविषयश्चशुद्धंब्रह्म । अज्ञानकल्पितस्यतदितरस्याज्ञानविषयत्वायोगात् । तथा
चशुद्धब्रह्माकाराचित्तवृत्तिर्निष्प्रकारिकैवाज्ञाननिवर्तिका । प्रकारमात्रस्याप्यविद्याकल्पितत्वेनतद्विषयायावृत्तेरविद्यासमान
विषयत्वाभावादिति । मैवं । अनुवृत्तव्यावृत्ताकारयोःस्वरूपमात्रत्वेऽनुवृत्ताकारज्ञानादपिसंशयादिनिवृत्तिप्रसंगः । अंन्य
थाव्यावृत्ताकारज्ञानादपिसानस्यात् । तयोःस्वरूपातिरेकेतुनज्ञानाज्ञानयोःसमानविषयत्वं । अनृतप्रतिषेधकव्यावृत्ताकार
स्याज्ञानाविषयत्वाच्च । प्रत्युतानुवृत्ताकारस्यैवजगद्भ्रमाधिष्ठानशुद्धचिन्मात्रतयातस्यैवाज्ञानविषयत्वमतोऽनुवृत्ताकारवृत्तिरे
वाज्ञाननिवर्तिकास्यात् ॥ [१।४] संसृष्टरूपइति ॥ नचसंसर्गरूपेपदार्थेव्यभिचारः । संसर्गरूपस्यापिसंयोगादेःसंबंधांतरेणसंसृष्ट
त्वात् । पदार्थेमुख्यतात्पर्याभावाच्च ॥ [१।५] संसर्गरूपेइति ॥ संसर्गनिरूपकइत्यर्थः । अतोनसंसृष्टरूपेपदार्थेव्यभिचारः । तत्र

तात्पर्याभावाच्च ॥ प्र[१०]माणवाक्यत्वादिति ॥ नचप्रमाणवाक्यत्वस्याबाध्यपरत्वमात्रेणप्रमितिविषयपरत्वमात्रेणवोपपत्तौवि शिष्टसाध्यस्यतत्रातंत्रत्वेनाप्रयोजकतेतिवाच्यं । पदार्थाबाधस्यतत्प्रमितेश्चाप्रमाणवाक्येपिसत्त्वेनसंसर्गाबाधप्रमित्योरेवप्रमा णवाक्यत्वोपपादकत्वात् । नचालक्षणवाक्यत्वमुपाधिः । लक्षणवाक्यत्वस्यसंसर्गपरत्वव्याप्त्यातस्यव्यतिरेकेव्यभिचारेणानु पाधित्वात् ॥ सं[१०१२]प्रकारिकेति ॥ असंदिग्धप्रकारिकेत्यर्थः । तेनज्ञानमात्रस्यसप्रकारकत्वपक्षेविचारजन्येतिव्यर्थमितिनिरस्तं ॥ सं[१०।३]शयविरोधित्वादिति ॥ अत्रज्ञानत्वमुपस्कर्तव्यं । उक्तसाध्यकरणान्नसंशयविरोधीतिव्यर्थंनवासंशयाभावादौव्यभि चारः । वेदांतेतिसत्यंज्ञानमितिवाक्यजन्येत्यर्थः । अतोनवक्ष्यमाणहेत्वादेरसिद्ध्यादि ॥ ब्रं[१०१५]ह्मनिष्ठेति ॥ ब्रह्मनिष्ठसत्त्वंप्रका रविषयेत्यर्थः ॥ सं[१०।४]शयेति ॥ सत्त्वसंशयेत्यर्थः । अतोनसंशयविरोधीतिव्यर्थं । नचलक्षणवाक्याजन्यत्वमुपाधिः । व्यतिरे केव्यभिचारस्योक्तत्वात् ॥ अ[११।१]संकीर्णत्वस्येति ॥ ननुनव्यावर्तकादिवैशिष्ट्यमसंकीर्णत्वं । किंत्वेकमेवचंद्रस्वरूपंदशाविशेषे विपर्ययविरोधित्वाविरोधित्वाभ्यामसंकीर्णसंकीर्णंचोच्यतइति । मैवं । शंखःश्वेतोनपीतइत्यापरोक्ष्यदशायांयादृशंश्वेतमपी तंवाशंखस्वरूपमस्ति तादृशमेवश्वैत्याद्यनुमितिकालेतद्विपर्ययकालेवाप्यस्तीतिस्वरूपमात्रस्यविपर्ययाविरोधित्वात् । अथश्वै त्याद्यापरोक्षोपहितंविपर्ययविरोधीत्यसंकीर्णमितिचेत् न । तदापरोक्षस्यैवान्वयव्यतिरेकाभ्यांविपर्ययविरोधित्वेनस्वरूपस्यत थात्वात् । अथश्वैत्याद्यापरोक्ष्योपहितंविपर्ययविरोधीत्यसंकीर्णमितिचेन्न । तदापरोक्ष्यस्यैवान्वयव्यतिरेकाभ्यांविपर्ययवि

रोधित्वेनस्वरूपस्यातथात्वात् । विपर्य-विरोधिज्ञानरूपफलोपहितचंद्रस्यप्रश्नोत्तराभ्यामप्रतीतेश्च । नहिप्रकर्षादिवाक्येनता दृशज्ञानंप्रतिपाद्यते । अपितूत्पाद्यते । तस्माद्व्यावर्तकधर्मस्यवाच्यावृत्तेर्वावैशिष्ट्यमेवासंकीर्णत्वं । नकेवलंप्रकृष्टादिवाक्यस्या खंडेतात्पर्याभावः । किंतुसखंडएवतात्पर्यमित्याह ॥ [११।४]एवमिति ॥ ननुप्रकृष्टादिविशिष्टेचंद्रत्वमितिनतात्पर्यं । किंतुयःकश्चि च्चंद्रइत्येवतात्पर्यमित्याशंक्याह ॥ [११।४]तात्पर्यतइति ॥ ननूक्तवाक्यस्यप्रकर्षादिविशिष्टेतात्पर्याभावेपितद्वाक्यात्प्रकर्षादिविशिष्ट एवचंद्रत्वंप्रतीयतेऽतःकथमुच्यतेयःकश्चिच्चंद्रइत्येवबोधःस्यादितीत्यतआह ॥ [११।५]अतात्पर्येति ॥ [११।५]वस्तुतइति ॥ वस्तुतोयोयः कश्चित्तस्यचंद्रत्वंस्यात् । प्रकृष्टत्वादिविशिष्टस्यचंद्रत्वसिद्धिर्याऽनुभवसिद्धासानस्यादितिभावः ॥ [११।६]अखंडइति ॥ अखंडेवि भागांगीकारेतन्नियतभेदस्यापितत्रप्रसक्तिःस्यादित्यर्थः ॥ [११।७]यत्किंचिदित्येवेति ॥ यत्किंचिदितिज्ञानेसत्येवबुभुत्साप्रश्नयोरुद यात्प्रकृष्टादिवाक्यस्यचचंद्रबुभुत्साप्रश्नौप्रतिहेतुभूताज्ज्ञानादनधिकविषयत्वेनतद्वाक्यंचंद्रबुभुत्सानिवर्तकंचंद्रप्रश्नोत्तरंचनस्या दित्यर्थः । एतेनयंथागंगासंबंधित्वविशिष्टेतात्पर्याभावेपिवस्तुगत्यागंगासंबंध्येवतीरंगंगापदेनलक्ष्यतेतथाप्रकृष्टप्रकाशपदाभ्यां वस्तुगत्यास्वार्थाश्रयभूतैवव्यक्तिर्लक्ष्यतेनतुयाकाचिदितिविशिष्टतात्पर्याभावेपिनदोषइतिनिरस्तं । गंगापदाद्गंगासंबंधित्ववै शिष्ट्यस्याप्रतीतेः । प्रतीतौवातत्रापिगंगापदतात्पर्यकल्पनात् । युगपद्वृत्तिद्वयदोषस्यविशिष्टलक्षणयैवपरिहारात् । यत्त्वयंचं द्रइतिलक्ष्यलक्षणभावाभावेपितदुभयप्रतिपादकपदाभ्यामुपस्थितस्यैकस्वरूपस्यैवोद्देश्यविधेयभावसंभवइति । तन्न । प्रकार

० १५६

भेदाभावेनोद्देश्यत्वाद्यसंभवात् । अन्यथाऽद्देश्यमेवविधेयंविधेयंचोद्देश्यमितिस्यात् ॥ [११।०] प्रकारभेदेति ॥ निष्प्रकारकत्वेनसुतरां प्रकारभेदाभावइत्यर्थः । संशयोल्लिखितप्रकारविरोधिप्रकारकनिश्चयस्यैवसंशयविरोधित्वादितिभावः । क्वचिल्लक्षणस्यविधेये नान्वयोस्तीत्याह ॥ [१२।६] अस्तिचेति ॥ ननुपृथिवीशब्देनपृथिवीत्वजातिविशिष्टमजानतःपृथिवीत्वपदेनजातेरुपस्थित्यभावादन न्वयएवस्यादितिपृथिवीत्वजातिविशिष्टेपृथिवीशब्दार्थत्वग्रहोवश्यंप्रागेवश्रोतुर्वक्तव्यः । तथाचवचनवैफल्यमित्यनन्यगत्या जलादिव्यावृत्तगंधसमानाधिकरणजातिमतीपृथिवीत्याद्यर्थेपर्यवसितमुत्तरं । गंधसमानाधिकरणजातिमत्त्वादिकंचनपृथिवी पदवाच्यमितिनोक्तरूपपृथिवीत्वस्यपृथिवीशब्दार्थत्वेनविधेयेनान्वयइति । मैवं । पृथिवीत्वविशिष्टंपृथिवीशब्दार्थइत्यजानतो पिपृथिवीत्वंपृथिवीत्वपदस्यार्थइत्याप्तोपदेशादिनापृथिवीत्वपदेनपृथिवीत्वजात्युपस्थितिसंभवेनतस्याविधेयेनपृथिवीशब्दार्थत्वे नान्वयोपपत्तेः । ननुपृथिवीत्ववैशिष्ट्यस्यपृथिवीशब्दार्थत्वेपृथिवीपृथिवीत्ववतीशब्दयोरेकार्थत्वात्सहप्रयोगोनस्यादित्यतआह ॥ [१२।८] सहेति ॥ पृथिवीशब्दस्यपृथिवीत्ववतीशब्देनेतिशेषः । तच्छब्देन पृथिवीशब्देन । ननुपृथिवीशब्दव्यवहर्तव्यतार्थक त्वेपृथिवीशब्दस्यजहत्स्वार्थलक्षणास्यात् । स्वरूपपरत्वेतुजहदजहल्लक्षणा । तत्रस्वार्थान्वयइतिजहदजहल्लक्षणयास्वरूपपरतैवो चिता । अतएवव्याप्तेश्चसमंजसमित्यधिकरणेसंकरभाष्येप्युक्तं । लक्षणायामपिसन्निकर्षविप्रकर्षौभवति । ॐमित्येतदक्षरमु पासीतेत्यत्रकिमोंकारसदृशमुद्गीथमित्यर्थःकिंवोद्गीथावयवमोंकारमितिविवक्षायांगौण्यांवृत्तौस्वार्थहानेरवयवलक्षणैवज्यायसी

सन्निकृष्टत्वादितीति । मैवं । स्वरूपपरत्वेवैयर्थ्यप्रसंगेनजहल्लक्षणयापिसार्थक्यस्ययुक्तत्वात् ॥ [१३।१] तस्मादिति ॥ चंद्रस्यघटादौनक्षत्रादिभ्योव्यावर्तकशदिमत्त्वस्यचसामान्यतःप्रागेवज्ञातत्वादित्यन्वयः । चंद्रस्यापिघटादित्वाच्चंद्रेपितज्ज्ञानमस्त्येवेतिचंद्रत्वेनव्यावृत्तिव्यावर्तकान्यतरविशिष्टविषयकएवचंद्रप्रश्नादिरित्यर्थः । ननुव्यावृत्तिप्रश्नेप्रकृष्टप्रकाशादिव्यावर्तकधर्मकथनमसंगतमित्यतआह ॥ [१३।२] यत्रयदीति ॥ व्यावृत्त्यापिप्रष्टुाव्यावर्तककथनान्निवर्ततइतिकथनंनासंगतमितिभावः । ननुव्यावृत्तेःप्रश्नेतत्प्रतिपिपादयिषयोच्चारितस्यप्रकृष्टप्रकाशादिशब्दस्यप्रकृष्टप्रकाशादिगुणसंसर्गबोधनेतात्पर्याभावान्नततोगुणप्रतीतिरतआह ॥ [१३।४] व्यावर्तकेति ॥ गुणसंसर्गेपितात्पर्यादित्यर्थः । अन्यबुबोधयिषयोच्चारितस्यान्यत्रकथंतात्पर्यमस्तीत्यतआह ॥
[१३।५] नहीति ॥ [१३।६] नवायागेति ॥ यदाग्नेयोष्टाकपालोभवतीत्यत्रत्यागात्मकयागंविनाष्टाकपालाख्यद्रव्यस्याग्निदेवतासंवंधासिद्धेरग्निर्देवताऽस्येत्याग्नेयइतिद्रव्यदेवतासंवंधाभिधानानुपपत्तेस्तदुपपत्त्यर्थंयागोप्यनेनैवकथितइतिकल्प्यते । एवंचयागवुबोधयिषयोच्चरितस्यापियदाग्नेयादिवाक्यस्यद्रव्यदेवतासंवंधेपितात्पर्यमस्त्येव । साधितंचाग्नेयशब्दस्यगुणपरत्वं । निरस्तंचतस्यकर्मनामधेयत्वंनामधेयपादे । ननुकश्चंद्रइतिस्वरूपमात्रस्यपृष्टत्वाद्वैय्यधिकरण्यायप्रश्नानुसारेणोत्तरणीयत्वात्प्रकृष्टादिवाक्यमपिलक्षणयास्वरूपमात्रपरमितिमंदाशंकापरिहारायोक्तं ॥ [१३।७] कैर्विशेषणैरित्यादि ॥ इतोपिनस्वरूपमात्रप्रश्नइत्याह ॥ [१३।८] असाधारणेति ॥ कश्चंद्रइतिप्रश्नः असाधारणधर्मविषयोभवितुमर्हति तादृशप्रश्नोत्तरसमानोत्तरवत्वात् संमतवत् । नन्वत्रासा

धारणधर्मसूचकपदवत्त्वमुपाधिरित्यतआह ॥ [१३।११] प्रश्नोपीति ॥ प्रकृष्टोवाप्रकाशरूपोवाचंद्रस्यधर्मःप्रकृष्टप्रकाशरूपोवेतिविक
ल्पितधर्मविषयकबुभुत्सासूचककिंशब्दप्रयोगादित्यर्थः । तथाचसाधनव्यापकत्वान्नोक्तउपाधिरितिभावः । ननुकिंशब्दोबुभु
त्सासूचकः नतुनियमेनधर्मबुभुत्सायाइत्यतआह ॥ [१३।११] एतेनेति ॥ किंशब्दस्यैवधर्मबुभुत्सासूचकत्वेनेत्यर्थः । प्रत्युतसाक्षाद्ध
र्मपदसत्त्वेऽनिष्टमित्याह ॥ [१४।१] तथात्वइति ॥ सामान्यतोप्यज्ञानेचंद्रधर्मस्यकश्चंद्रधर्मइतिजिज्ञासाद्ययोगात्कश्चंद्रधर्मइतिप्रश्न
स्यचंद्रधर्मेव्यावृत्तिवैशिष्ट्यंवाव्यावर्तकवैशिष्ट्यंवाविषयः । उत्तरवाक्येचचंद्रेधर्मस्यव्यावर्तकंवक्तव्यं । प्रष्टृप्रतिवक्तृभ्यामपे
क्षितत्वात् । नतुचंद्रव्यावर्तकंप्रकृष्टप्रकाशादिकं । अनपेक्षितत्वादित्यर्थः । प्रश्नेधर्मवाचिपदंनेत्यत्रपरिहारांतरमाह॥[१४।२]चंद्रेति॥
लक्षणाबीजंमुख्यार्थानुपपत्तिंवक्तुमुक्तं सामान्यतइत्यादि । उपक्रमोपसंहारयोरवैयधिकरण्यायतयोरन्यतरत्रलक्षणायावा
च्यत्वेव्याख्यानरूपंप्रबलोपसंहारस्थानीयप्रतिवचनमुख्यत्वायोपक्रमस्थानीयप्रश्नवाक्यएवलक्षणायुक्तेत्यभिसंधायोक्तं ॥ ल
[१४।३] क्षणयावेति॥ वाचकशब्देनचंद्रधर्मस्याप्रश्नान्नचंद्रधर्मस्यलक्षणीयत्वापत्तिदोषः ॥ [१४।३] यद्वेति ॥ नचैवंप्रतिवचनवाक्येपिलक्ष
णापत्तिरितिवाच्यं । कःशूद्रव्यवहारविषयइतिप्रश्नानुषंगेणप्रतिवचनान्वयोपपत्तेर्लक्षणायाअकल्पनात् । अनुमानत्वेनेतिगृ
हीतव्यतिरेकव्याप्तिकंप्रतिप्रश्नप्रतिवचनयोर्वैयधिकरण्यशंकांपरिहरति ॥ [१४।५] चंद्रस्वरूपस्येति ॥ तथाचचंद्रस्याप्रश्नात्तद्व्यव
हारविषयएवप्रश्नोतस्तद्विषयकमेवोत्तरंयुक्तमितिभावः ॥ [१४।६] तज्ज्ञानइति ॥ चंद्रज्ञानेतद्व्यवहारस्यापिकथंचित्सिद्धत्वात्तदर्थं

नवाक्यंप्रयोक्तव्यं ॥ [१४।६] तदज्ञानइति ॥ चंद्राज्ञानेविशेषणज्ञानाभावाद्विशिष्टव्यवहाराज्ञानमित्यर्थः ॥ [१४।७] शृंगेति ॥ तदुक्तं शक्तिग्रहंव्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्यशेषाद्विवृतेर्वदंतिसांनिध्यतःसिद्धपदस्यवृद्धाइति । यत्त्वसाधारणंचंद्रस्वरूपमज्ञात्वातत्रचंद्रशब्दविशेषितव्यवहारवैशिष्ट्यस्यज्ञातुमशक्यत्वात्तज्ज्ञानस्यावश्यकत्वेनतेनैववाक्यप्रामाण्योपपत्तेर्व्यवहारकर्तव्यतापरत्वेमानाभावइति । तन्न । साधारणासाधारणभेदेनचंद्रस्वरूपेद्वैविध्याभावादित्युक्तत्वेनासाधारणधर्मविशिष्टस्यैवासाधारणस्वरूपतयातस्यचशब्दबोध्यत्वांगीकारइष्टापत्तेः ॥ [१४।८] एतेनेति ॥ व्यावर्तकस्यव्यावृत्तेर्वाव्यवहारकर्तव्यतायावावैशिष्ट्यस्यचशब्देनैवबोध्यत्वेनेत्यर्थः ॥ [१४।८] मानांतरेति ॥ चंद्रतद्गतप्रकाशयोर्योग्यत्वेनप्रश्नसमयेप्रत्यक्षेणतदुभयवैशिष्ट्यंसिद्धमित्यर्थः ॥ [१४।८] उपायेति ॥ प्रत्यक्षजन्यविशिष्टसिद्ध्युत्तरंशब्देनस्वरूपमात्रप्रतीतेस्तत्सिद्धौतदुपायइत्यर्थः ॥ [१५।१] मानांतरेणेति ॥ चंद्रप्रातिपदिकार्थत्वप्रकाशवैशिष्ट्ययोःसामानाधिकरण्यग्रहेप्रत्यक्षस्यासामर्थ्यादित्यर्थः ॥ [१५।१] अस्मिन्निति ॥ उपायात्पूर्वकालएवोपेयस्यसिद्धत्वान्नोपायोपेयभावइतिभावः ॥ [१५।६] कल्प्यस्यचेति ॥ ननु ब्रह्मविदाप्नोतिपरं एकधैवानुद्रष्टव्यमित्यादिवाक्यबलात्सत्यत्वादिवैशिष्ट्याविषयकस्यैवब्रह्मविषयकवेदनस्यमोक्षजनकत्वात्तदतिरिक्तबुभुत्साविरहात्तद्विषयकप्रश्नवाक्यस्यकल्पयितुमशक्यत्वेनब्रह्मेत्येववाक्यंकल्प्यतइतिनासिद्धिरितिचेन्मैवं । अथकस्मादुच्यतेब्रह्मेत्यादिश्रुत्याब्रह्मप्रश्नस्यानेकगुणविशिष्टविषयकत्वात् । तमेवंविदित्वातिमृत्युमेतीतितैत्तिरीयश्रुतावेवंशब्देन तमेवविदित्वेतिवाजसनेयश्रुतौचतच्छ

ऽदेनपूर्वोक्तपरामर्शिनासहस्रशीर्षत्वादिविशिष्टविषयकज्ञानस्यैवमोचकत्वोक्तेः । एकधैवेत्यादिवाक्यंतुधर्मधर्मिभेदनिषेधाभि
प्रायं । पतिंविश्वस्यात्मेश्वरंशाश्वतंशिवमच्युतं । नारायणंमहाज्ञेयंविश्वात्मानंपरायणं । नारायणपरंब्रह्मतत्वंनारायणःपरः ।
नारायणपरोज्योतिरात्मानारायणःपरइतितैत्तरीयश्रुतौसहस्रशीर्षदेवंविश्वाक्षंविश्वशंभुवमित्यनुवाकादावुक्तेनसहस्रशीर्षत्वादि
प्रकारेणनारायणांख्यपरब्रह्मणोज्ञेयत्वोक्तेश्च । अत्रश्रुतौध्यायेदितिक्रियाभिप्रायेणद्वितीयानिर्देशइतिमाधवीयभाष्येभिहितं ।
विश्वस्यपालकंआत्मनांजीवानामीश्वरंनित्यमंगलभूतंशरीरतोपिच्युतिहीनंविश्वांतर्यामिणंसर्वाधारंज्ञेयेषुमध्येमुख्यत्वान्महाज्ञे
यंजानीयात् । ननुब्रह्मज्ञानंपुरुषार्थहेतुः । सत्यं । नारायणस्यैवब्रह्मत्वादित्याह । ब्रह्मविदाप्नोतिपरमित्यादिषुयद्ब्रह्माभिहि
तंतन्नारायणाख्यंपरंवस्तु । तत्वमितियदुच्यतेसपरोनारायणएव । यदेतदुत्कृष्टंज्योतिःछंदोगैःपरंज्योतिरुपसंपद्येत्याम्नातं ।
तदपिनारायणएव । तस्मान्नारायणःपरमात्मा । तस्मात्सगुणस्यैवबुभुत्सितत्वात्तस्यैवप्रश्नोतःप्रकारपरमेवसत्यादिवाक्यं ।
कतरइतिप्रश्नधर्मितयासामान्यतोज्ञातआत्मस्वरूपेप्रश्नानुपपत्तेर्धर्मप्रश्नस्यापिकतरःसआत्मेत्यतःप्राक्तनेनकोयमात्मेतिवाक्ये
नसिद्धत्वात्कतरःसआत्मेत्यस्यधर्मविशेषप्रश्नत्वेऽवसितेतरप्रत्यययोगेनप्रश्नस्यनिर्धारणविषयत्वमवगम्यतइतिभावः ॥ [१५।१] इत्या
दाविति ॥ आदिपदेनकतरःसआत्मेत्यस्यप्रतिवचनं येनवापश्यतियेनवाश्रृणोतियेनवागंधानाजिघ्रतीत्यादिसंगृहीतं ।
त्वंपदार्थशोधकंवाक्यं अखंडार्थं अखंडार्थप्रश्नोत्तरत्वादितिपर्यवसितस्यहेतोरसिद्धिरित्यर्थः । ननुयथाधर्मवाचकपदवत्त्वेप्यु 
त्तरस्यनधर्मेमुख्यतस्तात्पर्यंतथाप्रश्नेपिडतमादिप्रत्ययसत्त्वेपिनप्रश्नस्यमुख्यतोजात्यादिविशिष्टार्थकत्वं । किंत्वखंडार्थकत्वमेव ।

अतस्तदुत्तरमपितथेतिनतत्रासिद्धिरिति । मैवं । प्रश्नगतस्यवाप्रतिवचनगतस्यवाधर्मवाचिपदस्यधर्मबोधनेतात्पर्याभावहेतो र्मानांतरविरोधादेरभावात् । नचाखंडार्थज्ञानस्यमोक्षहेतुत्वग्राहकमानविरोधात्तात्पर्याभावइतिवाच्यं । अन्योन्याश्रयात् । सप्रकारकज्ञानस्यमोक्षहेतुत्वेमानस्योक्तेश्च । ननुसखंडार्थप्रश्नोत्तरस्यप्रश्नधर्मिनिष्ठप्रकारनिर्धारणपरत्वेपिनाखंडार्थप्रश्नोत्तर स्यतथात्वमित्यतआह ॥ [१६।१] सर्वस्यापीति ॥ तथाचोत्तरत्वमखंडार्थत्वंचेतिविरुद्धं । अतःसाध्येनवास्वविशेषणेनवाविरोधइ त्यर्थः । नचानिर्धारितनिर्धारणत्वेनैवोत्तरतोपपत्तौनोत्तरस्यतादृग्धर्मपरत्वनियमइतिवाच्यं । प्रकारविशेषनिर्धारणंविनोत्त रस्यानिर्धारितपरत्वायोगात् । धर्मिस्वरूपस्यप्रश्नोपिनिर्धारणादित्युक्तत्वात् ॥ [१६।२] संदेहेति ॥ अन्यत्रादर्शनादिहैवतत्कल्पनेऽ न्योन्याश्रयइतिभावः ॥ [१६।२] यदिचेति ॥ नचासाधारणधर्मवाचकपदवत्त्वेनवानिर्विचिकित्सधर्मिप्रतिपादकत्वेनवोत्तरत्वमिति वाच्यं । चंद्रत्वाद्यसाधारणधर्मवाचकस्यचंद्रादिपदस्यप्रश्नेपिसत्त्वाद्धर्मविशेषसंसर्गबोधनंविनानिर्विचिकित्सधर्मिप्रतिपादना योगाच्च । नन्वखंडार्थप्रश्नोत्तरत्वादितिनहेतुः । किंतुयद्यत्प्रश्नोत्तरंतत्तत्स्वरूपमात्रपरमितिसामान्यव्याप्तौनासिद्ध्यादिरित्यत आह ॥ [१६।३] किंकरोतीति ॥ ननुकिंकरोतीत्यादौनकर्मादिमात्रस्यप्रश्नः । किंतुसामान्यतोज्ञातेकर्मणिधर्मविशेषस्य । तथाचय द्यत्प्रयत्नोत्तरंतत्तदर्थमितिसामान्यव्याप्तौनव्यभिचारः । प्रश्नोत्तरयोर्विशिष्टविषयत्वादिति । मैवं । प्रकृष्टादिवाक्येसत्यादि वाक्येचविशिष्टस्यैवप्रश्नइत्युक्तत्वेनतदुत्तरस्यापितद्विषयत्वांगीकारेइष्टापत्तेः ॥ [१६।५] एतेनेति ॥ प्रातिपदिकार्थमात्रस्याप्रश्नाद्धेतो

रसिद्ध्यादिनेत्यर्थः ॥ स्वार्थइति ॥ स्वार्थो विशेषणंगोत्वादि । द्रव्यं गवादि । नन्वंगुलिपंचकवद्गोत्वादीनामभिधानेपिन गोपदादेःप्रातिपदिकस्यसंसृष्टार्थःसिध्यतीतिचेन्न । पंचानांसंसृष्टतयैवबोधनात् । तदुक्तं । ङ्याप्प्रातिपदिकादित्यत्र स्वार्थमभिधायशब्दोनिरपेक्षंद्रव्यमाहसमवेतं । समवेतस्यतुवचनेलिंगसंख्यांविभक्तिंचेति । अस्यार्थः । नागृहीतविशेषणेतिन्यायेनादौस्वार्थसंज्ञंगोत्वादिविशेषणमभिधायसमवेतविशेषणविशिष्टंद्रव्यमाह । द्रव्यस्यधर्मित्वेनप्रधानत्वात् । ततोलिंगमंतरंगत्वात् । संख्याहिभेदापेक्षत्वाद्बहिरंगं । सापितुसजातीयापेक्षाविजातीयकर्मादिकारकशक्त्यपेक्षेभ्यःकारकेभ्योंतरंगेतितदनंतरंतस्याअभिधानं । ततःकारकाणामिति । ननुप्रातिपदिकार्थविशेष्यांशमात्रपरत्वंसाध्यं । तथाचप्रातिपदिकार्थस्यविशिष्टत्वेप्यखंडार्थत्वसिद्धिरित्यतआह ॥ नचेति ॥ यत्तुप्रातिपदिकार्थैकदेशस्यैवप्रश्नः आकांक्षितत्वात् नविशेषणानामनाकांक्षितत्वादिति । तन्न । वैपरीत्यस्यैवोपपादनात् ॥ सत्स्विति ॥ ज्ञानानंतादिविशेषणानांसत्यादिवाक्येविद्यमानत्वात्तत्सार्थक्यायाकांक्षोत्थापनीयेत्यर्थः ॥ रक्तेति ॥ रक्तपटोभवतीत्यत्रपटोभवतीत्येतावतैवपूर्णत्वेपिकीदृशःपटोभवतीत्याकांक्षामुत्थाप्यरक्तपदंयथासार्थकंक्रियतेतथेत्यर्थः ॥ निष्प्रकारकेति ॥ ब्रह्मज्ञानंपरप्राप्तिहेतुरित्युक्तेबुद्धिस्थत्वात्सप्रकारकस्यैवतद्धेतुत्वंप्रतीयते एवमितिश्रुत्यागुहानिहितमितिवाक्येनचसप्रकारकज्ञानमेवमोक्षहेतुरित्युच्यते । अतोमुमुक्षोःप्रकारएवबुभुत्सानस्वरूपमात्रइत्यर्थः । सत्यादिवाक्यंयद्यखंडार्थंनस्यात्तर्हिस्वरूपबुभुत्सायांनप्रवर्तेतेतितर्केव्यभिचारमाह ॥ निर्गुणेति ॥ सगुणवा

क्यादिकंविशिष्टप्रश्नेसतिप्रवृत्तं सत्यादिवाक्यंतुस्वरूपमात्रप्रश्नेइत्यत्रननियामकमित्युक्तं । व्यभिचारस्थलांतरमाह ॥ [१८।६] अस्ति चेति ॥ सयथाशकुनिरित्यादिकं । यत्त्ववांतरतात्पर्यमादायलक्षणवाक्यस्यनब्रह्मपरत्वंमहातात्पर्यमादायत्वखंडार्थत्वमिष्टमेवेति । तद्व्यधिकरणं । ब्रह्मस्वरूपमात्रबुभुत्सायांप्रवृत्तत्वस्यव्यभिचारोक्तेः । ऐक्यादिवाक्यानांमुख्यवृत्त्याविशिष्टपरत्वंवा लक्षणयाऽखंडार्थपरत्वंवा । आद्यंदूषयति ॥ [१८।६] तेषामिति ॥ नचैक्यभेदाभावादीनांब्रह्मस्वरूपत्वेननविशिष्टपरतेतिवाच्यं । ऐक्यादिवत्स्वरूपभूतसत्त्वादिधर्मांगीकारापत्त्याममेष्टापत्तेः । विशेष्यपरस्यविशिष्टपरेणैवैक्यादिवाक्यानांसत्यादिवाक्यविरोधित्वापत्तेर्वक्ष्यमाणत्वात् । कल्पितप्रतियोगिकत्वेनभेदाभावादेःकल्पिततयातेषांब्रह्मस्वरूपत्वानुपपत्तेश्च । ननूभयोर्ज्ञेयब्रह्मपरत्वेप्यैक्यादिवाक्यंमुख्यार्थस्यब्रह्मणिज्ञेयत्वान्नतत्रलक्षणा । सत्यादिवाक्यार्थस्यब्रह्मण्यज्ञेयत्वात्तत्रलक्षणेत्यतआह ॥ न [१९।१] चास्यामिति ॥ द्वितीयंदूषयति ॥ [१९।२] तेषामिति ॥ [१९।४] सत्यत्वेचेति ॥ नन्वभिन्नत्वेसतिसत्यत्वान्नापसिद्धांतइत्यतआह ॥ [१९।५] द्वारत्वेति ॥ अभेदेद्वारद्वारिभावानुपपत्तिः । नचकल्पितधर्मताकत्वेनद्वारत्वंमिथ्यात्वंपक्षांतर्भावात् ॥ [१९।५] अत्रापीति ॥ सत्यादिवाक्येसत्यत्वादेर्द्वारत्वेनोपस्थितस्यैक्यादिकंप्रतिविरोधित्वेनैक्याद्यसिद्धिरित्यर्थः । नचसत्यत्वादेःकल्पितजातिरूपस्यद्वारतयोपादानेपिपारमार्थिकत्वाकारेणनिषेधकानामविरोधइतिवाच्यं । कल्पितैक्यादेर्द्वारत्वेनोपादानेपिपारमार्थिकत्वाकारेणसत्यत्वादिबोधकस्यसत्यादिवाक्यस्यैक्यवाक्येनाविरोधइत्यस्यापिसुवचत्वात् ॥ [१९।६] महदिति ॥ सवैमहाभागवतःपरीक्षिद्येनाप

वर्गाख्यमदभ्रबुद्धिः । ज्ञानेनवैयासिकिशब्दितेनभेजेखगेंद्रध्वजपादमूलं ? तन्नःपरंपुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोग
निष्ठं । आख्याह्यनंताचरितोपपन्नंपारिक्षितंभागवताभिरामं । इतिपूर्वश्लोके अनंताचरितशब्देनानंतशब्दार्थगुणानांपृष्टत्वे
नोपक्रमात् । अहोवयंजन्मभृतोऽद्यहास्मवृद्धानुवृत्त्यापिविलोमजाताः । दौष्कुल्यमाधिंविधुनोतिशीघ्रंमहत्तमानामभिधा
नयोग्रः । कुतःपुनर्गृणतोनामतस्यमहत्तमैकांतपरायणस्य । योनंतशक्तिर्भगवाननंतोमहद्गुणत्वाद्यमनंतमाहुः । इतिमध्येर्थ
वादात्महद्गुणत्वादितिप्रतिवचनरूपोपसंहारात् । एतावतालंननुसूचितेनगुणैरसाम्येनतिशायितेस्य । हित्वेतरान्प्रार्थयतो
विभूतिर्यस्यांघ्रिरेणुंजुषतेनभीप्सोः । अहंहिपृष्टोस्यगुणान्भवद्भिराचक्षआत्मावगमोत्रयावत् । नभःपतंत्यात्मसमंपतत्रिणस्त
थासमंविष्णुगतिंविपश्चितः । इत्यभ्यासात् । अनंतगुणत्वार्थकत्वेनानंतशब्दव्याख्यानेमहद्गुणत्वादितिस्मृतेस्तात्पर्यमवग
म्यते । यत्तुसगुणप्रकरणस्थितब्रह्मानंतशब्दार्थविषयमिदं नतुलक्षणवाक्यस्थितब्रह्मानंतशब्दार्थनिर्वचनमिति तन्न । सगुण
प्रकरणातिरिक्तनिर्गुणप्रकरणस्याव्याप्यसिद्धेः । अत्रापिप्रकरणेऽनंतशब्दार्थज्ञानेनापवर्गाख्यफलस्योक्तेः । यत्रानुरक्ताःसहसै
वधीराव्यपोह्यदेहादिषुसंगगूढं । व्रजंतियत्पारमहंस्यसत्यंयस्मिन्नहिंसोपरमश्चधर्मः । इतिपरमहंसप्राप्यपरमफलस्योक्तेश्च ।
सवाइतिद्वाभ्यांऋषीणांसूतंप्रतिप्रश्नः । वै निश्चयेन । सः पूर्णज्ञानःपरीक्षित् । शुकाचार्योक्तशब्दजन्येनभगवज्ज्ञानेनगरुड
ध्वजपादसामीप्याख्यमपवर्गंयेनभेजे तत्उत्तमंपावनंप्रकटपुरुषार्थहेतुंपरिपक्वज्ञानादियोगाश्रयं भगवच्चरितयुक्तंभागवतप्रि
यंपरीक्षिच्चरितंनःआख्याहीत्यन्वयः । अहोवयमित्यादिसूतवाक्यं । विलोमजाताअपिवयंवृद्धसेवयासफलजन्मानोभूम ।

अत्रहेतुमाह महत्तमैःसहसंवादःदुष्कुलजन्माख्यमनोव्यथांशीघ्रंविधुनोति । विष्णोर्नामोच्चारयतःसर्वाशुभनाशोभवतीतिकुतःपुनर्वक्तव्यमित्यर्थः । अनंताचरितोपपन्नमित्युक्तंतस्योत्तरंयोनंतशक्तिरित्यादि । श्रुतयोनंतगुणत्वेनप्रवृत्तिनिमित्तत्वेनानंतशब्दंयस्मिन्प्रयुंजतेतच्चरितानुवर्णनेममसामर्थ्यंनास्तीतिसूचिताभिप्रायः । विभूतिर्लक्ष्मीः । कृपाकटाक्षंप्रार्थयमानानन्यान्हित्वाअप्राप्तलिप्सारहितस्ययस्यचरणरेणुंसेवते अस्यानंतस्यगुणकृतसाम्याधिक्यराहित्यविषये एतावतालक्ष्मीपतित्वेनसूचितेनालं । इतोतिरिक्तायुक्तिर्नवाच्येत्यर्थः । तथापिभगवद्गुणविषयेममयावानवगमोज्ञानमस्तितावद्वक्ष्ये । यथापक्षिणःस्वशक्त्यानभसिगच्छंतितथाविद्वांसःस्वविद्वत्त्वसमंविष्णुसामर्थ्यंजानंतीत्यर्थः । तस्मात्ब्रह्मानंतशब्दौनविपक्षबाधकौ ॥ अभिधानेति ॥ अभिधानं अन्वबोधनं । नन्विदंघटःकर्मत्वमित्यादिनिरांकाक्षेप्यस्तीत्यतआह ॥ यस्यचेति ॥ निराकांक्षेन्वयाननुभावकत्वंस्वरूपप्रयुक्तंनतुपदांतरविरहप्रयुक्तं । नन्वहोविमलंजलं नद्याःकच्छेमहिषश्चरतीत्यादि यदानदीकच्छान्वयपरतयाप्रयुज्यतेतदातत्राव्याप्तिः । नदीपदस्यकच्छपदेनविनापिजलपदेनस्वार्थान्वयानुभावकत्वात् । मैवं । तात्पर्यविषयेत्यन्वयविशेषणात् । ननुतर्ह्यन्वयांशोव्यर्थः यस्ययेनविनातात्पर्यविषयाननुभावकत्वमित्यस्यैवसामंजस्यात् । तात्पर्यविषयश्चक्वचित्संसृष्टःक्वचिदखंडइतिनाखंडार्थेप्याकांक्षानुपपत्तिरिति । मैवं । स्वरूपमात्रस्यज्ञाततयाऽखंडेतात्पर्याभावेनपदांतरविरहप्रयुक्ततात्पर्यविषयाननुभावकत्वस्याखंडार्थवाक्येष्वखंडार्थानुभवजननात्प्रागसत्त्वात् ॥ सन्निधिस्त्विति ॥ पदविशेषजन्यत्वमुपस्थितौविशेषणं । अतःप्रत्यक्षादिजन्यकलापाद्युपस्थितौवाऽग्निःकरणत्वमोदनःकर्मतेत्यादिपदजन्योपस्थितौवानातिव्याप्तिः ।

यत्त्वव्यवधानेनशाब्दबोधानुकूलार्थेपस्थितिमात्रमासत्तिः नत्वन्वयप्रतियोगित्वविशेषितागौरवात् । साचसंसर्गाबोधकेप्य स्त्येवेति । अत्रब्रूमः । शब्दःपर्वतोगुणोग्निमानित्यादौपदज्ञानत्वेनशाब्दबोधानुकूलांशब्दशब्दार्थभूतशब्दरूपपदोपस्थितिमा दायातिव्याप्तिः ।. शब्दपदोपस्थितेःपर्वतोपस्थितिंप्रत्यासत्तित्वाभावेप्युक्तविधयालक्षणसत्त्वात् ॥ इतरेति ॥ अत्रएकपदार्थ संसर्गेतदाश्रयत्वाभिमतनिष्ठविरोधिप्रतियोगित्वाभावइतिलक्षणं । तेनेतरेत्यादिपदविशेषणंचेदेकपदोपस्थाप्ययोःप्रकृतिप्रत्य यार्थयोरेकप्रत्ययोपस्थाप्यकारकसंख्यादेर्वानयोग्यतास्यात् । पदार्थविशेषणंचेत्प्रमेयत्वेप्रमेयत्वमित्यादौसांनस्यादित्यःदिदू षणंपरास्तं । संसर्गपदोपादानाच्चशब्दवदाकाशस्यशब्दनिष्ठात्यंताभावप्रतियोगित्वादव्याप्तिर्निरस्ता । विरोधीत्युक्त्याचरूपप्रा गभावावच्छिन्नोघटोरूपवानित्यादौविशिष्टवैशिष्ठ्यसंसर्गेप्रागभावादेरपिविरोधित्वान्नातिव्याप्तिः । प्रतियोग्यसमानाधिकरण त्वमपिप्रवेश्यं । तेनदंडीपुरुषइत्यादौनाव्याप्तिः । संयोगाभावस्यप्रतियोगिसमानाधिकरणभिन्नत्वाभावात् । धूमवन्ह्योःसा मान्यव्याप्तिवत्सर्वसेकव्यक्तेःसामान्यतःपयसासमंयोग्यतेतिमते अवच्छेदकधर्मशून्यत्वमन्यत्वमित्युक्तं । तस्मिन्पक्षेसंसर्गपदंसं सर्गत्वपरं । अवच्छेदकधर्मशब्देनावच्छेदकत्वंविवक्षितं । तथाचैकपदार्थसंसर्गत्वेउक्तप्रतियोगितावच्छेदकत्वशून्यत्वमि त्यर्थः । अत्रमतेसेकानन्वितंजलमयोग्यमेव । सेकसंसर्गत्वस्यतन्निष्ठाभावप्रतियोगित्वावच्छेदकत्वात् । नन्वेवंपयसासिंचती त्यत्रसर्वसेकव्यक्तेःसर्वपयसान्वयःस्यात् । योग्यतातज्ज्ञानयोरविशेषादितिचेत्पर्वतेमहानसीयवह्निवद्बाधेनप्रतिबंधादसंसर्ग ग्रहस्यविशिष्टज्ञानमात्रेहेतुत्वादितिकेचित् । तन्न । सामान्ययोग्यतायांमानाभावादितिवयं । उक्तलक्षणंत्ववच्छेदकत्वानंत

भावेनैववोध्यं । ननुस्वप्रकाशस्याप्यात्मनोऽविद्योपहितत्वेनास्फुरणाद्वेदांतविषयत्वंभविष्यतीत्यतआह ॥ [२१।७] अविद्येति ॥ अ
धिष्ठानस्फुरणंविनाध्यासाप्योगात् । निर्विशेषेचसाम्यविशेषस्फुरणास्फुरणयोरभावादात्मस्फुरणाभावान्नात्मनोविषयत्वमिति
भावः । ननुसयथासैंधवघनोनंतरोबाह्यःकृत्स्नोरसघनएवस्यादेवंवाअरेइदंमहद्भूतमनंतमपारंकृत्स्नःप्रज्ञानघनएवेत्याद्येकरस
त्वादिश्रुतिर्मुख्यार्थत्यागनिमित्तमित्यतआह ॥ [२१।८] ऐकरसत्वादीति ॥ विशेष्यपरस्परविशिष्टपरेणाविरोधादित्यर्थः । नच
द्वारतयोपस्थितैकरसत्वादेर्बाधकत्वमितिवाच्यं । सत्यादिवाक्याद्द्वारतयोपस्थितसत्यत्वादेरेवैकरसत्वादिबाधकत्वंसुवचमित्यु
क्तत्वात् ॥ [२२।४] वुभुत्सायाइति ॥ धर्मिणःप्रागेवज्ञानात्तत्रबुभुत्साविरहादितिभावः । यत्त्वसाधारणस्वरूपेबुभुत्सेति । तन्न ।
स्वरूपद्वयाभावादित्युक्तत्वात् ॥ [२२।५] श्रोतव्यइति ॥ मतभेदेनश्रवणमननविध्योर्विचारविधित्वं । नचवेदांततात्पर्यनिश्चयफल
कतयाऽनिष्प्रत्यूहनिष्प्रकारकब्रह्मज्ञानार्थत्वाद्विचारोनायुक्तइतिवाच्यं । स्वरूपमात्रेतात्पर्याभावादित्युक्तत्वात् । विचारज
न्यज्ञानत्वनिष्प्रकारकत्वयोर्विरोधाच्च । इहैवाविरोधकल्पनेऽन्योन्याश्रयाच्च ॥ [२२।८] ऐकतरेति ॥ नन्वद्वैताद्युपलक्षिताखंडार्थ
ज्ञानंविषयनिर्धारणंतदधीनंचप्रयोजनंमुक्तिः नत्वेकतरप्रकारनिर्धारणाधीनंप्रयोजनमिति । मैवं । त्वदभिमताखंडार्थज्ञानं
प्रत्यद्वैताद्युपलक्षणस्यप्रकाशेतस्यज्ञानस्याखंडार्थज्ञानत्वायोगात् । अप्रकाशेद्वैतस्यमिथ्यात्वेनस्वरूपस्यद्वैताद्युपलक्षिताविद्या
धिष्ठानचिन्मात्रस्फुरणस्यसदासत्त्वेपिमुक्तेरभावेनप्रयोजनस्यतदधीनत्वासंभवात् ॥ [२२।१०] यस्यकस्यचिदिति ॥ सत्यत्वादिविशि
० १५७ ष्टस्यब्रह्मत्वज्ञानंयदनुभवसिद्धंतन्नस्यादित्यर्थः ॥ [२२।११] तात्पर्यविषयस्येत्यादि ॥ यत्किंचिदितिज्ञानेसत्येवबुभुत्साप्रश्नयोरुदया

त्सत्यादिवाक्यस्यब्रह्मबुभुत्साप्रश्नौप्रतिहेतुभूताज्ज्ञानादनधिकविषयत्वेनसत्यादिवाक्यंब्रह्मबुभुत्सानिवर्तकंब्रह्मप्रश्नोत्तरंचनस्यादित्यर्थः । यत्त्वेकस्मिन्नपिकल्पितोद्देश्यविधेयभावसंभवइति । तन्न । अखंडज्ञानेकल्पिताभानात् ॥ [२३।१३]अप्राप्तेति ॥ अप्राप्तंयद्ब्रह्मस्वरूपंविधेयंतत्परत्वात् ॥ [२३।१४]विधेयस्यापीति ॥ ब्रह्मपदाद्ब्रह्मणोज्ञातत्वेनतस्याविधेयत्वाद्यत्सत्यंतद्ब्रह्मेत्युद्देश्यविधेयसंसर्गस्यविधेयतेत्यर्थः । यत्त्वसाधारणंस्वरूपंप्रमेयत्वाद्विधेयमिति । तन्न । व्यावर्तकादिवैशिष्ट्यातिरिक्तासाधारण्याभावात् । यत्तूद्देश्यताविधेयताचस्वरूपमात्रपर्यवसन्नेति । तन्न । प्रकारभेदंविनाज्ञातत्वाज्ञातत्वादिविरुद्धरूपोद्देश्यत्वविधेयत्वयोरेकत्रायोगात् ॥ [२३।१५]बीजेति ॥ तात्पर्यानुपपत्तिरूपबीजंतुपूर्वमेवनिरस्तमितिभावः ॥ [२३।१६]सत्यादीति ॥ घटःकलशइतिवत्प्रवृत्तिनिमित्तभेदाभावादित्यर्थः ॥ [२३।१७]एवंचेति ॥ घटःपृथिवीद्रव्यमित्यादिशब्दानामिवविशेष्याभेदेपिप्रकारभेदान्नपर्यायत्वं ॥ [२३।१८]कुंभेति ॥ सत्यंज्ञानमित्यत्रसत्यशब्दोक्तसत्तायाब्रह्मलक्षणत्वस्यत्वयाप्यंगीकारान्नतस्याःकुंभादिसाधारण्यं । अन्यथालक्षणस्यातिव्याप्तिःस्यात् । तथाचनसत्यशब्दस्यकुंभादिब्रह्मसाधारणसत्त्वजातिवाचित्वमित्यर्थः ॥ [२३।१९]मिथ्येति ॥ कुंभादिषुब्रह्मणिचानुगतमेकंसत्त्वंसामान्यमंगीकृत्यसत्यपदेनतन्नोच्यतइत्युक्तंपूर्वं इदानींकुंभादिब्रह्मानुगतंसत्त्वसामान्यमेवनास्तीत्युच्यतइतिभेदः । ब्रह्मणितत्स्वरूपमेवसत्ता । कुंभादिषुतुसदधिष्ठानब्रह्मानुवेधमात्रमितित्वन्मताच्च । कुंभादिब्रह्मानुगतसत्त्वसामान्यस्यसत्यशब्दाभिधेयत्वेदोषांतरमाह ॥ [२३।१९]तयेति ॥ अनृतसाधारणस्यानृताद्व्यावर्तकत्वात् ॥ [२४।१]कालत्रयेति ॥ सत्यंज्ञानमितिश्रुत्यभिहितं

तात्विकंसत्त्वंब्रह्मण्येवेति त्वन्मतस्यकुंभादिसाधारण[२४।२]सत्ताजातिःसत्यपदेनोच्यतइत्यंगीकारेभंगःस्यात् । जातित्वाभिमतज्ञानत्वाश्रयव्यक्तिरेकावानेकावा । आद्येदोषमाह ॥ [२४।२]भेदंविनेति ॥ व्यक्तिभेदंविनेत्यर्थः । द्वितीयेप्युपहितानुपहितरूपेणानेकावोपहितरूपेणैववा । नाद्यइत्याह ॥ [२४।२]धर्मीति ॥ धर्मिसमसत्ताकभेदंविनाप्युपहितानुपहितवृत्तिज्ञानत्वजातिरस्त्वित्यंगीकुर्वंतंप्रत्याह ॥ [२४।२]योगेवेति ॥ घटाकाशाद्यभिव्याप्याकाशत्वस्यशुद्धाकाशलक्षणत्वाभाववत्तथाविज्ञानत्वस्यापिशुद्धलक्षणत्वं नस्यात् । ज्ञानत्वमुपहितवृत्त्येवेतिद्वितीयपक्षंदूषयति ॥ [२४।२]ज्ञानत्वादेरिति ॥ धर्मिसमसत्ताकभेदवदुपहितवृत्तित्वेनज्ञानत्वादेर्जातित्वसंभवेपिनतस्यशुद्धंलक्षणत्वं । शुद्धेऽसंभवादित्यर्थः । यत्तूपहितवृत्तित्वेप्युपधेयवृत्तित्वानपायान्नासंभवइति । तन्न । ज्ञानादिपदप्रवृत्तिनिमित्तस्यज्ञानत्वादेरुपधेयस्यज्ञानादिपदवाच्यताप्रसंगात् । उपहितस्यदृश्यत्वादिनोपधेयस्यदृश्यत्वादिकंस्यात् ॥ [२४।३]एतेनेति ॥ सत्यशब्दःकालत्रयाबाध्यत्वरूपपारमार्थिकसत्त्वाभिधायकइतित्वदंगीकारेण ॥ [२४।३]सत्त्वादीति ॥ प्रवृत्तिनिमित्तभेदान्नपर्यायत्वं ॥ सत्यत्वादेरिति ॥ उक्तरूपस्य । यत्तुशवलेनसत्यत्वादेरयोगः उक्तरूपसत्यत्वादेरयोगेपिसत्यत्वांतरस्यतत्रसत्त्वात् । शवलेह्येषैवसत्यतायत्परमार्थसंसर्गेणप्रतीयमानेतस्मिन्सत्यशब्दसंगतिग्रहः । तदुक्तंसंक्षेपशारीरके । आकाशादौसत्यतातावदेकाप्रत्यङ्मात्रेसत्यताकाचिदन्या । तत्संपर्कात्सत्यतातत्रचान्याव्युत्पन्नोयंसत्यशब्दस्तुतत्रेति । तत्र शवले । तथाचशवलेपिसत्यत्वादिकमस्तीति । तन्न । जपाकुसुमसंपर्कात्स्फटिकलोहितिम्नइवपरमार्थसत्संसर्गा

च्छवलेप्रतीयमानस्यसत्यत्वस्यापारमार्थिकत्वेनकालत्रयाबाध्यत्वरूपंपारमार्थिकंसत्यत्वंश्रौतसत्यपदेनोच्यतइतित्वन्मतभंगप्रसंगात् । लक्षणत्वेनाभिमतायाःप्रत्यङ्मात्रनिष्ठसत्यतायाःशवलेऽनुपपादनाच्च । वस्तुवैयात्याद्भूते । सत्संसर्गेणप्रतीयमानत्वरूपंसत्त्वमेवात्रलक्षणमिति । तंप्रत्याह ॥ [२४।५] योगेवेति ॥ व्यावर्तकव्यावृत्त्योःसामानाधिकरण्यनियमात् ॥ [२४।५] नतुशुद्धस्येति ॥ परमार्थसत्संसर्गस्यशुद्धेऽभावाच्छुद्धेविद्यमानस्याबाध्यत्वरूपपारमार्थिकसत्यत्वस्यसत्यपदेनशुद्धेभिधानस्यत्वयानंगीकारात् ॥ [२४।६] तस्मादिति ॥ उक्तरूपसत्यत्वादीनांसत्यादिवाक्येनशुद्धप्रतिपादनंसंभावितं । तत्त्वखंडार्थवादिनानाभ्युपेयते । शुद्धादन्यत्रतुतत्प्रतिपादनसंभावनैवनास्ति । अतःसत्यादिपदंसत्यत्वादिकंसर्वथानबोधयति । किंतुविशेष्यमात्रमेवबोधयतीत्यर्थभेदाभावात्पर्यायत्वंसत्यादिपदस्य । अभिधेयभेदाभावमुक्त्वाप्रयोजनाभावमाह ॥ [२४।७] पदांतरेति ॥ [२४।८] मैर्हाभाष्यइति ॥ जात्यादिशब्दानामधिकार्थत्वेनप्रातिपदिकार्थत्वाभावादव्ययेषुचाव्ययादाप्सुपइतिलुकोनित्यत्वेनविभक्तेरश्रवणादुच्चैर्नीचैरित्यादौचकर्मादिव्यतिरिक्तलक्ष्येशेषेविहितयाषष्ठ्यैवपदसंज्ञायांरुत्वविसर्गादिसिद्धेर्नप्रातिपदिकार्थेप्रथमाविधेयेत्याशंकितमित्यर्थः ॥ [२४।९] सपूर्वायाइति ॥ विद्यमानपूर्वात्प्रथमांतात्परयोर्युष्मदस्मदोस्तेमेइत्येतावादेशौभवतइतिसूत्रार्थः । ग्रामउच्चैरित्यत्रोच्चैःशब्दस्यप्रथमांतत्वेहिततःपरस्यतवेत्यस्यतेइत्ययमादेशोविभाषयाभविष्यतीतिप्रयोजनवत्येवप्रथमाभवति ॥ [२४।१०] व्यावर्तकस्येति ॥ अन्यथासत्यपदाप्रयोगेप्यसत्यादिव्यावृत्तिःस्यात् ॥ [२५।१] अभिधेति ॥ सत्यत्वविशिष्टोपस्थितिकाले ॥ [२५।२] नद्यामिति ॥ नचतीर

यजमानादेरनद्ययजमानादिप्रतियोगिकव्यावृत्तौनतात्पर्यमतोनद्यांघोषइत्यादिवाक्यान्नतत्सिद्धिः । सत्यादिवाक्येत्वनृतादि
व्यावृत्तौतात्पर्यमस्तीतिवाच्यं । व्यावर्तकेतात्पर्यंविनातद्व्याप्यव्यावृत्तौतात्पर्यानिर्वाहात् । ननुलक्षणातःप्राक्सत्यपदात्प्रतीतं
सत्यत्वंव्यावहारिकं । अतःसत्यत्वेनप्रतिद्वंद्विनःसकाशाद्व्यावृत्तिःसिध्यति । यजमानत्वंतुनव्यावहारिकमतस्तेनायजमानात्प्र
स्तरस्यनव्यावृत्तिःसिध्यतीत्यतआह ॥ [२५।३]नचेति ॥ सत्यपदयजमानपदयोःसत्यत्वयजमानत्ववैशिष्ट्येनब्रह्मप्रस्तरबोधनेतात्प
र्याभावेसमानेसंतीत्यर्थः । ननुव्यावहारिकप्रमाणसिद्धत्वात्सत्यत्वंव्यावहारिकमित्युच्यतइत्यतआह ॥ नचौपनिषद[२५।३]इति ॥
[२५।४]नचैतत्त्वेति ॥ तात्पर्याविषयत्वेपीतिशेषः ॥ [२६।२]नचलक्षणाबीजइति ॥ नचमहातात्पर्यविषयसिद्ध्युपायएवावांतरतात्पर्यं स
त्यत्वादिकंतुतथेतितत्रावांतरतात्पर्यमितिवाच्यं । व्यावर्तकेमहातात्पर्यंविनातद्व्याप्यव्यावृत्तौमहातात्पर्यायोगात् ॥ [२६।४]व्यावर्त
कानामपीति ॥ व्यावृत्तिव्यावर्तकयोरेकसत्ताकत्वादित्यर्थः । ननुयत्पारमार्थिकबोधकंतत्पारमार्थिकमितिननियमः । पार
मार्थिकस्यब्रह्मणोनैवंविधपदेनबोधनात् । त्वन्मतेऽसतोसत्पदादिबोध्यत्वाच्चव्यभिचारात् । नापिव्यावृत्तिबोधकंव्यावृत्ति
समसत्ताकमितिनियमः । स्वप्नांगनादेरपिस्वजन्यसुखेसुखांतरापेक्षयाव्यावृत्तिबुद्धिजनकत्वात् । कारणस्यकार्यव्यावर्तकत्वा
दित्यतआह ॥ [२६।४]व्यावहारिकैरिति ॥ नवयंव्यावहारिकाणांपारमार्थिकज्ञापकत्वंब्रूमः । किंतुव्यावृत्तिव्यावर्तकयोःसमव्या
प्तयोरेकसत्तां । स्वप्नांगनादावपितज्ज्ञानंसुखहेतुः । अतःस्वप्नांगनाज्ञानतज्जन्यसुखतद्गतव्यावृत्तीनामेकसत्तास्त्येवेतिनतत्र
दोषः ॥ [२६।६]व्यावर्तकेति ॥ पूर्वंव्यावृत्तिव्यावर्तकयोरेकसत्ताकत्वाद्व्यावर्तकाणांपारमार्थिकत्वमुक्तं । इदानींसद्ब्रह्माभेदात्तेषांस

त्वमुच्यतइतिभेदः । यत्त्वज्ञानत्वादिधर्माणामपिव्यावृत्तिवद्ब्रह्माभिन्नतयापारमार्थिकत्वमिष्टमेवेति । तन्न । परस्यापसिद्धांतात् । अभिन्नधर्मणामयांगीकृतत्वेनमन्मतप्रवेशाच्च ॥ [२६।१] शुक्तेरित्यादि ॥ अधिष्ठानज्ञानाबाध्यात्यंताभावप्रतियोगित्वंमिथ्यात्वं । तदत्यंताभावप्रतियोगित्वस्यसत्यत्वेपिसत्वात् [१]। शुक्तिव्यावृत्तेरनृतव्यावृत्तेश्चात्यंताभावः शुक्तित्वमनृतत्वमेव । अन्योन्याभावात्यंताभावस्यप्रतियोगितावच्छेदकधर्मरूपत्वात् । एवंचशुक्तौशुक्तिज्ञानाबाध्यशुक्तित्वरूपशुक्तिव्यावृत्त्यत्यंताभाववद्ब्रह्मणिब्रह्मज्ञानाबाध्यानृतत्वरूपानृतव्यावृत्त्यत्यंताभावःस्यादित्यर्थः । नन्वनृतव्यावृत्तेर्मिथ्यात्वेपिनानृतत्वस्यब्रह्मसमसत्ताकत्वापत्तिः । एकबाधकबाध्यत्वस्योभयत्रापितुल्यत्वात् । व्यावृत्तिबाधकाबाध्यस्यैवव्यावृत्तिविरोधिनोव्यावृत्त्यधिकसत्ताकत्वं । नंत्वेकबाधकबाध्यस्यापि । कल्पितरजतव्यावृत्तेःकल्पितरजतेमिथ्यात्वेपितदपेक्षयातस्याधिकसत्ताकत्वाभावादिति । मैवं । परस्परात्यंताभावरूपयोरेकत्रैकावच्छेदेनैकबाधकबाध्यत्वस्यवक्तुमशक्यत्वात् । तथाहि । प्रतियोगिबाधोनाम । प्रतिपन्नोपाधौतदवच्छेदेनग्राह्यसंबंधेनसंसृष्टतदत्यंताभावविधानं तेनैवतदत्यंताभावबाधनेतत्रैवतदवच्छेदेनग्राह्यसंबंधेनात्यंताभावात्यंताभावस्यप्रतियोगिरूपस्यसंसृष्टतयाविधानमापद्येतेतिविरोधःस्यात् ॥ [२६।११] भ्रांत्यंतरेति ॥ ब्रह्मण्यविद्यमानस्यानृतव्यावृत्त्यादेरुपदेशेनब्रह्मणिभ्रांत्यंतरंस्यात् । ननुभ्रमनिवर्तकाधिष्ठानतत्वसाक्षात्कारोपायत्वेनैवाविद्यमानमुपदिश्यते । स्थूलारुंधतीन्यायेनपूर्वपूर्वभ्रमनिवृत्तयेकाल्पनिकोपदेशस्यपंचकोशस्थलेदर्शनादित्यतआह ॥ [२७।१] नहीति ॥ पुंस्त्वस्योपदेशेना

धिष्ठानतत्वज्ञानमुत्पाद्येतिशेषः ॥ [२७।१] किंत्विति ॥ वल्मीकत्वस्योपदेशेनाधिष्ठानतत्वज्ञानमुत्पाद्यनिवर्तनीया अधिष्ठानगतासा
धारणधर्मोपदेशंविनाभ्रमनिवर्तकाधिष्ठानतत्वसाक्षात्काराभावादित्यर्थः । उभयतारास्यरुंधतीत्वेननंनिर्दिश्यते । किंतुप्रथमं
स्थूलतारांपश्यपश्चादरुंधतींदर्शयिष्यामीत्येतद्बुध्यैव । पंचकोशस्थलेपिनकाल्पनिकोपदेशः । किंतुपंचानामप्यन्नमयादीनांब्र
ह्मत्वमेव । यथाचैतंत्तथाभाष्यादिषूक्तं । व्यावृत्तीनांसत्यत्वमिथ्यात्वेनिराकृत्यव्यावहारिकत्वंनिराकरोति ॥ [३७।२] नचात्मनीति
॥ [३७।३] ब्राह्मण्यस्येति ॥ व्यावहारिकानृतव्यावृत्त्याप्रातिभासिकानृतत्वभ्रांतिनिवृत्तावपित्वन्मतेप्रतियोगितदत्यंताभावयोरेकस
त्ताकयोरेवविरोधाद्ब्रह्मणिव्यावहारिकजगत्सत्त्वेपितात्विकतदत्यंताभाववद्व्यावहारिकानृतव्यावृत्तिसत्त्वेपितात्विकमनृतव्यावृ
त्त्यत्यंताभावरूपमनृतत्वंस्यादेवेत्यपिवोध्यं ॥ [३७।५] असद्व्यावृत्तेरिति ॥ असद्वाइतिवाक्यप्रतीतंमूलकारणासत्त्वंपारमार्थिकं नि
रपवादप्रमाणप्रतीतत्वात् संमतवत् । नन्वसद्व्यावृत्तिवोधकस्यसत्यादिवाक्यस्यवाधकस्यविद्यमानत्वाद्विशेषणासिद्धिरित्याशं
कापरिहारायोक्तं ॥ [३७।५] व्यावहारिकत्वइति ॥ मिथ्यात्वमानवत्तात्विकपरस्यव्यावहारिकपरेणाविरोधादित्यर्थः ॥ [३७।६] अनृतस्या
पीति ॥ सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वं यदश्रुवसीयततद्रजतमभवदित्यर्थवादतःप्रतीतस्यरुद्रेणरुदितेसति यदश्रुगलितंत
देवरजतंजातमित्येवंवाधितार्थस्यसुवर्णप्राशस्त्येयथाद्वारत्वंतथेत्यर्थः ॥ [२८।१] उक्तंहीति ॥ तत्वप्रदीपिकादिषु ॥ [३८।५] शाब्देर्थइति ॥
लक्षणयाशब्दतःप्रतीयमानेब्रह्मस्वरूपमात्रेऽर्थात्प्राप्तस्यार्थिकस्यानृतव्यावृत्त्यादेः ॥ [२८।६] नीलमिति ॥ नचनीलमुत्पलमित्यादौन

स्वरूपमात्रेतात्पर्यं अत्रतुस्वरूपमात्रेतात्पर्यं तच्चार्थिकार्थस्यद्वारत्वंविनानुपपन्नमितिवाच्यं । स्वरूपमात्रेतात्पर्यस्यनिरासात् अन्याविषयकमिति ॥ तथाचव्यावृत्तीनामन्यविषयकज्ञानप्रतिबंधद्वाराशुद्धज्ञानएवद्वारत्वमित्यर्थः ॥ अन्याज्ञानइति ॥ अन्यविषयकज्ञानप्रतिबंधएवोपक्षयाद्व्यावृत्तीनांनशुद्धविषयकज्ञानपर्यंततदुपयोगइत्यर्थः ॥ व्यावर्त्यज्ञानमिति ॥ स्वरूपज्ञानमित्यर्थः । पूर्वं स्वरूपज्ञानंव्यावृत्तिज्ञानसाध्यमतस्तद्वारकमितिपराभिमतेवैपरीत्यमुक्तं । इदानींसाध्यसाधनभावमनादृत्यान्याविषयकब्रह्मज्ञानेव्यावृत्तिज्ञानस्यद्वारत्वांगीकारेवैपरीत्यमापाद्यतइतिभेदः । नचाभिधावललब्धविशिष्टज्ञानादेव व्यावृत्तिज्ञानसिद्धेर्नतत्प्रतिस्वरूपज्ञानंद्वारमितिवाच्यं । अविद्याद्यध्यासाधिष्ठानतयाब्रह्मस्वरूपस्यापिव्यावृत्तिज्ञानंविनासिद्धत्वात् ॥ प्राचीनइति ॥ व्यावृत्तिज्ञानात्प्राचीनेद्वारत्वाभिमतव्यावृत्तिज्ञानहेतौसत्यत्वादिविशिष्टज्ञानेब्रह्मज्ञानतयाऽविद्यानिवर्तकत्वार्हेऽविद्याकार्यस्यसत्यत्वादेर्भानायोगेनविशिष्टज्ञानत्वाभिमतस्यैवान्याविषयकब्रह्मज्ञानत्वौचित्यात्तस्यव्यावृत्तिज्ञानासाध्यत्वमितिभावः । ननुप्राचीनज्ञानंब्रह्मस्वरूपंवावृत्तिरूपंवा । आद्येनान्यभानानुपपत्तिः । तस्याविद्यानिवर्तकत्वाभावात् । वृत्तिरूपमपिनाविद्यानिवर्तकंअपरोक्षत्वाभावात् । अपरोक्षत्वेपिप्रतिबद्धत्वात् । विचारजन्यंतुफलीभूतंभवत्यविद्यानिवर्तकंनतुतत्प्राचीनमिति । मैवंउपक्रमाद्यवधृततात्पर्यकब्रह्मपरवाक्यात्प्रथममुत्पन्नंसत्यादिविशिष्टबोधमपहायनिष्प्रकारकज्ञानंकल्पयित्वातस्यविचारजन्यत्वादिकल्पनायाअयुक्तत्वात् । अन्यथागांधर्वशास्त्रादपिषड्जत्वादिविशिष्टज्ञानानंतरंनिष्प्रकारकंकल्पयित्वातस्यगांधर्वशास्त्रविचारजन्यत्वंकल्प्येत । व्यावृत्तिज्ञानस्यान्याज्ञानेद्वारत्वमापद्येतेत्यत्रपरस्येष्टापत्तिंपरिह

रति ॥ ब्रह्मेति ॥ द्वारबुभुत्सायांसत्यादिवाक्यंप्रवृत्तमितिवक्तव्यं । नतुब्रह्मबुभुत्सायां ॥ नेचद्वारेति ॥ अनृतव्यावृत्तिबोधनद्वारासत्यशब्देनकदाचिद्ब्रह्मबोध्यते जडव्यावृत्तिद्वाराविज्ञानशब्देनकदाचित् ॥ नित्यवदिति ॥ विकल्पप्रतिद्वंद्वि नित्यं । तद्वद्वाशब्दादिराहित्येनश्रवणात् ॥ एकस्मिन्निति ॥ सत्यज्ञानादिशब्दाः । नविकल्पेनब्रह्मज्ञानसाधनं । एकस्मिंस्तदुपायेऽपाद्दीयमानत्वात् । यदेकस्मिन्यदुपायेऽपादीयतेतत्तस्यविकल्पेनसाध्यंनभवति । यथाप्रोक्षणाद्यवघातादि । व्यतिरेकेव्रीहियवादिर्वेति ॥ विकल्पेति ॥ दृष्टकार्याणांसमुच्चयएव । नतुविकल्पोनवैकेनान्यस्यनिवृत्तिः । अतएवदशमाध्यायचतुर्थपादेभिहितं । अस्त्यंजनाभ्यंजनंनामसत्रं । तत्रश्रूयते । गौग्गुलवेनप्रातःसवनेभ्यंजतइत्यादि । तत्किंप्राकृतस्यनवनीताभ्यंजनस्यनिवर्तकंनेतिसंशयेदृष्टार्थत्वादंजनाभ्यंजनयोःप्राकृतस्यवैकृतेननिवृत्तिः । सत्यंदृष्टार्थमभ्यंजनं । तथापिनैकार्थ्यंनवनीताभ्यंजनस्यस्नेहनार्थत्वात् । गौग्गुलवादस्तुचंदनानुलेपनवद्रूक्षीकरणार्थत्वाद्दृष्टप्रयोजनभेदेनसमुच्चयएवेति ॥ विज्ञानमिति ॥ विज्ञानमानंदंब्रह्मेत्यादौसत्यपदाश्रवणादनृतव्यावृत्तेरप्रतीतिः । सत्यंज्ञानमित्यादावानंदपदाश्रवणाद्दुःखव्यावृत्तेरप्रतीतिरित्यपिद्रष्टव्यं । ननुयथाविभुत्वनित्यत्वादिरूपेणब्रह्मणउपासार्थंतत्राश्रुताअप्यानंदविज्ञानत्वादयउपसंह्रियंते तथा ब्रह्मप्रतिपत्त्यर्थमप्यश्रुताअपिसत्यत्वादिधर्माउपसंहरिष्यंतइतिनानृतव्यावृत्त्यादेरप्रतीतौब्रह्मप्रतीतिः । नचोपासनार्थंशाखांतरोक्तगुणानामुपसंहारेसर्वज्ञत्वादिरूपेणब्रह्मोपासनार्थं तत्रानुक्तानांसंयद्वामत्ववामनीत्वभामनीत्वादीनामप्युपसंहारःस्यादितिवाच्यं । वास्तवविधेयत्वाभ्यामुपसंहारानुपसंहारयोरुपपत्तेः । वस्तुधर्माहियावद्वस्तुव्यवतिष्ठते । नासावेकत्रोक्तो

न्यत्रानुक्तोनास्तीतिशक्यंवक्तुं । विधेयंपुरुषप्रयत्नतंत्रं । पुरुषप्रयत्नश्चयत्रयत्रयावद्गुणविशिष्टेब्रह्मणिसतावत्येवावतिष्ठते । नाविहितमपिगुणंगोचरीकर्तुमर्हति। तस्मादानंदविज्ञानादयोब्रह्मतत्वात्मतयोक्तांयत्रयत्रब्रह्मश्रूयतेतत्रतत्रानुक्ताअपिलभ्यंते । संयद्वामत्वादयश्चोपासनाप्रयत्नविधिविषयाःयत्रविधिस्तत्रैवावतिष्ठंतेतआह ॥ आनंदादयइति[३।१३] ॥ उपासनार्थंप्रधानस्यब्रह्मण आनंदादयोगुणाउपसंहर्तव्याइतितदीयःसूत्रार्थः ॥ उपासनायामिति[३।१४] ॥ अभिन्नोपासनायां । याह्युपासनानेकशाखोक्ताप्यभिन्नत्वेनप्रत्यभिज्ञानसिद्धातस्यामुपासनायामेकत्रानुक्ताअपिगुणाअन्यशाखोक्ततदुपासनागुणाउपसंह्रियंते । यथाछांदोग्योक्तायांपंचाग्न्युपासनायामनुक्तस्यषष्ठस्याग्नेर्वाजसनेयोक्तपंचाग्निविद्यांतर्गतस्यषष्ठस्याग्नेरुपसंहारः ॥ ब्रह्मप्रमितावितिं[३।१४] ॥ सगुणेब्रह्मण्युपासनार्थंशाखांतरीयगुणोपसंहारेपिनिर्गुणब्रह्मप्रमितौनतदुपसंहारोयुज्यतइत्यर्थः । ननुशाखांतरोक्तगुणोपसंहारेविनोपासनयाअसिद्धिवत्पदांतरंविनाब्रह्मप्रमित्यसिद्धेस्तत्सिद्ध्येपदांतरोपसंहारोत्राप्यपेक्ष्यतइत्यतआह ॥ संख्यादीति[३।१५] ॥ गुणोपसंहारस्यतद्गुणकोपासनार्थत्ववत्पदांतरस्यतत्तत्प्रकारकप्रमित्यर्थत्वानंगीकाराद्विशेष्यमात्रसिद्धेश्चलक्षणयैकपदेनापिसंभवान्न पदांतरोपसंहारापेक्षेत्यर्थः । ननुश्रृंगग्राहिकयाब्रह्मणोनुद्देश्यत्वाल्लक्षणमुखेनतदुपदेष्टव्यं । सत्यादिकंचनप्रत्येकंलक्षणं। घटादावतिव्याप्तेः। अतःसमुच्चितमेवलक्षणं। अतःसमुच्चिताएवव्यावृत्तयोद्वारमित्यतआह॥ सत्यत्वादेरिति[३।१६] ॥ नह्यत्रघटाद्यनुगतसत्त्वं सत्यशब्दार्थः । किंत्वबाध्यत्वमित्युक्तं । तच्चनातिव्याप्तंसत्यत्वंब्रह्मलक्षणतयासत्यपदेनोक्तमतोजगन्मिथ्येतित्वयोक्तत्वाच्चेत्यर्थः । एवंज्ञानादिपदेपिबोध्यं । ननुकुमतप्राप्तातिव्याप्तिनिवृत्त्यर्थंसमुच्चयापेक्षा । नह्यनृतव्यावृत्तिंविनाविज्ञानमानंदंब्रह्मे

त्यत्रशून्यवादव्यावृत्तब्रह्मसिद्धिः । एवंपदांतरेपि । मैवं । व्यावर्तकार्पणंविनाव्यावृत्तब्रह्मासिद्धेरुक्तत्वात् ॥ [३०।७] एतेनेति ॥
प्रत्येकंवासमुच्चितानांवाव्यावृत्तीनामद्वारत्वेन । ब्रह्मेतिद्वितीयांतं ॥ [३१।५] तदुपदेशइति ॥ ब्रह्मासंबंधिभ्याःव्यावृत्तेः ॥ [३१।५] शाब्दा
र्थस्येति ॥ सत्यादिपदेनलक्षणयाबोधितस्यब्रह्मस्वरूपमात्रस्य ॥ [३१।६] मानांतरादिति ॥ अपोहस्तुमानांतरात्प्रतीयते । अतः
सनशाब्दइत्यर्थः ॥ [३१।७] आर्थिकेनेति ॥ शाब्दज्ञानस्यविशेषणाविषयकत्वेपिमानांतरविरोधितद्विशेषणस्यवस्तुसद्विशेषणवतःस्व
रूपस्यशब्देनबोधनाच्छांब्दज्ञानंविषयस्याखंडत्वहानिः ॥ [३१।७] अनंतेति ॥ अनंतशब्दजन्यज्ञानस्यांतवद्व्यावृत्तिप्रकारतयातद्व्या
वृत्तेः । शाब्दत्वंविधिपदानांस्वार्थार्पणप्रणाड्येतरनिवृत्तिबोधकत्वं । निषेधपदानांतुसाक्षादितित्वदंगीकारात् । उक्तंचतैत्त
रीयवार्तिके । तंत्रानंतोंतवद्वस्तुव्यावृत्त्यैवविशेषणं । स्वार्थार्पणप्रणाड्यातुपरिशिष्टौविशेषणमिति ॥ [३१।८] शब्दस्येति ॥ अन्य
थाशब्दंविनापिव्यावृत्तिःसिध्येत् ॥ [३१।८] एतेनेति ॥ तात्पर्यतोव्यावर्तकवैशिष्ट्यार्पणंविनाव्यावृत्तिसिद्ध्यभावेन । पदार्थेतात्पर्य
स्यचान्वयस्यवानुपपत्तेःपदलक्षणावीजस्यसत्यादिपदेऽभावान्नतत्रलक्षणेत्युक्तं । केचित्तुवाक्यार्थेतद्व्यानुपपंत्त्यावाक्येलक्षणा
माहुस्तत्पक्षमपिदूषयितुमाह ॥ [३२।१] नवीनास्त्विति ॥ ननुगच्छगच्छसिचेत्कांतपंथानःसंतुतेशिवाः । भूयान्ममापितत्रैवजन्मय
त्रगतोभवानित्यादौजन्मनामृत्यनुमानेपिगमनस्यमृतिहेतुत्वमशक्यावगमं । शतवर्षानंतरंजरादिनापितदुपपत्तेः । मृतिहे
तुत्वेनावगतस्यापिगमनस्यनाकर्तव्यत्वेनव्याप्तिः । गुरुनिर्देशादिनाप्रियामृतिहेतोरपिकर्तव्यत्वदर्शनेचव्यभिचारात् । किंतु

जन्मनिर्देशस्यप्रकृतेऽनुपयोगात्तेनप्रकृतोपयोगिन्यगमनेतात्पर्यंज्ञाप्यतेसमुदायस्य । तथाचसमुदायएवलक्षणा । नप्रत्येक
पदे । प्रत्येकंतात्पर्यज्ञापकाभावादतस्तत्रलक्षणायामेकपदवृत्तित्वंबाधितं । वृत्तित्वस्यहेतोर्व्यभिचारश्चेत्यतआह ॥ [३३।१] गच्छग
च्छसीति॥ विज्ञानंब्रह्मचेद्वेद तस्माच्चेन्नप्रमाद्यति शरीरेपाप्मनोहित्वा सर्वान्कामान्समश्नुतइति। असन्नेवसभवति असद्ब्रह्मे
तिवेदचेत् अस्तिब्रह्मेतिचेद्वेद संतमेनंततोविदुरितीत्यादौवेदेविज्ञानात्मकब्रह्मवेदनाविस्मरणयोःपापराहित्यकामभोगौप्रति
ब्रह्मसत्त्वासत्त्ववेदनयोःशुभाशुभफलेप्रतिलोकेचवृष्टिश्चेद्भवतिसुभिक्षंभवेदित्यादौवृष्टेःसुभिक्षंप्रतिहेतुत्वस्यचेच्छब्देनबोधनव
दिहापिगमनस्यजन्मप्रतिहेतुत्वबोधनंयुज्यते । देहांतरसंयोगश्चजन्म । सचैकस्मिन्देहसंबंधेसंतिनयुज्यतइतिपूर्वदेहसंबंधा
भावद्वारेतिगम्यते । नचोक्तव्यभिचारः । प्रकृतगमनंनकर्तव्यं नाश्यमानेष्टाधिकेष्टाहेतुत्वेसतीष्टनाशहेतुत्वात् । संतवत् ।
गुरुनिर्देशादौतुनाश्यमानेष्टाच्छ्रार्यादेःसकाशादधिकस्यगुरुनिर्देशकरणजन्येष्टस्यसत्त्वेनतत्रहेतुत्वावगमात् । अतोनोक्तबाधा
दिरितिभावः ॥ [३३।२] जन्मनेति ॥ गमनजन्यतयावधृतेनेतिशेषः । पक्षेइष्टनाशहेतुत्वमुपपादयति ॥ [३३।२] प्रियेति ॥ ननुविषं
भुंक्ष्वेत्यत्रविषभोजनेष्टसाधनत्वेनशत्रुगृहान्नभोजनस्यानिष्टसाधनत्वंनाक्षेप्तुंशक्यते । शत्रुगृहान्नभोजनानिष्टसाधनत्वंविना
विषभोजनेष्टसाधनतायाअनुपपत्त्यभावात् । उभयोरपीष्टसाधनतयोपपत्तेः । तस्मादप्रसक्तोपपादनेनप्रसक्तवारणेतात्पर्यंज्ञा
त्वाश्रुतपदसमुदायेलक्षणाकल्प्यतेनतुप्रत्येकपदे । तत्रतत्रविशिष्यतात्पर्यज्ञापकाभावादतस्तन्नलक्षणायामेकपदवृत्तित्वंबाधि
तमित्यतआह ॥ [३३।३] विषंभुंक्ष्वेति ॥ शत्रुगृहभोजनापेक्षयाविषभक्षणस्येष्टसाधनत्वोत्कर्षोगम्यते । यथादेवदत्ताद्यज्ञदत्तोविद्वा

नित्यत्रदेवदत्तविद्वत्त्वापेक्षयायज्ञदत्तविद्वत्त्वस्य । अतःशत्रुगृहभोजनस्यबलवत्तरानिष्टसाधनताक्षिप्यते । अयमाशयः । शत्रुगृहान्नभोजनेप्रसक्तःकश्चिद्विषंभुंक्ष्वेत्याप्तेनोच्यमानोवितर्कयति । विषभोजननिष्ठमिष्टसाधनत्वं शत्रुगृहान्नभोजननिष्ठेष्टसाधनत्वादुत्कृष्टं तदवधिमत्त्वेनाप्तेनोच्यमानत्वात् । यद्यदन्नधिमत्त्वेनाप्तेनोच्यतेतत्ततउत्कृष्टं । यथान्येषांबलाद्धनुमद्बलं । भोजननिष्ठवयाशत्रुगृहान्नभोजननिष्ठस्यविषभोजननिष्ठस्यचतृप्तिरूपेष्टसाधनत्वस्यसमानत्वेनशत्रुगृहान्नभोजननिष्ठेष्टसाधनत्वस्यबलवत्तरांनिष्टानुबंधित्वरूपापकर्षमंतरेणविषभोजननिष्ठेष्टसाधनत्वस्यतदवधिकोत्कर्षानुपपत्तेः शत्रुगृहान्नभोजननिष्ठेष्टसाधनत्वस्यबलवत्तरानिष्टानुबंधित्वमनुसंधत्ते । ततःशत्रुगृहान्नभोजनस्यानिष्टसाधनत्वमाक्षिपतीति । पूर्वोक्तंबाधंपरिहरति ॥ [३३।४] नत्विति ॥ [३३।५] यद्वेति ॥ अनिष्टसाधनंभोजनंमाकार्षीरितिवाक्यार्थः ॥ [३३।६] आप्तत्वेसतीति ॥ भ्रमादिशून्यत्वेसतीत्यर्थः । एतेनआप्तस्यापिपित्रादेर्भ्रमादिनाकोपमंतरेणापिप्रमाणविरुद्धोपदेष्टृत्वदर्शनेनव्यभिचारइतिपरास्तं ॥ [३३।७] अतइति ॥ आप्तस्यकोपहेतुत्वादित्यर्थः ॥ [३३।७] मयेति ॥ विवेकवता । एतच्चसाध्यविशेषणं । तेनाप्तकोपहेतोरप्यविवेकिकर्तव्यत्वदर्शनाद्व्यभिचारइतिपरास्तं । इदमितिपक्षनिर्देशः ॥ [३४।१] अर्धमंतर्वेदीति ॥ तृतीयस्यसप्तमेस्थितं । तथायूपस्यवेदिः । अग्नीषोमीयपशौयूपंप्रकृत्यश्रूयते अर्धमंतर्वेदिमिनोत्यर्धंबहिर्वेदीति । तत्रकिमंतर्वेद्येकदेशोयूपांगत्वेनविधीयते किंवाबहिर्वेदिदेशमिश्रःसंधिदेशोलक्ष्यतइतिसंदेहः । ननुइम्यतिशक्ष्यामहइतिवचनाद्वेदेःसर्वार्थत्वं । नयूपमात्रार्थत्वं । न । तस्यसामान्यशास्त्रस्ययूपविषयतयै

० १५८

वोपसंहर्तव्यत्वात् । इयतिएतावतिप्रदेशेकर्तुंशक्ताभवामइत्यर्थः । पूर्वपक्षस्तु । सत्यपियूपप्रकरणेतद्बाधित्वावाक्येनयूपांग त्वंभविष्यतिवेदेरंतःप्रदेशस्यदेशविशेषार्थत्वेहिलक्षणास्यात् । अर्धंतःप्रक्षिप्यमाणेर्धांतरंवर्हिर्भवतीतितदनूद्यते अर्धंवहिर्वेदी त्यनेन । नतुतदपिविधीयते । अतोनवाक्यभेदोनवामिनोत्याख्यानानुषंगक्लेशइति । सिद्धांतस्तु । अर्धमंतर्वेदिमिनोतीत्येता वन्मात्रविधानेअर्धांतरंवहिरित्यपिविधौवाक्यभेदापत्तिः । अर्धांतरस्यबहिष्ट्वविधौवहिष्ट्वनिषेधाभावेचतस्यांतर्वहिर्वामानं स्यात् । तथाचपाक्षिकस्यबहिष्ट्वस्यनित्यवदनुवादोनयुज्येत । तस्मादुभाभ्यामप्यंतर्वेदिशब्दाभ्यांमध्यदेशोलक्ष्यतइति । अ त्रब्रूमः । विनैवलक्षणांसंधिदेशविशेषसिद्धिः । अर्धमेवांतर्वेदीतिनियमाश्रवणात् । ननुसमस्तस्ययूपस्यांतर्वेदिप्रसंगेहिंसत्यर्ध पुनर्वचनसामर्थ्यात्परिसंख्यायेतरस्यबहिर्मानंगम्येत । नत्वेतदस्ति । अर्धशब्दानंतरभावेनैतद्वाक्यात्प्रकरणयुक्तादस्तिकथं तर्हिसमस्तस्यांतर्वेदिनमानं । अर्धशब्दश्रवणात् । यदिसमस्तस्ययूपस्यांतर्वेदिमानमभिमतंस्यात्ततोर्धमंतर्वेदीत्येवंविधिंनैवकु र्यात् । अंतर्वेदिमिनोतीत्येतावतैवप्रकरणाद्विपरिवर्तमानस्ययूपस्यांतर्वेदिमानसिद्धेः । प्रकरणाद्यूपविपरिवृत्तिश्चावश्यंवाच्या। अन्यथाकस्यार्धोगृह्येतेति । एतेनविवरणोक्ताजिज्ञासाशब्देविचारलक्षणासंक्षेपशारीरकोक्ताचयज्ञायुधिशब्देयजमानलक्षणा चनिरस्ता । ननुवायुर्वैक्षेपिष्ठादेवतेत्याद्यर्थवादेप्राशस्त्यप्रतिपत्तयेवाक्यएवलक्षणांगीकार्या । प्रत्येकपदात्तदनुपस्थितेरित्याशं क्याह ॥ [३४।२] वायुर्वाइति ॥ ननुपदार्थसंसर्गबोधेवायुःशीघ्रतमइत्येवधीःस्यान्नतुकर्मप्राशस्त्यविषयासेत्यतआह ॥ [३४।३] नत्विति ॥ पदार्थसंसर्गातिरिक्तप्राशस्त्यस्याभावादित्यर्थः । अयमाशयः । वायव्यंश्वेतमालभेतभूतिकामोवायुर्वैक्षेपिष्ठादेवतावायुमेवस्वे

नभागधेयेनोपधावति सएवैनंभूतिंगमयति । वायुःशीघ्रतमादेवता तंवायुंप्रति यजमानः स्वेन स्वदत्तेनहविर्लक्षणेनभागे नगच्छति । स्वयमेवयजमानोहविर्भागरूपेणदेवतांप्रतिगच्छति । सचवायुः एनंयजमानं भूतिंगमयति । यथा कश्चिद्गृहस्थो भ्यागतायसत्कारंकरोतितद्वत् । अत्रवायूद्देशकत्यक्तहविर्लक्षणयागस्यक्षिप्रफलप्रदवायुप्रसादहेतुत्वमेवप्राशस्त्यंनत्वन्यत् । ननुयत्रार्थवादेदेवताप्रसादहेतुत्वंकर्मणोनोच्यते तत्रतदतिरिक्तप्राशस्त्यलक्षकत्वमर्थवादस्यांगीकार्यमित्यतआह ॥ [३४।४] तत्रेति ॥ अभिधेयानांपदार्थानांयोन्वयस्तदनुपपत्तिरिहनास्ति ॥ [३४।५] सर्वपदानामिति ॥ ननुलक्षणपदत्वाद्विशेषणपदेष्वेवलक्षणानतुलक्ष्यपरेविशेष्यपदे । तथाचतंदभिधेयान्वयानुपपत्तिरस्त्येवात्रलक्षणावीजंविशेष्यपदमेवानुभावकंचस्यादित्यतआह ॥ [३४।६] यदिचेति ॥ सत्यादिपदेषुमुख्यार्थतयावधृतब्रह्मशब्दार्थान्वयानुपपत्तिर्नास्तिचेन्नतर्हितेषुलक्षणा । तद्वीजाभावात् । यदिसास्तितर्हिब्रह्मपदंसत्यादिपदार्थान्वितस्वार्थबोधकमवश्यंस्यात् । अन्वयावोधेप्रसक्तेन्वयबोधार्थसत्यादिपदेषुलक्षणायाःकल्पितत्वादित्याह ॥ [३५।१] ब्रह्मपदस्येति ॥ [३५।१] लक्षणेति ॥ सत्यादिपदेषुलक्षणाश्रयणेनेत्यर्थः ॥ [३५।१] पदांतरेति ॥ पदांतराणांसत्यादिपदानां लक्ष्याःयेर्थास्तदन्वितस्वार्थपरंब्रह्मपदंस्यादित्यर्थः । नन्वभिधेयान्वयानुपपत्तिर्नलक्षणावीजं । जातिःशक्याव्यक्तिर्लक्ष्येतिभवन्मतेगंगापदादौलक्षणाभावप्रसंगात् । किंतुतात्पर्यानुपपत्तिरेव । तच्चतात्पर्यमभिधेयान्वयविषयंवाऽन्वयसामान्यविषयं वास्वरूपमात्रविषयंवा । प्रकृतेतुस्वरूपमात्रतात्पर्यानुपपत्तिरेवतद्वीजमित्यतआह ॥ [३५।३] नचयष्टीरिति ॥ [३५।३] तत्रापीति ॥ नचै

न्यायामृ० वमपिप्रवेशनविशेषेतात्पर्यग्रहएवोपजीव्यइतितदनुपपत्तिरेवलक्षणावीजमस्त्वितिवाच्यं । भोक्तृकर्तृकप्रवेशनप्रतीतीच्छयोच्च तरंगिणी
॥ १८ ॥ रितत्वरूपतात्पर्यानुपपत्त्यपेक्षयाताद्दशप्रवेशनान्वयानुपपत्तेरेवलघुत्वेनतद्वीजत्वौचित्यात् । स्वरूपमात्रतात्पर्यानुपपत्तिर्नल
क्षणावीजं । कुत्राप्यदर्शनादित्याह ॥ [३५।४] इहेति ॥ [३५।४] एतेनेति ॥ पदार्थमात्रेतात्पर्यायोगवद्वाक्यप्रामाण्यस्याप्ययोगेन ॥ [३५।४] वाक्ये सत्यज्ञा०
ति ॥ केवलोनिर्गुणश्चेतिश्रुत्याकेवलतयासिद्धंब्रह्मविशिष्टतयाबोधयतोवाक्यस्याप्रामाण्यं ॥ [३५।५] निरस्तमिति ॥ प्रामाण्यस्या २ । २
नुपपत्त्याहितदुपपादकंकल्पनीयं । नचपदार्थमात्रलक्षणयावाक्यप्रामाण्यमुपपद्यते । तथापदार्थमात्रस्यसिद्धस्यैवोपस्थितेः ।
वाधितेपिपदार्थमात्रस्यसत्वाच्चेत्यर्थः ॥ [३६।४] यदीति ॥ सर्वेषांसत्यादिपदानांलक्षकत्वेतन्मध्यगतस्यानंतादिशब्दस्यापिलक्षणया
स्वरूपमात्रपरत्वेनसर्वतोनवच्छिन्नवस्तुपरत्वाभावात्परोदीरितसत्यादिपदविशिष्टार्थत्वंप्रत्यनंतादिशब्दस्यबाधकत्वायोगेनत
द्बाधकत्वोक्तिरयुक्तास्यादित्यर्थः ॥ [३६।५] सत्यादिपदैरिति ॥ व्यावर्तकस्यसत्यत्वादेर्ब्रह्मण्यबोधनेतस्मिन्ननृतव्यावृत्त्यसिद्धिः ॥
[३६।६] विज्ञानेति ॥ विज्ञानादिपदानांविज्ञानत्वाद्यबोधकत्वात् ॥ [३६।६] एकमिति ॥ एकादिपदानांविशेष्यमात्रपरत्वेननानात्वानिषे
धकत्वात् ॥ [३६।७] सत्यादीति ॥ बुभुत्साप्रयोजकज्ञानानधिकविषयत्वात् ॥ [३६।] सगुणादीति ॥ एकार्थत्वेनाविरोधात् ॥ [३६।१०] तदैक्ष
तेति ॥ सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयंतदैक्षततत्तेजोसृजतेत्यत्रसच्छब्दंप्रधानंवाब्रह्मवेतिविशये सच्छब्दनिर्दिष्टेईक्ष ॥२९२॥
णश्रवणात्तस्यचजडेसंभवाद्ब्रह्मैवसच्छब्दमितीक्षत्यधिकरणेविचारितं । तथा आकाशादेवसमुत्पद्यंतेसएषोनंतइत्यत्राकाशशब्दं

भूतंवापरमात्मावेतिसंशयेऽनंतत्वलिंगेनपरमात्मैवेत्याकाशाधिकरणेनिर्णीतं । तदेतत्सर्वंसर्वपदलक्षणायामयुक्तंस्यादित्यर्थः
॥ [३७।३] सत्येति ॥ सत्यत्वादिमतःसत्यादिपदलक्ष्यत्वायोगात् ॥ [३७।३] लक्ष्यत्वइति ॥ ब्रह्मणःसत्यादिपदाशक्यत्वेऽसत्यत्वादिकंस्या
दित्यर्थः । एतेनगौरनित्यइत्यादौगोपदलक्ष्यस्यापिगोरगोत्वाभावादिदमयुक्तमितिपरास्तं । गौश्चलतीत्यादौगोपदशक्यत्वेन
गोर्गोपदाशक्यत्वाभावात् ॥ [३७।४] मुक्तिश्चेति ॥ ब्रह्मणोऽनानंदत्वस्याननुभवत्वस्यचप्राप्तौतार्किकादिमुक्तिवन्मुक्तिरपुरुषार्थः
स्यात् ॥ [३७।५] नदीत्ववाचिनेति ॥ नदीत्वविशिष्टनदीवाचिनेत्यर्थः ॥ [३७।५] तदाश्रयेति ॥ नदीत्वाश्रयव्यक्तेःशक्यत्वान्नतत्रलक्षणे
त्यर्थः ॥ [३८।१] उक्तंहीति ॥ कल्पतरुकृतेतिशेषः । तार्किकादिरीत्याजातिशब्दस्यापिनदीशब्दस्यनदीत्वविशिष्टनदीवाचकस्यत
दितरव्यक्तिलक्षकत्ववत्सत्त्वविशिष्टसद्व्यक्तिवाचकत्वं तदितरव्यक्तिलक्षकत्वंसत्यशब्दस्यसत्तादिजातिवाचिभिरित्यनेनाभि
मतं किंवाभट्टादिरीत्यासत्ताजातिमात्रवाचकत्वंतदितरलक्षकत्वंवा । आद्यआह ॥ [३८।२] व्यक्तिरिति ॥ ब्रह्मणःसद्व्यक्तित्वेंसच्छ
ब्दलक्षणीयत्वंनस्यादित्यर्थः ॥ [३८।४] जहल्लक्षणेति ॥ गंगात्वविशिष्टगंगांस्वार्थंजहतःपदस्यस्वार्थभिन्नेलक्षणा ॥ [३८।५] जहदजहदिति॥
स्वार्थैकदेशंजहतःतदेकदेशंचाजहतःपदस्यस्वार्थैकदेशएवलक्षणेत्यर्थः । पदशक्यैकदेशस्यपदलक्ष्येर्थेवस्तुतःसत्वेपिलाक्षणि
कवोधनेशक्यैकदेशाविषयीकरणात्तदनन्वयमात्रेणगौरनित्यइत्यादिवदेकदेशत्यागमाश्रित्यलक्षणोच्यते अथावलक्ष्येर्थेवाक्यै
कदेशस्यवस्तुतोसत्त्वेन । द्वितीयेदोषमाह ॥ [३८।५] तत्रेति ॥ लक्ष्येर्थे । आद्येदोषमाह ॥ [३८।६] तत्सत्यत्वस्यचेति ॥ प्रमितताात्पर्यक

सत्यादिपदजन्यज्ञानेनस्वविषयेब्रह्मणिसत्त्वाद्यविषयीकरणेतत्रसत्त्वाद्यसिद्धिः । ब्रह्मणिसत्त्वादिग्राहकस्यमानांतरस्याभावात् । लक्ष्यार्थस्यविशिष्टत्वापत्तिश्चेत्यपिद्रष्टव्यं । भट्टादिरीत्यासत्तादिजातिमत्त्ववाचित्वंसत्यादिशब्दानामितिद्वितीयंपक्षं दूषयति ॥ जातिरिति ॥ शब्देनेति ॥ शक्तेतिशेषः ॥ लक्षणाहेतुत्वेनेति ॥ मुख्यार्थीभूतसत्त्वमात्रप्रतीतेरित्यर्थः ॥ विभागार्थमिति ॥ सखंडाखंडार्थत्वविभागार्थं ॥ विशेषेणेति ॥ भाट्टैर्व्यक्तिमात्रलक्षकत्वेनांगीकृतस्यापिनद्यांमीनःसन्घटइत्यादेर्मुख्यार्थत्वस्वीकारात्तदपेक्षयालाक्षणिकत्वेनस्वीकृतानांनद्यांघोषः सत्यंब्रह्मेत्यादीनांवैलक्षण्यायव्यक्तिलक्षकंमुख्यार्थं व्यक्तिसंबंधिलक्षकंलाक्षणिकमितिविशेषोवक्तव्यइत्यर्थः ॥ एतेनेति ॥ सखंडाखंडार्थत्वविभागार्थंसद्व्यक्तिसंबंधित्वेनब्रह्मणो लक्षणीयत्वेनतस्यसत्त्वासिद्धेरित्यर्थः ॥ शोणिमेति ॥ तदुक्तंवार्तिकेकर्त्रधिकरणे । शोणशब्दोन्येनानुपात्तेप्यश्वेतद्गतंगुणं वदन्नात्मनैवाश्वमपिगमयतीति । एतच्चवार्तिकंमतांतरेणोक्तं । वस्तुतस्तु विनैवलक्षणांशोणशब्दाद्रक्तरूपविशेषोपस्थितौततो श्वस्यानुमानमेवं । कथंव्यभिचारिणारक्तरूपेणाश्वानुमानं । मैवं । अश्वत्वाव्यभिचारिरक्तविशेषोपस्थापकत्वाच्छोणशब्दस्य । तदुक्तंवार्तिकेतत्रैव । शोणशब्दोहियथैवसत्तागुणत्वयोरवाचकस्तथारक्तत्वमप्यतिक्रम्यशोणत्वंनामरक्तावांतरजातिंवदति । साचाश्वेष्वेववर्ततेनगवादिष्वित्यश्वत्वंप्रतीयतइति । एवंकुमारकरभकलभकिशोरवत्सवर्करादयोविशिष्टजातिसंबंधवयोवि शेषवचनत्वेनमनुष्योष्ट्रहस्त्यश्वादीनांग्रहहेतवोनुमानद्वारैव ॥ लक्ष्यस्येति ॥ लक्ष्यस्यब्रह्मणोविशिष्टत्वपरिहारायतस्यसद्व्य

क्तिसंबंधित्वेनलक्ष्यत्वेतुब्रह्मणःसत्त्वासिद्धिप्रसंगइतिभावः । सखंडाखंडत्वविभागमाशंक्यनिराकरोति ॥ [३५।१]नेचसन्घटइति ॥ सन्घटःसत्यंब्रह्मेत्यादीनांलक्षकत्वेसमानेपिविशिष्टाविशिष्टलक्षकत्वेनसखंडाखंडत्वविभागइत्यर्थः । एतच्चोपलक्षणंनदीत्वविशिष्टाविशिष्टलक्षकत्वेननद्यांमीनइत्यादेर्मुख्यार्थत्वं । नद्यांघोषइत्यादेरमुख्यार्थत्वंचेत्यपिद्रष्टव्यं ॥ [४०।३]लक्षणायाइति ॥ औपनिषदेब्रह्मणिमानांतरेणसत्त्वासिद्धेःसत्यपदस्यचलाक्षणिकत्वेनतत्रसत्त्वाप्रतिपादकत्वात्लक्षणायास्त्वतात्विकसत्त्वसंबंधेनाप्युपपत्तेर्ब्रह्मणिसत्त्वासिद्धिरित्यर्थः ॥ [४०।३]वाच्यइति ॥ सत्ताजातेःसत्यशब्दार्थत्वादितिभावः ॥ [४०।२]सखंडार्थत्वमिति ॥ सन्घटइत्यादिव्यक्तिलक्षकपदांतरसाधारण्यंचेत्यपिद्रष्टव्यं ॥ [४०।३]वाच्यातिरिक्तेति ॥ जातिशब्दार्थइतिमतस्यप्रस्तुतत्वादित्यर्थः ॥ [४०।४]ब्रह्मणइति ॥ सन्घटइत्यादिघटाद्याश्रितत्वेनसत्तायाःप्रतीयमानत्वात् । नहिसन्घटइत्यत्रसत्तायांघटःप्रतीयते । किंत्वनित्योघटोध्वस्तोघटइत्यादिषुघटेऽनित्यत्वादिकमिवघटाश्रितैवसत्ताप्रतीयतइतिसत्तायाःपारतंत्र्यमित्यर्थः । ब्रह्मणःसत्तारूपत्वेघटादिसत्तायाअबाध्यत्वापत्तिरित्यपिबोध्यं ॥ [४०।४]एतेनेति ॥ वाच्यातिरिक्तलक्ष्याभावापातेन ॥ [४०।५]सत्तावदिति ॥ सत्ताजातितुल्यंब्रह्मनतुसत्ताजातिरेव अतोनपारतंत्र्यादिदोषइतिभावः ॥ [४०।५]निरस्तमिति ॥ सत्स्वभावत्वात्सत्तांतररहितसत्तेवब्रह्मापिसत्यपदवाच्यमेवस्यान्नतुतल्लक्ष्यमितिवाच्यातिरिक्तलक्ष्याभावदोषेणेत्यर्थः । ननुसत्ताजातिरेवसत्यशब्दवाच्याब्रह्मतुसत्ताभिन्नंअतएवसत्यपदलक्ष्यमितिवाच्यातिरिक्तलक्ष्यलाभः । सत्स्वभावत्वाद्ब्रह्मणःसत्त्वंसिद्धिश्चेत्याशंक्याह ॥ [४०।५]सच्छब्दस्येति ॥

तथाचनब्रह्मणःसत्त्वसिद्धिरितिभावः ॥ कथंचेति ॥ तथाचपरमार्थसदेवसत्यशब्दार्थस्तद्ब्रह्मैवेतिवाच्यातिरिक्तलक्ष्यालाभइति
भावः ॥ एतेनेति ॥ स्वाभिमतेति ॥ सत्यादिपदैर्ब्रह्मणितात्पर्यतःसत्यत्वाद्यर्पणमनिच्छतःशून्याविलक्षणब्रह्मसिद्धिरेवाभि
मतेत्यर्थः ॥ तस्मादिति ॥ शून्यवादापत्तेरित्यर्थः ॥ ७ ॥ सत्यज्ञानादिवाक्यानामखंडार्थत्वानुमानभंगः ॥ ७ ॥ २ ॥ को
हमित्यात्मस्वरूपमात्रेबुभुत्सितेतत्त्वमसीत्यस्यप्रवृत्तेर्नपक्षेहेत्वसिद्धिरित्याशंक्याह ॥ उक्तरीत्येति ॥ वाक्यमात्रस्यसंसर्गपर
त्वात्सोयंदेवदत्तइत्यादेरपितथात्वात्तत्रसाध्यवैकल्यमित्याह ॥ उभयत्रेति ॥ सोयंदेवदत्तइत्यादेरखंडार्थत्वमाशंकते ॥ न
न्विति ॥ तत्कालादेरपीति ॥ तत्कालादेःसत्त्वंविनादेवदत्तस्यतत्कालादिविशिष्टत्वंनसंभवतीत्यर्थः । एतद्देशेतद्देशस्यस
त्त्वापत्तिरादिशब्दार्थः ॥ विशेषणभेदेनापीति ॥ यदाह्यविरुद्धदंडकुंडलादिविशेषणभेदेनविशिष्टभेदआवश्यकस्तदातदे
तद्देशकालरूपविरुद्धविशेषणभेदेनविशिष्टभेदःसुतरामावश्यकइत्यर्थः । तदुक्तंसंक्षेपशारीरके । अविरुद्धविशेषणद्वयप्रभवत्वे
पिविशिष्टयोर्द्वयोः । घटतेनयदैकतातदासुतरांतद्विपरीतरूपयोरिति ॥ अस्तुतावदिति ॥ अनुभवकालध्वंसएवतत्तेतिव
स्तुस्थितावपीत्यर्थः । नन्वेकस्मिन्कालद्वयस्यदेशद्वयस्यचसंबंधस्यसत्त्वेपिसोयमित्यादिवाक्यंपूर्वकालादिविशिष्टस्योत्तरकाला
दिवैशिष्ट्यंबोधयद्विरुद्धमेवेत्यतआह ॥ सोयमितीति ॥ नीलमुत्पलमितीति ॥ नचनीलमुत्पलमितिवाक्यस्यविशिष्टता
त्पर्यान्नाखंडार्थत्वमितिवाच्यं । अयंसनवाअयंसभवतीत्यादिसंदेहविपर्ययनिरासायतत्कालसंसर्गस्यबुभुत्सितत्वेनात्रापिविशि

ष्टेतात्पर्यात् । ननुतत्तासंशयादिनिरासायप्रयुक्तंसोयमित्यादिवाक्यंमभूदृष्टांतः । देवदत्तस्वरूपमात्रस्यबुभुत्सायांप्रयुक्तंसोयमितिवाक्यंदृष्टांतोभविष्यतीत्यतआह ॥ [४४।१] स्वरूपमात्रमिति॥ [४४।१] तत्तायाइति ॥ अनुभवकालसंबंधस्येत्यर्थः॥ [४४।२] अतीतेति ॥ सोयमित्यनेनानुभवकालसंबंधलक्षणतत्तारूपस्वार्थस्यसोयमितिवाक्यप्रयोगकालेऽतीतस्याप्यत्यागादित्यर्थः ॥ [४४।३] अन्यथेति ॥ त्यागेसतीत्यर्थः ॥ [४४।७] शब्दइति ॥ विधेयेनानित्यत्वेनशब्दत्वस्यानन्वयात् ॥ [४५।१] दंडीति ॥ विधेययोःप्रागभावप्रध्वंसयोःकाले दंडसंबंधस्यासत्त्वात् ॥ [४५।१] गृहेति ॥ विधेयस्यदेवदत्तीयगृहत्वस्यकालेविद्यमानस्यकाकादेरित्यर्थः ॥ [४५।६] नहीति ॥ काकादिषुकाकाद्यन्विततयाज्ञातएवंगृहेदेवदत्तीयत्वादिबुद्ध्यहेतुत्वान्नतेषांविशेषणत्वं ॥ [४६।२] तत्रेति ॥ तत्ताविशिष्टइदंत्वादिसंबंधस्याप्रत्यक्षत्वेनोदेश्यत्वेपितत्रतत्तोपस्थापितदेवदत्तसंस्थानविशेषवतीदंत्वादिसंबंधस्यप्रत्यक्षत्वेनानुपदेश्यत्वमित्यर्थः ॥ [४६।३] अतीतमपीति ॥ विशेषणतायांवर्तमानत्वंनप्रयोजकमित्यर्थः । अतएवोक्तंगुणकिरणावल्यां । स्थिरंविशेषणंविशिष्टप्रतीतौस्वात्मानमवेशयत्यपि नतुविशेषणतायांतदुपयोगइति । विशिष्टप्रतीतौविशिष्टोचितायांक्रियायामित्यर्थः ॥ [४६।४] समानाधिकरणमिति ॥ ननुसामानाधिकरण्यंनैकविभक्तिनिर्देश्यत्वं । विभक्तिनिर्देशस्यसर्वत्राभावात् । नाप्यैकाधिकरण्यं । तद्भिन्नविशेष्येण । उत्पलनीलरूपयोरेकत्रावृत्तेः । नापितद्धर्मेणप्रत्याय्यव्यावृत्त्यावा । उपलक्षणस्यापितत्सत्त्वात् । नहितापसेजटानतिष्ठतीति । उच्यते ।

यदन्विततयाज्ञातएवेत्याद्युक्तलक्षणेतात्पर्यान्नदोषः ॥ तत्ताविशिष्टइति ॥ तत्तान्विततयाज्ञाते ॥ पुरोवर्तिनीति ॥ पुरोवर्तिनीदंतादिवैशिष्ट्यस्यैवबुभुत्सिततयासाक्षादबुभुत्सितस्याभेदस्यसाक्षादलाभेपिनदोषइतिभावः । ननुभेदभ्रमनिरासायाभेदःसाक्षाद्बुभुत्सितएवेत्यतआह ॥ भेदभ्रमइति ॥ अभेदकोक्त्यैवभेदभ्रमनिरासान्नाभेदोवश्यंबुभुत्सितइत्यर्थः ॥ तस्यैव चेति ॥ अपरान्वयधीप्रयोजकज्ञानविषयभूतेतरान्वितरूपस्यविशिष्टस्यतादृशेनविशिष्टांतरेणैक्यबोधनेपिनतद्विशेषणयोरैक्यापत्तिरित्यर्थः ॥ अन्यथेति ॥ विशेषणभेदस्यविशिष्टैक्यविरोधित्वे ॥ रूप्याभेदेति ॥ इदंत्वरूप्यत्वादिविशेषणभेदादिदंरूप्ययोर्विशिष्टयोरभेदाप्रतीतिः । नचात्रापिलक्षणयाऽभेदमात्रंबोध्यतइति युक्तं । पुरोवर्तिनिरजताभेदबोधंविनापुरोवर्तिनिप्रवृत्तिर्नस्यात् ॥ नाम्न्युपलक्षणमात्रेणेति ॥ यथादंडादिविशेषणवाचकपदस्यदंडादिरूपस्वार्थात्यागेनालाक्षणिकत्वं तथातत्तादिरूपोपलक्षणवाचकस्यापितत्पदस्यनलाक्षणिकत्वं । स्वार्थात्यागादित्यर्थः । अर्थस्योपलक्षणत्वेपिशब्दस्यमुख्यत्वं दृष्टमित्याह ॥ दृश्यतेहीति ॥ शब्दस्यलाक्षणिकत्वेप्यर्थस्यविशेषणत्वंदृष्टमित्याह ॥ दृश्यंतेचेति ॥ उपलक्षणपरपदेलक्षणामभ्युपेत्याह ॥ वरमिति ॥ उभयपदलक्षणातःसकाशाद्योर्थउपलक्षणं तत्परेएकस्मिन्नेवपदेलक्षणाश्रेष्ठेत्यर्थः । उपलक्षणस्यकाकादेःस्वसंबंधंयद्देवदत्तीयगृहत्वादिविशिष्टंदेवदत्तगृहंतत्प्रत्युपलक्षणत्वंदृष्टं । नचेहतत्तेदंतयोरिदंतातत्ताभ्यांविशिष्टेनसंबंधोस्ति । अतःकथमिदंताविशिष्टेतत्ताविशिष्टेदंताचोपलक्षणंस्यादित्याशंकांपरिहरति ॥ नचेदंतेति ॥ तेप्रतीति ॥ इदंता

विशिष्टस्वरूपंतत्ताविशिष्टस्वरूपंचप्रतीत्यर्थः ॥ तयोरिति ॥ उक्तस्वरूपयोः । ताभ्यां तत्तेदंताभ्यां । विशिष्टयोर्भेदेपीदंता
विशिष्टेयद्विशेष्यंदेवदत्तस्वरूपंतत्रतत्तासंबंधात्स्वविशेष्यसंवद्धत्वरूपइदंताविशिष्टस्य तत्तायाःसहसंबंधोस्त्येव. । एवंतत्तावि
शिष्टस्यापीदंतयासंवंधोस्त्येवेत्यर्थः ॥ परंपरेति ॥ उपलक्ष्यसंवंधित्वमेवोपलक्षणस्यापेक्षितं । नतुसाक्षात् । गौरवादित्यर्थः
॥ यद्वेति ॥ अस्तुवेत्यादिनाविशिष्टमुद्दिश्योपलक्षणसंवंधादिविधीयतामित्युक्तं । इदानीमुपलक्षितमुद्दिश्यविशेषणसंवंधो
विधीयतामित्युच्यतइतिभेदः ॥ अभेदपक्षौत्विति ॥ इदंतोपलक्षितस्यतत्ताविशिष्टाभेदस्तत्तोपलक्षितस्येदंताविशिष्टाभेदइ
तिपक्षौ ॥ अनुवृत्तेति ॥ इदंतोपलक्षितस्यानुगतस्यविशेष्यमात्रस्यतत्ताविशिष्टेनव्यावृत्तेनाभेदोनसंभवति । एवंतत्तोपल
क्षितस्यानुगतस्यविशेष्यमात्रस्येदंताविशिष्टेनापि । केवलविशेष्यस्यविशिष्टेनाभेदोप्यस्तीत्याह ॥ समवायेति ॥ ननुजाति
व्यक्त्योरित्यादिदृष्टांतासंगतिः । अयुतसिद्धयोरभेदाभावादित्याशंकापरिहारस्तयोक्तंसमवायस्थानेभेदाभेदादित्यादि ॥ अन्य
थेति ॥ केवलस्यविशिष्टेनाभेदाभानेनिर्विकल्पिकापर्वतस्याग्निमदभेदंनविषयीकुर्यादित्यर्थः । नन्विदंतोपलक्षिततत्ताविशि
ष्टयोर्भिन्नयोरभेदंवोधनंनयुक्तमित्यतआह ॥ केवलेति ॥ भेदवत्यभेदवोधाद्भिभ्यत्त्वं तत्ताद्युपलक्षितेस्वरूपमात्रेऽभेदोबो
ध्यतइतिकथंब्रूयाः । देवदत्तपिंडेपिभेदस्यसत्त्वादित्यर्थः ॥ नचैतावतेति ॥ तत्तोपलक्षितत्वादेरेवप्रकारत्वात् ॥ उक्तमिति॥
तत्वोद्योतइतिशेषः ॥ अनित्येति ॥ अनित्याभ्यामिदानीमविद्यमानाभ्यांदेशकालाभ्यांस्वकालेयःसंबंधस्तद्देशकालोपलक्षि

तत्वादिरूपस्तस्यदेवदत्तेऽसत्त्वात्सोयंदेवदत्तइत्यादिवाक्यंतत्वमस्यादिवाक्यस्याखंडार्थतायामुपमा दृष्टांतोनभवतीत्यर्थः ॥
[५।१।१]तद्देशकालसंबद्धइति ॥ मधुरासंबंधःकाशीसंबंधेष्टमीसंबंधःपूर्णमासीसंबंधइत्यादिवाक्येपरेणोदाहृतइत्यर्थः । एतेनतद्दे
शकालसंबंधइत्यत्रापितत्तेदंतयोःप्रवेशइतिनिरस्तं । तदेतत्पदयोर्देशविशेषार्थत्वात् ॥ [५।१।३]अन्यथेति ॥ तद्देशकालसंबंधस्यत
त्तात्वे ॥ [५।१।४]स्मृत्यनुभवयोरिति ॥ तयोःकारणकृतस्यवैषम्यस्यसत्त्वेपितद्विषयेचसत्त्वासत्त्वरूपवैषम्यसत्त्वेपिस्मृत्यनुभवगते
ऽर्थविषयीकारित्वांशेवैषम्याभावात् । नचसंस्कारजन्यत्वेनतत्तोल्लेखइतिवाच्यं । लिंगकरणतापक्षेसंस्कारलिंगकानुमितौत
त्तोल्लेखःस्यात् । तत्तास्मृतिरेवप्रत्यभिज्ञायांहेतुर्नसंस्कारइतिपक्षेतदभावाच्च ॥ [५।१।६]तत्तामात्रेचेति ॥ अनुभूतकालध्वंसस्यान
नुभूतस्यापिभानात् ॥ [५।३।२]लक्षणार्थमिति ॥ वाक्यस्थपदस्यैवलक्षकत्वात् । ननुविरुद्धार्थवाचिपदद्वयसामानाधिकरण्याधी
नालक्षणा । नचसदेवदत्तइत्यादिषुविरोधोस्तीत्यतआह ॥ [५।३।२]सएवेति ॥ [५।३।४]समानेति ॥ तदिदंपदाभ्यांस्वार्थाभेदसंबंधस्यदेव
दत्तेबोधने । ननुनिर्घटंभूतलंघटःपटोनेत्यादावभावसंसर्गभानेनाखंडार्थत्वाभावाभावेपिभूतलत्वघटत्वादिभावपदार्थसंसर्ग
स्यभानादखंडार्थत्वाभावः । सोयमित्यत्रत्वभेदसंसर्गस्यभावेप्यखंडार्थत्वमेव । अतएवप्रमाणमालायामानंदबोधोक्तिः । आ
रोपितभेदाभावमात्रस्यत्वतिरेकिणःप्रतिभासेपिविरोधाभावः । भावांशएवविभागानभ्युपगमादिति । तदेतन्निराकरोति ॥
[५।३।६]नचाभावांशेति ॥ तृतीयेदोषांतरमाह ॥ [५।४।१]उपलक्षणेनेति ॥ तत्तेदंताभ्यामुपलक्षितंयत्स्वरूपंतस्ययोऽभेदस्तेनोपलक्षणीयं
यद्देवदत्तस्वरूपंतस्याभेदस्वरूपादुपलक्षणात्प्रागेवसिद्धत्वान्नतत्सिद्ध्यर्थमभेदरूपोपलक्षणापेक्षेत्यर्थः । ननुदेवदत्तस्वरूपमात्र

स्योपलक्षणात्प्राक्सिद्धत्वेप्यभिन्नंयदेवदत्तस्वरूपंतत्सिद्ध्यर्थमुपलक्षणंभविष्यतीत्यतआह ॥ [५४१२]देवदत्तइति ॥ वस्तुगत्यायद भिन्नंदेवदत्तस्वरूपंतत्प्रत्यक्षतएवसिद्धमस्ति ॥ [५४१३]तस्मादिति ॥ वस्तुतोऽभिन्नसिद्धावपितस्माद्भिन्नंतत्सिद्धमित्यर्थः । द्विती येदोषांतरमाह ॥ [५४१५]उक्तरीत्येति ॥ तत्तारूपोपलक्षणात्प्रागेवदेवदत्तस्वरूपस्यसिद्धत्वेननतत्रसत्तोपलक्षणं ॥ [५४१६]दत्तेति ॥ देवद त्ताद्देवदत्ताभेदःप्रत्यक्षतएवसिद्धइत्युक्तं ॥ [५४१८]नाखंडार्थेति ॥ लक्षणयाऽखंडार्थविषयानेत्यर्थः ॥ [५४१८]तत्रेति ॥ प्रत्यक्षेवृत्तेरनपेक्ष णात् । ननुप्रत्यक्षेवृत्त्यनपेक्षायामपिविशिष्टाभेदविषयत्वेतस्यबाधेनप्रतिबद्धान्नप्रत्यक्षस्यविशिष्टाभेदविषयत्वं । किंतुस्वरूपा भेदमात्रविषयत्वमितिचेन्न । यदन्विततयाज्ञातएवेतरान्वयधीस्तद्विशेषणंमित्याद्युक्तविशेषणलक्षणयोगित्वेतत्तायास्तद्विशि ष्टाभेदबोधनेबाधाभावात् । ननुमाभूत्प्रत्यक्षप्रत्यभिज्ञालक्षणयाखंडार्था । निष्प्रकारकत्वेनतुसाऽखंडार्थाभविष्यतीत्यतआह ॥ [५४१८]तत्तेति ॥ तत्त्वेनेदंत्वेनचतदभेदेनचदेवदत्तंप्रत्यभिजानामीतिप्रत्यभिज्ञांनुव्यवसायेतृतीयार्थोल्लेखात्प्रत्यभिज्ञायास्तंत्तादि प्रकारकत्वमवसीयतइत्यर्थः । यत्तुप्रत्यक्षप्रत्यभिज्ञायांनतत्तेदंतयोःप्रकारत्वं । भासमानाभेदरूपवैशिष्ट्यप्रतियोगित्वाभावा दिति । तन्न । तत्तावैशिष्ट्यादिप्रतियोगित्वेनतत्तादेःप्रकारत्वोपपत्तेः । नह्यन्यवैशिष्ट्यप्रतियोगित्वेनान्यस्यप्रकारत्वंकोप्याह । यत्त्वभेदोनप्रकारःस्वरूपतयाप्राधान्यादिति । तदपिन । देवदत्तत्वाभेदत्वाभ्यांस्वरूपस्यापिगुणप्रधानभावोपपत्तेः । कर्तृत्व

० १५९ भोक्तृत्वाभ्यामिवस्वर्गप्रतिपुरुषस्यतदनुल्लेखइति तत्ताविशिष्टाभेदानुल्लेखः ॥ [५४१९]स्वप्रत्यभिज्ञेति ॥ ननुनायमस्तिनियमःस्वेन

यथावगतंतथैवपरंप्रतिवाच्यमिति । समूहज्ञानेनापिश्रोतृबुभुत्सितैकदेशोपदेशदर्शनात् । ज्ञानमात्रसाध्यत्वाद्बुभुत्सानुसारि त्वाच्चोपदेशस्येति । मैवं । अयंसनवेत्यादिस्वकीयसंदेहादिकंप्रति सएवायमितितत्तादिप्रकारिकायाःप्रत्यक्षप्रत्यभिज्ञायाः निवर्तकत्वमवधारयमाणेनकोयमितिप्रष्टृवाक्यावगततादृशसंदेहवंतंपरंप्रतिस्वप्रत्यक्षप्रत्यभिज्ञासमानाकारकज्ञानजनकवाक्य स्योपदेष्टव्यत्वात् । तदिदमुक्तंस्वेति । परमितिच । उक्तसंदेहोत्तरकालीनस्वकीयप्रत्यभिज्ञयावगतस्येत्यर्थः । उक्तसंदेह वंतंपरंप्रतीत्यर्थः ॥ सार्वज्ञादेरिति ॥ सार्वज्ञाद्युपलक्षितत्वस्येत्यर्थः ॥ चैतन्यमात्रेति ॥ तत्त्वमसीत्यस्येत्यनुषंगः ॥ भ्रमकालज्ञातेति ॥ यत्तुभ्रमप्रतीतभेदाश्रयतावच्छेदकतत्प्रतियोगितावच्छेदकद्वयोपलक्षितस्वरूपमात्रज्ञानंचेद्भ्रमनिवर्तक मिति । तन्न । भेदाश्रयतातत्प्रतियोगितयोरवच्छेदकस्यार्थंप्रत्युपलक्षणत्वेपिज्ञानेविषयतयानुप्रवेशश्चेत्खंडार्थत्वमेव । नचेद्भ्र मकालज्ञाताधिष्ठानज्ञानादनधिकविषयमेवमहावाक्यज्ञानं । महावाक्यस्यतत्त्वमसीत्यस्यावांतरवाक्येनसत्यंज्ञानमित्यादिवा क्येनगतार्थत्वेहेतुमाह ॥ तत्पदार्थशोधकेनेत्यादिना ॥ ननुमहावाक्येऽनेकपदाभावेतज्जन्यज्ञानेनभ्रमनिवृत्तिर्नस्यादि तिशंकते ॥ कथमिति ॥ ननुशंखश्वैत्यानुमानादनधिकविषयस्यापिश्वैत्यप्रत्यक्षस्यापीतभ्रमनिवर्तकत्ववत्प्रकृतेपिस्यादित्यत आह ॥ नहीति ॥ शंखश्वैत्यानुमितिप्रत्यक्षयोर्विषयवैजात्याभावेपिकारणवैजात्यात् तथाप्रकृतेनोभयवैजात्यमित्यर्थः ॥ न चतात्पर्याविषयेणापीति ॥ तत्त्वमसीत्यस्यचैतन्यमात्रपरत्वेऽभेदेतात्पर्याभावेनप्रतीतस्याप्यभेदस्याकिंचित्करत्वान्नतेनभे दभ्रमनिवृत्तिःस्यात् ॥ अतिप्रसंगादिति ॥ तात्पर्याविषयेणापियजमानप्रस्तराभेदेनतद्भेदधीनिवृत्तिप्रसंगः । ननुमहावा

क्येधिकबोधार्थनानेकपदोपादानं । किंत्वेकपदसहायार्थमितिशंकते ॥ नचैकस्येति ॥ चैतन्यस्येति ॥ सहायांतरानपेक्षपदप्रयोगएवोचितइत्यर्थः ॥ अभेदरूपेति ॥ यदनुपपत्त्यायत्कल्प्यतेतस्यतदुपपादकत्वनियमादभेदरूपान्वयबोधकत्वेननिर्णीतस्यपदद्वयसामानाधिकरण्यस्योपपादनार्थंकल्प्यमानालक्षणामुख्यार्थबाधेसतिपदद्वयामुख्यार्थाभेदरूपान्वयमादायपदद्वयसामानाधिकरण्यमुपपादयेदित्यर्थः । एकस्मिन्नपिपदेलक्षणायाअयोगान्नतदर्थंपदांतरमर्थवदितिभावेनाह ॥ सदेवेत्यादीति ॥ चिन्मात्रंयदिनबुद्धिस्थंतर्हिनतत्रलक्षणापि । यदिबुद्धिस्थंतर्हितदितिपदेनशक्त्यैवतत्प्रतिपादनमस्तु । सर्वनाम्नांप्रकृतेर्थेशक्तत्वादित्यर्थः ॥ वाच्यार्थेति ॥ प्रस्तरवाक्येहिप्रत्यक्षानुरोधेनलक्षणाकल्प्यते । नचेहाद्वैतवाक्यस्यतत्वावेदकस्यातत्वावेदकप्रत्यक्षानुरोधोस्ति । तथाचतत्त्वमादिवदवाच्यविशिष्टयोरेवाभेदोमहावाक्येनबोध्यतामितिलक्षणानपेक्षितेत्यर्थः ॥ अभिज्ञाभ्यामेवेति ॥ एकस्मिन्नेवदेवदत्तेकालभेदोनोत्पन्नाभ्यांदेवदत्तोयंदेवदत्तोयमितिज्ञानाभ्यां ॥ प्रत्यभिज्ञायाएवेति ॥ एकस्याइतिशेषः । नन्वभिज्ञाधिगतमात्रबोधकत्वात्प्रत्यभिज्ञातःप्रामाण्यंनस्यादतआह ॥ ततएवेति ॥ अर्थवादवत्सप्रयोजनत्वात्प्रामाण्यं ॥ धर्मद्वयेति ॥ पदार्थातिरिक्तवाक्यार्थाभावेपिभेदभ्रमनिवर्तकत्वात्प्रामाण्यमित्यर्थः । कात्यायनेनसंमतित्वेनोदाहृतंवाक्यंस्वोक्तार्थेसंमतित्वेनाह ॥ उक्तंहीति ॥ अभिज्ञाभ्यामिति ॥ वस्तुगत्यैकस्मिन्कालद्वयसंबंधस्या

भिन्नाभ्यांग्रहणेपिनताभ्यांकालद्वयसामानाधिकरण्यंगृह्यते । प्रत्यभिज्ञयात्वेकाधिकरणत्वरूपंकालद्वयस्यसामानाधिकरण्यं गृह्यतइतितस्यास्ताभ्यांप्रमेयंतएवभेदः । यथैकस्मिन्धूमेकालव्यवधानेनजातयोर्विशकलितव्यभिचाराभावसहचारज्ञानयोस्तदुभयसामानाधिकरण्याविषयत्वेनव्याप्त्यविषयकत्वादव्याप्यत्वभ्रमनिवर्तकत्वं । विशिष्टज्ञानस्यतुव्याप्तिविषयकत्वात्तथात्वंतद्वत् ॥ [५।१।३] एकस्मिन्निति ॥ समानेऽधिकरणइत्यर्थः । एतेनप्रत्यभिज्ञायांनैकत्वंविषयः । संख्यारूपस्यतस्यगुणादावभावात् । तदभिलापवाक्यस्यापिसोयमित्याकारतापत्तेश्चेतिनिरस्तं । समानाधिकरणविभक्त्यासामानाधिकरण्यस्योल्लेखाच्च ॥ [५।१।४] अन्यथेति ॥ समानजातीयज्ञानयोरभिज्ञाप्रत्यभिज्ञानयोःप्रमेयभेदाभावे ॥ [५।१।४] भेदभ्रमेति ॥ शुक्तावियंनशुक्तिरितिज्ञानानंतरमियमितिज्ञानेनपुरोवर्तिनिकालद्वयपरामर्शाद्भेदभ्रमनिवृत्तिःस्यात् । नचैकेननकालद्वयपरामर्शइतिवाच्यं । एकेनैकस्मिन्कालद्वयपरामर्शेतत्सामानाधिकरण्यविषयकत्वावश्यकत्वात् । ननुतत्त्वमसिवाक्यंअखंडार्थभेदभ्रमनिवर्तकवाक्यत्वात् । घटाकाशोमहाकाशइतिवाक्यवत् । तदुक्तंवार्तिके । घटाकाशोमहाकाशइत्युक्तेरेवैक्यधीर्यथेति । तदेतन्निराकरोति ॥ [६०।४] घटाकाशइति ॥ [६०।५] द्वितीयहेताविति ॥ नचैतत्संसर्गव्यतिरिक्तार्थएवप्रमाणमितिसाध्यं । अप्रयोजकत्वात् ॥ [६०।६] श्लोकस्येति ॥ अग्निहोत्रादिगीरेतत्संसर्गव्यतिरेकिणीत्यपि सत्यज्ञानादिगीरेतत्स्वदार्थेत्यपिचपठितुंशक्यत्वात् ॥ ७ ॥ ७ ॥ तत्त्वमस्यादिवाक्यस्याखंडार्थत्वानुमानभंगः ॥ ७ ॥ ३ ॥ [६१।१] परास्येति ॥ नतस्यकार्यंकरणंचविद्यतेनतत्समश्चाभ्यधिकश्चदृश्यतइतिपरास्येति श्रुतेः पूर्वार्धः । प्रत्येकंहेतुत्रयोपेताष्टसाध्यवदनुमानान्येकहेतुकद्विसाध्यकानुमानेपुनरप्येकहेतुकद्विसाध्यकानुमानेत्रिहेतुकै

कसाध्यकानुमानान्येकहेतुकैकसाध्यकानुमानत्रयंचाह ॥ [६।१३] ब्रह्मेत्यादिना ॥ वेदांतमुख्यतात्पर्यविषयोब्रह्मेत्यर्थः । तेनोपहिं
तस्यपक्षीकरणेसिद्धसाधनमित्यादिनिरस्तं । नन्वत्रधर्मिपदस्वरूपपदस्वपदानांयत्किंचिद्धर्म्यादिपरत्वेघटादिसमसत्ताककल्पिं
तधर्मिपरत्वेनसिद्धसाधनं । ब्रह्मपरत्वेसाध्याप्रसिद्धिः । ·घटादिधर्मेब्रह्मसमानसत्ताकत्वादेरप्रसिद्धेः । मैवं । दृष्टांतेसाध्य
निरूपणेघटादेर्धर्म्यादित्वात् । धर्म्यादिपदानांसमभिव्याहृतपरत्वांत् । नचानुमानेशब्दमहिमानोपयुज्यतइतिवाच्यं । स्वा
र्थानुमानेतथात्वेपिपरार्थानुमानेन्यायवाक्यरूपेतदुपयोगात् । अतएवस्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेश
गतेत्यादीनिवेदांतिनां स्वोपादानगोचरेत्यादीनिचन्यायविदामनुमानानि ·। धर्मैर्हीनंनावतिष्ठतइत्यस्यधर्मरहितंनेत्यर्थः । अ
तएवधर्मैर्हीनंनेत्यादेर्धर्माव्याप्यमित्यर्थः । तथाचसिद्धसाधनं यस्मिन्देशेकालेवाब्रह्मतत्रधर्माःसंत्येव । नहिकालोदेशोधर्मर
हितः । मायाचित्संबंधरूपकालस्तुमुक्त्यसहवृत्तिरितिपरास्तं । अस्मादेवानुमानात् । व्याघाताच्च । मुक्तिकालेकालोनास्ती
त्यस्यव्याहतत्वाच्च । मुक्तेरपिकालसंबंधाच्च ॥ [६।१२] वेदांततात्पर्येति ॥ ननुवेदांतानामवांतरतात्पर्यमादायसिद्धसाधनं मुख्य
तात्पर्योक्तौवेदांतवाक्यमुख्यतात्पर्यविषयप्रकारस्याप्रसिद्ध्याप्रसिद्धिरिति । मैवं । व्याप्तिग्रहसत्त्वेसाध्याप्रसिद्धेरदोषत्वात् ।
अत्रापिसामान्यव्याप्तिग्रहोस्तीत्याह ॥ [६।१२] यदेवमित्यादिना ॥ [६।१३] तत्प्रेप्सुत्वेसतीति ॥ समस्तकल्याणगुणनिरूपितगुणित्वेच्छा
तत्प्रेप्सा । एतेनानंदादीनांनित्यत्वेनतत्रप्रेप्साशक्त्योरसंभवइतिनिरस्तं । गुणित्वस्यापिनित्यत्वेऽस्मदिष्टसिद्धेः ॥ [६।१५] संदांतज्ञि

ह्यसुत्वेसतीति ॥ नचचरमवृत्तिपर्यंतंतत्त्यागेशक्त्यभावादसिद्धोहेतुः अज्ञानविरोधिनःस्वरूपस्फुरणस्यचरमवृत्तिकालइव संसारकालेपिसत्वात्। उक्तंचैतदज्ञानविषयभंगे ॥ [६३।२०] व्यावर्तकत्वंवेति ॥ नचैवंव्यावर्तकत्वेव्यभिचारः। व्यावर्तकत्वमन्यव्यावृत्तमित्यबाधितप्रतीतिबलेनतस्यापिव्यावृत्त्यादिरूपधर्मवत्त्वात् । व्यावृत्तिर्व्यावृत्तेतिप्रतीत्याव्यावृत्तेरपिव्यावृत्तिमत्त्वाच्च। नचैवमनवस्था। स्वस्यैवस्ववृत्तित्वांगीकारात् । अबाधितप्रतीत्याचनात्माश्रयदोषोपि । नहिकेवलान्वयित्वमेवस्ववृत्तित्वे तंत्रं। गंधात्यंताभावादेःस्ववृत्तित्वात् ॥ [६३।२३] सगुणातिरिक्तस्येति ॥ निर्गुणब्रह्मसिद्धौसगुणवाक्यस्यसगुणब्रह्मपरत्वेननिर्गुणाबाधकत्वं। सगुणवाक्यस्याबाधकत्वेनिर्गुणब्रह्मसिद्धिरित्यादिदोषेणसगुणातिरिक्तासिद्धिः । नचकेवलोनिर्गुणश्चेतिश्रुत्यानिर्गुणब्रह्मसिद्धिः। निर्गुणत्वरूपगुणसत्त्वासत्त्वाभ्यांव्याहत्यात्वदभिमतनिर्गुणस्यनिर्गुणश्रुत्याप्यसिद्धेः ॥ [६३।२३] त्वत्पक्षइति ॥ तात्विकगुणवद्ब्रह्मव्यक्तिसत्त्वेसगुणश्रुतिस्तद्विषया। तदभावात्तुसानिर्विषयास्यात्। श्रुतेस्तात्विकार्थविषयत्वात् । यदिचातात्विकार्थमादायश्रुतिःप्रवर्तेततर्हिप्रस्तरश्रुतिरप्यतात्विकयजमानाभेदमादायप्रवृत्तेतिनतत्रगौण्यादिकंकल्प्येत । यस्तुसगुणश्रुतिस्तात्विकत्वपर्यंतंनविषयीकरोतीत्याह तदबोधात्। नहिसगुणश्रुत्यातात्विकत्वंगुणानामत्रसाध्यते। किंतुवस्तुगत्यातात्विकंसगुणमादायसाप्रवर्ततइत्युच्यते ॥ [६३।२३] परःपराणामिति ॥ तेजोबलैश्वर्येत्यत्रश्लोकेसगुणस्यपरात्परत्वोक्तेः॥ [६३।२३] अन्यथेति॥ श्रुतेरुभयासिद्धार्थपरत्वे॥ [६१।२३] सदेवेति ॥ इदंशब्दोदितःप्रपंचःसृष्टेःपूर्वंसदसच्छब्दोक्तापरपरब्रह्मात्मकइतिश्रुतेःत्वद्रीत्यैवार्थः स्यात्॥ [६१।२४] ग्रहणेति ॥ यत्त्वैंद्रवायववाक्यवत्षोडशिग्रहणवाक्यस्ययागपरत्वेप्यग्रहणवाक्यस्यनयागविषयत्वंग्रहणाभावबोध

कत्वादिति । तन्न । अबोधात् । नह्युक्तवाक्याभ्यासपरंपरयायागाद्यनुमानमापाद्यते किंतुनिर्गुणपरब्रह्मवदप्रामाणिकमपिपरं
यागंकल्पयित्वातत्परंग्रहणनिषेधवाक्यंसर्वज्ञादिगुणनिषेधकवाक्यवदित्युच्यते । तत्रकःप्रसंगोऽग्रहणवाक्येनयागानुमानस्य ।
नन्वसद्ब्रह्मत्वस्यनिषेधात्कथमसच्छब्दःपरब्रह्मपरःस्यादतआह ॥ [६१।२४] असन्नेवेति ॥ ननुतात्त्विकगुणवद्व्यक्त्यंतराभावेप्येकस्या
मेवव्यक्तौकालभेदेनसगुणनिर्गुणश्रुतीप्रवर्त्स्यतइत्याशंक्याह ॥ [६१।२५] नचेदानीमिति ॥ कालभेदेनापिसगुणश्रुतिरतात्त्विकगुणवि
षयावातात्त्विकगुणविषयावा । आद्येकालभेदानुसरणंव्यर्थं । एकत्रैकदैवमिथ्याऽमिथ्यार्थविषयकत्वेनसगुणनिर्गुणश्रुत्युपपत्तेः ।
तदपिनिरसिष्यते । द्वितीयंनिराकरोति ॥ [६२।१] तथात्वेपीति ॥ यस्तुवैयात्यादनित्यत्वमेवमिथ्यात्वमित्याहतंप्रत्याह ॥ [६२।२] ज्ञानं
नित्यमिति ॥ तैत्तिरीयवाक्यंपठति ॥ [६२।३] एषइति ॥ [६२।४] तस्यैवेति ॥ तस्यैवमहिम्नःपदंस्थानमाश्रयः तस्यवित् वेत्ताभवेत् । तं
महिमानंविदित्वापापकेनकर्मणानलिप्यतइत्यर्थः ॥ [६२।५] बृहदारण्यकइति ॥ नन्वत्रब्रह्मणःप्रकृतत्वेपिनगुणेतात्पर्यं । सवाएष
महानजआत्मायोयंविज्ञानमयःप्राणेषुयएषोंतर्हृदयआकाशस्तस्मिंछेतेसर्वस्यवशीत्यादिवाक्येयोयमित्यादिनाशेतइत्यंतेनजीव
मुक्त्वातस्यसवाएषमहानजआत्मेत्यनेनब्रह्माभेदेतात्पर्यात् । मैवं । हृदयाकाशस्थेनह्यैक्यमुच्यते । तत्स्थश्चपरमात्मैव । दह
राधिकरणन्यायात् । तत्रापिदहरंगगनंविशोकस्तस्मिन्यदंतस्तदुपासितव्यमितिश्रुतेश्च । ऐक्येतात्पर्यसिद्धौगुणेष्वतात्पर्यक
ल्पनं । तेष्वतात्पर्येविरोधादैक्येतात्पर्यसिद्धिरित्यन्योन्याश्रयाच्च ॥ [६२।७] मंत्रस्येति ॥ ननूदाहृतमंत्रोनब्रह्मपरः । किंतुब्राह्मणस्य

ब्रह्मविदस्त्यक्तसर्वैषणस्यएषःनेतिनेतीत्यादिवाक्यप्रतिषिद्धसर्वोपाधिरूपःमहिमानित्यइत्येवंपरइति । तन्न । एषणात्यागात्पूर्वमसतस्ततःपरंचसतोमहिम्नोनित्यत्वायोगात् । ब्राह्मणशब्दस्यतदधीतेतद्वेदेतिसूत्रविहिताणंतस्यमुख्याध्ययनवेदनवतिब्रह्मणिमुख्यत्वात् । ब्रह्मविदोब्राह्मणाविविदिषंतीतिबहुवचनेनप्रस्तुतस्यैकवचनेनब्राह्मणस्येत्यनेनपरामर्शायोगाच्च । एषणाभावादिरूपस्यमहिम्नस्त्वयापिनित्यत्वांगीकाराच्च । अतएवत्वद्भाष्येतस्यैवस्यात्पदवित्तंविदित्वेत्यादिमंत्रव्याख्याने आत्मस्वरूपस्यसर्ववैलक्षण्यरूपमहिमस्वरूपविदःपुण्यपापादिनिमित्तौह्रासौनस्तइत्युक्तं ॥ [६२।१] अंतःकरणेति ॥ छांदोग्येसदेवसोम्येदमग्रआसीदेकमेवाद्वितीयंतदैक्षतेतीक्षितृत्वस्यबहुस्यामित्यादिसंकल्पस्यचान्नमशितंत्रेधाविधीयतेतस्ययःस्थविष्ठोधातुस्तत्पुरीषंभवतियोमध्यमस्तन्मांसंयोणिष्ठस्तन्मनइत्यादिनावक्ष्यमाणमनःसृष्टितःपूर्वमेवश्रवणात्तदाऽविद्यायाःसत्त्वेपितस्याईक्षितृत्वंप्रत्यनुपाधित्वात् । कामःसंकल्पइत्यादिश्रुतेःस्वाभाविकज्ञानेतिज्ञानंनित्यमित्यत्रस्वाभाविकज्ञानस्ययादृशंनित्यत्वमुक्तंनित्यशब्देनतस्यैवक्रियानित्येत्यत्रप्रत्यभिज्ञानात् । ननुमाभूत्तात्विकगुणवद्व्यक्त्यंतरंसगुणश्रुतिर्निर्गुणएवातात्विकगुणान्विषयीकरिष्यतीत्याशंक्यनिराकरोति ॥ [६२।१२] नचातात्विकाइति ॥ ननुश्रुतिविषयाणामतात्विकत्वेश्रुत्यप्रामाण्यंस्यादित्यतआह ॥ [६२।१३] श्रुत्येति ॥ अतात्विकंतात्विकत्वेनविषयीकुर्वतीह्यप्रमाणंस्यान्नचतथास्तीत्यर्थः ॥ [६२।१३] विषयेति ॥ अर्थसत्त्वलक्षणस्वतःप्रामाण्योपेतश्रुतिबोधितत्वेनगुणानांतात्विकत्वसिद्धिः ॥ [६२।१४] अन्यथेति ॥ श्रुतिबोधितस्याप्यतात्विकत्वे । औत्सर्गिकप्रामाण्यस्या

पवादाभावमाह ॥ निर्गुणेति ॥ निर्गुणश्रुतेर्दुःखादिगुणपरत्वेनतद्विरोधएवनास्ति नतरांतस्यापवादत्वं ॥ तद्विरोधेपीति ॥ सत्यपिनतस्यापवादत्वमित्यर्थः ॥ दार्शमिकइति ॥ दशमाध्यायप्रतिपाद्येनिर्गुणवाक्यविरोधेचोदकेतिदेशवाक्यं आदिशब्देनपदार्थःउपकारश्चइत्यादिरूपइतिआदिशब्देनशास्त्रोपकारौ । दशमस्यप्रथमेचिंतितं । विधेःप्रकरणांतरेतिदेशात्सर्वंकर्म स्यात् । प्राजापत्यंचरुंनिर्वपेच्छतकृष्णलमायुष्कामइति । तत्रकृष्णंलस्वर्णमाषेऽवघातोस्तिवानवेतिसंशयेपूर्वपक्षः । प्रकृतिवत्कुर्यादित्यतिदेशेयद्यत्प्रकृतौविद्यतेतत्तत्सर्वमविशेषादतिदिश्यते । प्रकृतौचशास्त्रपदार्थोपकाराविद्यंते । अतस्तेसर्वेतिदिश्यंते । ननुप्रकृतावववघातजन्यउपकारःकृष्णलेषुनसंभवतिसकथंतत्रातिदिश्यतेतदनतिदेशेचकथंतदर्थतयावघातःक्रियेत । उच्यते । उपकारेष्वतिदिश्यमानेषुयेयत्रनसंभवंतितेतत्रनातिदिश्यंते । पदार्थास्तुतत्रातिदिष्टाःप्राकृतोपकारासंभवेप्युपकारांतरमदृष्टं कुर्युः । वचनप्रामाण्यात् । तस्माल्लुप्तार्थमपिप्रवर्ततइति । सिद्धांतस्तु । लुप्तार्थंनप्रवर्तते । कथंभावोयंलौकिकोवैदिकश्चोपकारसंपादनात्मकंयागगतव्यापारमपेक्षते । नपदार्थान्शास्त्रंवा । यागेनस्वर्गंकुर्यादित्युक्तेकथंतेनस्वर्गःकर्तव्यइतियागगतव्यापारविशेषापेक्षाजायते । यथापरशुनाच्छिंद्यादित्युक्तपरशुगतोद्यमननिपातनादिरूपव्यापारस्ययत्रसाधनगतोव्यापारोनज्ञातस्तत्रसाधनमात्रमुपदिश्यते । यत्रज्ञातस्तत्रसोप्युपदिश्यते यथापरशुनाच्छिंधीत्युक्तेकथमनेनच्छेत्तव्यमित्याकांक्षमाणंप्रतिपरशुंदंडेद्वाभ्यांहस्ताभ्यांगृहीत्वाकाष्ठस्यार्धस्योपर्यधोमुखमुद्यम्यनिपातयेत्युच्यते । तदिहयागेनकथंस्वर्गःकार्यइत्यपेक्षायां समिधोयजतिव्रीहीनवहंतीत्यादीनिश्रूयमाणानिप्रधानयागगतव्यापारविशेषपरत्वेनावधार्यंते । तत्रयान्यवघातादीनितानिह

ष्टेनैवतंडुलतुषविमोकादियागनिर्वृत्युपयोगद्वारेणयागगतव्यापारतामनुभवंति । समिधादीनांतुदृष्टद्वाराभावान्निर्द्वाराणांच क्षणिकत्वात्प्रधानयागसंबंधित्वायोगाद्यागगतव्यापारत्वानुपपत्तेरदृष्टद्वारकल्पनं । तदेवंप्रकृतौपदार्थानस्वरूपपराःकिंतुस्वज न्ययागसंबंध्युपकारलक्षणार्थाः । तदिहप्राजापत्यकथंभावोपिसादृश्योपस्थापिताग्नेययागगतदृष्टादृष्टरूपानुपकारान्लब्ध्वा निर्वर्त्स्यतीतिप्रकृतिवच्छन्दोपितानेवातिदिशति । उपकारहेतुतयापदार्थास्तद्बोधकतयाचशास्त्राणि । तथाचकृष्णलेवैतुष्य बाधेऽवघातासंभवात्तद्वर्जंपदार्थान्प्राजापत्यगतःप्रकृतिवच्छन्दःप्रापयतीतितस्यसंकोचएव ॥ ६२।११ तार्तीयइति ॥ तृतीयाध्याय प्रतिपाद्ये ॥ ६२।११ अप्राप्तेति ॥ बाध्यत्वेनाभिमतस्यानुत्थानमप्राप्तबाधः । तदुक्तंन्यायरत्नमालायां । क्लृप्तस्यशास्त्रस्यचकल्पनंय न्निरुध्यतेमूलनिकृंतनेन । क्लृप्तेनशीघ्रेणफलापहारादप्राप्तबाधंतमुदाहरंतीति ॥ ६२।११ गार्हपत्यमितीति ॥ कदाचनस्तरीरसिनेंद्र सश्चसिदाशुषइत्यस्याऋचःऐंद्र्यागार्हपत्यमुपतिष्ठतइतिद्वितीयाश्रुत्यागार्हपत्येविनियुक्तागार्हपत्यप्रकाशकत्वेस्थितेमुख्येंद्रत्वस्य गार्हपत्येऽभावात्तत्रगौणेंद्रशब्दःकल्प्यतइत्यर्थः । श्रुतिलिंगाधिकरणन्यायस्तुपूर्वमुक्तः ॥ ६२।१२ परेणेति ॥ यद्यप्यतुल्यबलयोरेक त्रप्रसंगेपरेणनपूर्वबोधः यथासुग्लःसुम्लइत्यत्रश्याद्व्यधेत्याकारांतलक्षणंणप्रत्ययमनुपसर्गसावकाशत्वाहुर्बलंपरमपिबाधित्वा आतश्चोपसर्गइतिपूर्वःकप्रत्ययएवभवति । तथापितुल्यबलयोर्विरुद्धयोरेकत्रप्रसंगेपरेणपूर्वस्यबाधः यथावृक्षाभ्यामित्यत्रसुपि चेतिदीर्घत्वंसावकाशं वृक्षेष्वित्यत्रबहुवचनेझल्येदित्येत्वंसावकाशं वृक्षेभ्यइत्यत्रोभयोःप्रसंगेपरेणैत्वेनदीर्घत्वस्यबाधः । ननु

विरोधिनोस्तुल्यवलयोरेकत्रप्रसंगेसत्प्रतिपक्षवदुभयाभावएवस्यान्नत्वेकतरकार्यं यथाद्वयोस्तुल्यवलयोरेकःप्रेष्योभवतिसतयोः पर्यायेणकार्यंकरोति । नानादिग्गतकार्येचतमुभौप्रेषयतोयदायद्यसाववविरोधार्थीभवत्युभयोरपिनकरोतीति । सत्यंविप्रतिषेधेपरंकार्यमितिविधानादेकस्यप्राप्तिरूपेबाधेपरंभवति । उक्ताचविध्यर्थतामहाभाष्येविप्रतिषेधेपरंकार्यमित्यस्य ॥ ६२।२० नित्येनेति ॥ रंधयतीत्यत्ररधिजभोरचीतिनुमकृताकृतप्रसंगित्वान्नित्यः अतउपधायाइतिवृद्धिरनित्या नुमिकृतेऽकारस्यानुपधत्वादप्राप्तेः । तत्रपूर्वोपिनुमेवभवतीतिनित्येनानित्यस्यबाधः ॥ ६२।२० अंतरंगेणेति ॥ अशिश्रियत् अदुद्रुवदित्यत्रांतर्भूतचङपेक्षत्वादियङुवङावंतरंगौवहिर्भूततिवपेक्षत्वाद्वहिरंगंलघूपधलक्षणंगुणंबाधेते ॥ ६२।२० प्रतिपदोक्तेनेति ॥ तक्ष्णुवंतीत्यत्रइग्लक्षणमुकारस्यप्राप्तं यणमुकाराश्रितउवङ्बाधते । यथोक्तंपदमंजर्यांविप्रतिषेधसूत्रे । परंविदुःपूर्वपरोपपत्तौपरस्यनित्यस्यचनित्यमेव । नित्यांतरंगोपगमेंतरंगंतस्माद्विधिःप्रातिपदोवलीयानिति ॥ ६२।२१ संकोचएवेति ॥ ननुव्यक्तेःपदार्थत्वपक्षेतत्तद्व्यक्त्युद्देशेनप्रवृत्तयोःशास्त्रयोरन्यत्रचरितार्थत्वाभावादेकस्मिन्विषयेप्रसंगेविप्रतिषेधेपरमेवकार्यंभवतिनपूर्वमितिनियमाश्रयणात्पूर्वस्ययथावाधएवनसंकोचः यथाजुहुतादित्यत्रपरत्वात्तातङिकृतेस्थानिवद्भावेनप्राप्तंधित्वंनभवति । अतएवाहुः । सकृद्गतौविप्रतिषेधेयद्बाधितंतद्बाधितमेवेति । मैवं । अस्मिन्पक्षेपूर्वसूत्रानारंभस्यैवानुमानात् । विस्तृतंचैतन्महाभाष्यादौ । अयंचवैयाकरणानामप्राप्तवाधइत्युच्यते ॥ ६२।२१ विकारशब्दादिति ॥ पुच्छब्रह्मवादिनामेवंसूत्रार्थः । ब्रह्मपुच्छंप्रतिष्ठेतिवाक्योक्तंमुख्यंब्रह्मनभवति । विकारश

ब्दात् । अवयवशब्दात्ब्रह्मपुच्छमित्यवयवत्वमुच्यतइतिप्राप्तेउच्यते नायंपुच्छशब्दोऽवयववाचीकिंतुप्राचुर्यवाची प्राचुर्य प्रायापत्तिः । अन्नमयादीनांशिरःप्रभृतिपुच्छांतेष्ववयवेषूक्तेष्वानंदमयस्यापिशिरःप्रभृतीनुक्त्वावयवस्यैवबुद्धौसन्निधानात्ते नापिचाधिकरणलक्षणासंभवाद्ब्रह्मपुच्छंप्रतिष्ठेत्याहश्रुतिरित्याद्यर्थांतरवर्णनंभवदीयभाष्यकारादिभिरपिकृतं । नत्वारोपितार्थपरत्वमेकस्येत्युक्तं ॥ [६२।२२] उपदेशेति ॥ त्रिपादस्यामृतंदिवीतिसप्तम्याद्यौराधारत्वेनोपदिष्टा । इहपुनः अथयदतःपरोदिवइतिपंचम्यामर्यादात्वेनेत्युपदेशभेदान्नैकंवस्त्वत्रोच्यतइतिप्राप्तेउभयत्रापिनविरोधः । यथालोकेवृक्षाग्रेसंबद्धोपिश्येनोवृक्षाग्रसंबंध्यवयवविवक्षयावृक्षाग्रेश्येनइत्युच्यते । वृक्षाग्रसंबंध्यवयवेभ्यःपरैरवयवैरवच्छिन्नस्यतस्यैववृक्षाग्रात्परतोवस्थानाद्वृक्षाग्रात्परतःश्येनइत्युच्यते । तथाअमृतंदिवि दिवःपर इत्युभयस्मिन्नप्युपदेशेविरोधोनास्तीत्युक्तं । नत्वेकस्यारोपितार्थत्वमुक्तं ॥

[६२।२२] गौण्यसंभवादिति ॥ आकाशस्योत्पत्तिश्रुतिर्नास्तीतिपूर्वपक्षिणोक्ते आत्मनआकाशःसंभूतइतिश्रुतिरस्तीतिसिद्धांतिनोक्ते संभूतश्रुतिर्गौणी आकाशस्योत्पत्तिकारणासंभवादितिभवदीयपूर्वपक्षिणाश्रुतेर्गौणार्थत्वंनोच्येत उत्पत्तिश्रुतेरारोपितार्थत्वेनापिपूर्वपक्ष्युत्थानसंभवात् ॥ [६२।२३] अन्यथेति ॥ श्रुत्युक्तस्यारोपितार्थत्वेसदेवसोम्येदमग्रआसीदित्यत्रसच्छब्देनसांख्याभिमतंप्रधानंवोच्यतेब्रह्मवेतिसंशयेसच्छब्दनिर्दिष्टस्यतदैक्षतेतीक्षितृत्वश्रवणाज्जडस्यचतदसंभवान्नप्रधानंसच्छब्दमितिसिद्धांतःकृतः । सनभवति । ईक्षणश्रुतिःप्रधानआरोपितंयदीक्षणंतत्परत्वेनाप्युपपद्यतइतिपूर्वपक्षिणासुवचत्वात् । सार्वज्ञादिश्रुतिर्यथारोपि

तसार्वज्ञपरातद्वत् ॥ [६।२।२५] दर्शमिइति ॥ चातुर्मास्येषुसाकमेधाख्येपर्वण्यस्तिमहापितृयज्ञः । तत्रश्रूयते । नार्षेयंवृणीतइति । त
त्रायंनञ्प्रतिषेधोथवापर्युदासोवेतिसंशयेप्रतिषेधइतिपूर्वःपक्षः । तथाहि । अयंनञ्श्रुत्याकर्तव्यतांप्रतिषेधति । येतुधातुना
मनीवृणातिरार्षेयशब्दश्चतेअपिकर्तव्यतांविशेषयतः । एवंकर्तव्यतयाविध्यर्थेनसंबध्यमानानिसर्वाणिपदानिस्वार्थपराणिभवं
तिप्रतिषेधपक्षे । पर्युदासेतुलक्षणेति । सिद्धांतस्तु । एकवाक्यत्वलाभात्पर्युदासएव । प्रकृतिवत्कुर्यात्आर्षेयवरणंनकुर्यादि
तिहिवाक्यभेदःप्रतिषेधे । आर्षेयवरणवर्जंप्रकृतिवत्कुर्यादित्येकवाक्यतापर्युदासे । नन्वेवंलक्षणास्यात् । सत्यं । प्रतिषेधेवि
कल्पःस्यात्ततोहिलक्षणाज्यायसी । तथाहि । प्रतिषेधोनामनिवृत्तिः । साचप्रवृत्तिपूर्विका । साप्यरागतःप्राप्तेशास्त्रेणैववाच्ये
तिशास्त्रत्वादुभयोर्विकल्पः । ननुकल्पितत्वसामान्यविषयत्वाभ्यांदुर्बलश्चोदकः श्रुतत्वविशेषविषयत्वाभ्यांप्रबलःप्रतिषेधइ
तिकथंविकल्पः । मैवं । चोदकोप्यवश्यंहोतृवरणेपिलब्धात्मेत्यंगीकार्यं । अन्यथाप्रतिषेधासंभवात् । लब्धात्माचेच्छास्त्रत्वा
विशेषान्नबाधमर्हति । नन्वेवंशरमयंबर्हिरित्यत्रापिचोदकस्यलब्धात्मकत्वाद्बाधोनस्यात् । सत्यमसौलब्धात्मकः । नतुकु
शांशे । तस्मिन्नंशेऽसौबलवद्विरोधान्नप्रवर्तते । बर्हिःशब्दस्यबर्हिःकार्यपरतयायावदेवबर्हिःकार्यप्राप्तंतावदेवतत्साधनतयाश
राविहिताःकुशप्राप्तिंनिरुंधंति । इहतुवरणस्यैवप्राप्तिरंगीकार्या । अन्यथाप्रतिषेधायोगात् । तस्मान्नित्यवच्छ्रुतयोर्विधिप्रतिषेध
योःपक्षेप्यत्यंताविद्यमानमिथ्यात्वकल्पनादत्यंतायुक्तोविकल्पइतिवरंलक्षणयापिपर्युदासाश्रयणं ॥ [६।३।१] यत्रप्रकृतीति ॥ दर्शपूर्णमास
To १६० योराज्यभागौप्रकृत्यश्रूयंते नतौपशौकरोतिनसोमेध्वरइति । तथाहि । पर्युदासोभवन्नयमाज्यभागसंबंधेनवास्यात्पशुसंबंधे

नवा । आद्येपिपाशुकप्रकृतिवच्छब्दशेषोवादर्शपूर्णमासविधिशेषोवा । नाद्यः । यदिहिपशुप्रकरणेइदंश्रूयेततदैवंवचनव्यक्तिः स्यात् । आज्यभागवर्जंदर्शपूर्णमासवत्कुर्यात् । इदंतुदर्शपूर्णमासप्रकरणेश्रूयते तत्रकःप्रसंगःपाशुकप्रकृतिवच्छब्दस्य । द्वितीयेत्वाज्यभागवर्जंदर्शपूर्णमासौकुर्यादितिवचनव्यक्तिःस्यात् । तथाचाज्यभागविधानमनर्थकंस्यात् । पशावितिचानर्थकंस्यात् । द्वितीयेयद्दर्शपूर्णमासयोराज्यभागौकुर्यात्तदपशौपशुवर्जितयोरितिवचनव्यक्तिःस्यात् । तथाचापशावितिव्यर्थं । अपशुत्वाद्दर्शपूर्णमासयोः । तस्मादाज्यभागयोश्चोदकप्राप्तयोःप्रतिषेधइतितयोःपशौविकल्पः ॥ ६३१३ शास्त्रप्रकृतस्यचेति ॥ प्रतिषेधापेक्षितप्रसक्तिजनकशास्त्रेणप्रसक्तस्येत्यर्थः ॥ ६३१४ उक्तमिति ॥ दशमाध्यायस्याष्टमपादे ॥ प्रतिषेधोन्नीतेति ॥ उपलक्षणमेतत् । कल्पितत्वसावकाशत्वाभ्यांदुर्बलस्यापिमहापितृयज्ञीयचोदकस्यप्रत्यक्षश्रुतत्वनिरवकाशत्वाभ्यांप्रबलेनापिनार्षेयंवृणीतइत्यनेनप्रतिषेधपक्षेनसर्वथाबाधः । अपितुविकल्पइत्युक्तं प्रतिषेधःप्रदेशेऽनारभ्यविधानेचप्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यादित्यत्रपूर्वपक्षसूत्रेप्रदेशेप्रकृतिवत्कुर्यादितिचोदकेनप्रदिष्टेअनारभ्यविधानेनानूयाजेषुयेयजामहंकरोतीत्यादिषुनञ्प्रतिषेधार्थः । तथाचविहितप्रतिषिद्धत्वाद्विकल्पःस्यादितिसूत्रार्थः । तंत्ररत्नेपि । नचेदंप्रतिषेधपक्षेविकल्पाभिधानंपूर्वपक्षोक्तिमात्रं । अपितुपारमार्थिकमेवेति । यस्तुनतौपशावित्यस्यपशुप्रकरणस्थस्यपाशुकप्रकृतिवच्छब्दैकवाक्यतयापर्युदासार्थत्वं दर्शपूर्णमासप्रकरणस्थस्यतुपशावाज्यभागौनस्तः अत्रतौस्तइतिस्तुत्यर्थत्वमित्याह । सत्वात्मगौडमीमांसकतामाविश्चकार । नहि भाष्यटुपटीकातंत्ररत्नशास्त्रदीपिकाधिकरणमालादिषुनतौपशौस्तइत्यस्यवाक्यस्यपशुप्रकरणस्थतोक्ता । नाप्यर्थवादत्वं । अ

पितुप्रतिषेधार्थत्वमेव । तथाचपशावाज्यभागयोर्विकल्पइत्येवोक्तं । नह्योमेध्वरइत्यस्यत्वर्थवादार्थत्वमुक्तं ॥ [६३।९] सगुणवाक्यमे वेति ॥ ननुसगुणवाक्येन्निषेधाश्रवणात्तस्यननिर्गुणवाक्यबाधकत्वमतउक्तं ॥ [६३।९] मृदंमृदेत्यादि ॥ नचतत्रमृडाद्यनुत्तरसेट्क क्त्वाप्रत्ययकित्त्वनिषेधपरत्वेनैकवाक्यतयावाक्यभेदेनकित्त्वनिषेधायोगइतिवाच्यं । निर्गुणवाक्यस्यापिसगुणवाक्यविहितेतरगुणनिषेधपरत्वसंभवात् । नचनेतिनेतीतिवीप्सयासर्वनिषेधेविशेषपरिशेषाभावइतिवाच्यं । उपदेशत्वेनवीप्सोपपत्तौतस्याःसगुणवाक्यविरोधेनसर्वनिषेधकत्वासंभवात् । अतएवाहभगवान्सूत्रकारः आवृत्तिरसकृदुपदेशादिति ॥ [६३।१२] विश्वंसत्य मित्यनेनेति ॥ नचात्रनिषेधवाचकपदाभावः । शरमयंबर्हिर्भवतीत्यादाविवनिषेधपदाभावेपिनिषेधसिद्धेः ॥ [६३।१३] असद्वेति ॥ नन्वत्रनञ्सत्त्वेपितस्यनामपदसमभिव्याहृतत्वेननिषेधकत्वायोगः ।मैवं । घटोनपटइत्यादाविवनामपदसमभिव्याहारेपितादात्म्यनिषेधवदत्रापि सदात्मतानिषेधोपपत्तेः । असूर्यपश्याइत्यादौनिषेधार्थत्वाच्च ॥ [६३।१८] अन्यथेति ॥ सगुणवाक्यस्यगुणनिषेधाय गुणानुवादकत्वे । ननुनिषेधायानूदितंस्यापिसार्वज्ञादेरवांतरतात्पर्यवशात्सिद्धिःस्यादतआह ॥ [६३।१८] नहीति ॥ .ननुतात्पर्याभावे पिमानांतरप्राप्तिविरोधयोस्त्यागहेत्वोरभावेनदेवताविग्रहादेरिवतदत्यागमात्रेणसार्वज्ञादिसिद्धिः । मैवं । त्वद्रीत्यानिर्गुणश्रुतिविरोधेनमानांतराविरोधाभावात् । त्वन्मतेप्युपक्रमादेःप्रत्येकंतत्वार्थलिंगत्वेनमानांतराप्राप्तिरूपापूर्वत्वस्यतात्पर्यलिंगस्य सत्त्वेनतात्पर्याभावस्यवक्तुमशक्यत्वाच्च । तात्पर्याभावेऽनिषेध्यत्वेपितत्प्रतीतेरयोगाच्च । नह्यत्रब्राह्मणहननादिवन्निषेध्यत्वेन प्रतीतिः । एतेनविशिष्टविधेर्विशेषणेतात्पर्येपिविशेषणस्यैवसगुणवाक्याद्गुणस्यसिद्धिरितिनिरस्तं । तस्यविशेषणांशेपृथग्विधि

त्वाभावेपिविशेषणतात्पर्यकत्वात् । अतएववार्तिकेपूर्णमास्यधिकरणे । प्राप्तेकर्मणिनानेकोविधातुंशक्यतेगुणः । अप्राप्तेतुविधीयंतेबहवोप्येकयत्नतइत्यादिनानेकविध्यंतरप्रसवसमर्थैकविशिष्टविधिप्रसादेनानेकगुणविधानमित्यंतेनविशिष्टविधेर्विशेषणे तात्पर्यमुक्तं ॥ आत्मेत्येवेति ॥ उपासनाविधेरुपास्येतात्पर्याभावेआत्मेत्येवेत्यादिवाक्यादैक्यासिद्धिःस्यादित्यर्थः । ननुबृहदारण्यके तद्धेदंतर्ह्यव्याकृतमासीदितिखंडिकायां हिरण्यगर्भादिपिपीलिकांतशरीरसृष्टिमुक्त्वाजलपात्रेष्वाकाशस्येवसर्वशरीरेषुचिदात्मनःप्रवेशमुक्त्वातंप्रविष्टंचिदात्मानंकेपिनपश्यंतीत्युक्त्वा ननुपश्यंतिसर्वोप्यात्मानमहंप्राणीद्रष्टाश्रोतेत्यादिनेत्याशंकायांप्राणनकर्तुर्दर्शनकर्तृत्वाभावेनासंपूर्णत्वात्तज्ज्ञानंनात्मज्ञानमित्युक्त्वा कथंतर्ह्यात्माज्ञातव्यइतिजिज्ञासायांसर्वत्रानुगतः सर्वप्रत्ययसाक्षीचिदानंदस्वभावोशेषविशेषशून्यआत्माशब्दार्थोज्ञातव्यइत्यभिप्रायेणोक्तमात्मेत्येवोपासीतात्रह्येतेसर्वएकंभवंतीति । अस्मिन्पूर्वोक्तआत्मन्येतेप्राणादयोऽविद्यापगमेसत्यैक्यमापद्यंतइतिश्रुत्यर्थेकःप्रसंगउपासनायाःपूर्ववाक्येतन्नपश्यंतीतिज्ञानस्यप्रकृतत्वात् । उत्तरवाक्येचानेनह्येतत्सर्ववेदेतिविदिश्रवणाच्च । मैवं । प्राणइत्यादिनामानिपरमेश्वरस्यनसर्वगुणसंपूर्णतांवदंति । किंतुप्राणनादिकर्मकर्तृत्वमेववदंति । आत्मशब्दएवसर्वगुणसंपूर्णत्वंवदति । अस्यसर्वस्यगुणजातस्यायमात्मैवपदनीयः आश्रयोयस्मादतस्तंसर्वगुणवाचकेनात्मशब्देनैवोपासीतेतिबृहदारण्यकभाष्यउक्तत्वात् । प्राणनाद्येकैकविदज्ञइत्युक्त्वाकथंतर्ह्यात्मज्ञानंस्यादितिजिज्ञासायामात्मत्वोपासनेनतत्स्यादित्यभिप्रायेणतदेतत्पदनीयमस्यसर्वस्ययदयमात्मानेनह्येतत्सर्ववेद यथापदेनानुविंदेदेवंकीर्तिंश्लोकंविंदतेयएवंवेदेत्यात्मत्वोपासनस्यसर्वफलहेतुत्वमुच्यते । तदिदमुक्तमुपास्यत्वं

श्रूयतइति ॥ अनेनह्येतत्सर्ववेदेत्यस्यतुचक्षुराद्येकैकावच्छिन्नेनैकैकज्ञानमात्मनातुसर्ववेदातआत्मेत्येवोपासीतेत्यर्थः । ननु
अथयोन्यांदेवतामित्यत्रनसवेदेत्युत्तरवाक्येभेददर्शिनिंदयानोपास्तिपरत्वं । मैवं । त्वद्रीत्यात्मभेदोपासननिंदयाऽभेदोपा
स्तिपरत्वात् ॥ [६३।२४]आनंदादयइति ॥ व्याख्यातमिदंसत्यज्ञानादिवाक्यस्याखंडार्थत्वभंगे ॥ [६३।२५]व्यतिहारइति ॥ ननुतद्योहंसो
सौयोसौसोहमित्यत्रनिकृष्टेजीवेउत्कृष्टब्रह्माभेदचिंतनंयुक्तं नतूत्कृष्टेब्रह्मणिजीवाभेदचिंतनंयुक्तमितिपूर्वपक्षय्येतरेतरानुवादे
नेतरेतररूपताचिंतनंविधीयते । नचैवमुत्कृष्टस्यनिकृष्टत्वप्रसंगः । व्यतिहारानुचिंतनमात्रमुपदिश्यते फलायातोननिकृष्टता
भवत्युत्कृष्टस्येतिसमाहितंव्यतिहारोविशिंषंतिहीतरवदित्यत्र ॥ [६३।२६]उत्तरस्मिंस्तापनीयइति ॥ देवाहवैप्रजापतिमब्रुवन्नणीयां
समित्यादिके ॥ [६३।२६]शैब्येति ॥ अथहैनंशैब्यःसत्यकामःपप्रच्छसयोहवैतन्मनुष्येष्वित्यादिके ॥ [६३।२६]काठकइति ॥ पुरमेकादशद्वा
रमित्यादिके ॥ [६३।२६]मांडूकेति ॥ ओमित्येतदक्षरमिदंसर्वमित्यादौ ॥ [६४।२]तद्गुणइति ॥ तेप्रसिद्धाःसार्वज्ञादयोगुणायस्यससार्वज्ञा
दिगुणविशिष्टइत्यर्थः । यस्तुस्वभाष्यस्थेतद्गुणशब्देऽतद्गुणसंविज्ञानंबहुव्रीहिमाश्रित्येश्वरसिद्धिरेवैक्यसिद्धौनिदर्शनंनगुणसि
द्धिरित्याह सस्वीयंभाष्यतट्टीकागतंतद्गुणपदंप्रमाणपदपाठमंगीकृत्यचकारेत्युपेक्षामहे । ननुमानांतराविरोधादौतुल्येप्यानंदा
दयःस्वरूपभूतत्वाद्वास्तवाइत्यतआह ॥ [६४।६]यदिचेति ॥ तस्मादुपास्यत्वाविशेषान्निर्गुणब्रह्मणइवसगुणस्यापितात्विकतास्तु ।
अन्यथाआरोपितविषयत्वेनसगुणोपासनवन्निर्गुणोपासनस्यापिभ्रमत्वापत्त्यापरममुक्तिफलकत्वंनस्यादितिभावः । अत्रवैषम्यं

शंकते ॥ नन्विति ॥ ननुनिर्गुणोपास्तेर्भ्रमत्वेतद्विषयस्यनिर्गुणब्रह्मणोसिद्धिरेवस्याच्छुक्तिरूप्यवदित्याशंक्याह ॥ नचैवमिति ॥ प्रकृतेपीति ॥ सगुणोपास्तेर्भ्रमत्वेपितांप्रतिहेतुभूतस्यसगुणवाक्यजन्यज्ञानस्यप्रमात्वात्सगुणसिद्धिःस्यात् ॥ मणिप्रभायामिति ॥ मणिप्रभायांमणित्वस्याभावेनतत्रमणित्वंविषयीकुर्वन्भ्रमोस्तु ब्रह्मतुसगुणंनिर्गुणंचेत्यतस्तदुभयविषयकेध्यानेअपिसगुणनिर्गुणवाक्यजन्यप्रमेइवयथार्थेएवेत्यर्थः । ननुविशिष्टस्याब्रह्मत्वात्तद्विषयकंध्यानमब्रह्मविषयकमित्याशंक्याह ॥ नचब्रह्मेति ॥ ध्यानज्ञानयोःसमानविषयत्वेनकार्यकारणभावावगमाद्भिन्नविषयकध्यानस्यनब्रह्मज्ञानजन्यत्वंनवाब्रह्मपरोक्षज्ञानजनकत्वंस्यात् ॥ श्रवणादीनामिति ॥ आदिपदेनमननंमहावाक्योपदेशाश्च । नचोपास्तिर्विशिष्टविषयाश्रवणादितुविशिष्टाविषयमितियुक्तं । धर्मादिश्रवणादीनामिवब्रह्मविषयकाणामपितेषांविशिष्टविषयकत्वनियमात् ॥ ईक्षणेति ॥ ईक्षणंकार्यंध्यानंकारणंतयोरेकोर्थोविषयः ॥ भामत्यामिति ॥ शैब्यप्रश्नेयःपुनरेतंत्रिमात्रेणोमित्येतेनैवाक्षरेणपरंपुरुषमभिध्यायीतसतेजसिसूर्येसंपन्नोयथापादोदरस्त्वचाविनिर्मुच्यतएवंहैवसपाप्मनाविनिर्मुक्तः सोथर्वभिरुन्नीयतेब्रह्मलोकंसएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुषमीक्षतइत्यत्रब्रह्मविषयकत्वेननिर्णीतस्येक्षणस्ययोविषयःसएवपुरुषमभिध्यायीतेतिध्यानस्यविषयइत्युक्तंभामत्यां तद्ध्यानस्यब्रह्माविषयत्वेविरुध्येतेत्यर्थः । विशेष्यांशमादायसमानार्थत्वंत्वेकमात्रोंकाराद्युपासनसाधारणंनार्धचतुर्थमात्रोंकारोपासनेविशेषमावहति । नन्वैक्यादेर्विध्यविधिरूपवाक्यद्वयबोधितत्वेनध्येयत्वंज्ञेयत्वंच सार्वज्ञादेस्तूपा

सनाविधिमात्रविषयत्वाद्ध्येयत्वमेवेत्याशंक्यनिराकरोति ॥ ६४।१५ नचैक्यादिकमिति ॥ ६४।१७ ब्रह्मणइति ॥ नामब्रह्मेत्युपासीतेतिवि
धेर्नाम्निब्रह्मत्वमारोप्योपास्यते नतुवस्तुतोनामब्रह्म । अतएवब्रह्मवाक्यानांसत्यंज्ञानमित्यादीनांनाम्निसमन्वयोनोच्यते ।
तथाब्रह्मण्यपिकर्तृत्वादिकमारोप्योच्यते । नतुवस्तुतोब्रह्मकर्तृ । एवंचकर्तृत्वपरवाक्यानांसदेवसोम्येत्यादीनांब्रह्मणिसमन्व
योनवक्तव्यः । नचकारणवाक्यानांकर्तृत्वादितटस्थलक्षणबोधनद्वाराब्रह्मण्येवतात्पर्यमतस्तेषांसमन्वयोवाच्यइतिवाच्यं ।
लक्ष्यसमसत्त्वस्यलक्षणत्वेनारोपितस्यालक्षणत्वात् । अन्यथानाम्नोपिब्रह्मत्वंलक्षणमितितत्रापितत्समन्वयोवाच्यःस्यात् ॥
६४।२० अपहतेति ॥ नचापहतपाप्मत्वादीनांस्वरूपतयासोन्वेष्टव्यइतितच्छब्देनपरामर्शसंभवाज्जिज्ञास्यत्वं । नसत्यकामत्वादीनां
तच्छब्देनपरामर्शः । स्वरूपबहिर्भावादितिवाच्यं । अप्रयोजकत्वात् । यथायोलंबकर्णश्चित्रगुश्चतमानयेत्युक्तेउभावपिपरामृ
श्येते तच्छब्देनतथापहतपाप्मत्वसत्यकामत्वादेरपितच्छब्देनपरामर्शसंभवात्सत्यकामत्वादेरपिस्वरूपत्वाविरोधाच्च॥ ६४।२२ तस्येति॥
उपास्यत्वस्य । नचसत्यकामत्वादेर्भूताकाशेऽभावनिश्चयान्नतत्रतस्योपास्यत्वं । बुद्धिपूर्वकारोपेतस्याप्रतिबंधकत्वात् । अ
न्यथा वाचिधेनुत्वारोपोपिनस्यात् ॥ ६४।२३ एषभूताधिपतिरिति ॥ एषभूतपालएषसेतुर्विधरणःएषांलोकानामसंभेदाय तमेतं
वेदानुवचनेनेत्यादिबृहदारण्यकवाक्येसगुणस्यमुमुक्षुज्ञेयत्वमुक्त्वातत्रैव एतमेवविदित्वामुनिर्भवतीतितज्ज्ञानस्यमोक्षसाधन
त्वोक्तेश्च ॥ ६४।२५ महिमाभुवीति ॥ दिव्येब्रह्मपुरेह्येषव्योम्न्यात्माप्रतिष्ठितइत्यादिमुंडकवाक्येतद्विज्ञानेनपरिपश्यंतिधीराआनंद

रूपममृतंयद्विभातीत्यत्रतच्छब्देनसार्वज्ञादिविशिष्टंपरामृश्यते ॥ ६४।२८ तुरीयमिति ॥ नात्मानंनपरांश्चैवनसत्यंनापिचानृतं । प्राज्ञःकिंचनसंवेत्तितुरीयंतत्सर्वदृक्सदेतिमांडूक्येश्लोकः । ननुसत्यःसोअस्येतिवाक्येसार्वज्ञादीनांसत्यत्वंनोच्यते । किंतुस मुद्रइवपप्रथइतिपूर्ववाक्योक्तस्यप्रथितत्वगुणस्येत्यतआह ॥ ६५।१ अत्रेति ॥ यदाहवनीयेजुहोतीतिवत्सत्यःसोअस्येत्यस्याप्यनार भ्याधीतत्वाविशेषात् । सत्यत्वविशिष्टप्रथितत्वमहिमविधिरेवायमस्त्वित्यतउक्तं ॥ ६५।१ सइति ॥ तथात्वेसइत्यस्यासंगतिः । न हियदाहवनीयेजुहोतीत्यत्राप्याहवनीयविशिष्टहोमविधिरित्युक्तं सामान्यविशेषनये । विधानात् । ज्ञापनात् । ननु मत्स्वा नइंद्रगोमतइतिपूर्ववाक्ये इंद्रमिदेवतातयइत्युत्तरवाक्येचप्रकृतस्येंद्रस्यास्त्येत्यनेनपरामर्शान्नपरमेश्वरमहिमात्रोच्यते । नचें द्रशब्दःपरमेश्वरइतिवाच्यं । पिबासुतस्यरसिनइत्यस्यसूक्तस्यैंद्रत्वात् । तथाचानुक्रमणिका । पिबचतुर्विंशतिर्मेधातिथिःप्रा गाथंत्वित्यादिः । माचिदन्यगाथइत्यादेर्मंडलादितइंद्रोदेवोनुवर्तते । तथाचेंद्रसूक्तरूपैंद्रप्रकरणेनेंद्रेनियमितस्येंद्रशब्दस्यनपर मेश्वरपरत्वमित्यतआह ॥ ६५।३ सत्यःसोअस्येत्यादेरिति ॥ तदेवब्रह्मपरमंकवीनामितितदेवज्योतिषांज्योतिरायुर्होपासतेमृत मितिचश्रुत्याब्रह्मश्रुतिसूर्यप्रकाशकत्वलिंगयोर्विष्णुतोन्यत्रनिरवकाशत्वात् ॥ ६५।३ ज्योतिरधिकरणेति ॥ ज्योतिश्चरणाभिधा नादित्यत्रचिंतितं वीदंज्योतिर्हृदयआहितंयदित्युक्तंज्योतिरग्न्यादिर्वापरमात्मावेतिसंशयेज्योतिःशब्दस्याग्न्यादिषुप्रसिद्धा अह श्चकृष्णमहरर्जुनंचेतिसप्तर्चस्यसूक्तस्यवैश्वानरदेवतत्वेनतन्मध्यवर्तिनोविमेकर्णेत्यादिमंत्रस्यापिवैश्वानरदेवतत्वाच्च श्रुतिप्रक ॥ ३०६ ॥

रणाभ्यामग्न्यादिरेवज्योतिःशब्दइतिप्राप्तेकर्णादिविदूरत्वरूपनिरवकाशलिंगेनसावकाशश्रुतिप्रकरणाबाधितेनज्योतिःशब्दः परमात्मैवेति । तथात्रापीत्यर्थः । पूर्वोत्तरवर्तिविष्णुलिंगज्ञानायदशर्चोव्याख्यायंते । पिबासुतस्यरसिनोमत्स्वानइंद्रगोमतः । आपिर्नोबोधिसधमाद्योवृधेस्माँअवंतुतेधियः । [ ऋ० ८।३।१ ] हेइंद्रसधमाद्यःसहितैरस्माभिःतर्पयितव्यः आपिःप्राप्तस्था नंएवंभूतस्त्वंरसिनःद्वितीयार्थेषष्ठी रसिनंगोमतःगोमंतं गोविकारैःपयःप्रभृतिभिःश्रपणद्रव्यैर्युक्तंनःसुतस्यसुतंसोमंपिबपीत्वा चमत्स्वतृप्तोभवं । नोस्माकंवृधेवर्धनायबोधिबोधयतेत्वदीयाःधियःअनुग्रहात्मिकाःबुद्धयःअस्मान्अवंतुरक्षंतु ॥ १ ॥ भूयामतेसुमतौवाजिनोवयंमानःस्तृभिमातये । अस्मांचित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय । हेइंद्रवाजिनोहविष्मंतोवयं त्वत्संबंधिसुमतौशोभनबुद्धौभूयामभवाम । अभिमन्यतइत्यभिमातिःशत्रुस्तस्मैतदर्थंनःअस्मान्मास्तःमाहिंसीः । स्तृहिंसायां माङिलुङिछांदसःसिचोलुक् । अभिष्टिभिःप्रार्थनीयाभिःचित्राभिःबहुविधाभिःत्वदीयाभिरूतिभिःअस्मान्अवतात्रक्ष । नः अस्मान्सुम्नेषुसुखेषुयामय । आयतांत् कुरु ॥ २ ॥ इमाउत्वापुरूवसोगिरोवर्धतुयाममं । पावकवर्णाःशुचयोविपश्चितोऽभिस्तोमैरनूषत । हेपुरुवसोबहुधनेंद्रममदीयाःइमाःगिरःशस्त्ररूपाःवाचःत्वांवर्धयंतु तथापावकवर्णाःअग्निसमानतेजसः विपश्चितोविद्वांसःउद्गातारस्तोमैःस्तोत्रैःबहिष्पवमानादिभिरभ्यनूषत अभिष्टुवंति । णुस्तुतौकुटादिः ॥ ३ ॥ अयंसहस्रमृषिभिःसहस्कृतःसमुद्रइवपप्रथे । सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये । अयंइंद्रःसहस्रसंख्यैःऋषिभिःसहस्कृतःबलेनयुक्तःख्यापितः । सचेंद्रःसमुद्रंवत्प्रथितोबभूव । अस्येंद्रस्य सः प्रसिद्धो महिमायशोबलंसत्यः अबाधितः । तंमहिमानंशवः

सुखमिच्छन्नहंविप्रराज्येविप्राणांराज्यभूतेषुयज्ञेषुगृणेस्तौमि ॥ ४ ॥ इंद्रमिद्देवतातयइंद्रंप्रयत्यध्वरे । इंद्रंसमीकेवनिनोहवामह
इंद्रंधनस्यसातयें । वनिनःसंभजमानावयंइंद्रमेवदेवैस्तायतेविस्तार्यते इतिदेवतातिर्यज्ञः तस्योगाय अध्वरेप्रयति उपक्रांतेसति
समीके सम्यक्गते संपूर्णेचयज्ञेसति धनस्यसातये लाभाय इंद्रमेवहवामहे आह्वयामः ॥ ५ ॥ इंद्रोमह्नारोदसीपप्रथच्छवइं
द्रःसूर्यमरोचयत् । इंद्रेहविश्वाभुवनानियेमिरइंद्रेसुवानासइंदवः । अयमिंद्रःशवः शवसः आत्मीयस्यबलस्य मह्ना महिम्ना
महत्वेन रोदसी द्यावापृथिव्यौ पप्रथत् अप्रथयत विस्तारितवान् । तथाइंद्रःसूर्यअरोचयत् । -स्वर्भानुनावृतंसूर्यंतद्वधेनें
द्रोरोचयदितिमाधवीयव्याख्यानेपींद्रःपरमेश्वरएव । ज्योतिषामपितज्ज्योतिरित्युक्तेः । इंद्रेह इंद्रएव विश्वानिभुवनानिये
मिरे इंद्रेणनियम्यंते सुवानासः सूयमानाः इंदवः सोमाः इंद्रएवनियताभवंति ॥ ६ ॥ अभित्वापूर्वपीतयइंद्रस्तोमेभिरा
यवः । समीचीनासऋभवःसमस्वरन्रुद्रागृणंतपूर्व्यं । आयवः मनुष्याः ऋत्विजः । पूर्वपीतये प्रथमंसोमपानाय त्वामेवाभि
अभिष्टुवंति । समीचीनासः शोभनाः ऋभवः ऋभुर्विभ्वावाजइत्येतेत्रयः त्वामेवसमस्वरन् सम्यगस्तुवन् । तथारुद्राः रुद्र
पुत्राश्च पूर्व्यंपुरातनंत्वामेव गृणंत अभ्यस्तुवन् । वृत्रवधेप्रहरगभर्वोजहिवीरयस्वेत्येवंरूपयावाचात्वांस्तुतवंतः ॥ ७ ॥ अ
स्येदिंद्रोवावृधेवृष्ण्यंशवोमदेसुतस्यविष्णवि । अद्यातमस्यमहिमानमायवोऽनुष्टुवंतिपूर्वथं । अस्येत् अस्यैवयजमानस्य वृष्ण्यं
वृषत्वंवीर्यं शवो बलंच इंद्रोवावृधे वर्धयति । कस्मिन्सति । विष्णवि विष्णौ । सुतस्य सोमस्यसंबंधेन मदे हर्षेसति यद्य
जमानदत्तसोमसंबंधेनविष्णौ हर्षोजातोस्ति । तस्यबलादिकमिंद्रोवर्धयतीत्यर्थः । आयवः मनुष्याःपूर्वथ पूर्वकालेयथा

तथैव अद्य अस्मिन्कालेपि तं पूर्वोक्तं सत्यभूतं महिमानं अनुष्टुवंति आनुपूर्व्येणस्तुवंति ॥ ८ ॥ तत्त्वांयामिसुवीर्यंतद्ब्रह्म पूर्वचित्तये । येनायतिभ्योभृगवेधनेहितेयेनप्रस्कण्वमाविथ । सुवीर्यं शोभनवीर्यं तत् प्रसिद्धंब्रह्मस्वरूपं त्वा त्वां पूर्वचित्तये स्वरूपानुभवार्थं यामि प्राप्तोभवामि । येनवीर्येण यतिभ्यः उपरतेभ्यः अयष्टृभ्यःसकाशादाहृत्य भृगवे भृगुनाम्नेऋषये ध नेहिते स्थापितेसति येनवीर्येणप्रस्कण्वसंज्ञमृषिं आविथ भृगवेधनंदत्तंप्रस्कण्वश्चरक्षितइत्यर्थः । ननुसुवीर्यंत्वांपूर्वचित्तयेस र्वेभ्यःसर्वलाभायतत्ब्रह्मअन्नंयामियाचामि वर्णलोपःछांदसःइतिमाधवीयेव्याख्यातत्वान्नात्रब्रह्मशब्दःपरमेश्वरइतिचेन्मैवं । तदेवब्रह्मपरममितिश्रुत्याब्रह्मशब्दोविष्णाववधारितइत्युक्तत्वात् । स्वरूपानुभवप्रार्थनापेक्षयाऽन्नप्रार्थनस्याल्पत्वाच्च । वर्ण लोपस्यकल्प्यत्वाच्च । तस्माद्विष्णुरेवब्रह्मशब्दः ॥ ९ ॥ येनासमुद्रमसृजोमहीरपस्तदिंद्रवृष्णितेशवः । सद्यःसोअस्यमहिमान संनशेयंक्षोणीरनुचक्रदे । हेइंद्र तत् प्रसिद्धं ते त्वदीयं शवो वलं वृष्णि वर्षकं अभीष्टफलदमित्यर्थः । तत्किं । येनवलेन महीर्महतीः अपः उदकानि समुद्रंप्रतिगमनाय असृजः समुद्रोयावद्भिर्जलैःपूर्यतेतावंतिजलानित्वंसृष्टवानित्यर्थः । अस्यें द्रस्य सः प्रसिद्धो महिमा महत्वं नसंनशे ननाशनीयः नित्यइत्यर्थः । नशःकृत्यार्थेकेन्प्रत्ययः । यंमहिमानं क्षोणीः पृथिव्यु पलक्षितंसर्वं अनुचक्रदे अनुगच्छति । ऋगतावितिधातुः । पृथिव्यादिकंसर्वंयदधीनंवर्ततइत्यर्थः ॥ १० ॥ उत्तरत्रापि नही न्वस्यमहिमानमिंद्रियंस्वर्गृणंतआनशुरित्यादि । स्वःसुष्ठुवरणीयंप्राप्यंएवंविधंइंद्रंगृणंतः स्तुवंतोपिजनाः अस्येंद्रस्यइंद्रियं इंद्रस्यलिंगं असाधारणधर्मभूतं इंद्रियमिंद्रलिंगमित्यादिनिपातः । महिमानंनहिनुआनशुः नैवखलुप्रापुः । अश्नोतेर्लिटिव्यत्य

येनपरस्मैपदं । हिचेतितिङोनिघातांभावः । उत्तरतापनीयादौनिर्गुणोपास्तिरुक्ति तथाचोपास्यत्वाविशेषेनिर्गुणब्रह्मणइवसत्य
कामत्वादेरपितात्विकतास्त्वित्युक्तं तदयुक्तमित्याशंक्यपरिहरति ॥ [६५।७] नचनिर्गुणस्येति ॥ निर्गुणस्योपास्यत्वेसगुणवन्निर्गुण
स्याप्युपासनार्थमेवोपयोगःस्यान्नतुमोक्षहेतुज्ञानइतिशंकाभिप्रायः । निर्गुणज्ञानस्यमोक्षहेतुत्वमसिद्धमित्याह ॥ [६५।८] धर्मीति ॥
मोचकत्वोक्तेः । मोचकत्वोपपत्तेः । ननुसर्वज्ञत्वादिगुणोपासनस्यमोचकत्वमयुक्तं सगुणोपासनांतराणांतददर्शनादित्यत
आह ॥ [६५।९] उपासनांतराणामिवेति ॥ भूयएतमेवमुपास्तेसर्वेषांभूतानांमूर्धाराजाभवति सयएतमेवमुपास्तेनास्यान्नंक्षीयतइत्या
दिदृप्तबालाकिब्राह्मणादिषूक्तानांसगुणोपासनांतराणामन्योन्यविलक्षणंफलंश्रुतिबलाद्यथांगीक्रियते तथासर्वज्ञत्वोपासनस्या
प्युपासनांतरफलविलक्षणंमुक्तिरूपंफलंभविष्यतीत्यर्थः ॥ [६५।१०] सगुणेपीति ॥ निर्गुणस्यारोपरूपोपासनविषयत्वेनिर्गुणज्ञानान्मु
क्त्ययोगइतियत्त्वयोक्तंतत्सगुणेपिसममित्यर्थः । ननुसएषनेतिनेत्यात्मेत्याद्युक्त्वाऽभयंवैजनकप्राप्तोसीत्युक्तेर्निर्गुणज्ञानान्मु
क्तिःश्रूयतेनतुसगुणज्ञानात् । येनसगुणस्यारोपरूपोपासनविषयत्वेतज्ज्ञानान्मुक्त्ययोगोमांप्रत्यापाद्यःस्यादित्यतआह ॥ [६५।११] पृथ
गिति ॥ ननूक्तवचनानिज्ञायमानत्वप्रयुक्तमुक्तिदत्वोपेतगुणवत्त्वेनोपासनकर्तव्यतापराणिनतुसगुणोपासनमोचकत्वपराणी
त्याशंक्यपरिहरति ॥ [६५।१२] तस्येति ॥ निर्गुणज्ञानंमुक्तिसाधनमित्युपासनमात्रंकर्तव्यमित्येवंपरानिर्गुणश्रुतिर्नतुवस्तुतोनिर्गुणव
स्तुसाधिकेतिस्यात् ॥ [६५।१३] एषइति ॥ नित्यत्वसत्यत्वोपेतमहिमत्वेनोपासनमात्रपरा नतुवस्तुतोमहिमनित्यत्वपरेत्यादिनिरस्तं ।

ननुनिर्गुणोपासनस्यफलांतराश्रवणान्मुक्त्यर्थत्वं सगुणस्यतुफलांतरश्रवणान्नमुक्त्यर्थतेत्यतआह ॥ श्रूयतेचेति ॥ शंकते ॥ श्रुतीति ॥ एकस्यवस्तुनउभयार्थत्वेउभयार्थत्वनिमित्तंसंयोगपृथक्त्वं संयोगोविधिस्तस्यनानात्वं । अनेकप्रयोजनकत्वबोधनेयदिप्रमाणमस्तितदाएकस्यानेकंप्रयोजनमितिजैमिनिसूत्रार्थः ॥ उक्तेरिति ॥ यदापश्यःपश्यतेरुग्मवर्णमित्यादिमुंडकवाक्यइतिशेषः ॥ अन्यथेति ॥ बिहितस्यापिनिषेधेप्राप्त्यभावेप्यनुवादत्वेच । असद्वाइत्यस्यसन्निधौ रसोवैसइतिश्रूयते । नैवेहेत्यादिबृहदारण्यके । आदिपदेनात्मैवेदमग्रआसीदित्यादिनैवेहेत्यादिनिषेधायानुवादकंस्यादित्यापादयति ॥ उद्गीथेति ॥ छांदोग्येॐमित्येतदक्षरमुद्गीथमुपासीतेत्युपक्रम्यास्यलोकस्यकागतिरित्याद्युक्त्वासएषोनंतइत्याद्युक्तं ॥ वेधातीति ॥ सर्वंप्रविध्यहृदयंप्रविध्यधमनीःप्रवृज्येत्याद्युक्तानिवेधादीन्युपासनायांनोपसंहर्तव्यानिभिन्नार्थत्वादितिपरसूत्रार्थः ॥ प्रकरणादिति ॥ दर्शपूर्णमासयोःपूषादेवतानास्तिपूषानुमंत्रणमंत्रस्तुवर्ततेतस्यप्रयोजनाभावाद्दर्शपूर्णमासप्रकरणादुत्कृष्यपूषदेवताकेकर्मणिविनियोगःक्रियतेयथातथावेधादिमंत्राणामाभिचारिकेविनियोगस्तद्वदनंतादिवाक्यमुपासनप्रकरणादुत्कृष्यज्ञानप्रकरणेनिवेश्यतइतियदितदासगुणवाक्यस्याप्युत्कर्षादिकमस्तु ॥ अन्यथेति ॥ असदुपासनार्थंगुणोक्त्यंगीकारेसार्वज्ञादेरीश्वरादन्यत्राभावादीश्वरेपितदनंगीकारेतंदसिद्धिरेवस्यात् ॥ अचेतनेति ॥ अचेतनानिजडानिशिलाजलादिमात्राणि । नन्वचेतनेभ्यो

पियज्ञीयदर्भचर्मग्रावफलकक्षुगादिभ्योलोकेचौषधादिभ्यःफलदर्शनात्कथमचेतनोपास्तिरफला । मैवं । सर्वत्रचेतनानांदेवा
नामेवोपासितानांफलदत्वात् । तदुक्तंछांदोग्यभाष्ये । दर्भचर्मादिगास्तेतोदेवाएवाभिमानिनः । नह्यचेतनकंकिंचित्फलदं
स्यात्कदाचन ॥ [६६।५] धेनुमिवायतीमिति ॥ अष्टकामंत्रे यांजनाःप्रतिनंदंतिरात्रिंधेनुमिवायतीं । संवत्सरस्ययापत्नीसानोधेहि
सुमंगलीस्वाहेत्यत्ररात्रौधेनुशब्दोमंत्रेणैवव्याख्यातः । इवशब्दात् तथावाच्यपिगौणोस्तु । आयतीं । आगच्छंतीं । एतेःशत
रिरूपं । अन्यत्रापि अबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं । यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाक
मच्छ । धेनुमिवआयतींआगच्छंतीं उषसंप्रतिउषःकालेइत्यर्थः । अयमग्निर्जनानामध्वर्य्वादीनांसमिधासमिद्भिरबोधिप्रवृद्धो
भूत् । वयांशाखांप्रोज्जिहानाःस्वाधिष्ठानंत्यजंतोनाकमंतरिक्षं अच्छआभिमुख्येनप्रसिस्रतेप्रसरंति । उषःकालेऽध्वर्य्वादयउ
द्धृत्याग्निंसमिद्भिर्वर्धयंतीत्यर्थः । अत्राप्युषःकालेधेनुशब्दोमंत्रेणैवगौणोव्याख्यातः ॥ [६६।६] छांदोग्येति ॥ असौवावलोकोगौत
माग्निरित्यादौस्वर्गादेरेवाग्नित्वमुच्यतइतिप्रतीतिंवारयितुंनारायणादीनांपंचानामग्नित्वंप्रतिपादयतो नारायणादयःपंचक्रमा
त्पंचाग्नयःस्मृताः । अदनादग्नेतृत्वाग्नितरामचलत्वतइतिभाष्यस्यरीत्येत्यर्थः । यत्त्वारोपेणमुख्यार्थत्वसंभवेगौणतानयु
क्तेति । तन्न । देवदत्तयजमानादिष्वपिसिंहत्वादेरारोपेणसिंहादिशब्दमुख्यतापत्त्यागौण्युच्छेदापत्तेः ॥ [६६।७] श्रुतंह्येति ॥ ऋग्वे ॥ ३०९ ॥
दादिसर्वविद्याध्यायिनानारदेन सोहंभगवोमंत्रविदेवास्मिनात्मवित्श्रुतंह्येवेत्यादिसोहंभगवःशोचामितंमाभवाञ्शोकस्यपारं

तारयत्वित्यात्मनिपृष्टेनारदंप्रत्यनात्मानमुपदिशन्सनत्कुमारःप्रतारकःस्यात् ॥ [६६।१२] यथाचेति ॥ केनेषितोपनिषदि । अन्यदेव
तद्विदितादथोअविदितादधि । इतिशुश्रुमपूर्वेषांयेनस्तद्व्याचचक्षिरे । यद्वाचानभ्युदितंयेनवागभ्युद्यते । तदेवब्रह्मत्वंविद्धि
नेदंयदित्यादिनिरंतरवाक्येषुयथाज्ञाननिषेधोश्रौतज्ञानादिपरस्तथोपासनानिषेधोप्यश्रौतोपासनस्येत्यर्थः ॥ [६६।१५] सामान्यत
इति ॥ अपच्छेदादिन्यायाःप्रथमपरिच्छेदेविवृताः । श्रुतेर्गुणाभावरूपगुणबोधकत्वेनसर्वथागुणनिषेधकत्वायोगात्संकोचस्या
वश्यकतयाविहितेतरगुणनिषेधकत्वं लक्षणयाखंडार्थत्वेनविशेष्यमात्रपरतयाविरोधाभावश्चेत्यादितत्रोक्तं ॥ [६७।१] धर्मीति ॥ केन
चिच्छब्देनब्रह्मनिर्दिश्यतत्रगुणानिषेध्याः तथाचयेनब्रह्मनिर्दिश्यते तच्छब्दप्रवृत्तिनिमित्तरूपगुणलाभेपुनस्तत्रगुणनिषेधोनयु
ज्यते । ननुधर्मिनिर्देशरूपशब्दप्रवृत्तिनिमित्तंब्रह्मणिप्रतीतमपिनविवक्षितमतोनधर्मिग्राहकबाधइत्याशंक्यनिराकरोति ॥ न
[६७।२] चोद्देश्येति ॥ [६७।२] ग्रहेति ॥ एतच्चप्रागुपपादितं ॥ [६७।३] ग्रहैकत्वेति ॥ येनविशेषणेनविनोद्देश्यस्वरूपंनज्ञायते तादृशमुद्देश्यविशे
षणमपिविवक्षितमेव । यथाग्रहत्वमित्यर्थः ॥ [६७।४] अतएवोक्तमिति ॥ यस्योभयंहविरार्तिमार्च्छेदैंद्रंपंचशरावमोदनंनिर्वपेदि
त्यत्र यस्यकस्यचिदार्तेःसदासंभवेनानिमित्तत्वादार्तेर्हविषांविशेषणंव्यावर्तनंहविरार्तिरित्येवंमृष्यामहे अंगीकुर्मइत्यर्थः । उभ
यत्वंतुनविशेषणं । तेनैकैकहविरार्तिरपिनिमित्तं । ननुप्रवृत्तिनिमित्तानर्पकेणलक्षकेणशब्देनब्रह्मनिर्दिश्यगुणानिषिध्यंतेतोनध
र्मिग्राहकविरोधइत्यतआह ॥ [६७।४] लक्षकेणापीति ॥ [६७।५] अन्यथेति ॥ असंकीर्णस्वरूपानुद्देशे ॥ [६७।५] च्छागेति ॥ एतदुक्तंप्राक् ॥

[६७।११]उपसंहारइति ॥ सामान्यतोगुणनिषेधस्त्रैगुण्यनिषेधेहेयगुणनिषेधेवोपसंह्रियतां । यथापुरोडाशंचतुर्धाकरोतीतिश्रूयते । पुनश्चशाखांतरेआग्नेयंचतुर्धाकरोतीति । तत्रसामान्यतःपुरोडाशस्यचतुर्धाकरणंश्रुतमाग्नेयपुरोडाशेउपसंह्रियते । आग्नेयपुरोडाशंचतुर्धाकरोतीत्यर्थः । तथेहापि । तदुक्तंवार्तिके । सत्यमस्त्यविशेषेणश्रुतिर्येयमुदाहृता । विशेषेस्थाप्यतेनित्यंसातुशाखांतरीयथा ॥ तथा । अवश्यमेवसामान्यंविशेषंप्रतिगच्छति । गतमात्रंचतत्तेनविशेषेस्थाप्यतेध्रुवमिति ॥ [६७।१२]अन्यथेति ॥ [६७।१३]विशेषबलादेकतरपरिशेषाभावासमर्थने ॥ आनंदेति ॥ आनंदस्फुरणयोरेकतरस्यपरिशेषादानंदस्फुरणाभावः ॥ साक्षीचेतेति ॥ तमीश्वराणांपरमंमहेश्वरंतंदेवतानांपरमंचदैवतं । पतिंपतीनांपरमंपरस्ताद्विदामदेवंभुवनेशमीड्यं । नतस्यकार्यंकरणंचविद्यतेनतत्समश्चाभ्यधिकश्चविद्यते । परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानवलक्रियाचेत्यादिनावहुतमागुणाउक्ताः । साक्षीचेतेत्यादिवाक्यात्पूर्वं अनाद्यनंतंसलिलस्यमध्येविश्वस्यस्रष्टारमनेकरूपं । विश्वस्यैकंपरिवेष्टितारंज्ञात्वादेवंमुच्यतेसर्वपाशैरित्यादिनाबहुंवाक्यैस्तज्ज्ञानान्मुक्तिश्चोक्ता । उत्तरत्रच । एकोवशीनिष्क्रियाणांवहूनामेकंरूपंवहुधायःकरोति । तमात्मस्थंयेनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषामितिवहूनांगुणानांतज्ज्ञानान्मुक्तेश्चोक्तेः । शाश्वतसुखप्राप्तेरुक्तत्वात्सर्वमेतत्श्वेताश्वतरोपनिषद्युक्तं । उपांशुयाजन्यायःप्रागुक्तः ॥ [६७।१५]साक्षित्वादेरिति ॥ श्रुतिबोधितस्यातात्त्विकत्वमयुक्तं ॥ [६७।१६]अवाक्येति ॥ वाक्यरूपमूलप्रमाणरहितायुक्तिर्नेष्यते । अनुव्याख्याने । युक्तोयुक्तइत्यादिश्लोकेयुक्तिश्चत्रिविधामतेतिचतुर्थपादस्यपाठः

॥ सविशेषनर्थादिति[६७।१८] ॥ सविशेषणेहीतिन्यायः । बाधकसद्भावाद्ब्रह्मणिगुणानांगीक्रियंतइतिद्वितीयपक्षस्यदूषणमुपसंहरति
॥ तस्मादिति[६७।१९] ॥ सौहृदादिति[६७।२२] ॥ अस्यसाधुतोक्ता ॥ अन्यथेति[६८।१] ॥ भिन्नाभिन्नादिकुतर्कैर्ब्रह्मधर्मखंडने । ज्ञानमात्रत्वे ।
ज्ञानादभेदे ॥ अखंडार्थत्वेति[६८।२] ॥ तथाचब्रह्मज्ञानमपिनसिध्येदितिभावः ॥ निर्विशेषत्वमेतेनेति[६८।६] ॥ यथामूकोहमित्येत
त्स्वक्रियाविरुद्धं तथानिर्विशेषंब्रह्मेत्यपि । तत्रहेतुःएतेननिर्विशेषत्वरूपविशेषेणापातेनहेतुनेत्यर्थः ॥ तदुक्तमिति[६८।८] ॥ युक्ति
पादे । यदिधर्मानंकेचन । ब्रह्मणोनैवजिज्ञास्यंजिज्ञासाधर्मनिर्णयः । इदमित्थमित्याद्युक्तं । नन्वित्थमितिज्ञानंजिज्ञासाफलं
चेत्ब्रह्मणीत्थंभावएवांगीकार्यःकिंधर्मेणेतिमंदाशंकानिरासायोक्तं ॥ इत्थंभावोहीति[६८।९] ॥ ननुमाभूद्व्याप्यवत्त्वज्ञानप्रयुक्त
व्यापकवत्त्वज्ञानरूपाब्रह्मणिजिज्ञासा । तथापिधर्मांतरनिवृत्त्याभ्रांतिप्रसक्तधर्मांतरनिवृत्तिज्ञानरूपाजिज्ञासानिर्धर्मकेपिस्या
देवेत्यतउक्तंनचेदिति अस्येत्यनुषज्यते । अस्यब्रह्मणःप्रतियोगिताविरोधिता । धर्मांतरव्यावृत्तिमत्तेत्यर्थः । अयमर्थः । निरा
धारयाकस्यचिद्धर्मस्यनिवृत्त्यानिराधारधर्मांतरनिवृत्तिरनुमातुमशक्येतिब्रह्मनिष्ठयैवब्रह्मनिष्ठासानुमातव्या । यदिचास्यधर्मो
नस्यान्नतर्हिव्यावृत्तिमत्तापिस्यादिति ॥ केचिदिति[६८।१०] ॥ आरोपाधिष्ठानेब्रह्मणीदंत्वादयःसत्याःस्वीकार्याः । तथा प्रधानज्ञा
नंविनाभ्रांतेरयोगाद्ब्रह्मणोऽन्यत्रसार्वज्ञाभावाद्ब्रह्मणिसार्वज्ञारोपार्थंब्रह्मण्येवसत्यंसार्वज्ञमंगीकार्यं । तथाचविरोधइत्यर्थः ॥ ध
र्मादीनामिति[६८।११] ॥ आदिपदेनप्रधानं । अत्रदर्शनइत्यस्यानंतरंइदंतदादिधर्मित्वेधर्मोन्यःकल्प्यतेत्रहिइत्यर्धःपठ्यते । युक्ति

पादे । अनंतरं सर्वधर्मविहीनस्येत्यर्धःपठ्यते ॥ [६८।१२] तच्चेति ॥ उक्तंह्यनुव्याख्याने । यदिस्युस्तादृशाधर्माःसर्वज्ञत्वादयोनकि
मिति । तादृशाः अदृश्यत्वादयोऽभावरूपाः । असतः अविद्यमानान् । श्रुतिंगुणान्वेत्यपिधन्वनोमेकिम्वात्मभूतस्त्वितिदर्श
यन्यः । धनुश्चकर्षाश्रुतिदूषणस्यभिदेसदेहावतुमांसरामः ॥ ७ ॥ ७ ॥ ब्रह्मणोनिर्गुणत्वभंगः ॥ ४ ॥ ७ ॥ ब्रह्मसिद्धिरेव
निर्विशेषब्रह्माभावसहकृतासगुणासिद्धिरित्याह ॥ [६८।१५] किंचेति ॥ ननुतस्यस्वयंप्रकाशत्वान्नतत्सिद्ध्यर्थंप्रमाणप्रश्नोघटतइत्याशं
क्याह ॥ [६८।१५] नचेति ॥ [६८।१५] निरस्तत्वादिति ॥ परैःस्वविषयत्वांगीकारादित्यर्थः ॥ [६८।१६] यद्यदिति ॥ नन्वभावव्यावृत्तिबोधकप्रमाण
सत्त्वान्ननिर्विशेषस्यविप्रतिपन्नांतरसाम्यमितिचेन्न । तत्सत्त्वबोधकस्यैवतदभावव्यावृत्तिबोधकतयातस्यपृच्छ्यमानत्वात् ॥
[६८।१६] विप्रतिपत्तीति ॥ निर्विशेषइत्यनुषज्यते ॥ [६८।१६] शास्त्रेति ॥ केवलोनिर्गुणश्चेत्यादित्वदभिमतस्यनिर्गुणशास्त्रस्य । ननुनिर्विशेष
स्यसिद्ध्यर्थंशास्त्रस्यानपेक्षणेपितदज्ञाननिवृत्त्यर्थंशास्त्रापेक्षेत्याशंक्याह ॥ [६८।१७] अज्ञानेति ॥ एतादृशसिद्धिःपरिभाषामात्रमसिद्धि
समेत्यर्थः । ननुमाभूतांनिर्विशेषेऽक्षानुमेमानं शब्दस्तुभविष्यतीत्याशंक्यसकिंपदरूपोवावाक्यरूपोवेतिविकल्प्याद्यंदूषयति
॥ [६८।२०] नापीति ॥ [६८।२२] गौण्याश्चेति ॥ नचसंसर्गबोधकवाक्यस्थपदानामेवायंनियमइतिवाच्यं । संसर्गबोधकस्यप्रमाणवाक्यत्वा
सिद्धेः । वाक्यत्वप्रयोजकाकांक्षादेःसंसर्गघटितत्वादित्युक्तं । विशिष्यवृत्तीर्दूषयित्वासामान्यतोपितानिराचष्टे ॥ [६८।२३] तदस्येति ॥

ननुवृत्तिमंतरेणापिसुप्तोत्थापकवाक्यस्येववेदांतवाक्यस्यनिर्विशेषेप्रामाण्यमस्तु । तदुक्तंवार्तिके । अगृहीत्वैवसंबंधमभिधा
नाभिधेययोः । हित्वानिद्रांप्रबुध्यंतेप्रसुप्तेबोधिताःपरैः । जाग्रद्वन्नहिसंवंधंप्रसुप्तोवेत्तिकश्चनेति । मैवं । संवंधग्रहंविनाशब्द
स्यावोधकत्वात् । अनेवंविधस्थलेऽनुमानतयातस्यवोधकत्वात् । ननुवृत्तिपक्षेपितात्पर्यविशेषग्रहेणैवातिप्रसंगभंगोवाच्यः ।
शक्तेःशक्यसंवंधादेर्वानेकत्रसत्त्वात् । वेदांततात्पर्यग्रहोहिकस्यचिदेवक्षीणपापस्यभवति । पापस्यप्रतिबंधकत्वंतु ज्ञानमुत्पद्य
तेपुंसांक्षयात्पापस्यकर्मणइत्यादिसिद्धं । तथाचप्रतिवंधकक्षयेविनापिसंबंधग्रहंशब्दादात्मसाक्षात्कारइति । मैवं । प्रतिबंधका
भावोहिकारणसहकारी नतुचरमकारणं । येनवृत्त्यादिकंविनैवसाक्षात्कारहेतुःस्यात् । अन्यथासवाक्यमपिनापेक्षेत ॥ असं
[६८।२५] सर्गत्वादिति ॥ संसर्गएववाक्यप्रामाण्यं । ननुलौकिकवाक्यस्यतथात्वेप्युपनिषद्वाक्यंनिर्विकल्पकहेतुरस्त्वित्यतआह ॥
[६८।२५] धर्मीति ॥ तस्य उपनिषद्वाक्यस्य । ननुविरोधिकोटिप्रतिक्षेपकोपलक्षितधर्मिज्ञानादपिसंशयनिवृत्त्युपपत्तेर्नतदर्थमुपनिषद्वा
क्यंसप्रकारकज्ञानजनकमितिचेन्न । उक्तोपलक्षितत्वस्यधर्मिणिधर्मिज्ञानविषयत्वेतस्यसप्रकारकत्वापातात् । अविषयत्वेसंश
यहेतोर्धर्मिज्ञानादपिसंशयनिवृत्त्यापत्तेः ॥ [६८।२६] निर्विशेषेति ॥ निर्विशेषंब्रह्मेत्यादिशब्दजन्यज्ञानस्यब्रह्मणिनिर्विशेषत्वाप्रकारक
त्वेतज्ज्ञानान्निर्विशेषंब्रह्मेतिव्यवहारोनस्यादित्यर्थः । परिशेषसिद्धंसगुणत्वमुपसंहरति ॥ [६९।१] तस्मादिति ॥ ७ ॥ ७ ॥ निर्गुणे
प्रमाणभंगः ॥ ५ ॥ ७ ॥ [६९।२] एतेनेति ॥ सगुणत्वेन । हेत्वंतरंचाह ॥ [६९।२] आदित्येति ॥ इत्यादिश्रुतिस्मृत्यनुमानैराकारसिद्धे

श्चनिराकारत्वंनिरस्तमित्यन्वयः । तैत्तिरीयारण्यकेसहस्रशीर्षेत्यनुवाके वेदाहमेतंपुरुषंमहांतं आदित्यवर्णतमसस्तुपारेइति
पाठः । तत्रैवाद्भ्यःसंभूतइत्यनुवाके आदित्यवर्णतमसःपरस्तादितिपाठः । मंत्रद्रष्टास्वानुभवंप्रकटयति । यआदित्यवर्णःप्रकृतेः
परस्तमेतंपुरुषमहंवेदेत्यर्थः ॥ [६१।३] यदापश्यइति ॥ मुंडके ॥ ऋतं[६१।३]सत्यमिति ॥ तैत्तिरीयारण्यकेऋतंसत्यमित्याद्युक्त्वाऊर्ध्वरे
तंविरूपाक्षंविश्वरूपायवैनमइत्युक्तं । सहस्रशीर्षदेवमित्याद्युक्त्वाविश्वंनारायणंदेवमक्षरंपरमंप्रभुमित्युक्तं ॥ [६१।४] यदेकमिति ॥
यदेकमव्यक्तमनंतरूपमादित्यवर्णतमसःपरस्तात् । तदेवर्तंतदुसत्यमाहुस्तदेवब्रह्मपरमंकवीनामितिश्रुतिशेषः । श्रुतेरवांतर
ब्रह्मपरत्वंनिराकरोति ॥ [६१।१२] आदित्यवर्णमित्यत्रेति ॥ उपासनापरत्वंनिराकरोति ॥ [६१।१३] यएषइति ॥ यएषोंतरादित्येहिरण्मयः
पुरुषोदृश्यतेहिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्णस्तस्ययथाकप्यासंपुंडरीकमेवमक्षिणीइतिछांदोग्यवाक्येवर्तमाना
र्थकलडंतदृशिधातुंनायग्धिकरणकेनहिरण्मयपुरुषस्यापरोक्षज्ञानविषयतयावर्तमानत्वप्रतीतेरित्यर्थः । क्रियायामेववर्तमान
त्वान्वयोनतुकर्मणीतिचेन्न । क्रियाद्वाराकर्मण्यन्वयात् । यद्यपिधातुमात्रेवादृशिधातौवानोक्तनियमः । पूरेणवृष्टिरनुमीयते
शुक्तौरूप्यंदृश्यतइत्यादौतदभावात् । तथापिप्रमाणवाक्यस्थलेऽननुवादकेदृशौतथानियमः । अयमत्रप्रयोगः । आदित्यव
र्णमितिवाक्योक्तमादित्यवर्णत्वंनोपास्यमात्रं वर्तमानत्वेनापरोक्षज्ञानविषयहिरण्मयत्वादितुल्यत्वात् । अन्वयव्यतिरेकव्याप्ति ॥३१२॥
माह ॥ [६१।१४] नहीति ॥ ननुप्रतीकोपासनेउपास्यसाक्षात्कारनियमाभावेपिसगुणोपासनेसोस्तीतिचेत्तत्किमुपासनंसत्युपास्यसाक्षा

त्कारउच्यतेऽसतिवा । आद्येइष्टापत्तिः । द्वितीयेतस्यभ्रांतित्वापत्तिः । एतमितःप्रेत्याभिसंभवितास्मीतियस्यस्यादद्धानविचिकित्सास्तीतिहस्माहशांडिल्यइत्यादिश्रुतिविरोधश्च । यद्रूपस्योंपासकोहंतद्रूपमभिसंभवितास्नाता । इतियस्यनिश्चयःस्यात्स तद्रूपंप्राप्नोत्येव. नसंशयइत्यर्थः । उपास्यरूपाभावेतत्प्राप्तिरयुक्तेतिश्रुतिविरोधः । आरोपितरूपपरंत्वंनिराकरोति ॥ ६१।१४ सहस्र शीर्षेति ॥ उपलक्षणमेतत् । सहस्रशीर्षेत्यत्रवेदाहमेतमित्याद्युक्त्वा आदित्यवर्णंतमसस्तुपारे । सर्वाणिरूपाणिविचित्य धीरः नामानिकृत्वाऽभिवदन्यदास्ते । इतिनामरूपस्रष्टृत्वमुक्तं । धीरःपुरुषःसर्वाणिरूपाणिविचित्यनिर्मायतेषांरूपाणांनामानिकृत्वातैर्नामभिरभिवदन्व्यवहरन्वर्ततइत्यर्थः । तथा धातापुरस्ताद्यमुदाजहार शक्रःप्रविद्वान्प्रदिशश्चतस्रइतिब्रह्मादिभिरुपदेश्यत्वमुक्तं । धाताब्रह्मापूर्वमनादिकालेयंपुरुषंस्वशिष्यान्प्रत्युदाहृतवान् सर्वज्ञइंद्रोपिचतुर्दिग्वर्तिशिष्यान्प्रतियमुपदिष्टवान् तमेतमेवंसहस्रशीर्षत्वादिनाजानन्नमृतोभवतीतिश्रुत्यर्थः ॥ ६१।१५ नसंदृशेइति ॥ काठकेश्वेताश्वतरेच नसंदृशेतिष्ठति रूपमस्यनचक्षुषापश्यतिकश्चनैनं । हृदामनीषामनसाभिक्लृप्तोयएतद्विदुरमृतास्तेभवंतीत्युक्तं । तैत्तिरीयाणांतुयएनंविदुरिति पाठः । ऋतंसत्यंपरमित्यत्रसत्यज्ञानादिवाक्योक्तपरब्रह्मस्वरूपलक्षणान्यपिपिंगलरूपाण्यभिहितानि । विश्वतश्चक्षुरित्यत्रयतोवाइमानिभूतानिजायंतेइत्यादिवाक्योक्ततटस्थलक्षणान्येकमेवाद्वितीयमितिवाक्योक्तैकत्वादीनिचोक्तानि । सहस्रशीर्षमित्यत्राक्षरत्वंनारायणंपरंब्रह्मेतिपरब्रह्मत्वमनंतमव्ययमित्यनंतत्वंचोक्तं । यदेकमव्यक्तमित्यतःपूर्वं अतःपरंनान्यदणीयसंहिपरात्परंयन्महतोमहांतमितिपरात्परत्वादिकमुत्तरत्रचदेवब्रह्मेतिब्रह्मत्वं तदेवाग्निस्तद्वायुरितिसर्वात्मकत्वंचोक्तं । तस्मादादित्य

वर्णमित्यादिषूक्तंपरंब्रह्मैव ॥ [६।१।१६] अस्येति ॥ विश्वरूपाख्यस्य ॥ [६।१।१७] अंतएवेति ॥ मुक्तगम्यत्वादेः ॥ [६।१।११] सर्वतइति ॥ ज्ञेयंतच्चप्रव
क्ष्यामियज्ज्ञात्वामृतमश्नुतइत्तिप्रतिज्ञाय अनादिमत्परंब्रह्मनसत्तन्नासदुच्यते । सर्वतःपाणिपादंतत्सर्वतोक्षिशिरोमुखं । सर्व
तःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठतीत्युक्त्वा ज्योतिषामपितज्ज्योतिस्तमसःपरमुच्यतइतितमःपरत्वोक्त्याऽप्राकृतत्वसिद्धिः । अ
नित्यत्वंनिराकरोति ॥ [६।१।२] एकइति ॥ एकोनारायणइतिश्रुतिश्चेतनस्यप्रलयेऽवस्थानमाह नतुतच्छरीरस्यापीत्यतआह ॥ [६।१।२१] प्रलय
इति ॥ विशिष्यनारायणावस्थानोक्तिर्नस्यादित्यर्थः । व्यक्तिः । शरीरं । ननुविग्रहस्यभगवदात्मकत्वेतस्यविग्रहित्वंनस्यादत
आह ॥ [०।१] भेदाभावेपीति ॥ नन्वानंदस्यामूर्तस्यकथंहस्तपादाद्यात्मकविग्रहत्वमतआह ॥ [०।२] आत्मनीति ॥ परमात्मनिविचि
त्राःशक्तयोवर्ततइतिसूत्रार्थः । परमात्माभिन्नस्यानंदस्यापिविचित्रशक्तित्वोपपत्तिः । ननुगुणिशक्तिःकथंगुणेस्यात् जलाहर
णशक्तेर्घटाभिन्नेपिरूपेऽदर्शनादतआह ॥ [७।१४] नैषेति ॥ अपाणिपादइतिवाक्ये जवनोग्रहीतापश्यत्यचक्षुःसश्रृणोत्यकर्णः । सवे
त्तिवेद्यंनचतस्यास्तिवेत्तातमाहुरग्र्यंपुरुषंमहांतमितिश्वेताश्वतरेश्रवणाद्युक्तेस्तद्विरोधइत्याह ॥ [०।१६] अन्यथेति ॥ प्राकृतावयवा
द्यनिषेधेविग्रहवत्त्वेनदुःखित्वानुमानेव्यापकानुपलब्धिबाधमाह ॥ [०।१] अप्राकृतेति ॥ एतच्चप्राकृतविग्रहाभावोपलक्षणं । अप्रा
कृतानंदमयविग्रहवत्त्वादीश्वरस्यप्राकृतंविग्रहवत्त्वंनास्तीत्यर्थः । तथाचप्राकृतविग्रहाभावदुःखाभावयोर्व्याप्यव्यापकभावात्त
त्प्रतियोगिनोर्व्यापकव्याप्यभावोवधारितइतिप्राकृतविग्रहवत्त्वस्यभगवत्यभावात्तद्व्याप्यदुःखस्याप्यभावइतिभावः । उक्तानु

मानेऽदृष्टवत्त्वमुपाधिमभिसंधायतस्यासाधनाव्यापकत्वशंकांपरिहरति ॥ [७।०।१] सर्वैरिति ॥ तथाचविग्रहवतीश्वरेऽदृष्टाभावान्नो
पाधिःसाधनाव्यापकइत्यर्थः ॥ निरवयवेति ॥ गुणादौव्यभिचारान्निरवयवमात्रेनित्यत्वाभावेपितद्विशेषेनित्यत्वंनत्यज्यते ।
यथावाज्ञानानंदादिमात्रेनित्यत्वाभावेपितद्विशेषेतदस्ति । अथासावयवविशेषेपिनित्यत्वंयुज्यते । उपादानाभावेपिगगनादेरे
कदेशोस्तीत्याह ॥ गगनादेरपीति ॥ अन्यथेति ॥ वृक्षेशाखाद्यवयवस्येवगगनेसंयोगतदत्यंताभावयोराधारतावच्छेदक
स्यावयवस्याभावेनतदवच्छेदकांशसिद्धिः । नन्वाकाशेपक्षिसंयोगाद्याधारतायांपक्ष्यवयवसंयोगोवच्छेदकोभविष्यतीत्यतआ
लोकेत्युक्तं । उक्तरीत्याऽऽलोकत्रसरेणुसंयोगाद्याधारतागगनेत्रसरेण्ववयवद्व्यणुकसंयोगेनावच्छिद्यतइतिवाच्यं । तच्चायुक्तं ।
अवच्छेदकस्यद्व्यणुकसंयोगस्यातींद्रियतयात्रसरेणुसंयोगआकाशेप्रत्यक्षोनस्यादित्यर्थः ॥ नचेदुपाधीति ॥ औपाधिकमंशंसं
पादयितुमाकाशेसंवध्यमानउपाधिःसर्वस्मिन्नाकाशेवासंवध्यतेतदेकदेशेवा । आद्येसर्वोपिघटाकाशःस्यात् । द्वितीयेसोंशःकि
माकाशेस्वाभाविकोवौपाधिकोवा। नाद्यः । प्रथमस्यैवतथौचित्यात् । द्वितीयेपिप्रकृतोपाधिकृतोवोपाध्यंतरकृतोवा । आद्येऽ
न्योन्याश्रयः । एतदुपाधिसंवंधेसत्याकाशेंशसिद्धिरंशसिद्धौचतत्रैतदुपाधिसंवंधइति । उपाध्यंतरकृतत्वपक्षेप्येवंदोषः । त
स्मान्नौपाधिकाअंशाः ॥ इत्याद्यागमेति ॥ आदिपदेनअमृतेलोके अक्षितेआरोहसूर्येअमृतस्यलोकमित्यादिश्रुतिः ॥ ७ ॥
॥ ७ ॥ ब्रह्मणोनिराकारत्वभंगः ॥ ६ ॥ ७ ॥ अखंडरूपे । एकव्यक्तिके ॥ [७।१।४] नित्येति ॥ अन्यथाविरोधायोगः ॥ [७।१।५] आर्थि

कत्वेति ॥ ज्ञानत्वजडव्यावृत्तत्वयोरेकत्वात् ॥ द्वितीयादिष्विति ॥ परमतेघटज्ञानस्यापिब्रह्मस्वरूपज्ञानत्वेनद्वितीयादि
षुघटज्ञानेष्वज्ञानविरोधित्वरूपज्ञानत्वायोगाज्ज्ञानव्यवहारयोगित्वंज्ञानत्वमस्वाभाविकंब्रह्मणोजगत्कारणत्वादिवदित्यापद्ये
त। ननुकदाचिदर्थोल्लेखमात्रेणमोक्षेऽर्थाभावेप्यर्थप्रकाशत्वमुपपद्यते। मैवं। कदाचिदावृतत्वमात्रेणमोक्षेप्यावृतत्वापातात्।
अर्थोल्लेखस्यज्ञानस्वभावत्वेनमोक्षेतदभावेज्ञानस्वभावहानेश्च ॥ अवेद्यत्वाच्चेति ॥ तथाचात्मरूपेसुखेचासंभवः ॥ अन्यंप्र
तीति ॥ मोक्षेन्याभावात् ॥ वेदनेति ॥ वेदनप्रकारभूतस्यानुकूल्यस्यवेदनादधिकत्वेस्वाभाविकत्वेचसखंडार्थत्वं ॥ औपा
धिकत्वइति ॥ उपाधिवृत्त्यौपाधिकनिवृत्तेरावश्यकत्वात् ॥ एतेनेति ॥ आनुकूल्यवन्निरुपाधिकेष्टत्वस्यस्वरूपादधिकस्य
स्वाभाविकत्वऔपाधिकत्वेचदोषात्। दुःखाभावेऽतिव्याप्तेश्च। यत्तुदुःखाभावोपिसुखविशेषएव अभावस्यविरोधिभावांतर
रूपत्वादिति। तन्न। परस्पराभावरूपयोःसुखदुःखयोर्विरहस्यैकत्रपाषाणादावसत्त्वापत्तेः। अपसिद्धांताच्च। मुक्ताविच्छा
भावेनानंदाभावापत्तेश्च। नचेष्टत्वोपलक्षितस्वरूपंमोक्षेप्यस्तीतिवाच्यं। तथासतितदुपलक्षितत्वस्यतदाप्यापातात् ॥ विरो
धादिति ॥ ज्ञानस्यविषयोल्लेखिभावत्वात् ॥ विज्ञानमिति ॥ विज्ञानस्यानंतत्वेविज्ञानपदस्यार्थभूतेनविज्ञानेनानंदकार्यदुः ॥ २१४ ॥
खव्यावृत्तिसिद्धावानंदपदस्यवैयर्थ्यं विज्ञानपदार्थाधिकार्थत्वाभावः। तथाचविज्ञानानंदयोरेकतरपरिशेषापत्त्यामोक्षआ

नंदप्रकाशोनस्यादितिभावः। यस्तुकल्पितजातिभेदनिबंधनप्रवृत्तिकप्रदद्वयस्यव्यावृत्तिभेदेनसाफल्यमाहतदबोधात्। नह्यत्रपदयोर्वैफल्यमापाद्यते। किंत्वानंदस्याप्रकाशः॥ [७।११] आर्थिकत्वेति॥ आनंदपदेनैवदुःखव्यावृत्तेरभिधानात्॥ [७।१२] उक्तस्येति॥ दुःखाभावोपलक्षितस्वरूपस्यदुःखाभावानंदयोर्द्वयोरुभयमतेप्यभावादित्यर्थः॥ [७।१२६] अनुपलब्धीति॥ अधिकरणस्वरूपस्याभावस्ययथायथमिंद्रियादिभिरेवबोधनसंभवात्॥ [७।२।१] सत्यत्वेति॥ सत्यब्रह्मरूपत्वात्॥ [७।२।१] प्राभाकरेति॥ यत्रकदापिनप्रतियोगिसंबंधस्तत्रतत्स्वरूपत्वमेवकैवल्यमन्यत्रतुप्रतियोगिमदधिकरणकालभिन्नकालावच्छिन्नत्वादिकंकैवल्यंविशेषणंवाच्यं॥ [७।२।३] अन्यथेति॥ कैवल्याद्यविशेषितस्याधिकरणमात्रस्याभावत्वेपिप्राभाकरमतेनुपपत्त्यभावे॥ [७।२।३] गुणगुणीति॥ यथाप्राभाकरमतंप्रविश्यद्वितीयाभावस्यब्रह्ममात्रत्वमुक्त्वाब्रह्मणःसद्वितीयत्वंपरिहृतं तथाधिकरणाभिन्नशौक्ल्याद्यंगीकर्तृमतंप्रविश्यशक्त्यादिधर्मान्ब्रह्मस्वरूपानंगीकृत्यद्वैतपरिहारःसुकरइतिकिंशक्त्यादीनांमिथ्यात्ववर्णनेन॥ [७।२।४] प्रामाणिकत्वेति॥ ननुस्वप्नोपभुक्तनिगरणादेरिवनप्रामाणिकत्वमतउक्तंतत्प्रतियोगिनइति। तद्विरहरूपस्येत्यर्थः॥ [७।२।५] अत्यंताभावासिद्धिरिति॥ यत्त्वत्यंताभावप्रमायाअनुद्देश्यत्वेप्यवांतरतात्पर्येणतत्सिद्धिरिति तन्न। सार्वज्ञादिष्ववांतरतात्पर्याभावमत्यंताभावेचतद्भावमभिदधानमवधानवंतंप्रत्यवक्तव्यत्वात्॥ [७।२।९] अप्रामाणिकेनेति॥ द्वितीयाभावद्वितीययोरप्रामाणिकत्वेब्रह्मप्रत्युपलक्षणत्वेचाविशेषाद्वितीयाभावेनाद्वितीयेनसद्वितीयंकथंनस्यात्॥ [७२।१३] सापीति॥ येनकालेनाविद्यमानंसंबध्यतइत्युच्यते तत्कालस्वरूपमेवो

न्यायामृ० पादानाभावान्नसिध्येत् ॥ [७२।१३] ईदानीमेवेति ॥ अन्यदेत्यस्यकालवाचित्वादुपादेयंकालमंगीकृत्यतदुपादानाविद्यानंगीकारेव्या तरंगिणी
॥ ४१ ॥ घातः ॥ [७२।१४] अनुन्मज्जनंत्विति ॥ घटवद्धटनिवृत्तेरपिप्रागभावविरोधित्वाद्यथाघटप्रागभावानुन्मज्जनंतथाघटध्वंसवद्धटध्वंसस्य ज्ञानत्वा.
ध्वंसोघटविरोधीतिनघटोन्मज्जनं ॥ [७२।१५] एवंसतीति ॥ घटप्रागभावानुन्मज्जनार्थंघटध्वंसस्यस्थायित्वंयथामयांगीक्रियते तथाघ
टध्वंसवत्ध्वंसादीनामनुन्मज्जनायकश्चित्ध्वंसःस्थायीतिचरमंगत्वास्वीकार्यं । तद्वरंप्रथमतएवध्वंसेस्थायित्वंस्वीकर्तुं ॥ नि २।७
[७२।१७] ष्प्रतियोगिकत्वेनेति ॥ ध्वंसस्यनित्यस्यांगीकारेनिष्प्रतियोगिकत्वेनभावरूपाणिध्वंसत्वादीन्यप्यंगीकरणीयानि । आदिप
देनध्वंसाधिकरणेध्वंसाधिकरणत्वादीनि ॥ [७२।१८] एवमिति ॥ ब्रह्मणएवाभयावधिराहित्यस्यान्यदीयतथात्वंप्रति विरोधित्वेपिमु
क्तौचतथाभूतान्यसत्यंप्रत्यविरोधित्वात् । ननुदृगेवसाक्षिशब्देनाभिधीयतामतआह ॥ [७२।२०] साक्षादिति ॥ द्रष्टर्येवसाक्षिशब्द
स्यानुशासनात् । ननुस्वरूपेणदृश्येप्यन्योपाधिकंद्रष्टृत्वमतआह ॥ [७२।२१] बुद्ध्युपाधिकस्येति ॥ तथाचसुषुप्तिसाक्षिण्यव्याप्तिरि
[७२।२१] त्यर्थः ॥ बुद्धेरिति ॥ साक्षिस्वरूपलाभेतदधीनप्रतीतिमात्रशरीराविद्यासिद्ध्येत्तत्सिद्धौचतत्कार्याबुद्धिस्तत्सिद्धौचतदुपाधिक
स्यद्रष्टृत्वस्यसाक्षिस्वरूपेलाभइतिचक्रकाश्रयः । एतेनाविद्यातदुपाधिकद्रष्टृत्वयोरनादित्वादुत्पाद्यप्रतिबंधकत्वान्नचक्रकादिदो ॥ २१५ ॥
षइतिनिरस्तं । परस्परस्वरूपेपरस्परापेक्षणात् । नहिद्रव्यत्वगुणवत्त्वयोःस्वरूपेऽन्योन्यापेक्षा ॥ [७२।२३] जीवइति ॥ जीवकोटेःसाक्षि

णःसकाशादिदमंशावच्छिन्नचैतन्यस्यब्रह्मस्वरूपस्येदमंशप्रकाशकस्यभेदादित्यर्थः । जीवःपरिच्छिन्नइतिपक्षेब्रह्मचैतन्यस्यघटादिप्रकाशकत्वात् ॥ [७२।२५] तेनेति ॥ ब्रह्मकोटिनासाक्षिणा । ननुब्रह्मणोदुःखादिधीरेवंजीवस्यतद्धीरितआह ॥ [७३।२५] अन्यथेति ॥ ब्रह्मधियएवजीवधीत्वे । ननुब्रह्मचैतन्यस्यघटादिप्रकाशकत्वेपिजीवोपाधिभूतांतःकरणीयवृत्त्याजीवस्यघटप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्तौजीवस्यघटप्रकाशः तथाब्रह्मकोटिनःसाक्षिणोदुःखाद्यनुभवेपितेनजीवस्याभेदाभिव्यक्तौजीवस्यापिदुःखादिधीर्युज्यतइत्याशंक्याह ॥ [७२।२६] नचेति ॥ साक्षिजीवयोरेकोपाध्यवच्छिन्नत्वाभावादित्यर्थः ॥ [७३।१] ईश्वरेणेवेति ॥ चिन्मात्ररूपःसाक्षीश्वरवत्स्वाश्रितत्वेनदुःखमगृह्णन्नपिपरकीयदुःखोल्लेखित्वाद्दुःखोपप्लुतएवातस्तद्भावापत्तिरूपामुक्तिरप्यपुरुषार्थःस्यात् ॥ [७३।३] सुप्तेति ॥ चैत्रंप्रतिचैत्रदुःखादेश्चैत्रीयतयाग्राहकस्यचिन्मात्ररूपसाक्षिणोमैत्रंप्रत्यनुपगतत्वात् ॥ [७३।४] साक्षात्कर्तव्येति ॥ चिन्मात्रस्यसाक्षीतरस्यमुक्तत्वान्नतत्रसंसारोपप्लवः । सुप्तमैत्रेचाविद्यावृत्तिश्चैत्रदुःखाकारानास्तीतिनतंप्रतिचैत्रदुःखग्रहइत्यर्थः । यत्तुसाक्षिणःसर्वजीवसाधारणत्वेपितत्तज्जीवचैतन्याभेदेनाभिव्यक्तस्यतत्तद्दुःखादिभासकतयानातिप्रसंगइतितन्न । आवरणाभिभवद्वाराऽभेदाभिव्यंजिकायाअंतःकरणवृत्तेःसुखादावभावात् । अविद्यावृत्तेरावरणानिवर्तकत्वात् ॥ [७३।५] दुःखादेरिति ॥ दुःखेहिसतितदाकारावृत्तिःस्यात् । अतोदुःखाद्यनंतरंभाविनीसा । ननुवृत्त्यर्थौसमसमयएवोत्पद्येतेइत्यतआह ॥ [७३।६] अविद्यावृत्तेरिति ॥ अविद्यावृत्तौसत्यांतत्प्रतिफलितचैतन्यरूपसाक्षिसिद्धिः तत्सिद्धौसाक्षिरूपप्रतीतिमात्रशरीराविद्यावृत्तिसिद्धिरित्य

न्योन्याश्रयः ॥ ६ ॥ ६ ॥ परमतेब्रह्मणोज्ञानत्वानंदत्वाद्वितीयत्वनित्यत्वसाक्षित्वभंगः ॥ ७ ॥ ६ ॥ अंशुरिति ॥ कार्पासः ॥ मायांद्वारेति ॥ तदुक्तंवार्तिके । अस्यद्वैतेंद्रजालस्ययदुपादानकारणं । अज्ञानंतदुपाश्रित्यब्रह्मकारणमुच्यतइति ॥ आद्यइति ॥ मायाविशिष्टस्यब्रह्मविकारित्वेपिकेवलस्यनिर्विकारत्ववद्ब्रह्मसंबद्धमायायाःविकारित्वेपिकेवलायामायायानिर्विकारत्वमित्यस्यापिवक्तुंशक्यत्वात् । ननूपादानधर्मउपादेयप्रतीत्यात्मनावर्ततएवेत्यतआह ॥ नहीति ॥ हेतूपरागेति ॥ हेतूपरागोहेतुसमवधानं । दंडचक्रादिमेलनवत् ॥ मृदादीति ॥ कुलालादिकारणसमवधानेमृदादिरपिविक्रियते ॥ विवर्तेति ॥ अतात्विकोन्यथाभावोविवर्तः । सचधर्मिसुदसत्त्वविकारांगीकारेत्यक्तःस्यात् ॥ एतेनेति ॥ भ्रमाधिष्ठानेउपादानत्वाव्यवहारेण । यदिरूपांतरापत्तिमात्रमुपादानत्वंतर्हिशुक्त्यादावुपादानत्वव्यवहारःस्यात् । नचैवमित्यर्थः ॥ शुक्तिब्रह्मणोरेवेति ॥ विवर्ताख्यरूपांतरापत्तिमात्रेण । ननुवियदादिगतविवर्तत्वस्यब्रह्मणोपपन्नत्वेपिवियदादिगतपरिणामत्वस्यपरिणामिनंविनानुपपत्तेस्तदर्थमविद्याकल्पनमित्याशंक्याह ॥ नचेति ॥ विवर्तरूपेआकाशादौरूप्यादौसत्यरूपांतरापत्तिरूपपरिणामत्वस्यैवाभावान्नतस्यपरिणाम्याक्षेपकत्वमित्यर्थः । परिणामिनि । विषये ॥ आरोपितमिति ॥ आरोपेणयादृशंविषयीक्रियतेतादृशंसिध्यति । नचारोपेणेदंपदार्थोरूप्यस्वरूपमापन्नइतिविषयीक्रियतइत्यर्थः ॥ सचेति ॥ सोकामयतेत्याद्युक्त्वासच्चत्यच्चाभवदि

तिवाक्यंसच्छब्दवाच्यतेजोवन्नानिप्रतित्यच्छब्दवाच्यवाय्वाकाशौप्रद्विब्रह्मणउपादानत्वंवोधयतीत्युच्यते । तन्नयुक्तं । रूपांतरापत्तिप्रतीतिविषयत्वरूपोपादानत्वस्यब्रह्मणिनिरूप्यमाणस्यैतद्वाक्यजन्यरूपांतरापत्तिप्रतीतेःपूर्वमसत्त्वात् । एतद्वाक्ये नैवरूपांतरापत्तिप्रतीतिमुत्पाद्यब्रह्मण्युपादानत्वंसंपादनीयं । तथाचसच्चेत्यादिवाक्यजन्यायाःरूपांतरापत्तिप्रतीतेरुपादानत्वांतर्गतैतद्वाक्यजन्यरूपांतरापत्तिप्रतीतिंप्रत्यपेक्षायामात्माश्रयः ॥ स्वजन्येति ॥ सच्चेत्यादिवाक्यजन्यांरूपांतरापत्तिधियंप्रतिविषयत्वेत्यर्थः ॥ ७ ॥ ब्रह्मणउपादानत्वभंगः ॥ ८ ॥ ७ ॥ अधिष्ठानत्वातिरिक्तेति ॥ उपादानत्वाभिन्नेनाधिष्ठानत्वेनाभिन्नस्यकर्तृत्वस्योपादानत्वरूपत्वान्नोपादानत्वकर्तृत्वयोःसामानाधिकरण्योक्तिःसंभवति ॥ तदैक्षतेति ॥ भ्रमाधिष्ठानरूपस्यपारिभाषिककर्तुरीक्षणायोगादित्यर्थः ॥ अतएवेति ॥ ईक्षणायोगादेव ॥ भ्रांतस्येति ॥ रूप्याद्यध्यासद्रष्टुर्भ्रांतस्यरूप्यंप्रतिप्रेक्षापूर्वककर्तृत्वंनदृष्टं । ननुरूप्यादौभ्रांतस्यकर्तुरदर्शनेपिजगंतिभ्रांतःकर्तास्त्वित्यतआह ॥ ब्रह्मणइति ॥ जगंप्रतिभ्रांतःकर्तान्विष्यमाणोब्रह्मभिन्नोजीवएवस्यादित्यर्थः ॥ अधिष्ठानत्वेति ॥ अध्यासाधिष्ठानेतद्द्रष्टरिचवैषम्यादिप्रसक्तेरदर्शनात्तत्परिहारोनयुक्तः ॥ व्यामोहकत्वस्येति ॥ व्यामोहनीयस्यसिद्धौतेनारोपितस्यव्यामोहकत्वस्यब्रह्मणिसिद्धिः तत्सिद्धौचव्यामोहनीयसिद्धिरित्यन्योन्याश्रयः । प्रसिद्धमायाविन्यौषधादिमन्त्ररूपंव्यामोहकत्वंव्यामोहनीयैर्नारोपितमतोनान्योन्याश्रयः ॥ इत्यादीति ॥ आदिपदेननामरूपेव्याकरोदितिकरणश्रुतिः ॥ भ्रमेति ॥ भ्रमाधिष्ठानेतद्द्रष्टरिमायाविनि

 चनसार्वज्ञं ॥ कल्पितत्वइति ॥ कल्पितउपादानगोचरप्रयत्नाद्यदर्शनादकल्पितएवचतद्दर्शनात् ॥ छ ॥ परमतेब्रह्मणो 
 निमित्तत्वभंगः ॥ ९ ॥ छ ॥ तस्याइति ॥ पुण्यात्सुखमित्यादौनिमित्तार्थकत्वात् ॥ अपादानार्थकत्वेति ॥ वृक्षात्पतती 
त्यादिवद्विश्लेषावधित्वस्यध्रुवशब्दार्थत्वात् । ननुजनिकर्तुःप्रकृतिरितिसूत्रेणजायमानस्यकार्यस्ययःप्रकृतिरुपादानंतस्यापादा
नसंज्ञानविधीयतइत्यतआह ॥ जनीति ॥ जनिकर्तुरितिसूत्रेणापिनोपादानस्यैवापादानसंज्ञाकिंतुनिमित्तस्यापि । अन्यथा 
पुत्रात्प्रमोदोजायतइत्युदाहरणमस्मिन्सूत्रेवृत्तिगतमसंगतंस्यात् । पंचमीश्रुतिर्नमानमित्यन्वयः ॥ न्यासेपीति ॥ अत्रसूत्रे
प्रकृतिपदंहेतुमात्रपरमित्युक्तं । ननुतर्हिजनिकर्तुर्हेतुरित्येवसूत्रणीयमित्याशंकापरिहारार्थमुक्तमसतीत्यादि । हेतुशब्देनमुख्य
स्यहेतोरुपादानस्यैवग्रहणंस्यात् । उपादानरूपेणहेतुनाकार्यस्यसंश्लेषात् । प्रकृतिशब्देनहेतुलक्षणायांतुहेतुसामान्यस्यग्रहणं
स्यात् । लक्षणासामर्थ्यादित्यर्थः । एतावत्पर्यंतमुपादानत्वमपिपंचम्यर्थोभवतीत्यंगीकृत्योक्तं । इदानींनोपादानत्वंक्वचिदपि
पंचम्यर्थइत्याह ॥ शृंगादिति ॥ शरस्तृणजातिः । महिष्यादिशृंगात्कर्दमेनिक्षिप्ताच्छरांकुराजायंतइतिलोकप्रसिद्धिः । श
राकारपरिणतशृंगभागातिरिक्तस्तत्संसृष्टोयःशृंगभागःसशरस्यापादानंनोपादानं । सपंचम्यानिर्दिश्यतेशृंगादिति । एवंदूर्वा
दावपि ॥ अयमपीति ॥ योगः सूत्रं । यथाभीत्रार्थानांभयहेतुरित्यादिसूत्राणिनकर्तव्यानितथाजनिकर्तुःप्रकृतिरितियोगोपि 
अवक्तुं अकर्तुं शक्यः । अपक्रामंति निर्गच्छंति । ताः दूर्वाः । तेभ्योऽविलोमभ्यः । ननुवैशेषिकादिप्रक्रिययापरमाण्वादि

समवेतंकारणेभ्योऽपृथक्देशंकार्यमुत्पद्यतेऽतोनास्तिकारणात्कार्यस्यापक्रमइत्यतोनुपपन्नमिदंभाष्यमित्याशंकायाःलोकप्रसि
द्ध्याश्रयणेनैतदुच्यते । लोकेहियद्यस्माज्जायतेतत्तस्मान्निर्गच्छतीत्युच्यतइतिकैयटोक्तंपरिहारंसूचयति ॥ [७५।२५] अवधित्वादिति॥
लोकेनिष्क्रमणावधित्वेनप्रसिद्धत्वादित्यर्थः । तंतुभ्यःपटोजायतइत्यादावपितुर्युपारूढेभ्यस्तंतुभ्योनिर्गमःपटस्यास्त्येव । वैशे
षिकादिप्रक्रियात्वप्रामाणिकी । यथोक्तंकैयटे । आख्यातोपयोगइत्यत्र । पूर्वाचार्याणांवचनमप्युदाहृतं । वायोरणूनांज्ञान
स्यशब्दत्वापत्तिरिष्यते । कैश्चिद्दर्शनभेदोहिप्रवादेष्वनवस्थितइति । नन्वपक्रामंतितास्तेभ्यइत्ययुक्तं । लोमसुदृश्यमान
त्वात् । यद्यतोपक्रामतितत्पुनस्तत्रनदृश्यतइतिप्रसिद्धं । इहतुतत्रास्तिदर्शनमितिशंकांपरिहरति ॥ [७५।२६] कैयटेपीति ॥ तत्रदर्श
नंततोनिर्गमनाभावेनप्रयोजकंकिंत्वविच्छेदादिकमित्यर्थः ॥ [७६।१] तदुक्तमिति ॥ प्रकृत्यधिकरणानुव्याख्यानइतिशेषः ॥ [७६।२] अपा
दानत्वमिति ॥ सूत्रार्थतयेतिशेषः ॥ [७६।३] अतएवेति ॥ पंचम्याउपादानार्थत्वाभावात् ॥ [७६।४] अन्यथेति ॥ आकाशादितिपंच
म्यानिमित्तार्थत्वाभावे । उपादानार्थत्वेहिविकाररूपोपादानत्वांगीकाराद्विवर्ताधिष्ठानत्वरूपमुपादानत्वंपंचम्याभिधातव्यं
स्यात् । नचतदभिधानेतस्याःसामर्थ्यमस्तीत्याह ॥ [७६।४] नहीति ॥ [७६।७] परमेश्वरस्येति ॥ परमेश्वरस्यप्रकृतिमहदाणेभ्योन्यत्राव
सादनकर्तृत्वरूपोयःसत्त्वगुणः , ततत्वनियामकत्वरूपोयस्त्यत्वगुणः अन्येयेनिरुक्तादिगुणास्तदभिव्यक्तिपरंससच्चत्यच्चाभव
दित्यादिवाक्यं । नतुपरमेश्वरस्यसदादिविवर्तपरमित्यर्थः । सोकामयतेत्यादेरयमर्थः । सआनंदमयःस्वस्यबहुभावंसंकल्प्य

तदर्थमधिष्ठानानिवह्ननिस्युरित्यालोचनरूपंतपस्तप्त्वाइदंवक्ष्यमाणंसदादिशब्दवाच्यंश्रीप्रभृतिकमसृजत् । तत्सृष्ट्वातदेवानुप्रविश्यस्वयंसत्यत्वादिगुणैरभिव्यक्तोभूदिति सच्चत्यच्चाभवत् निरुक्तंचानिरुक्तंच ॰ निलयनंचानिलयनंच विज्ञानंचाविज्ञानंच सत्यंचानृतंचसत्यमभवदितिश्रुतौसन्निरुक्तानृताविज्ञाननिलयनशब्दैःश्रीरुच्यते । त्यदनिरुक्तनिलयनविज्ञानशब्दैर्महानुच्यते । सत्यशब्देनप्राणःसत्यत्वादिगुणःपरमेश्वरश्च । तत्संबंधेनैवश्रीप्रभृतीनांसदादिशब्दवाच्यत्वं । सत्यमभवदितिद्वितीयसत्यशब्दस्यसदादिशब्दवाच्यायेऽवसादनहेतुत्वादयःपरमेश्वरगुणास्तेसाधुरूपाइत्यर्थः । तथाचतैत्तिरीयभाष्यं । त्यच्चानिरुक्तंविज्ञानंतथाऽनिलयनंमहान् । सत्यंप्राणस्तथाश्रीश्चसन्निरुक्तंतथानृतं । अविज्ञानंचानिलयनमिति । तथा तद्व्विष्णोस्तु संबंधात्स्वतस्तन्नामगोहरिः । ततोनियामकश्चेतित्यदानंत्यादवाच्यतः । अनिरुक्तंनिलयनंसर्वाधारत्वतोहरिः । विज्ञानंसर्वविज्ञानात्सत्यंसाधुस्वरूपतः । ॰अवसादसुवाच्यत्वदौर्बल्याज्ज्ञस्यसाधुताः । ॰प्रकृतिप्राणतोन्यत्रकुर्वंस्तन्नामकोहरिः । अतःसाधुस्वरूपःसन्सत्यनामेति ॥ अन्यथेति ॥ सदादिभवनस्यत्वदभिमतविवर्तरूपसृष्टित्वे ॥ मूर्तेति ॥ त्वयासदादिपदैर्मन्वादिग्रहणान्निरुक्तादिपदवैयर्थ्यं । ननुसंग्रहविवरणरूपतयासदादिपदोक्तमेवपृथुबुध्नाकारइत्यादिनिरुच्यमानंघटादिनिरुक्तं जातीचंपककेतकीगंधादिकमनिरुक्तमुच्यतइतिनवैयर्थ्यं । मैवं । अर्थविशेषानुक्तेः । त्वन्मतेविज्ञानसत्यशब्दयोश्चिन्मात्रपरत्वेन तदात्मनासत्यभवनायोगात् । सदादौभवनशब्देनविवर्तेविज्ञानसत्ययोस्तुनेत्यस्यायोगाच्च । ननुबहुःस्यामितिप्रत्यगात्मविषयाभिध्ययात्मनएवप्रपंचरूपेणबहुभावोवगम्यतेसूत्रंच अभिध्योपदेशादिति अतआह ॥ सोकामयतेति ॥ स्वरूपपरत्वाद

भिध्यायाःनतयोपादानत्वसिद्धिरित्यर्थः ॥ ७६।१४ अन्यथेति ॥ स्वस्वरूपबहुभावसंकल्पानंगीकारे । बहुविवर्तसंकल्पांगीकारे ॥ ७६।१५ सत्त्वोक्तिंरिति ॥ विवर्तैसत्त्वाभावादित्यर्थः ॥ ७६।१६ स्रष्टेरिति ॥ नचांतःकरणाभावेप्यविद्यापरिणामविशिष्टेहमितिप्रयोगइति वाच्यं । ताद्दशपरिणामस्यैवसृष्टेःपूर्वमभावात् । अन्यथासुषुप्तौचाहमुल्लेखःस्यात् ॥ ७६।१७ श्रवणादिति ॥ छांदोग्यभाष्येच । सर्वोत्तमत्वात्सन्नामाहरिर्नारायणःप्रभुः । सोसृजत्प्रथमंदेवींतेजआख्यांश्रियंसतीं । तेजस्थितेनरूपेणसाजैवहियतःसदा । तेज इत्युच्यतेतस्माज्जबेवाततएवतु । अन्नाख्यःप्राणएवायमन्नामाजायतेथच । ब्राह्मणादिचतुर्वर्णस्ततश्चान्नाभिधोहरइति । ननु सद्वाइतिवाक्येस्थूलबुध्यगोचरत्वेनासच्छब्दवाच्यंब्रह्मसदादिपदवाच्याकाशादिरूपेणस्वमात्मानमकुरुतेतिश्रूयते । तथाच सूत्रं । आत्मकृतेःपरिणामादिति । अतस्तस्योपादानत्वमित्येतत्परिहरति ॥ ७६।२० एतेनैवेति ॥ ननुनात्रात्मसर्जनंकिंतुसदात्मनात्म सर्जनमतआह ॥ ७६।२१ नहीति ॥ ७६।२२ अन्यथेति ॥ आकाशादिविवर्तात्मनासर्जने ॥ ७६।२२ सत्त्वोक्तिरिति ॥ कुरुतेतिकृतिविषयत्वरूपसत्त्वोक्तिः । असद्वाइत्यादिश्रुतेरर्थस्तैत्तिरीयभाष्येभिहितः । अनासाद्यस्त्वसन्नामापूर्वंनारायणाभिधः । सआसाद्यश्चसन्नामा वासुदेवोभवत्प्रभुः । सवासुदेवःस्वात्मानंचक्रेसंकर्षणाभिधं । तस्मात्ससुकृतंनामसआनंदोरसस्ततइति । तथाचसूत्रं । साक्षाच्चोभयाम्नानादिति । साक्षादुपादानांतरानुपादानेनंब्रह्मणिजन्मलयावाम्नायेतेइतिसूत्रार्थः । ननूर्णनाभौनतंतोर्लयःकिंतु बहिष्ठस्यांतःप्रवेशमात्रमतआह ॥ ७६।२६ ब्रह्मणोपीति ॥ ननुतंतुलयाश्रयश्चेदूर्णनाभिस्तर्हितस्याप्युपादानत्वान्निमित्तेप्यूर्णनाभा

वित्युक्तमयुक्तमित्यतआह ॥ [७६।२६] नचोर्णनाभिरपीति ॥ ननूर्णनाभिर्नोपादानंकिंतुगृह्णतइत्युक्त्यासंहर्ता । ब्रह्मणित्वस्तंयांतीत्यस्यनसंहारोर्थः । किंतूपादेयस्योपादानगतोलयइत्यतआह ॥ [७७।१] नेति ॥ तादृशलयेऽस्तंयातीत्यप्रयोगादित्यर्थः । ननूर्णनाभिर्नतंतुमात्रोपादानं किंतुयंतंतुंसृजतेगृह्णतेचतंप्रत्येव । अतएवोर्णनाभिनाशेपितंतुप्रतीतिस्तदृष्टांतेनचब्रह्मणउपादानत्वमतआह ॥ [७७।२] यथेति ॥ तंतुविशेषेपिनोर्णनाभिरुपादानंकिंतुतद्देहधातुरेव । ननुयोनिश्चहिगीयतइतिसूत्रेयद्भूतयोनिंपरिपश्यंति धीराइत्यादिषुयोनित्वोक्त्योपादानंब्रह्मेतिसाधितमतआह ॥ [७७।६] यदिति ॥ [७७।६] योनिष्टइति ॥ योनिष्टइंद्रसदनेअकारितमानृभिःपुरुहूतप्रयाहि । असोयथानोऽविताबृधेचद्ददोवसूनिममदश्चसोमैः । [ ऋ० ७।२४।१ ] अस्यार्थः हेपुरुहूतइंद्रतेतवसदनेसदनार्थंउपवेशनार्थंयोनिःस्थानमकारिनृभिर्मरुद्भिःसहतंयोनिंप्रतिआप्रयाहि । यथानोस्माकंअवितारक्षकोऽसःभवसि । वृधेवर्धनायचपुंसः । तथावसूनिददःदेहि । सोमैरस्मदीयैर्ममदःमादयचेति ॥ [७७।७] पैररिति ॥ तथाचतद्भाष्ये क्वचित्स्थानवचनोपियोनिशब्दः । यथायोनिष्टइंद्रनिषदेअकारीतीति । योनिष्टइंद्रनिषदेअकारितमानिषीदस्वानोनार्वा । विमुच्यावयोऽवसायाश्वान्दोषावस्तोर्वहीयसःप्रपित्वेइति । अस्यार्थः । हेइंद्रतवोपवेशनाययोनिःस्थानमस्माभिरकारि । तंयोनिंप्रपित्वेयागकालेप्राप्तेसतिआनिषीद । किंकृत्वावयः अश्वबंधनात्रश्मीन्रथात्विमुच्य तथादोषावस्तोःदिवारात्रौवहीयसःवहनशीलान् अश्वान्अ

वसायविमुच्य । स्यतिरुपसृष्टोविमोचनइतिनिरुक्तं । तत्रदृष्टांतःस्वानःहेषाशब्दंकुर्वन्अवनिअश्वइवेतिप्रतिप्राप्तकालयास्कः ।
नन्वेकविज्ञानेनसर्वविज्ञानंप्रतिज्ञायमृत्पिंडमृन्मयदृष्टांतेनतदुपपादनंचब्रह्मणउपादानत्वंगमयति । सूत्रंच प्रकृतिश्चप्रतिज्ञा
दृष्टांतानुपरोधादिति । तत्राह ॥ [७७।७] नापीति ॥ ननूदाहृतसूत्राणांतर्हिंकागतिरतआह ॥ [७७।१०] प्रकृतीति ॥ [७७।११] सत्स्वभावेति ॥ सद्ब्रह्मे
त्यादिनाब्रह्मण्यव्यभिचारवारणायविकारेति । आम्राणांवनमित्यादिनावनादावव्यभिचारायविविधेति ॥ [७७।१२] सत्प्रधानेति ॥
नचप्रधानेसत्त्वाभावान्नार्थांतरता । तत्सत्त्वस्यसाधितत्वात् ॥ [७७।१३] खंडइति ॥ नचतदनुरक्तत्वेसतितद्विकारत्वादित्यत्रतात्पर्या
न्नव्यभिचारः । असिद्धेः । विशेषणवैयर्थ्याच्च ॥ [७७।१६] तत्स्वभावेति ॥ नचकपालंघटइत्यप्रतीतेःकपालस्वभावाननुरक्तेघटेव्य
भिचारः । तंतवःपटइतिकपालंघटइत्यस्यापिसत्त्वात् । अन्यथाकपालप्रकृतिकत्वस्याप्यसिद्धेः ॥ कार्यत्वादित्येतावतेति [७७।१९] ॥
नचप्रेक्षापूर्वकत्वात्कार्यत्वादितिहेतुद्वयेतात्पर्यं । प्रेक्षापूर्वकत्वंहिप्रेक्षाकार्यत्वमितिघट्टकुटीप्रभातवृत्तांतः ॥ [७७।२०] जगदुपादान
मिति ॥ नचाद्येजडत्वंद्वितीयेऽनंतर्यामित्वमुपाधिः । पक्षमात्रवृत्तिव्यतिरेकप्रतियोगित्वात् । व्यतिरेकहीनत्वाच्च । आद्य
स्यसतिसाध्याव्याप्तेश्च ॥ ७ ॥ ब्रह्मणउपादानत्वेप्रमाणभंगः ॥ १० ॥ ७ ॥ [७८।४] अत्यंताभावेति ॥ मोक्षेयोग्यतायाअभा
वेपितदत्यंताभावोनास्ति । योग्यतावत्तदत्यंताभावस्यापिधर्मत्वात् ॥ [७८।५] स्वप्रकाशेति ॥ अवेद्येत्यर्थः । तथापीत्यादिनोक्तत
लक्षणस्यमुक्तात्मन्यव्याप्तिमाह ॥ [७८।७] त्वन्मतइति ॥ ननुमुक्तात्मानोक्तात्यंताभावाधिकरणत्वाभाववान् । उक्तात्यंताभावान

धिकरणत्वात् । योयदनधिकरणंसतदनधिकरणत्वाभाववान् यथारूपानधिकरणंवायुःरूपानधिकरणत्वाभाववान्न । तथा चकथमव्याप्तिरित्यतउक्तंसत्त्वादीति । तथाचात्मनिव्यभिचारान्नोक्तंविधयालक्षणाभावानुमानमित्यर्थः । नचानधिकरण त्वंस्वरूपमेवातोमुक्तावपितदस्तीतिवाच्यं । स्वरूपत्वेलक्षणत्वानुपपत्तेः । मममतेत्वानंदादेःस्वरूपत्वेपिधर्मत्वाल्लक्षणत्वं ॥ ख्येति ॥ एतेनात्यंताभावस्याधिकरणरूपतयातदनधिकरणत्वंनासंभवीतिनिरस्तं । योग्यतामिथ्यात्वानुपपत्तेः । स्वात्यंता भावसामानाधिकरण्याभावात् ॥ ब्रह्मान्यत्वेनेति ॥ ब्रह्मरूपत्वेतुयोग्यतामिथ्यानस्यादितिबोध्यं ॥ दृश्यत्वेति ॥ रूप्या दौविशेषणवद्विशेष्यस्यापिसत्त्वाद्घटादौविशेष्यवद्विशेषणस्यापिसत्त्वादित्युक्तत्वादित्यर्थः । नन्वपरोक्षेत्यादिनाप्रमाणजन्या परोक्षवृत्तिविषयत्वंविवक्षितं । प्रातिभासिकादौचनप्रमाणवृत्तिः । अतोनतत्रातिव्याप्तिः । मैवं । प्रमाणजन्यापरोक्षवृत्तिवि षयचैतन्यैक्याध्यासमात्रेणघटादावपरोक्ष्योपपत्तेस्तदर्थंघटादौतादृशवृत्तिविषयत्वस्यस्वीकर्तुमनुचितत्वेनोक्तवृत्तिविषयत्वस्यै वलक्षणत्वसंभवेऽवेद्यत्वेसतीत्यस्यवैयर्थ्यात् ॥ सचेति ॥ संबंधस्योभयनिष्ठत्वादितिभावः ॥ नन्विति ॥ आत्मनोधिष्ठाना भावात् भग्नावरणचिदभेदरूपस्यसंबंधस्यचित्यपिसत्त्वादाद्यंपक्षमुपेक्ष्यद्वितीययोर्दोषमाह ॥ घटादाविति ॥ एतेनेति ॥ घटादौवृत्त्यतिरिक्तचिद्रूपस्यज्ञानंप्रत्यविषयत्वेन ॥ स्वाकारेति ॥ तथाचासंभवः । ननुचरमवृत्तिर्नब्रह्माकारा । तस्यनिराका रत्वात् । अतउक्तंरूपादेरिवेति । रूपाकारत्ववद्ब्रह्माकारत्वमपिवृत्तेर्युक्तं ॥ उक्तेति ॥ चरमवृत्तिप्रतिफलितचित्फलभूतस्य

॥ [८११४] तदन्यस्यचेति ॥ तादृशचिद्विषयत्वादेः ॥ [८११४] शुद्धेति ॥ शुद्धचित्तः परसमवेतत्वेक्रियात्वेचतत्फलभूतयावृत्तिप्रतिफलितचिता भासमानघटादेःकर्मत्वंस्यात् । नचैवं । शुद्धचितःसमवेतत्वाद्यभावात् ॥ [८११४] जन्यसाक्षात्कारेति ॥ तादृशेश्वरज्ञानजन्यव्यवहारविषयेधर्मादावनतिव्याप्तयेजन्येति ॥ [८११६] साक्षीति ॥ विषयगतापरोक्षव्यवहारहेतुसाक्षात्कारत्वात्साक्षिणोपरोक्षज्ञानशब्देनवृत्तिप्रतिफलितचैतन्यादिकंवाऽपरोक्षवृत्तिमात्रंवा । आद्यआह ॥ [८३११] आत्मापीति ॥ द्वितीयआह ॥ [८३१२] तस्यैवेति ॥ अवेद्यत्वेसत्यपरोक्षज्ञानविषयत्वस्यैव ॥ [८३१२] कुसृष्टीति ॥ ज्ञानापरोक्ष्येणविषयापरोक्ष्यंसंपाद्यलक्षणकरणंकुसृष्टिः । साक्षिवेद्यरूप्यादावतिव्याप्तिस्तूभयथापिसमैवेत्यर्थः ॥ [८३१३] वस्त्विति ॥ वस्त्वापरोक्ष्याधीनंव्यवहारापरोक्ष्यंतदधीनंचवस्त्वापरोक्ष्यं । अभावेलक्षणगतविशेष्यांशमुपपादयति ॥ [८३१५] अस्तिहीति ॥ विशेषणांशमुपपादयति ॥ [८३१५] सचेति ॥ नन्वनुपलब्धिगम्येऽभावेऽपरोक्षज्ञानंविषयत्वरूपोपरोक्षव्यवहारोनास्तीतिनतत्रातिव्याप्तिरतआह ॥ [८३१६] यदिचेति ॥ उक्तरूपापरोक्षज्ञानाविषयत्वरूपमवेद्यत्वमंगीकृत्यपुनरपरोक्षज्ञानविषयत्वांगीकारेव्याहतिः ॥ [८४११] चैत्रेति ॥ घटाद्यधिष्ठानचैतन्यंस्वयंप्रकाशंघटप्रकाशकमित्युच्यते तत्र घटविषयचैत्रस्थवृत्त्यादिनाघटाधिष्ठानचितश्चैत्रंप्रत्यपरोक्षव्यवहारेपिमैत्रंप्रतितदभावाद्घटाधिष्ठानचित्स्वप्रकाशोनस्यात् ॥ [८४११] ज्ञानंप्रतीति ॥ घटाधिष्ठानचितंप्रतीत्यर्थः । ननुप्रमातारंयंकंचित्प्रत्यपरोक्षव्यवहारविषयत्वंविवक्षितं । नप्रमातुः । चित्त्वेविरो

धाभावात् । जडत्वेत्वसंभवात् । अन्यस्याहमर्थस्याभावात् । स्वभावभेदात् । स्वभावविशेषात् ॥ नापेक्षितमिति ॥ अनवस्थाभयात् । ननुभेदाभावात्तद्विषयत्वमपित्यज्यते । मैवं । कल्पितभेदस्यसंभवाद्वृत्तिप्रतिबिंबितस्यविषयित्वं । घटाधिष्ठानस्यविषयत्वमित्युपपत्तेः ॥ अन्यथेति ॥ कृत्स्नस्यापित्यागे ॥ चिदविषयेति ॥ तुच्छवारणायस्वरूपत्वमिति ॥ मिथ्यात्वेति ॥ नचमिथ्यात्वानुमितौस्वपरसाधारणमेकविषयत्वनियामकमस्तीतिसास्वविषयेतिवाच्यं । तद्व्यवहारजनकत्वप्रयोजकस्यचित्यपिसंभवात् । अतएवाह ॥ अन्यथेति ॥ ननुबाधात्स्ववेद्यत्वेननोपपत्तिरतआह ॥ स्वविषयत्वमिति ॥ तथाचावेद्यत्वमेवबाधितमितिभावः ॥ इष्टापत्तेरिति ॥ नचवेद्यत्वविरोधिस्वरूपंनेष्टमितिवाच्यं । अचिंत्यशक्त्यावेद्यस्यापितथात्वात् । जानंतोपिनजानंतीतिश्रुतेः ॥ ७ ॥ स्वप्रकाशत्वलक्षणभंगः ॥ ११ ॥ ७ ॥ ननुस्वप्रकाशत्वानुमानेवृत्तिव्याप्यत्वाभावएवसाध्योतोनार्थांतरमतआह ॥ नहीति ॥ तथात्वेचरमवृत्तिव्याप्यआत्मनिबाधःस्यादित्यर्थः ॥ सामान्यतोपीति ॥ वेद्यत्वंकिंचिन्निष्ठेत्यादिविशिष्टसाध्यप्रसिद्धेरकरणात् । ननुस्वप्रकाशत्वानुमानेनफलाव्याप्यत्वरूपविशेषणसिद्धावपिनविशिष्टस्वप्रकाशत्वसिद्धिरतआह ॥ अवेद्यत्वेति ॥ विशेष्यभानांतर्भावेणैवस्वप्रकाशत्वलक्षणकरणात्तत्सिद्धिः ॥ तत्रैवेति ॥ अत्यंताभावप्रतियोगित्वेतस्यैवकेवलान्वयित्वात् ॥ यत्रेति ॥ यस्मिन्धर्मेत्यंताभावप्रतियोगित्वंनास्तितस्यकेव

लान्वयित्वात्तत्रैवव्यभिचारः । नन्वत्यंताभावप्रतियोगित्वस्यमिथ्यात्वेनस्वाश्रयभूतात्यंताभावप्रतियोगिनिष्ठात्यंताभावप्रति
योगितयायन्निष्ठात्यंताभावप्रतियोगित्वमत्यंताभावप्रतियोगित्वंस्यतस्यकेवलान्वयित्वंनास्ति । मैवं । अबाधितात्यंताभाव
प्रतियोगित्वंमिथ्यात्वं । बाधितात्यंताभावप्रतियोगित्वस्यसत्त्वेपिसंभवात् । तथाचात्यंताभावप्रतियोगित्वस्ययत्राबाधितोत्यं
ताभावोस्ति तदेवकेवलान्वयीतितत्रैवव्यभिचारः ॥ घटादाविति ॥ तथाचघटादिवद्ब्रह्माप्यस्वप्रकाशंस्यात् । स्वप्रकाशत्व
विरोधिव्यावहारिकवेद्यत्ववत्त्वात् । ननुधर्मिसमसत्त्ववेद्यत्वंघटादौस्वप्रकाशत्वविरोधि । नत्वात्मन्यनेवंविधंतद्विरोधीतिस्या
देवात्मास्वप्रकाशइत्यतआह ॥ नचेति ॥ धर्मिसमसत्त्वफलव्याप्तत्वंघटादौस्वप्रकाशत्वविरोधिदृष्टमतोनेवंविधफलव्याप्यत्वे
प्यात्मास्वप्रकाशःस्यादेव । तथाचात्मनःफलव्याप्यत्वनिराकरणंव्यर्थं । वयंतुब्रूमः । ब्रह्मान्यत्रवेद्येनवेद्यत्वात्यंताभावःसंभ
वति । नापिब्रह्मणि । निर्धर्मकत्वात् । अतःकिंचिन्निष्ठात्यंताभावप्रतियोगिवेद्यत्वंस्यात् । नचात्यंताभावप्रतियोगीत्येव
साध्यं । तथापिवेद्यत्वाभावसिद्ध्याऽवेद्यत्वासिद्धेः । किंचात्यंताभावस्यसत्त्वेऽपसिद्धांतोमिथ्यात्वेवेद्यत्वस्यात्यंताभावाप्रतियो
गित्वमेवस्यादिति ॥ अयंघटइति ॥ सत्यंतंवेद्यत्वविशेषणं । वेद्यत्वाधिकरणस्यापिघटस्यैतद्घटान्यत्वविशिष्टवेद्यत्वानधिक
रणत्वात्तदन्यत्वमादायपटादौसाध्यासिद्धिः । पक्षेतुवेद्यत्वानधिकरणकिंचिदन्यत्वमादाय । अत्रवेद्यत्वानधिकरणान्यइति
कृतेवेद्यत्वानधिकरणाप्रसिद्धिः । अतःसत्यंतं ॥ एतद्घटत्वेसतीति ॥ अत्रापिसत्यंतंवेद्यत्वविशेषणमसिद्धिवारणाय । पटा
दावव्यभिचाराय । वेद्यस्यघटादेर्घटत्वानधिकरणान्यत्वेनतदनधिकरणत्वाभावात् । कश्चित्तुद्वितीयानुमानेप्येतद्घटान्यत्वे

सतीत्येवपाठः । सोपपाठः ॥ अनुभूतिशब्देति ॥ वृत्तिरूपेऽनुभवेजानामीतीति ॥ नचाहमर्थस्यज्ञस्याश्रयत्वायोगः ।
तस्यज्ञस्याश्रयत्वोक्तेः ॥ दुःखमिति ॥ नचदुःखंजानामीत्यादावपिदुःखाद्याकारशविद्यावृत्तिरेवविवक्षितेतिवाच्यं । वृत्तिवि
लंबेदुःखज्ञानविलंबःस्यादित्युक्तत्वात् ॥ स्फुरणविषयइति ॥ धटतुल्यतयेतिशेषः । तेनस्फुरणप्रयुक्तव्यवहारशालित्वरूप
स्यविषयत्वस्यमयाप्यंगीकारात्सिद्धसाधनमितिनिरस्तं । नचजडत्वमुपाधिः । पक्षेतरत्वात् । आत्मरूपंज्ञानमात्मविषयंन ।
आत्माजन्यसाक्षात्कारत्वात् । आत्मसन्निकृष्टेंद्रियाजन्यत्वात् । सामान्यव्याप्तौतुघटादिर्दृष्टांतः । इत्यनुमानयोर्नित्यज्ञान
भिन्नत्वमुपाधिमाह ॥ स्वप्रकाशस्येति ॥ अन्यथेति ॥ तद्विषयत्वेतद्विषयजन्यत्वादेःप्रयोजकत्वेसाक्षात्कारस्यतद्व्यवहारहे
तुत्वंप्रत्यपितज्जन्यत्वादिकंप्रयोजकंस्यात्तथाचात्मरूपसाक्षात्कारःस्वंव्यवहारमपिनजयेत् ॥ कृतिविशेषस्येति ॥ कृतीच्छा
व्यवहृतीनांस्वभिन्नंकृत्यादिकंप्रतिविशेष्यत्वेपिकृतिविशेषादीनांस्वविषयत्वमस्ति । तथाहि । सुखहेतुकृत्युद्देशेनदेवताराधना
दौप्रवर्तमानस्यदेवताराधनगोचरायाकृतिस्तस्याअपिसुखहेतुत्वेनसास्वविषयिणीभवति । एवंसदिच्छाभूयादितीच्छायाअपिस
दिच्छात्वेनयज्ञादीच्छाविषयत्ववत्स्वविषयत्वमस्ति । तथाव्यवहृतिर्व्यवहर्तव्येत्येतच्छब्दजन्यव्यवहारस्यापिव्यवहृतित्वेनव्य
वहर्तव्येत्येवरूपव्यवहारविषयत्वं । अभिधापिस्वविषया । नचकृतेरसिद्धविषयत्वात्कथंस्वविषयत्वं । सत्यं । असिद्धंविषयीकृ
त्यजायमानाकृतिरेकावच्छेदकावच्छिन्नत्वात्स्वमपिविषयीकरोतीत्युच्यते । नचकृतेःस्वविषयत्वेस्वजन्यतापत्तिः । नहिस्ववि

षयत्वमेवस्वजन्यत्वं । किंतुपूर्ववृत्तित्वादिकं । तच्चनांगीक्रियते । एतेनकृतीच्छाव्यवहृत्यभिधाःकृत्याद्यंतरंप्रत्येवविषयाः ।
नतुस्वात्मानंप्रतीतिनस्वविषयत्वेकिंचिदुदाहरणमस्तीतिकेनचिदुक्तंप्रत्युक्तं । कृत्यादौस्वजातीयविषयंत्वमित्याद्यग्रिमग्रंथस्तु
कृतिसामान्यपरः । तुष्यतुदुर्जनइतिन्यायेनवेतिबोध्यं ॥ [१३।५] क्रियाविषयत्वेति ॥ नचासनादिक्रियाविषयआधारेकर्मत्वप्र
संगः । आधारस्याविषयत्वात् । अन्यथास्थाल्यादेःपाकविषयत्वापातात् ॥ [१३।८] स्वस्मिन्स्वव्यवहारेति ॥ नचस्वव्यवहारोपपा
दनार्थंस्वविषयत्वस्वभावकल्पनापेक्षयास्वाविषयत्वेपिस्वव्यवहारजनकस्वभावत्वमेवकल्प्यतामितिवाच्यं । घटादौव्यवहारंप्र
तिप्रयोजकानांज्ञानतच्छेदतद्विषयत्वानांक्लृप्तानांमध्येआत्मनिप्रमाणबलाच्छेदत्यागेपितद्विषयत्वस्यापित्यागायोगात् । अन्यथा
ज्ञानस्यापित्यागापत्तेः । तदिदमुक्तंप्राक्स्फुरणेस्फुरणांतरंनापेक्षितं । नतुक्लृप्तंतद्विषयत्वमिति ॥ [१५।१] संशयादिविरोधित्वेचेति ॥
नचस्वत्वेनैवसंशयादिविरोधित्वं । घटादौस्वविषयत्वेनात्मनितुस्वत्वेनैवेत्यननुगमात् । नचविषयत्वमप्यननुगतं । तस्यैक
त्वात् विषयतात्वेनानुगमाच्च ॥ [१५।५] स्वाविषयेपीति ॥ समस्यमानपदार्थातिरिक्तोन्यपदार्थोबहुव्रीहिविषयः । समस्यमानपदा
र्थस्तुबहुव्रीहेरविषयस्तस्मिन्नित्यर्थः । कुटेपिबहुव्रीहिविषयत्वमस्तीत्याह ॥ [१५।६] बहुव्रीहेरिति ॥ बहुव्रीहेःशक्तिर्वालक्षणावेति
मतेपिकुटस्यापिकुटादिवद्बहुव्रीहिविषयत्वेनेत्याद्यन्वयः । ननुतद्गुणसंविज्ञानबहुव्रीहौतस्यान्यपदार्थस्ययेगुणाअवयवादयःते
षांकार्येसंविज्ञानंआनयनादिक्रियान्वयोभवति । गुणान्विनागुणिनआनयनाद्ययोगात् । नचकुटिःपुटादेरवयवादिर्भवति ।
अतःकथंतस्यबहुव्रीहिविषयत्वमितिशंकांकैयटोदाहृतन्यायेनपरिहरति ॥ [१५।७] चैत्रेति ॥ तद्गुणसंविज्ञानेत्यत्रगुणशब्देननावय

वादिरेव । अपितूपलक्षणादिसाधारणंव्यावर्तकमात्रं । तथाचयथाचैत्रशालास्थाब्राह्मणाआनीयंतामित्युक्तेचैत्रोपियदिब्राह्म णोभवतिस्वशालास्थश्चेत्तदासोप्यानीयतएव । तथाकुटादीन्प्रत्युपलक्षणस्यापिकुटेपुटादिकार्यैतर्भावःस्यादेव । ननुकुटेःपुटाद्य संवंधात्कथमुपलक्षणत्वमपीत्यतआह ॥ [१५।८] अन्यपदार्थेति ॥ समुदायेनसमुदायिनांसंवंधादित्यर्थः । ननुसमुदायस्यान्यपदा र्थत्वेतस्यैकत्वादेकवचनंप्राप्नोतीत्याशंकांपरिहरति ॥ [९६।१] उक्तंहीति ॥ सर्वादीनिसर्वनामानीत्यत्रेतिशेषः । अवयवगतवहुत्वस्या वयविन्यारोपेणवहुवचनमित्यर्थः । ननुयथावहुव्रीहिःस्वपदार्थसंवंधादन्यपदार्थेकार्यंकरोति स्वपदार्थेपिकरोति तथाचित्स्व संवंधादन्यत्रेवस्वस्मिन्नपिव्यवहारंकरोतीत्युच्यते । मैवं । वहुव्रीहिःस्वाविषयेकार्यनकरोतीत्युक्तत्वात् । तत्रयथान्यपदार्थसं वंधोस्तितथास्वपदार्थस्यापिस्वारब्धसमुदायानुप्रवेशरूपःस्वसंवंधोस्त्येव । चितस्तुनस्वसंवंधःकथंचित् ॥ [९६।३] दुःखादीति ॥ ननुकार्यदर्शनात्क्वचिदेवस्वाभिन्नेस्वंकार्यकारित्वंकल्प्यतेनसर्वत्र । अतोनद्वेषस्यस्वस्मिन्स्वकार्यकारित्वं । अन्यथाचितःस्वाभे देपिस्वविषयत्ववद्वेषस्यापिस्वविषयत्वंस्यादिति । मैवं । स्वाभेदेपिस्वकार्यकारित्वेप्रमितेसतिस्वकार्येप्रतियत्क्लृप्तकारणस्वविष यत्वादितंदपिकल्प्यंतइत्युक्तत्वात् । ननुस्वतःसविषयकेस्वविषयेस्वंकार्यकारित्वं द्वेषादिकंतुज्ञानोपाधिकंस्वविषयं नस्वतोऽ तआह ॥ [९६।५] ब्रह्माज्ञानस्येति ॥ ज्ञानवदज्ञानस्यापिस्वतःसविषयत्वादित्यर्थः । ननुज्ञानस्यस्वातिरिक्तेस्वविषयत्वेनव्यवहारज नकत्वं । स्वस्मिंस्तुस्वाभेदेनतज्जनकत्वं । नचपक्षादन्यत्रैवधूमादेःसाध्यव्याप्तिरित्यपिस्यादितिवाच्यं । तथात्वेवाधकसद्भा

वादित्यतआह ॥ स्मरणेति ॥ ननुज्ञप्तौतथानियमइत्यतआह ॥ मैत्रेति ॥ ननुकल्पनाविरहकालेचैत्रोमैत्रइत्येवनास्ति । सत्यंतवतथा । तथापिव्यवहाराअसंकीर्णाएववाच्याः ॥ स्वात्मानमिति ॥ नचात्राहमर्थाश्रितवृत्तिरूपज्ञानविषयमनुभूयत इतिवाच्यं । तथापिवृत्तिद्वारात्मनोप्यनुभवविषयत्वसिद्धेः । आत्मनि स्वस्मिन् ॥ स्वप्रकाशइति ॥ चिदविषयइत्यर्थः । ननुचिदविषयस्यापरोक्षव्यवहाराप्रसंगोवाधकःस्यात् । मैवं । ब्रह्मण्यपिसाम्यात् । नचतत्रस्फुरणाभेदएवतत्प्रयोजकः । घटेपिघटाभेदोव्यवहारप्रयोजकइतिसमं । चक्षुरादिवेद्यस्यघटस्यावेद्यत्वसाधनेवाधः ॥ अन्यथेति ॥ चक्षुराद्यगोचरस्यघटस्याभावादाश्रयासिद्धिः ॥ वृत्तेरिति ॥ जानामीतिवेद्यत्वानुभवाद्वृत्तेः ॥ अन्यथेति ॥ वृत्तिभिन्नस्यज्ञानस्यप्रतिकर्मव्यवस्थाभंगेनिरस्तत्वादाश्रयासिद्धिः ॥ त्वज्ज्ञानमिति ॥ त्वदीयापरोक्षव्यवहारयोग्यंज्ञानमित्यर्थः । प्रतिवादिनंप्रतिदृष्टांतेसाध्याप्रसिद्धिवारणायसत्यंतं । एवंचदृष्टांतेविशेषणाभावनिवंधनासाध्यसिद्धिः । पक्षेतुवेद्यत्वाभावनिवंधनेत्यवेद्यज्ञानसिद्धिः । एवमग्रेपि ॥ विवादपदानीति ॥ घटज्ञानभिन्नानि ॥ भिन्नाश्रयेति ॥ ज्ञानाश्रयस्यात्मनोज्ञानाविषयत्वसिद्ध्याऽवेद्यत्वरूपस्वप्रकाशत्वसिद्धिरित्यर्थः । एवमग्रेपि ॥ भास्वरेति ॥ अंधकारस्यभावत्वाद्युक्तारूपविरोधिता । अभावत्वेतुयस्याःसोभावस्तस्याविरोधिता । नचरूपस्यज्ञानादिवत्सविषयत्वं । संवंधित्वेनैवतद्विषयत्वात् ॥ अस्तमितइति ॥ अग्निहोत्रविद्यांसम्यङ्निरूपयंतंजनकंप्रतिसंतुष्यंतस्मैकामप्रश्नंवरंदत्वाकदाचिज्जनकगृहंप्रत्यागतंयाज्ञवल्क्यंप्रतिजनकःपप्रच्छ । याज्ञवल्क्यकिंज्यो

न्यायामृ० तिरयंपुरुषइति। आदित्यज्योतिःसम्राडितिहोवाचादित्येनैवज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीत्युक्त्वा अस्तमितआदित्ये तरंगिणी

॥ ५० ॥ याज्ञवल्क्यकिंज्योतिरेवायंपुरुषइत्यादिप्रश्नपूर्वकंचंद्रमोग्निर्वाचोज्योतींष्युक्त्वाचंद्रमस्यस्तमितेशांतेऽग्नौशांतायांवाचिकिंज्यो आ. प. स्व.

तिरेवायंपुरुषइत्यादित्यादीनांज्ञानसाधनानामभावेकिंज्ञानसाधनमितिजनकेनपृष्टेयाज्ञवल्क्येनोक्तं आत्मैवास्यज्योतिर्भवती २ । १२

ति । अत्रोपक्रमेआत्मशब्दःपरमात्मासएवास्यज्योतिर्भवतीत्यर्थः ॥ [१००।३] स्वप्नेनेति ॥ शुक्रमादायपुनरेतिस्थानंहिरण्मयःपुरुषए कहंसइतिशेषः । सुप्त्यांद्यवस्थायांशारीरंजीवंकार्याक्षमंकृत्वास्वयमसुप्तएवसुप्तान्प्रतिप्रकाशते । स्वप्नावस्थायामितस्ततोटमा नंजीवमादायपुनःस्वस्थानंप्रतिपुरुषइत्यादिपरमात्मलिंगमित्यर्थः ॥ [१००।४] द्युभ्वादीति ॥ द्युभ्वाद्यायतनंस्वशब्दादित्यत्रतमेवैकं जानथआत्मानमित्यात्मशब्देनयस्मिन्द्यौःपृथिवीत्यादिद्युभ्वाद्याधारत्वंपरमात्मनउक्तं । तदात्मशब्दस्यपरमात्मनिमुख्यत्वेयु ज्यतेनान्यथेत्यर्थः ॥ [१००।५] अत्रायमिति ॥ पूर्वोदाहृतमात्मैवास्यज्योतिरित्याद्युक्त्वाकतमआत्मेतिपुनःपृष्ट्वायोयंविज्ञानमयःप्राणे षुहृद्यंतर्ज्योतिरित्यादिनोत्तरत्र्यस्वेनभासा स्वेनज्योतिषाप्रस्वपित्यत्रायंज्योतिर्भवतिपुरुषःस्वयंज्योतिर्भवतीत्युपसंहारेप्युपक्रम स्थमस्यपदमनुषज्यायमीश्वरोस्यजीवस्यज्ञानसाधनमित्यर्थःकर्तव्यः । ननुतमोविरोधिनिज्योतिषिरूढस्यज्योतिःशब्दस्याज्ञान विरोधिज्ञानार्थकत्वंनतुज्ञानसाधनार्थकत्वमतआह ॥ [१००।६] अस्मिन्नेवेति ॥ आत्मनिजीवार्थकोज्योतिःशब्दोवान्नितुज्ञानसाधना ॥३२४॥

र्थइतितुनयुक्तं । वैरूप्यात् । दोषांतराच्चेत्याह ॥ [१००।७] आत्मैवास्येति ॥ नन्वस्यपुरुषस्यविषयेआत्मास्वंज्योतिर्ज्ञानमितिनार्थः ।

येनस्वविषयंस्वंस्यात् । किंत्वात्मातिरिक्तंज्योतिर्नास्तीति । तथाचावेद्यत्वमेवसिद्धमतआह ॥ स्वयमिति ॥ श्रुतत्यागेनाश्रुतनिषेधार्थकल्पनादमुख्यार्थकत्वं । स्वयंदासाइत्यत्रापिस्वस्यस्वसेवानिबंधनस्वंदासत्वज्ञाननिबंधनमेवस्वान्यदासाभावज्ञानमतःप्रकृतेपिस्वस्वविषयत्वज्ञानानंतरमेवान्याविषयत्वज्ञानमित्यापाताच्च । ननुस्वयंदासाइत्यादौयथातथास्तु स्वप्रकाशशब्देत्ववेद्यत्वमेवार्थइत्यतआह ॥ वेद्येपीति ॥ घटादेरपीति ॥ सजातीयेनघटाद्यंतरेणघटादेरप्रकाश्यत्वाद्घटज्ञानदीपाभ्यांघटस्यप्रकाशेपितयोर्विजातीयत्वादित्याह ॥ नहीति ॥ सजातीयेति ॥ नचसजातीयप्रकाशाप्रकाश्यत्वंसाध्यमतोनाथातरमितिवाच्यं । प्रकाशगतभास्वररूपादौव्यभिचारात् ॥ आद्यस्येति ॥ नचाद्यक्षणेदुःखादौनप्रकाशइतिवाच्यं । तद्वदेवात्मन्यपिक्षणंप्रकाशवैधुर्योपपत्त्याहेत्वसिद्धेः । नहिदुःखाद्यात्मनोःक्षणमात्रमप्रकाशप्रकाशावसर्वज्ञेनशक्यग्रहौ ॥ सिद्धसाधनमिति ॥ आत्मप्रकाशस्यनित्यत्वात् ॥ विवादेति ॥ नचस्वाविषयत्वरूपपक्षविशेषणान्नसिद्धसाधनमितिवाच्यं । स्वाविषयकेस्वगोचरंज्ञानविरहेव्यवहाराभावस्यसाधितत्वेनतथासाध्येबाधात् ॥ क्रियात्वादिति ॥ क्रियात्ववस्तुत्वयोःकृतीच्छाव्यवहृत्यादिषुव्यभिचारः । तेषांकृत्यादिविषयत्वस्योक्तत्वात् । प्रकारत्वस्यसर्वज्ञानंप्रकाशइत्यादिशब्दजन्यवृत्तिज्ञानेव्यभिचारः । क्रियात्वस्यासिद्धिश्च । परिशेषेणास्यज्ञानस्यस्वप्रकाशत्वमुपपादयति ॥ तस्मादिति ॥ नित्यज्ञानेसिद्धाविति ॥ नचसहोत्पन्नज्ञानेनापिज्ञातैकसत्त्वोपपत्त्याज्ञानगतनित्यतासाधनेतस्यासामर्थ्यमितिवाच्यं । स्वसन्निकर्षाद्यभावेनसहोत्पत्तेरयोगात्त

न्नित्यत्वस्यसिद्धेः । आत्मनोपिस्वप्रकाशत्वमुपपादयति ॥ [१०५।३] आत्मापीति ॥ आत्मापिस्वप्रकाशत्ववानित्यनेनाग्रेतनेनसंबंधः ॥ ७ ॥ आत्मनःपराभिमतस्वप्रकाशत्वभंगः ॥ १२ ॥ ७ ॥ [१०६।५] अवाच्येति ॥ नन्ववाच्यरूपमुख्यार्थाभावेप्यवाच्यपदस्य वाच्यत्वात्यंताभावबोधनद्वारास्वरूपेलक्षणयैवपर्यवसानं । मैवं । अवाच्यपदजन्यज्ञानविषयेब्रह्मणिवाच्यत्वात्यंताभावोस्ति चेद्ब्रह्मावाच्यपदवाच्यंस्यात् । नचेत्तर्हितद्विरुद्धवाच्यत्वापत्त्याब्रह्मणोवाच्यपदवाच्यत्वापत्तेः । परस्परविरहरूपयोरेकस्यवा धेऽपरस्यधर्मिसत्वनियमात् ॥ [१०७।३] मुख्यार्थसिद्धिरिति ॥ निर्विशेषादिपदानामित्यनुषंगः ॥ [१०७।३] निर्विशेषत्वाद्यहानिरिति ॥ निर्विशेषत्वरूपधर्मबहिर्भावेननिर्विशेषत्वाश्रयव्यक्तेर्लक्ष्यत्वान्ननिर्विशेषत्वहानिः । गंगापदेनगंगात्वानाश्रयस्यलक्ष्यत्वाद्गंगाप दलक्ष्येगंगात्वहानिरेव ॥ [१०७।३] उपधानमिति ॥ शक्तिग्रहदशायांतटस्यैवजातिर्व्यक्तीनामनुगमिकेत्यर्थः॥ [१०७।७] मुख्यार्थाभावादीति॥ शक्यमंचत्वतदाश्रयव्यक्तितल्लक्ष्यपुरुषाणामिवशक्यनिर्विशेषत्वतदाश्रयव्यक्तितल्लक्ष्यब्रह्मणांत्रयाणामभावात् । ब्रह्मभिन्नस्य निर्विशेषपदस्यवाच्यत्वाभावात् । ब्रह्मणश्चनिर्विशेषपदलक्ष्यत्वांगीकारादित्यर्थः ॥ [१०७।८] सत्यंज्ञानमिति ॥ जातिःशब्दार्थइतिमते गोत्वाश्रयस्यागोर्लक्ष्यत्ववत्सत्यत्वाश्रयतयैवब्रह्मव्यक्तिर्लक्ष्येतिसखंडार्थत्वं । निर्विशेषलक्ष्यादिपदानांब्रह्मान्यस्यमुख्यार्थस्या भावात्तेब्रह्मवाचकाइत्युक्तंतत्रशंकते ॥ [१०८।२] नन्विति ॥ समासेप्रत्येकपदयोरिवसमासस्याप्यन्वितवाचकत्वमस्तीत्याह ॥ [१०८।३] अन्वि तेति ॥ ननुनसमासेपिशक्तिकल्पनंगौरवादतआह ॥ [१०८।५] समासइति ॥ [१०९।२] तदुक्तमिति ॥ ईक्षत्यधिकरणव्याख्यानइतिशेषः ॥

पदंचेति ॥ निर्गुणइतिपदंगुणवद्वस्तुकथंवदिष्यति । व्याघातात् । तत्परिहारायनिर्गुणपदेनस्ववाच्यगुणाभावविशिष्टद्वारा निर्गुणमुपलक्ष्यंचेत् अपि तथापि तत्पदं लक्ष्यपदं । ब्रह्मणोवाचकमंगीकरणीयमित्यर्थः ॥ येनेति ॥ येनपुरुषेणब्रह्मलक्ष्य मितिप्रोक्तंसलक्ष्यशब्देनब्रह्मावदत् । लक्ष्यपदंवाचकंतत्रप्रयुक्तवानित्यर्थः । ऊदे ऊचे ॥ यतोवाचइत्यत्रेति ॥ अंतःकर णवृत्तिव्याप्येब्रह्मणिश्रुतस्यापिमनोवृत्तिनिषेधस्यसंकोचवद्वाग्वृत्तिनिषेधस्यापिसंकोचःकार्यः ॥ यतइति ॥ यतोवाचोनिव र्तंते । अप्राप्यमनसासह । आनंदंब्रह्मणोविद्वान् । नबिभेतिकुतश्चनेति श्रुतौयतइतिशब्दस्यआनंदब्रह्मशब्दादीनांचब्रह्मवा चकत्वरूपमुख्यार्थान्निवर्ततइतिपदमेवप्रच्यावनीयं । तथाचयत्पदस्यआनंदादिपदानांचबहूनामनुग्रहःस्यादित्यर्थः ॥ त्वन्मत इति ॥ यतोवाचोनिवर्ततइत्यस्यब्रह्मवाच्यत्वनिषेधार्थकत्वाभावात् ॥ वेदांतेति ॥ अत्रपक्षासिद्ध्यादिकंस्वयमनुपदमेवपरि हरिष्यति । नचव्यधर्मकत्वमुपाधिः । साध्योपाध्योःकेवलान्वयितयातद्व्यतिरेकाद्यसाधनात् ॥ पदत्वादिति ॥ नचसमासा दिपदेव्यभिचारः । तस्याप्यवयवद्वारावाचकत्वात् । ब्रह्मणस्त्ववयवार्थत्वेसखंडत्वापातः ॥ सत्येति ॥ नचविषंभुंक्ष्वेत्यादौ व्यभिचारः । तत्रापिवाच्यार्थपरत्वस्योपपादितत्वात् ॥ शब्दवैयर्थ्यादिति ॥ नचावरणाभिभावकवृत्तौशब्दस्योपयोगः । घटादेःप्रत्यक्षत्वमेव शब्दस्तुतदावरणनिवर्तकवृत्तौहेतुरित्यापातात् ॥ वाच्येति ॥ गंगापदादौवाच्यसंबंधितयाज्ञाततीरादि

कंलक्ष्यंदृष्टं । ब्रह्मणोवाच्यसंबंधितयावगतिस्तुमानांतरागम्यत्वादवाच्यत्वाच्चलक्षकपदेनैववाच्या । लक्षकपदंतुवाच्यसंबंध्य
वयवसंबंधितयाज्ञातमेवबोधयतीति तथाज्ञानार्थंब्रह्मणिलक्षकपदांतरमेवप्रयोक्तव्यमित्यनवस्थितिर्लक्षकपदइत्यर्थः ॥ यौ
[११०।९] गिकेति ॥ यौगिकपदावयवार्थसंसृष्टरूपेणोपस्थितेब्रह्मरूपेसंबंधिनिपदांतरस्यशक्तिरूपःसंबंधोग्रहीष्यते । तवतुनैवंपरिहारः ।
अखंडार्थत्वहानेः ॥ [११०।११] ब्रह्मनसिद्ध्येदिति ॥ प्रत्यक्षानुमानलौकिकशब्दानांब्रह्मण्यप्रवृत्तेर्वैदिकशब्दवाच्यत्वस्याप्यनंगीकारेवा
च्यत्वव्याप्यलक्ष्यत्वस्याप्यभावापत्त्याब्रह्मनसिद्ध्येदित्यर्थः ॥ [११०।१२] अप्रसिद्ध्येति ॥ वाच्यत्वलक्ष्यत्वयोःकेवलान्वयितयातदभा
वाप्रसिद्धिः ॥ [११०।१३] व्याप्तीति ॥ वाच्यत्वंनलक्ष्यत्वव्यापकमित्यर्थः । यक्षं*मदृढमतर्कोपियुक्तइत्यतआह ॥ [१११।४] अस्तिचेति ॥ नवयं
यत्रवाच्यत्वंनतत्रलक्ष्यत्वंनेतिव्याप्तिंब्रूमः । किंतुयत्रप्रयोजकंनतत्रप्रयोज्यंनेति । भवतिचवाच्यत्वंलक्ष्यत्वेप्रयोजकं । वाच्य
संबंधित्वेनोपस्थितिंविनालक्ष्यत्वायोगात् । लक्ष्यत्ववाच्यत्वयोर्व्याप्यव्यापकभावेव्यभिचारंपरिहरति ॥ [१११।५] नचेक्षुक्षीरेति ॥
उक्ताश्चगंधादिषुविशेषाःमहाभाष्येषष्ठीत्यत्रसूत्रे । घनस्यतीव्रःवदंनस्यमृदुरिति । तत्रैवकैयटे । तीव्रोगंधस्यविशेषःमृदुत्वं
स्पर्शस्येति ॥ [१११।८] अभिहितेति ॥ अभिहितान्वयपक्षेतार्किकमतेचवाक्यार्थेहेतोरेकागमनान्नव्यभिचारइत्यर्थः । वाक्यार्थादिसा
धारणशब्दवाच्यत्वाद्वाक्यार्थेनव्यभिचारइत्यत्रशंकांनिरस्यति ॥ [११२।१] नचवाक्यार्थेति ॥ समासस्यलक्षकत्वेवाचकत्वमप्यस्ती

त्याह ॥ [११२।१] समासस्येति ॥ पुरुषशब्दस्येवार्थशब्दस्यवाचकत्वादित्यर्थः । नन्वर्थशब्दस्यवाचकत्वेपिवाक्यार्थशब्दस्यनवाच
कत्वं । मैथं । वाक्यशब्दस्यलक्षकत्वेपिवाक्यार्थशब्दस्यनलक्षकत्वमितिसमत्वात् ॥ [११२।४] संसर्गरूपेणेति ॥ तेजरूपेणसमासाल
क्ष्यत्वाच्च नव्यंभिचारइतिभावः ॥ [११३।४] एकस्यापिचेति ॥ यत्र वेदे सतां विदुषामेकस्यापिशब्दस्यमुख्यार्थपरित्यागेनामुख्या
र्थस्वीकृतौकृतायांसत्यांमहतीलज्जाजायते तत्राखिलाअपिशब्दाअमुख्यार्थाइतिवदतां तस्यात्मनः शाब्दत्वं शब्दशक्तितात्प
र्यज्ञत्वं लज्जाकथंनजायेत। केभ्यः । तन्मार्गानुवर्तिनांशब्दशक्तितात्पर्यानुसारिणांविदुषांसकाशादितियोजना ॥ छ ॥ छ ॥
अवाच्यत्वभंगः ॥ १३ ॥ छ ॥ [११३।१३] स्वरूपंधर्मोवेतीति ॥ स्वरूपधर्मयोर्भेदानवगमेस्वरूपंवाधर्मोवेतिविकल्पोनयुज्यते ॥
[११४।७] अकारमात्रेति ॥ धर्मोऽभेदःस्वरूपंवेत्याद्यप्रकारप्रश्लेषः ॥ [११५।१] तदुक्तमिति ॥ कथालक्षणे ॥ [११५।१] वितंडात्विति ॥ अन्यैरसद्भिः
सहसतांवितंडैव । यतोऽसत्सुतत्वंनिगूहितं । नप्रकाशनीयं ॥ [११७।७] निर्वचनंवादिनीदंशोभतइति ॥ यस्तुपदार्थान्निरुच्यव्यव
स्थापयतितंप्रतीदंदूषणंशोभतेनमांप्रतीत्यर्थः ॥ [११७।८] अनिर्वचनीयइति ॥ वक्तुमशक्यइत्यर्थः ॥ [११७।१३] देहात्मैक्याध्यासभंगइति ॥
अधिष्ठानज्ञानवाध्यात्यंताभावप्रतियोगित्वस्यसत्यत्वेपिसत्वादित्यादिनोक्तं ॥ [११९।१] कल्पितेनाकल्पितकार्याप्रतिबंधादित्युक्त
त्वादिति ॥ एतच्चोपलक्षणं । दूष्यदूषणव्यवस्थादिरूपस्वकार्यकारिणोभेदस्यैवतात्विकत्वं । अव्यवस्थारूपस्वकार्याकारिण
स्त्वभेदस्यमिथ्यात्वंस्यादितिचवक्ष्यते । यस्तुकल्पितकांतायाविश्लेषकार्यप्रतिबंधोदृश्यतइत्याह सोश्रद्धेयोवहुधानिरासात् ।

कांताज्ञानस्यैवतथात्वात् ॥ ईश्वरसामर्थ्यादिति ॥ नचोभयसिद्धमृषाभूतेंद्रजालस्थलेकारणादिव्यवस्थोल्लंघिकार्यदर्शनव दीश्वरशक्त्यानतथाकार्यद्वयंतइतिवाच्यं । पामरस्मृदादप्यपकृष्टत्वात् । ईश्वरशक्तिरूपकारणस्यसत्त्वेप्यन्यकारणोल्लंघन स्यशीतातपवातादिषुसरित्सागरादिषुविचित्रकार्येषुपामरैरपिप्रमितत्वात् ॥ प्रमात्वनिषेधायोगादिति ॥ अर्थवाधःप्रमात्व निषेधः । तस्यायोगः । अर्थसत्वमेवस्यादित्यर्थः । विचारासाहित्यरूपहेतोरन्वयव्याप्तौव्यभिचारमाह ॥ विचारेति ॥ जी वस्यब्रह्मैक्यप्रतीताविति ॥ जीवब्रह्मणोरप्रतीतौभेदेनप्रतीतौत्वनयोरैक्याप्रतीतेरित्यादिनैक्येप्यन्योन्याश्रयस्यवक्ष्यमाण त्वात् ॥ स्वाभिमतेति ॥ ऐक्यप्रतीतेरप्यन्योन्याश्रयवत्त्वात् ॥ तत्पक्षइति ॥ नहिसर्वत्रभेदोमिथ्या येनसद्वेष्यःस्यात् । नापिसर्वत्रभेदःसत्यः येनसइष्टःस्यात् ॥ ६ ॥ ७ ॥ सामान्यतोभेदखंडनोद्धारः ॥ १४ ॥ ७ ॥ अविद्यानिवृत्तेरिति ॥ नन्वविद्यानिवृत्तिंब्रह्मैक्ययोरतात्विकंसापेक्षत्वंतात्विकनिरपेक्षब्रह्मस्वरूपाविरोधि । मैवं । अतात्विकसापेक्षस्यभेदस्यतात्विक निरपेक्षघटस्वरूपाविरोधित्वस्यापिसुवचत्वात् । ब्रह्मस्वरूपंतात्विकंघटस्वरूपंत्वतात्विकमित्यस्यासिद्धेः । भेदस्यसत्यतास्यादि त्युक्तमुपपादयति ॥ यत्रयदध्यस्तमित्यादिना ॥ ब्रह्माधिकरणकोभेदोब्रह्मज्ञानावाध्यः । स्वविरोध्यध्यासाधिष्ठानाधिक रणकत्वात् । सामान्यव्याप्तौशुक्तावरूप्यत्ववत् ॥ ऐक्यमिति ॥ ऐक्याध्यासप्रधिष्ठानाश्रितत्वंहेतुः । तात्विकंवेतिसाध्यनि र्देशः । स्वविरोधीत्याद्युक्तोहेतुः ॥ ऐक्यस्यचेति ॥ नन्वैक्यस्यनिरपेक्षत्वेपितत्तदर्थभेदभ्रमनिवर्तकवृत्तिजननेतत्तत्पदार्थ

सापेक्षतयास्वरूपपरवाक्यानामेकवाक्यतास्ति । मैवं । तत्तत्पदप्रतिपाद्यतत्तदर्थप्रतियोगिकैक्यविषयकत्वंविनावृत्तेर्भेदभ्रम
निवर्तकत्वायोगात् । ऐक्यस्यनिरपेक्षत्वेवृत्तेस्तादृशैक्यविषयकत्वायोगात् ॥ [१२३।१]तादात्म्यनिषेधत्वेनेति ॥ तन्निष्ठासाधारण
धर्मवत्वाद्देस्तादात्म्यस्यैक्यरूपत्वात् । यदिचाभेदस्तादात्म्यंतदैक्यमेवभेदापेक्षमित्याह ॥ [१२३।१]ऐक्यंइति ॥ सापेक्षत्वंहियुज्य[१२३।४]
तइति ॥ ननुममतेकाल्पनिकंसापेक्षत्वंतवतुसापेक्षत्वनिरपेक्षत्वेद्वेअपितात्विकेइतिदृष्टांतवैषम्यं । न । भेदस्यापिब्रह्मस्वरू
पत्वेनतत्रसापेक्षत्वंकाल्पनिकमित्यपिवक्तुंशक्यत्वात् । नचभेदस्यब्रह्मस्वरूपत्वेमानाभावः । ऐक्येपिसाम्यात् ॥ प्रमेयत्वा[१२३।६]
दिनेति ॥ ननुभेदस्यनिरपेक्षत्वेपरान्प्रतीबस्वमपिप्रत्यविशिष्टतयास्वस्मिन्भेदत्वापत्तिः । मैवं । अभेदस्यापितथात्वेस्वंप्रती
वान्यान्प्रत्यप्यभेदत्वापत्तेः । नचेष्टापत्तिः । घटत्वादिनाभेदःकल्पितःस्वरूपतस्त्वभेदएवेतिवाच्यं । भेदेपिसाम्यात् । घटभे
दत्वेनघटावृत्तित्वेपिभेदत्वेनभेदस्यघटेपिवृत्तेः । ननुनिरपेक्षघटस्वरूपस्यभेदस्यप्रतीत्योरपिकथंप्रतियोगिप्रतीतिसापेक्षत्वानपे
क्षत्वादिकमतआह ॥ [१२४।४]शब्दस्वभावप्रयुक्तयोरिति ॥ घटकर्मत्वमानयनमित्यादिशब्दात्घटमानयेतिशब्दात्जन्ययोःप्रती
त्योरन्वयबोधाजनकत्वतज्जनकत्वयोर्दर्शनादिहापितदुपपत्तेः । एतच्चोपपादितंदृग्दृश्यसंबंधानुपपत्तिभंगे । अन्यथैक्येपि
समं । तदेतदाह ॥ [१२४।२]ब्रह्मशब्दोल्लेखेनेत्यादिना ॥ ननुगच्छतिचलत्योरर्थभेदएव । उत्तरसंयोगावच्छिन्नस्पन्दोगम्यर्थः ।
पूर्वविभागफलकस्पंदश्चलत्यर्थइति । मैवं । उभयत्रापिपूर्वदेशविभागस्योत्तरदेशसंयोगस्यचप्रतीतेःसत्त्वेनगमिचलत्योरर्थाभे
दात् । धात्वर्थःफलमितिमंडनाचार्यमतेतुसंयोगस्योभयफलत्वेनतयोरैकार्थ्यात् । नचानुकूलयत्नःकरोत्यर्थःफलमानयत्यर्थ

इतिवाच्यं । आख्यातसमानार्थतयायत्नमात्रस्यकरोत्यर्थत्वात् । एतदप्युपपादितंप्रतिकर्मव्यवस्थाभंगे । नियमानंगीकाराच्च क्वचिद्धात्वभेदेपितपत्त्विऋषिःतपतिपृथिवींसवितेत्याद्यकर्मकसकर्मकंप्रतीतिरप्युपपद्यते ॥ [१२४।६]नान्योन्याभावतेति ॥ ननुनान्योन्याभावःपृथगितिवक्तव्यं । सत्यं । नायंभावशब्दोभावसाधनः । किंतुकर्तृसाधनः । ज्वलितिकसंतेभ्योणइतिणप्रकरणे भवतेश्चेत्यनेनकर्तरिभवतेर्णविधानात् । भवतीतिभावस्तस्यभावोभावताभवनं । एवंचान्योन्याभावतान्योन्याभवनमन्योन्याभावएव । सनपृथगित्यर्थः । तथाचतल्प्रत्ययोपपत्तिः । केचित्तु अकर्तरिचकारकेसंज्ञायामितिकर्तरिप्रतिषिद्धमपिघञ्प्रत्ययमुणादयोवहुलमितिवहुलवचनात्कर्तर्यपिविधायकर्तृसाधनंभावशब्दमाहुः ॥ [१२४।१०]अविद्यानिवृत्त्यद्वैतयोरपिकथंब्रह्मैक्यमिति ॥ ननुममतेतत्राभवत्वस्यकल्पितत्वेनविरोधाभावः तवतुद्वयोरपितात्विकत्वेनविरोधः । मैवं । निर्विशेषब्रह्माभिन्नेऽविद्यानिवृत्त्यादौभावत्वाभावत्वयोःकल्पितत्वेनतवविरोधस्यदुर्वारत्वात् । विरुद्धयोरुभयतात्विकत्ववदुभयकल्पितत्वेपिविरोधात् ॥ [१२५।४]तदैक्यप्रमित्यविषयत्वमिति ॥ दर्शनादिघटितत्वेऽचाक्षुषत्वाद्यापत्तिः । संस्कारोपनीतभानात् ॥ [१२५।५]इतरेत्विति ॥ नचात्यंताभावान्योन्याभावयोरैक्यापत्तिः । इष्टत्वात् ॥ [१२५।६]प्रतियोगिनिरूप्यस्येति ॥ घटस्यपटप्रतियोगिकभेदस्वरूपत्वेपटस्वरूपत्वमपिस्यादित्यर्थः । ननुनघटस्वरूपभेदंप्रतिपटस्यनिरूपकत्वमात्रेणघटस्यपटरूपतापाद्यते । किंतुसमानाधिकरणप्रतीतिविषयस्वरूपंप्रतिप्रतियोगितयाविरूपकत्वेन । अज्ञाननिवृत्त्यादयस्तुनसमानाधिकरणप्रतीतिविषयाः । भेदस्तुघटःपटोनेतिसमानाधिकरणप्रतीतिविषयइत्याशंकातुच्छेत्याह ॥ [१२६।२]अनृतेत्यादिना ॥ अनृतंनब्रह्मअज्ञानप्रकाशोब्रह्मेत्यादिसमानाधि

करणप्रतीतिविषयोयद्ब्रह्मतत्स्वरूपायाऽनृतव्यावृत्तिरज्ञानप्रकाशश्चतन्नप्रतियोगितयानिरूपकस्यानृतस्याज्ञानस्यचब्रह्मरूपता
पत्तेरुक्ताशंकायास्तुच्छत्वात् । अद्वितीयंब्रह्मेत्यत्रद्वितीयस्यअदुःखंब्रह्मेत्यादौदुःखादेर्ब्रह्मरूपतापातांच्च । ननुभेदस्यस्वरूपत्वे
घटधर्मेषुपटप्रतियोगिकभेदत्ववद्धटप्रतियोगिकभेदत्वस्याप्यभ्युपगमात्पटाद्भिन्नोघटइतिवद्धटाद्भिन्नोघटइतिप्रतीतिःस्यात् ।
मैवं । पटप्रतियोगिकभेदस्वरूपायेघटत्वादयोधर्मास्तद्वत्त्वेनघटेपटभिन्नत्वप्रतीतेरनंगीकारात् । किंतुपटप्रतियोगिकोयोघटस्व
रूपोभेदस्तेनैवसाकंविशेषरूपसंबंधसत्वात्तद्वत्त्वेनघटेपटभिन्नत्वधीः ॥ स्ववृत्तिविरोधादिति[१२८।८] ॥ ननुभेदस्यविभागात्मकविदा
रणरूपत्वेविभागस्यविभज्यमानवृत्तित्वनियमेनावयवानवस्थयाशून्यवादापत्तिः । मैवं । दत्तोत्तरत्वात् । नहिलवित्रादिकंस्वा
वयवंलुनाति । किंत्वन्यदेव । विभज्यमानवृत्तित्वंचासिद्धं । घटस्यस्वावयवान्प्रतिविभागत्वेहितेषांविभज्यमानतास्यात् ।
नत्वेवं । किंतुपटादिकंसंबंध्येवघटोभेदोविदारणंविभागश्च । ननुस्वावयवैःसहघटस्यभेदोस्ति । मैवं । अभेदस्याप्यंगीका
रात् । क्वचिद्विशेषांगीकाराच्च । अत्यंतभेदएवविदारणरूपइत्यंगीकारात् ॥ संयुक्तयोरोष्ठयोरिति[१२८।१६] ॥ संयोगकालेभेदव्य
वहारहेतोर्विभागस्याभावाद्भिन्नावितिव्यवहारोनस्यात् ॥ उक्तंचेति[१२८।१२] ॥ समयपादेऽनुव्याख्यानइतिशेषः । अद्भुताः पि
शाचाः ॥ अविदारणइति[१२८।१५] ॥ एकाक्षराधिक्येपिनच्छंदोभंगः ॥ यत्रभेदात्मकोघटइति[१३१।७] ॥ ननुघटस्यावयवानामनेकत्वं
स्यात् । न । अनेकावयवानामनेकत्वस्येष्टत्वात् । एकस्मिन्नवयवेतुघटाख्यस्यानेकत्वस्यापर्याप्तेः । एतेनान्योन्याभावस्यस्व

रूपत्वेकपालादिरूपाश्रयप्रतियोगिकभेदस्यघटादिरूपाश्रितरूपतयास्वप्रतियोगिकभेदायत्तत्वादेकत्वंकपालादिषुभज्येतेतिनिरस्तं ॥ अनेकेषुकपालेष्वनेकत्वस्येष्टत्वात् । एकस्मिंस्तुघटाख्यभेदस्यापर्याप्तेः । स्वप्रतियोगिकात्यंतभेदएवानेकत्वमित्यंगीकाराच्च ॥ ऐक्येपिविप्रतिप[१३०।३]त्त्यौच्चयोगादिति ॥ नन्वज्ञानाश्रयत्वादिनाप्रत्यगर्थप्रकाशमुपजीव्यंनावृणोत्यविद्या । ऐक्याद्यंशंत्वावृणोत्येवेतितत्रविप्रतिपत्त्यादयः । मैवं । निरंशेंशाभावस्योक्तत्वात् ॥ [१३०।४]उक्तरूपेणेति ॥ स्वरूपत्वेनेत्यर्थः । भेदस्वरूपंस्वयंस्वरूपत्वेनप्रकाशंतएवेतियावत् । ननुप्रतियोगिभेदेनाभावभेदस्यावश्यकत्वात्घटादीनांप्रतियोगिनांनानात्वात्तत्प्रतियोगिकभेदरूपेघटोपिनानास्यादतआह ॥ नहिनिरू[१३०।८]पकभेदेनेति ॥ ननुतथापिप्रतियोगितावच्छेदकभेदेनाभावभेदआवश्यकः । घटप्रतियोगिकानांचतुर्णांप्रागभावादीनांभेदेप्रतियोगितावच्छेदकभेदस्यप्रयोजकत्वेनक्लृप्तत्वात् । नहितत्रप्रतियोगिभेदोस्ति । मैवं । अधिकरणरूपाभाववादेऽधिकरणभेदेनैवाभावभेदात् । नचप्रागभावप्रध्वंसयोरैक्यापत्तिः । अन्योन्याभावस्यैवाधिकरणरूपत्वांगीकारात् । प्रतियोगितावच्छेदकभेदेनाभावभेदेऐक्यस्यापिभेदःस्यादित्याह ॥ [१३०।९]अनेकद्वैतेति ॥ ननुब्रह्मेतरत्वरूपप्रतियोगितावच्छेदकस्यैक्यान्नैक्यस्यभेदःस्यात् । मैवं । तादृशस्यैक्यस्यब्रह्मस्वरूपत्वानुपपत्तेः । भेदसापेक्षत्वाच्च ॥ भेदज्ञानंन[१३०।९]भ्रमंविरोधीति ॥ नचैवंशाब्दाभेदभ्रमस्यशाब्दभेदज्ञानादनिवृत्त्यापत्तिः । एतन्मतइष्टापत्तेः । शाब्दभ्रमेप्यधिष्ठानसत्वात् । भेदस्याप्यभेदविरोधित्वाच्च । अभेदभ्रमंविरोधिनींभेदप्रतीतिमाह ॥ [१३०।१०]अदोषमूलेति ॥ एतच्चा

प्रतीतौविशेषणं । अदोषमूलोयस्ताद्रूप्यप्रकाशकप्रतीत्यभावस्तस्मिन्सति प्रतीति स्वरूपभेदलक्षणं . स्वरूपभेदोलक्ष्यते विष
यीक्रियतेऽनयासातथा । अभेदभ्रमविरोधिनीतियावत् । अदोषमूलेत्यस्यव्यावर्त्यमाह ॥ [१३।११] शुक्तेरिति ॥ शुक्तिःशुक्तेःस्वरू
पभेदेनभवतीतिशुक्तिप्रतीतिर्नशुक्तिस्वरूपभेदविषयेतिनसातत्वेनसंग्राह्यादोषकालेशुक्तिरूपत्वेनाप्रतीतिःशुक्तेःप्रतीतिश्चसाभ
वतितत्रलक्षणंप्रस्तीत्यतिव्याप्तिः । दोषमूलेतिविशेषणेतुनतत्रातिव्याप्तिः । ननुरजतात्मनाशुक्तेःप्रतीतिसमयेशुक्तौरजतभेदो
नस्यात् । तत्रताद्रूप्येणप्रतीत्यभावरूपविशेष्यस्याभावेनादोषमूलत्वविशेषणविशिष्टस्यापितस्याभावात् । नहिविशेष्यहीनेवि
ष्टसंभवः । मैवं । अबोधमूलत्वात् । स्वरूपभेदलक्षणस्यात्रानभिधानात् । अभेदभ्रमविरोधिस्वरूपभेदप्रतीतेरभिधित्सित
त्वात् । अतएवाह ॥ [१३०।१२] एवंचभ्रमेस्थलइति ॥ ताद्रूप्येण घटस्यपटादिरूपत्वेन । अतएवोक्तमभेदभ्रमोपपत्तिरिति । लक्षण
विवक्षायांहिस्वरूपभेदलक्षणोपपत्तिरित्यवक्ष्यत् । यदपिकेनचिदुक्तं ताद्रूप्येणाप्रतीतौप्रतीतेरभेदसाधारण्येनादोषमूलपर्य
तज्ञानंभेदव्यवहारकारणंवाच्यं । एवंचस्वरूपभेदस्यचाक्षुषत्वंनस्यात् । प्रतीतिघटितत्वात् । शुक्तेःरूप्यात्मनाऽप्रतीतिकाले
सामग्रीविरहाच्छुक्त्यात्मनाचाप्रतीतौरूप्यभेदत्वंशुक्तेर्नस्याच्च । नचतदापिप्रतीयमानत्वमीश्वरज्ञानमादायास्त्येवेतिवाच्यं ।
एवंसत्यप्रतीतिदशाविरहेणप्रतीयमानपदवैयर्थ्यादिति । तदयुक्तं । अबोधात् । स्वरूपभेदवादेभेदज्ञानंनभ्रमविरोधीत्यत्रपूर्व
वाक्येऽभेदभ्रमविरोधिभेदज्ञानस्यप्रकृतत्वेनतस्यैवात्रोच्यमानत्वेनस्वरूपभेदलक्षणस्यात्रानभिधानादित्युक्तत्वात् ॥ तत्त्वेऽ
[१३०।१३] द्वैतप्रसंगतइति ॥ पटादिनिरूप्यस्यभेदस्यघटस्वरूपत्वेपटादिरपिघटस्वरूपःस्यादित्यद्वैतमेवतत्त्वंस्यात् ॥ [१३०।१३] एकाभावादिति ॥

अनेकत्वैकार्थसमवायिनोभेदस्यघंटस्वरूपत्वेघटरूपभेदाश्रयोनेकःस्यात् एवंतदाधारोपीत्येकःकोपिनस्यात् ॥ [१३०।१३] सापेक्षत्वा दिति ॥ अभिदा ऐक्यं । वस्तुनोरूपंन । तत्रहेतवःसापेक्षत्वादयअभेदस्यभेदसापेक्षत्वं । स्वाभेदःस्वंप्रत्येव । नत्वन्यंप्रत्य पीतिसावधित्वं । अविदारणात्मकस्याभेदस्यब्रह्मरूपत्वेनशून्येनाप्यविदारणेतदैक्यंस्यादितिशून्यैक्यंतत्वंस्यात् ॥ [१३०।१४] नैकाभा वादिति ॥ नएकंनैकं अनेकं । तस्याभावात् एकत्वैकार्थसमवायिनाघटेनघटभेदस्यपटस्वरूपत्वेघटस्यपटेनसहधर्मिज्ञाना बाध्यमनेकत्वंनस्यात् अभेदस्यप्रकाशमानब्रह्मस्वरूपत्वेअभेदेसंशयाद्यभावःस्यात् ॥ [१३०।१७] वस्तुभेदइति ॥ वस्तुनःसकाशाद्भेद स्यभेदोनस्यात् । किंतूभयमेकमेवस्यादित्यर्थः ॥ [१३०।२२] घटत्वभेदत्वयोरिति ॥ नचभेदत्वानिरुक्तिः । ज्ञानत्वानंदयोरपिब्रह्म ण्यनिरुक्तेः । नचतंत्रतत्कल्पितंभेदत्वमपीश्वरशक्तिवशाद्भेदेतात्विकं । वस्तुतस्त्वनिरुक्तावपिनवस्तुक्षतिरित्युक्तं दृग्दृश्य संबंधानुपपत्तिभंगे । ननुप्रमाणसिद्धेऐक्येभेदव्यवहारस्यौपचारिकत्वंकल्प्यंतइत्याशंकते ॥ [१३१।६] तत्रगत्यंतराभावादिति ॥ न नुगत्यंतराभावेपिनाप्रामाणिकमंगीकारार्हमतस्तत्रप्रमाणान्याह ॥ [१३१।११] तथाभेदस्येत्यादिना ॥ क्वचित्तुघटेपटात्मकोनेतिपाठः । सोपिसामानाधिकरण्योपपादनार्थएव । ननुघटःपटोनेत्यादेरन्योन्याभावरूपभेदविषयतयानस्वरूपभेदविषयत्वं । अन्यथा नीलोघटइत्यस्यरूपाभेदविषयत्वापत्तिः । मैवं । स्वरूपातिरिक्तस्यान्योन्याभावस्यानंगीकारान्नीलोघटइत्यस्यरूपाभेदविषय त्वमस्त्येव । रूपशब्दोल्लेखिव्यवहारस्तुनास्ति ॥ [१३१।१२] घटतद्भेदयोरैक्यस्येति ॥ तद्भेदःपटभेदः । ननुपटभेदस्यघटेनाभेदसिद्धेः

प्राग्लिंगमसिद्धं । सामान्यव्याप्तौसमानसंवित्संवेद्येजातिव्यक्त्यादौव्यभिचारः । विशेषव्याप्तौभेदप्रतियोगिनिघटादौव्यभि
चारः । मैवं । घटप्रतीतावेवश्यंतस्यपटादिभेदेनप्रतीतेरुक्तत्वात् । पटादिसांकर्याननुभवात् । अतोनासिद्धिः । सामान्य
व्याप्तौनव्यभिचारः । जात्यादेर्व्यक्तिस्वरूपत्वात् । भेदत्वज्ञानएवप्रतियोगिज्ञानापेक्षणान्नप्रतियोगिज्ञानेविशेषव्याप्तावपि
व्यभिचारः ॥ [१३१।१८] तथाप्यनेकेष्विति ॥ ननुघटविषयकंज्ञानंघटविषयिकेच्छेतिज्ञानादिषुघटविषयकत्वांशेऽनुगमवत्पटप्रतियो
गिकत्वांशएवानुगमः स्यान्नभेदांशेपि । मैवं । अवोधात् । अनेकेषुघटकुड्यादिस्वरूपभेदेषुपटप्रतियोगिकत्वस्यैकस्यसंबंधात्प
टाद्भिन्नमित्यनुगतव्यवहारोभविष्यतीत्युच्यते । अन्यथागोत्वानुगमेपिनगवांशेऽनुगमइत्यपिस्यात् । ननुसाक्षीप्रमाणमनपे
क्ष्यप्रतियोगिपटादिकंनगृह्णातीतिकथंसाक्षिसिद्धेनप्रतियोगिनासहैवव्यावृत्तिप्रतीतिरुपपद्यतइत्यतआह ॥ [१३३।८] सर्वसामान्यतो
यस्मादिति ॥ तथाचसर्ववस्तुसामान्यतःसाक्षिणागृह्यतइतिसाक्षिसिद्धेनकालेनसहैववस्तुग्रहवत्साक्षिसिद्धेनप्रतियोगिनासहै
वव्यावृत्तिःप्रतीयतइत्यदोषः । तृतीयाध्यायेप्युक्तमनुव्याख्याने । अतःसर्वपदार्थाश्चसामान्यात्साक्षिगोचराः । सर्वमित्येव
विज्ञानंसर्वेषांकथमन्यथेति । ननुतथापिकथंप्रतियोगिज्ञानंविनाप्रतियोगिविशिष्टाभावधीः । विशिष्टज्ञानस्यविशेषणज्ञाना
जन्यत्वेपिप्रतियोगिविशिष्टाभावज्ञानस्यप्रतियोगिज्ञानजन्यत्वात् । सत्यं । अभावत्वप्रकारकज्ञानेतथैव । स्वरूपाभावज्ञाने
तुनपूर्वप्रतियोगिज्ञानापेक्षेतिनदोषः । ननुसर्वस्माद्व्यावृत्ततानुभूयतइत्यत्रसर्वत्वंधर्मप्रतियोगितावच्छेदकंस्वेतरसर्वत्वंवा । आ
द्येस्वस्माद्वैलक्षण्येस्वासिद्धिप्रसंगः । द्वितीयेन्योन्याश्रयइत्यतआह ॥ [१३३।९] सर्वस्मादित्यनेनचेति ॥ तदात्मकत्वेनाज्ञानंज्ञानंवि

वक्षितं । तेनस्वग्रहात्पूर्वंस्वस्यापिस्वात्मतयाऽज्ञानात्स्वस्यप्रतियोगितापत्तिरितिनिरस्तं ॥ तद्विरुद्धा[१३२।१५]भेदज्ञानानुपपत्तिरि
तीति ॥ ननुकाल्पनिकंभेदज्ञानंस्यधर्मिप्रतियोगिभावज्ञाननिर्वाहकस्यतात्विकाभेदज्ञानाप्रतिबंधकत्वं । मैवं । अभेदग्रहात्पू
र्वंभेदस्यकाल्पनिकत्वासिद्ध्यांन्योन्याश्रयात् । नन्वभेदोनप्रतियोगिज्ञानाद्यपेक्षः । तस्यनिष्प्रतियोगिकवस्तस्वरूपत्वात् । स
प्रतियोगिकत्वंव्यवहारस्तुनिरूपकभेदेसप्रतियोगिकत्वेनेत्यतआह ॥ [१३२।१५]साम्यादिति ॥ निष्प्रतियोगिकंवस्तुस्वरूपएवभेदेनि
रूपकंतादात्म्यस्यसप्रतियोगिकत्वेनसप्रतियोगिकत्वव्यवहारइतिसाम्यस्योक्तत्वात् ॥ सप्रतियोगिक[१३३।६]पदार्थमात्रेन्योन्याश्र
यःस्यादिति ॥ यस्त्वत्रेष्टापत्तिमाह सजीवब्रह्मैक्येपिसप्रतियोगिकेन्योन्याश्रयमनुमेनएव । गौर्गवयसदृशइतिव्यावहारिकी
मपिव्यवस्थामनास्थितइतिस्पष्टंशून्यवादमास्थितइत्युपेक्षणीयः ॥ [१३३।७]सद्भेदस्येति ॥ सन्विद्यमानोभेदोयस्यतत्तथा । मिथः
श्रयः अन्योन्याश्रयः ॥ [१३३।१६]युगपदनेकज्ञानोत्पत्तेर्विरुद्धत्वेपीति ॥ तदुक्तंचिंतामणौ । युगपज्ज्ञानानिमाभूवन्युगपत्ज्ञानं
तुस्यादेवेति ॥ [१३३।१२]तदुक्तमिति ॥ समयपादइतिशेषः ॥ [१३३।२५]इत्युक्तत्वादुभयतःपाशारज्जुरिति ॥ तत्रैवानुव्याख्याने । किंच
भेदःकथंग्राह्यइतियःपरिपृच्छति । धर्म्यादिभेदग्रहणात्तेनोक्तोन्योन्यसंश्रयः । अन्यत्वाग्रहणेप्रोक्तइत्यादिनापरोद्भावितान्यो
न्याश्रयत्वस्यव्याहतत्वमुक्तमित्यर्थः ॥ [१३४।६]विरोधादिति ॥ प्राचीनभेदधियाप्रतिबंध्यादित्यर्थः । यंत्त्वनिर्वचनीयभेदज्ञानस्यता
त्विकाभेदज्ञानाप्रतिबंधकत्वमिति । तन्न । द्वैताद्वैतमानयोःकाल्पनिकंभेदमात्रेणवाध्यवाधकत्ववदिहापिप्रतिबंधकत्वोपपत्तेः

॥ बिंबप्रतिबिंबयोर्[१३४।१७]जीवब्रह्मणोश्चेति ॥ यत्त्वभेदस्यवस्तुस्वरूपत्वेनेद्दग्विकल्पानवकाशइति । तन्न । भेदेपिसाम्यस्योक्तत्वात् ॥ [१३४।१८]तर्हिप्रकृतेपितथेति ॥ नन्वद्वैतस्याधिकरणातिरेकेऽप्रामाणिकत्वमिष्टमेव । अनतिरेकेत्वधिकरणप्रामाणिकत्वस्यैवप्रामाणिकत्वेतंत्रतथाप्रतियोग्यप्रामाणिकत्वेपिप्रामाणिकत्वोपपत्तिः । मैवं । भेदेपिसाम्यस्योक्तत्वात् ॥ पटेप्रमित[१३४।१९]स्यपटतादात्म्यस्येति ॥ ननुतादात्म्यमात्रस्यनिषेधप्रतियोगित्वेदूरस्थवनस्पत्योरिवबाधोत्तरकालमिमौवनस्पतीइतिवदिमेशुक्तिरजतेइतिप्रतीत्यापत्तिः । मैवं । सन्निधानेइष्टापत्तेः । असन्निधानेपीयंशुक्तिरेवरजतंतुयन्मयानुभूतंतदेवेतिप्रतीतेश्च ॥ [१३४।१९]तन्मतइति ॥ प्रतियोग्यभेदेप्यारोप्यसंबंधभेदात्संसर्गाभावान्योन्याभावयोर्भेदः ॥ [१३४।२०]प्रतियोगिनमिति ॥ अधिकरणप्रतियोगिसंसर्गविषयत्वनियतबुद्धिविषयाभावत्वं । एवमग्रेपि । एतेनातींद्रियभेदेव्याप्तिःशब्दजन्याभावबुद्धौव्यभिचारेणारोपस्याभावबुद्धाववहेतुत्वाच्चेतिपरास्तं । आरोपस्यहेतुत्वानुक्तेः । अन्येतुस्वाभावाभावत्वंसंसर्गाभावत्वं । स्वाभावाभावत्वरहिताभावत्वमन्योन्याभावत्वं । अस्तिचघटात्यंताभावस्ययोऽभावोघटस्तदभावश्चघटात्यंताभावः । एवंप्रागभावादिषु । घटान्योन्याभावस्ययोभावोघटत्वंतदभावस्तुनघटान्योन्याभावइति । नचसंसर्गाभावस्ययोन्योन्याभावस्तदभावोनसंसर्गाभावइतिस्वसंसर्गाभावाभावत्वंलक्षणार्थोवाच्यस्तथाचान्योन्याश्रयइतिवाच्यं । स्वाभावाभावत्वमित्यत्रवस्तुतोयद्यपिसंसर्गाभावाभावएवपर्यवस्यति तथापिसंसर्गाभावत्वंनतत्रप्रविष्टंअभावत्वेनैवसंसर्गाभावउपस्थितइतिनोक्तोदोषइत्याहुः । ननुयद्यपिघटान्योन्याभा

वाभावोनघटः । किंतुघटत्वं । तथापिघटोघटान्योन्याभावोनेतिप्रतीत्याघटेघटान्योन्याभावान्योन्याभावोविषयीक्रियते । सचघटस्वरूपएव । अभावप्रतियोगिकाभावस्याधिकरणानतिरेकात् । तथाचसंसर्गाभावलक्षणमन्योन्याभावेतिव्याप्तं । स्वं घटान्योन्याभावस्तदन्योन्याभावोघटः । तदभावश्चतदन्योन्याभावइति । अत्रब्रूमः । स्वाभावमात्राभावत्वंसंसर्गाभावत्वं । अन्योन्याभावस्यस्वान्योन्याभावोयःघटस्तदभावरूपत्वेपिस्वात्यंताभावोयःघटत्वंतदभावरूपत्वाभावात् । घटान्योन्याभाव [134|23] स्यघटत्वप्रतियोगिकत्वाभावादिति । केचित्तु संसर्गाभावत्वान्योन्याभावत्वेअखंडोपाधीइत्याहुः ॥ तस्यैवस्वनिर्वाहकत्वं चेति ॥ ननुभेदाधिकरणकभेदव्यवहारस्यस्वरूपेणनिर्वाहेस्वरूपभेदपक्षांतर्भावः । मैवं । घटेतदनंगीकारेणतत्पक्षबहिर्भा [135|4] वात् ॥ तथाचान्योन्यवृत्तिरितीति ॥ घटभेदघटभेदत्वयोर्भेदस्यघटभेदादन्यत्वेऽनवस्थापातेनघटभेदरूपएवतयोर्भेदोवा च्यइतिघटभेदेघटभेदत्वंघटभेदत्वेचघटभेदइत्यन्योन्यवृत्तिःस्यात् ॥ [135|4] तस्यस्वाभेदइति ॥ अभेदत्वस्याभेदत्वेनाभेदसिद्ध्यर्थ मभेदत्वेऽभेदोवाच्यइत्यभेदेऽभेदत्वमभेदत्वेचाभेदइत्यन्योन्यवृत्तेःसाम्यं । नन्वभेदमात्रस्याभेदत्वस्यचब्रह्माभेदाभिन्नतयाऽ न्योन्यइत्युक्तैवांभावेनान्योन्यवृत्तित्वमापादयितुमशक्यमित्यतआह ॥ [135|5] नचघटस्येति ॥ अभेदत्वस्याभेदेनाभेदःघटस्यघटे नाभेदः एवंसर्वेप्यभेदाःजीवब्रह्माभेदेनाभिन्नाश्चेत्तर्हिघटस्यघटाभेदज्ञानेनैवजीवब्रह्माभेदोज्ञातइतिवेदांतवैयर्थ्यं । नचभेदभ्र मनिवर्तकवृत्तिर्महावाक्यंविनानेतिवेदांतावैयर्थ्यं । अभेदविषयकत्वस्योभयत्रसाम्येएकस्याअनिवर्तकत्वमन्यस्यास्तुनिवर्तक त्वमित्यस्यायोगात् । नन्वभेदत्वस्याभेदत्वेनाभेदोवाघटस्यघटेनाभेदोवानजीवब्रह्माभेदः किंतुजीवस्यब्रह्मणाऽभेदएवजीव

ब्रह्माभेदः । तथाचघटस्यघटाभेदेज्ञातेपिजीवब्रह्माभेदाज्ञानात्तज्ज्ञानार्थंवेदांताइतिनतेषांवैयर्थ्यं । नचैवंमभेदत्वेपिस्वाभेदार्थमभेदोवाच्यइतिभेदाभेदत्वयोरन्योन्यवृत्तिरापन्नेतिवाच्यं । प्रमेयत्वाभिधेयत्वयोरिवप्रमितत्वात्तदुपपत्तेरित्याशंकते ॥ अथतत्रेति ॥ भेदभेदत्वयोरन्योन्यत्वाज्ञानेतयोरन्योन्यवृत्तित्वस्यापादयितुमशक्यत्वात्तज्ज्ञानेचतयोरन्योन्यवृत्तित्वस्यप्रमितत्वान्नतदापादनंदोषइतिपरिहरति ॥ तर्हिप्रकृतेपीति ॥ नन्वनिर्वाच्यत्वादावयंविकल्पोऽनिर्वाच्यत्वप्रयोजकइत्यस्माकमनुकूलएवेत्यतआह ॥ एवंमन्येपीति ॥ बौद्धोद्भावितस्यब्रह्मण्यनिर्वाच्यत्वस्यानिर्वाच्यत्वेब्रह्मणिसत्यस्वरूपत्वस्यतात्त्विकत्ववदनात्मन्यनिर्वाच्यत्वस्यानिर्वाच्यत्वेऽनात्मनिसत्यस्वरूपत्वस्यतात्त्विकत्वापातस्यतवप्रतिकूलत्वात् । ननुभेदखंडनयुक्तयआभासरूपाःनिराकरणानर्हाःकिमितिनिराकृताइत्यतआह ॥ नह्यत्रेति ॥ यद्यजातिरूपाःयुक्तीःपरेऽवक्ष्यन् तर्ह्येताएवनिराकरिष्यामः । नचैवंअतोयंयक्षानुरूपोबलिरितिन्यायेनतथाविधाअपिनिराकृताः । समयपादीयानुव्याख्यानंसंमतयति ॥ तदुक्तमिति ॥ अनात्माश्रयंमृत्तुल्याभित्तिरित्यभ्युपेत्ययः । भित्तेरात्माश्रयंप्राहहतवाक्यस्तथास्तुसः ॥ ७ ॥ विशिष्यभेदखंडनोद्धारः ॥ १९ ॥ ७ ॥ भेदहीनेत्विति ॥ क्वचिद्भेदहीनेप्यपर्यायेतिपाठः । सनयुक्तः । सुधायांतुशब्दोऽवधारणइतिव्याख्यानात् । अपर्यायशब्दांतरनियामकइत्यशेषभेदकार्यनिर्वाहकत्वोपलक्षणं । अनेनैवविशेषलक्षणंचोक्तंभवति । भेदहीनेप्यनुपचरितभेदव्यवहारनिमित्तंविशेषइति ॥ विशेषोनामेति ॥ अभिन्नेपिविशेषकत्वाद्विशेषसंज्ञः । नकेवलंभेदभेदिनोरेववि

न्यायामृ० शेषोंगीक्रियतेऽपितुसर्वत्रापीत्याह ॥ [१३५।१६] सोस्तीति ॥ नन्वखंडवादेज्ञानानंदपदयोःपर्यायत्वेपिसखंडवादेज्ञानत्वानंदत्वयोःप्रवृ तरंगिणी

॥ ५९ ॥ त्तिनिमित्तयोःसत्वान्नज्ञानानंदपदयोःपर्यायत्वप्रसंगोतःसखंडमतेविशेषांगीकारोऽप्रयोजनइत्यतआह ॥ [१३५।२१] सखंडेति ॥ शब्दा विशेषस.

[१३५।२४] श्रयत्वादन्यदिति ॥ आकाशत्वस्याजातित्वेनशब्दाश्रयत्वरूपस्याकाशत्वस्याकाशपदेनप्रतिपादनात् । आकाशशब्दाश्रय

शब्दयोःपर्यायत्वापातात्सहप्रयोगायोगः । नचव्याख्यानव्याख्येयभावादिनातदुपपत्तिः । आकाशत्वशब्दाश्रयत्वयोरविशे २ । १६

षेतद्द्वारकाकाशादिशब्दानांव्याख्येयत्वाद्यनुपपत्तेः । अज्ञातज्ञातयोर्व्याख्येयव्याख्यानरूपत्वात् ॥ [१३५।२४] एकतरेति ॥ एकपरिशेष

इत्यर्थः । तेनज्ञानानंदयोर्भेदाभावेएकतरत्वमेवासिद्धंद्वयोर्विधानेतरविधानादितिनिरस्तं ॥ [१३६।६] धर्माणामनेकत्वंचेति ॥ चैत

न्यमेकंसत्यत्वादीन्यनेकानीतिसंख्यावैलक्षण्यमनेकत्वं ॥ [१३६।६] अनुवादइति ॥ तथाचनधर्मादौश्रुतेस्तात्पर्यं ॥ [१३६।६] अत्यंतभेदेति ॥

तथाचभेदाभेदयोरनुज्ञानाद्धर्मधर्मिभावादियुज्यतइत्यर्थः ॥ [१३६।७] लोकतएवेति ॥ गुणगुणिनोरत्यंतभेदाभावस्यनीलोघटइत्या

दिनालोकतएवसिद्धेर्नतत्रश्रुतितात्पर्यं ॥ [१३६।७] भेदाभेदौचेति ॥ तथाचएवंधर्मानितिश्रुतिर्नभेदाभेदावनुजानातीत्यर्थः ॥ त

[१३६।१६] स्यैवस्वभावविशेषस्येति ॥ तथाचममतप्रवेशः । ननुतत्तदसाधारणस्वरूपमेवस्वभावविशेषशब्देनमयोक्तंनतुत्वदुक्तोवि

शेषइतिनत्वमतप्रवेशः । मैवं । विशेषंविनास्वरूपासाधारण्यानुक्तेः ॥ [१३६।१७] विशेषाभावइति ॥ एतेनस्वनिर्वाहकशब्दस्यस्वेत ॥ २३३ ॥

रानपेक्षव्यवहारविषयत्वमर्थइतिनिरस्तं । अविरोधायस्वेतरापेक्षायाआवश्यकत्वात् ॥ [१३६।१८] स्वनिर्वाहकश्चेतीति ॥ नविशेषेस्व

स्यनिर्वाहकत्वंविशेषांतरंविनानुपपन्नमितिकथंनानवस्थेत्यतआह ॥ [१३६।१८] तस्यतथात्वंचेति ॥ वैशेषिकाभिमतांत्यविशेषवदयंध
र्मिग्राहकमानेनताद्दक्स्वभावतयासिद्धः । नहिस्वयमनुपपन्नमनुपपत्त्यंतरशांत्यैप्रभवतीत्यर्थः ॥ [१३६।१९] प्रमितभेदइति ॥ मुख्यसं
भवेप्रतिनिधेरनादरणीयत्वादित्यर्थः । ननूभयोरपिभेदकार्यकारित्वान्नमुख्योभेदइत्यत्रमानमस्ति । मैवं । सर्वाविवादस्यैव
मानत्वात् । नहिविशेषेसर्वाविवादोस्ति । सर्वसंकरवादिनाभेदवन्मिथ्याभूतस्यापिविशेषस्यानंगीकारात् ॥ [१३६।२०] एतेनेति ॥ भेदा
संभवेविशेषस्यग्राह्यत्वकथनेन ॥ [१३६।२०] अभेदकार्यंत्विति ॥ एतावतापिविशेषसिद्धिः अभेदस्यभेदस्यवाप्रतिनिधिरितिवादांतर
मवशिष्यतइत्यपिबोध्यं ॥ [१३६।२१] एवंचेति ॥ ननुत्रिष्वप्यनुमानेष्वर्थांतरं । अविद्यादेःसर्वत्रनियामकत्वसंभवात् । मैवं । त्वदभि
मताविद्यायाअद्याप्यजीवनान्मोक्षआनंदप्रकाशस्याभावापाताच्चेत्युक्तत्वात् ॥ [१३७।४] घटतद्धर्मिकेति ॥ घटतद्धर्मिकान्योन्याभा
वबुद्धौसमवायादिरूपःस्वरूपप्रत्यासत्तिसंयोगाभ्यामन्यःसंबंधोनविषयइति तंतुपटादिबुद्धितोस्यावैलक्षण्यंनस्यादित्यर्थः ॥
[१३७।१०] तंतुपटादिबुद्धावपीति ॥ तथाचतंतुपटादिबुद्धेःकुंडबदरादिबुद्धितोवैलक्षण्यंनस्यात् ॥ [१३७।११] पुरोवर्तिनेति ॥ यथेदंपदार्थेनघ
टस्याभेदोभासते गजाश्वादिनाचसेनायास्तथातंतुभिःपटस्यशुक्लादिभिश्चाभेदोभासते ॥ [१३७।१२] पटशुक्लयोरिति ॥ पटशुक्लयोरैक्यं
विनापटत्वशुक्लयोरेकस्थत्वासंभवात् ॥ [१३७।१३] अन्यथेति ॥ धर्म्यभेदंविनापिधर्मयोरैकाधिकरण्ये ॥ [१३७।१३] क्वापीति ॥ अयंघटइत्यादा

वपिघटत्वेदंत्वादेरैकाधिकरण्यमात्रं नत्विदंघटयोरभेदइतिस्यात् ॥ [१३७।१३] घटःपटोनेतीति ॥ अत्रापिघटत्वपटत्वयोरेकस्थत्वनिषेधएव नतुघटपटयोर्भेदोविषयःस्यात् । ननुदंडीचैत्रइत्यत्रदंडित्वचैत्रत्वयोरेकस्थत्वेपिनदंडिचैत्रयोरैक्यमतआह ॥ [१३७।१३] दंडीति॥ [१३७।१४] शुक्लवानेवेति ॥ एवंचशुक्लःपटइत्यादिनानपटस्यशुक्लरूपाभेदःसिध्यतीतिभावः ॥ [१३७।१५] शुक्लंरूपमित्यत्रेति ॥ नचैवंशुक्लःपटइतिवच्छुक्लंरूपंपटइत्यपिस्यादितिवाच्यं । प्रतीत्यापादनइष्टापत्तेः शुक्लत्वरूपत्वाभ्यांयुक्तस्यपटाभेदप्रतीत्यंगीकारात् । व्यवहारेरूपशब्दाप्रयोगस्त्वव्यावर्तकत्वात् । उपरंजकत्वेप्यसाधुत्वात् ॥ [१३७।१५] अन्यथेह्यापीति ॥ शुक्लःपटइत्यस्यपटेशुक्लरूपाभेदोनविषयः किंतुशुक्लवदभेदइत्यंगीकारेनायंदंडःकिंतुदंडीतिवत्नायंशुक्लःकिंतुशुक्लीतिधीःस्यात् । नहियावद्द्रव्यभाविशुक्लेकदाप्येवंप्रतीतिरस्ति । ननुशुक्लःपटइतिप्रतीतौमतुब्लोपसत्त्वेनशुक्लवदभेदप्रतीतिमंगीकुर्वाणंप्रतिशुक्लीपटइतिप्रतीत्यापादनमनुकूलमेव । नहिशुक्लवान्शुक्लीतिप्रतीत्योर्विषयभेदोस्तीत्यतआह ॥ [१३७।१५] मतुब्लोपादिकल्पनंत्विति ॥ तथाचप्रतीतौमतुब्लोपादेरभावाच्छुक्लरूपाभेदएवशुक्लःपटइत्यत्रभासते ॥ [१३७।१६] पटस्यशौक्ल्यमिति ॥ यद्यपिपटस्यशौक्ल्यमित्यत्रनपटशुक्लयोर्भेदशंका । षष्ठ्याःशौक्ल्यव्यतिरेकाविषयत्वात् । तथापिशुक्लंरूपमेवपटेशुक्लपदप्रवृत्तिनिमित्तं । तदेवचशौक्ल्यमितिभेदशंका । ननुपटशुक्लादीनांसत्यप्यभेदेकाल्पनिकभेदमादायतथाव्यवहारोपपत्त्याविशेषासिद्धिरित्यतआह ॥ [१३७।२०] नचायंभेदइति ॥ ननुफलवले

[१३७।२१]

नकाल्पनिकभेदस्यसामानाधिकरण्यादिव्यवहारंमात्रनिर्वाहकस्यकल्पनेनविपरीतोल्लेखनंप्रत्यहेतुत्वमतआह ॥ भेदाभेदावि
रोधायेति ॥ [१३७।२] तदुक्तमिति ॥ भवेदित्यतःपरं । भावाभावविभागेनयंविनानकथंचन । एतादृशेविशेषेस्मिन्कोद्वेषोवादिनां
भवेदित्युक्तं । ननुवस्तुभिरभिन्नविशेषस्यसर्ववस्तुष्वेकत्वेवस्तूनामैक्यापत्तिः । मैवं । प्रतिवस्तुनानाविशेषांगीकारात् । एकत्रा
पिवस्तुनियावंतोव्यवहारास्तत्रतावतांविशेषाणामंगीकाराच्च । विशेषविशेषिणोर्विशेषाणांचनमिथोविशेषांतरमंगीक्रियतेतोना
नवस्था । तदुक्तमनुव्याख्याने । विशेषास्तेह्यनंताश्चपरस्परविशेषिणः । स्वनिर्वाहकतायुक्ताःसंतिवस्तुस्वशेषतइति ॥ ७ ॥
॥ ७ ॥ विशेषसमर्थनं ॥ १८ ॥ ७ ॥ [१३८।१५] असाधारण्यादिति ॥ धर्मिसमसत्त्वभेदस्यघटादौसत्त्वेपितत्रसार्वज्ञरूपहेतोरभा
वात् ॥ [१३९।१३] आभाससाम्यादिति ॥ शरीरात्मसंयोगाधारत्वेनहेतुनाऽऽत्मन्यनित्यत्वादेरपिसुसाधत्वात् ॥ [१३९।१७] यत्रहीति ॥ एत
द्व्याख्याख्यातिवाधान्यथानुपपत्तिभंगे ॥ [१४०।१४] यस्यममाज्ञानमिति ॥ नन्वेतावताप्यज्ञानावच्छिन्नएवभेदग्रहोनतुशुद्धे । नहि
सुप्तिकालेअंतःकरणानवच्छिन्नत्ववदज्ञानानवच्छिन्नत्वमप्यस्तीत्यतआह ॥ [१४०।१५] अज्ञानाद्याश्रयाभेदेनचेति ॥ यादृशंचैतन्य
मज्ञानाश्रयस्त्वयोच्यते तस्यनिर्दुःखात्भेदप्रतीतेः । नह्यज्ञानावच्छिन्नमज्ञानाश्रयः । नन्वज्ञानाश्रयशुद्धान्निर्दुःखस्यशुद्धस्य
कथंचिद्भेदःसिध्यतिनतुजीवादतआह ॥ [१४०।१५] संसाराधारस्येति ॥ ममतेजीवस्यैवसंसाराधारत्वाज्जीवएवनिर्दुःखेश्वरभेदःप
र्यवस्यति । तवतुजीवगतशुद्धांशस्यशोधिततत्वंपदार्थरूपनिर्दुःखेनभेदःइतिजीवब्रह्मभेदसिद्धिः । शोधिततत्वंपदार्थयोर्भेदपर्य

जी. ब्र. भे.
२ । १८

वसानात् ॥ चैतन्यांतरादिति ॥ चैतन्यसामान्यादित्यर्थः । चैतन्येचैतन्यविशेषभेदसत्त्वेपितत्रतत्सामान्यभेदस्यमयाप्यनंगीकारात् । एतेनचैतन्यस्यचैतन्याद्भेदोनास्तीत्येतदस्मदनुकूलं भवत्प्रतिकूलंच । नहिभवतांचैत्रमैत्रादिचैतन्यानामैक्यमितिमतमितिनिरस्तं ॥ ७ ॥ भेदपंचकेप्रत्यक्षं ॥ १७ ॥ ७ ॥ तात्विकत्वगर्भसाध्यस्याप्रसिद्धिंपरिहरति ॥ नचाप्रसिद्धेति ॥ जीवब्रह्मणोर्भेदइति ॥ एतच्चोपलक्षणं । जीवब्रह्मणोरतात्विकभेदेपीतिद्रष्टव्यं ॥ तद्विपर्ययस्येति ॥ अतात्विकभेदविपर्ययस्य ॥ अदृष्टद्रव्येति ॥ यथाहीच्छायाअष्टद्रव्याश्रितत्वेबाधकादष्टद्रव्यातिरिक्तंद्रव्यमप्रसिद्धमपिसिध्यति तथाऽभेदेऽतात्विकभेदेचबाधकात्तात्विकभेदोप्रसिद्धएवसिध्यति ॥ प्रतियोगिज्ञानाबाध्येति ॥ प्रतियोगिज्ञानबाध्यत्वसामान्यरहितेत्यर्थः । तेनयत्किंचिदभेदासिद्धिरितिपरास्तं ॥ निरशिष्यतइति ॥ निर्दुष्टानुमितिविषयत्वेनप्रामाणिकतयासिध्यतोभेदस्यमिथ्यात्वायोगादितिवक्ष्यते ॥ नापीति ॥ ब्रह्मसमसत्त्वभेदस्यैतदनुमानात्पूर्वमसिद्धेः ॥ उभयत्रेति ॥ जीवभेदस्यघटसमसत्त्वभेदस्यचघटेसत्त्वेनतत्रहेत्ववृत्तेरसाधारण्यं ॥ अपरेत्वित्यादि ॥ ननुसार्वज्ञाभावरूपव्यापकव्यतिरेकेणसार्वज्ञेनव्याप्यस्यैक्यस्यव्यतिरेकोभेदःपक्षेसिध्यतु तस्यतात्विकत्वंतुकुतः । मैवं । व्यापकव्यतिरेकेणव्याप्यव्यतिरेकस्यसाध्यमानत्वात् । मिथ्याभेदस्यैक्यव्यतिरेकित्वाभावात् । शुक्तौशुक्त्यैक्येसत्यपिमिथ्याशुक्तिभेदस्यसत्त्वात् ॥ दुःखानुभवितृत्वादिति ॥ ननुसर्वानुभवितरिहेतोरसिद्धिः । स्वनिष्ठेतिविशेषणेजीवेव्यभिचारः । दुःखस्यांतःकरणधर्मत्वात् । दुःखकृतविक्रियायादुः

स्वानुभवितृत्वार्थत्वात् । निरसिष्यमाणत्वाच्च ॥ कल्पितमिथ्या[१४४।३]त्वादिनेति ॥ ननुमिथ्यात्वंप्रतिहेतोर्दृश्यत्वादेःस्वसमसत्ताकसाध्यसाधकतयाप्रातिभासिकत्वरूपकल्पितमिथ्यात्वासिद्धिः । किंतुव्यावहारिकंमिथ्यात्वंसिध्यति । मैवं । जीवब्रह्मभेदस्यव्यावहारिकत्वेनतदैक्यस्यतात्विकत्ववन्मिथ्यात्वस्यजगतिव्यावहारिकत्वेनतत्सत्यत्वस्यतात्विकत्वापातात् । ननुजीवब्रह्मशब्दाभ्यामुपहितचैतन्यस्यपक्षत्वेतत्रधर्मिसत्त्वभेदसाधनेपिनभेदस्यतात्विकत्वसिद्धिरित्यतआह ॥ [१४४।५]अत्रचेति ॥ शोधिततत्त्वंपदार्थयोर्ब्रह्मजीवपदाभ्यामभिधानात्तात्विकभेदसिद्धिः । ननुशोधितेतत्रधर्मित्वाभावाद्बाधइत्याशंक्यनिराकरोति ॥ [१४४।८] नचेति ॥ [१४४।९]व्याघातादिति ॥ नचसर्वनिषेधस्यब्रह्मस्वरूपत्वेननव्याघातः सर्वनिषेधश्रुतेर्ब्रह्मस्वरूपमात्रपरत्वपर्यवसानेनतयाभेदविरोधिसर्वनिषेधासिद्धेः ॥ संबंधिशब्द[१४४।९]त्वादिति ॥ नन्वनुमानेशब्दस्वभावोपन्यासोनयुक्तः । मैवं । परार्थानुमानेशब्दस्वभावप्रयोजकतायाउक्तत्वात् ॥ ना[१४६।८]जातएकोन्यंहंतीति ॥ वृश्चिकादीनांजन्मनास्वमात्रादिहंतृत्वं भटानांत्वेकस्यांसमरभूमौघटितानांहंतृत्वमितिलोकेदृष्टत्वात् । परस्परहंतृधर्माश्रयत्वंजीवब्रह्मणोर्भेदासाधकमित्यर्थः । अयंन्यायस्तुजयतीर्थाचार्यकृतवादावल्यांतत्वप्रदीपिकायांचतुर्थपरिच्छेदेचलिखितः ॥ ७ ॥ ७ ॥ जीवब्रह्मणोर्भेदेऽनुमानानि ॥ १८ ॥ ॥ ७ ॥ चंदनप्र[१४९।१]भवेति ॥ दुःखाननुसंधातृत्वमात्रस्यपक्षेऽसिद्ध्यातद्वारणांयमैत्रानुसंहितेतिविशेषणस्योपादानेपिनदोषः । तस्यविशिष्टाभावसंपादकत्वेनहेत्वंतरत्वात् । नचाननुसंधातृत्वमुपाधिः । जीवानामन्योन्यंभेदाभावमतेव्यतिरेकहीनत्वात् ॥ स्वप्रतियोगिता[१५०।३]वच्छेदकेति ॥ अत्रआधारांतेनवद्धत्वमुक्तं । भेदवन्निष्ठत्वंचभेदसमानदेशत्वं । तेनध्वंसस्यप्रतियोगिता

वच्छेदकंननानाबंधानुगतवंधत्वं । तस्यसामान्याभावत्वाभावादितिपरास्तं । नवाबंधप्रतियोगिकभेदवतिकालादौध्वंसस्यवि
द्यमानत्वेनार्थांतरं । नचदुःखनिगडसाधारणवंधत्वासंभवः । वंधत्वप्रकारव्यवहारविषयत्वादेःसंभवात् ॥ [१५१।३] आत्मप्रतियो
गिकेति ॥ नचजडत्वमुपाधिः । व्यतिरेकहीनत्वात् ॥ [१५१।४] आकाशइति ॥ कालभेदंपरमाणुभेदंचादायसिद्धसाधनवारणाय
विशेषगुणविभुपदे । नचशब्दानाश्रयत्वमुपाधिः । अव्यतिरेकत्वात् । ननुकेचिन्मतीयानुमानत्रयेपिकल्पितव्यक्तिभेदेनापि
जातेरुपपत्त्यातात्विकव्यक्तिभेदापर्यवसायित्वेनार्थांतरमतआह ॥ [१५२।११] जातेरिति ॥ [१५२।११] अन्यथेति ॥ ननुजातेर्व्यक्तिभेदसमान
सत्ताकत्वनियमेनप्रातिभासिकभेदस्यव्यावहारिकजातिंप्रतिबाधकत्वंभविष्यति । मैवं । व्यधिकरणत्वात् । अभेदस्यजात्य
दूषणत्वेमयापादितेत्वयाभेदस्यदूषणत्वोपपादनात् । ननूक्तरीत्याकाशत्वमपिजातिःस्यादितितात्विकानेकाकाशसिद्धिःस्याद
तआह ॥ [१५२।१] आकाशत्वादिकंत्विति ॥ ७ ॥ जीवानामन्योन्यंभेदेऽनुमानानि ॥ १९. ॥ ७ ॥ [१५२।११] चक्षुरादिकरणभेदव
दिति ॥ नन्वन्यंकरणभेदेनतथाऽदर्शनेप्यंतःकरणभेदस्यतदैक्याध्यासापन्नेऽननुसंधानप्रयोजकत्वंकल्प्यते अन्यथाब्रह्मैक्य
स्यजीवेश्रुतिसिद्धतयासर्वानुसंधानापत्तेः । मैवं । जीवब्रह्मभेदस्यैवश्रुतिसिद्धतयातद्भेदेप्यननुसंधानोपपत्तेः ॥ [१५२।११] प्रत्यहमिति ॥
ननुसंस्कारात्मनास्थितस्यैवपुनरुद्बोधेनतत्रांतःकरणभेदाभावः । मैवं । संस्कारस्यानंतःकरणत्वेननुसंधानप्रसंगात् । तत्त्वेसु
सौल्यानुपपत्तेः ॥ [१५२।१२] सुसंप्रलीनेति ॥ ननुतेषामनुसंधानप्रयोजकांतःकरणैक्याध्यासरूपसामग्रीविरहान्नसंसारिदुःखानुभवः ।
नहिप्रतिवंधकमात्रेणकार्यविरहः । किंतुसामग्रीविरहेणापि । मैवं । मुक्तौस्वरूपसुखाननुसंधानस्यवक्ष्यमाणत्वात् ॥ [१५२।१३] मुक्ता

विति ॥ नचतस्याजन्यत्वेनांतःकरणानपेक्षा । सुखादिसाक्षिणोपितत्वात् ॥ [१५२।१५] उक्तरीत्येति ॥ चक्षुरादिभेदवदित्यर्थः ॥
[१५३।१] मुक्तस्येति ॥ ननुवैषयिकसुखाद्यनुसंधानेऽविद्यैकत्वस्यतंत्रत्वेनस्वप्रकाशस्वरूपस्फुरणेतदनपेक्षेतिनस्वरूपसुखाननुभवप्र
संगः । मैवं । मोक्षकालीनसुखस्फुरणस्येदानीमपिसत्त्वापातात् । नन्वविद्यातन्निवृत्त्योर्बंधमोक्षयोःशुद्धगतत्वेपिदुःखाद्यनुसं
धातृत्वमुपहितएवेतिनशुद्धभेदापादकमित्यतआह ॥ [१५३।७] दुःखानुसंधानरूपस्येति ॥ [१५३।७] निवृत्तिरेवेति ॥ ननूपाधेःकल्पितत्वेन
निवृत्तावप्युपधेयस्याकल्पितत्वात्तदनिवृत्तेस्तस्यमोक्षान्वयितोपपद्यते । मैवं । घटेनिवृत्तेघटाकाशस्येवोपाधिनिवृत्तानुपहित
स्वरूपस्यापिनिवृत्त्यवश्यंभावात् ॥ [१५३।९] प्रतिबिंबस्येति ॥ तद्वस्त्वंतरत्वस्योपपादयिष्यमाणत्वात् ॥ [१५३।१०] एतेनेति ॥ तत्वज्ञानेन
भोक्तुर्निवृत्तिरेव नतुमुक्तिरित्यापातेन । ननुदुःखाद्यनुसंधातृत्वरूपःसंसारःशुद्धगतएव । नचतस्यसर्वजीवदुःखानुसंधाना
पत्तिः । कल्पितभेदादननुसंधानोपपत्तेरतआह ॥ [१५३।११] शुद्धचिन्मात्रेति ॥ [१५३।१३] धर्मिज्ञानाबाध्यत्वमिति ॥ ननुव्यवस्थायाःस्वस
मानसत्ताकभेदकार्यत्वेननतयाभेदस्यधर्मिज्ञानाबाध्यत्वाक्षेपः । मैवं । यस्मिन्धर्मिणियत्स्वकार्यकारितत्तद्धर्मिज्ञानाबाध्य
मितिव्याप्तिबलेनतदाक्षेपसंभवात् ॥ [१५३।१३] अभेदस्यत्विति ॥ पूर्ववद्व्याप्तिबलेनाभेदस्यमिथ्यात्वं ॥ एतेननेत्राद्यवच्छिन्नस्येति ॥ [१५४।१]
हस्ताद्यवच्छिन्नस्याप्यनुसंधानस्यानुभवसिद्धत्वेननेत्राद्यवच्छिन्नस्यशब्दाद्युपलंभतदुपलंभजन्यसुखाद्यनुसंधानस्यचसत्त्वेनतद

ननुसंधानमसिद्धमित्यर्थः । सोहमितिद्रष्टुःशब्दानुसंधानवच्चेतनैक्येसतिशरीरभेदेप्यनुसंधानानुभवाच्छरीरांतरेऽननुसंधानमसिद्धमित्यर्थः ॥ [१५४।१३] अंतःकरणस्येति ॥ अंतःकरणतदवच्छिन्नज्ञानांभिन्नत्वान्नानुसंधानं ॥ [१५४।१३] शुद्धब्रह्मगतत्वोक्तेरिति ॥ बंधमोक्षयोःसामानाधिकरण्यानुरोधेनत्वयाशुद्धएवानुसंधानात्मकभोगस्यवाच्यत्वात् । ननुशुद्धेऽविद्याभोगस्त्वंतःकरणावच्छिन्ने । मैवं । चोरापराधेनमांडव्यनिग्रहवद्व्यधिकरणत्वेननिरस्तत्वात् ॥ [१५४।१७] तद्द्वारेति ॥ अविद्यावच्छिन्नद्वारेत्यर्थः ॥ शुद्धनि[१५४।२०]ष्ठत्वापत्तेश्चेति ॥ यत्त्वविद्यावच्छिन्नद्वाराशुद्धेऽनुसंधातृत्वमिष्टमेव । अनेनजीवेनेत्यादिश्रुतेरिति । तन्न । नित्यमुक्तत्वादिश्रुतेर्निर्विषयत्वस्यमुक्तोपसृप्याभावस्यचप्रसंगस्योक्तत्वात् ॥ [१५५।१] आत्मभेदइति ॥ ननुतवात्मभेदइवावच्छेदकाज्ञानादिभेदेनममव्यवस्थोपपत्तिः । मैवं । चेतनैक्येसत्यज्ञानादिभेदस्यहस्तादिभेदवदननुसंधानाप्रयोजकत्वस्यबहुकृत्वउक्तत्वात् ॥ के[१५५।५]नचिदिति ॥ तत्त्वप्रदीपिकाकृता ॥ [१५५।८] नाजातइतीति ॥ नाजातएकोन्यंहंति नाप्यन्याधारइतिन्यायस्तुव्याख्यातः ॥ [१५५।९] तदुक्तमिति ॥ उपाधिखंडनइतिशेषः ॥ [१५५।९] सुखदुःखादीति ॥ चैतन्यैक्येसत्यंतःकरणाद्युपाधिभेदमात्रात्सुखदुःखादिभोगोभेदेन नदृश्येत । हस्तपादादिगतभोगवत् । यद्यपिसत्योपाधिकृतसत्यभेदेदूषणतयेदंटीकायांव्याख्यातं तथापिस्वाभाविकेचैतन्यैक्येसतिसत्येभेदेपिनाननुसंधानंयुज्यते किंपुनःकल्पितेभेदइत्यत्रतात्पर्यं ॥ [१५५।१३] नानादेहगेति ॥ स्वरूपैक्येसतिनानादेहगतसु 
खाद्यनुसंधानंसोभर्यादेर्योगिनोदृष्टमतस्तदेवानुसंधानेप्रयोजकं । ननुनानादेहगभोगानुसंधानंयोगिनोस्तीत्यत्रनमानं परबु

द्धेरप्रत्यक्षत्वादतआह ॥ नचेदिति ॥ भोगंविनानानादेहधारणेप्रयोजनाभावात्प्रेक्षावतोयोगिनोनानादेहेच्छानस्यात् । अतो
स्त्येवयोगिनोनानादेहगभोगानुसंधानमित्यनुमीयतइत्यर्थः । स्वाधिकरणेस्वकार्याकारिणऐक्यस्यमिथ्यात्वंस्यादित्यत्रसंमति
माह ॥ अनुसंधानरहितमिति ॥ ननुनिरंशेप्याकाशेयथोपाधिसंबंधस्तथाचैतन्येपिस्यादतआह ॥ एवमिति ॥ गगनादा
वपिस्वाभाविकांशभेदेसत्येवोपाधिःसंबध्यते ॥ नचेदिति ॥ स्वाभाविकांशोगगनादौनांगीक्रियतइतिचेत्तर्ह्युपाधिसंबंधस्तत्रै
कदेशेवाभवति सर्वस्मिन्वा । आद्येत्वन्मतेगगनेस्वाभाविकांशाभावेनानवस्था । अंत्येनभेदकः ॥ ६ ॥ आत्मभेदेऽनुकूल
तर्काः ॥ २० ॥ ६ ॥ ब्रह्मजीवोवेति ॥ नचपरिच्छिन्नत्वंजडत्वंवोपाधिः । ब्रह्मणिसाध्याभावनिश्चयेनव्यतिरेकहीनत्वात्
॥ तत्वतःशुक्त्यभिन्नोनेति ॥ नचतत्वतःशुक्त्यभिन्नत्वरूपप्रतियोग्यप्रसिद्ध्यासाध्याप्रसिद्धिः अद्वैतमतेब्रह्मणिद्वैतमतेचशु
क्तौतत्प्रसिद्धेः ॥ अनात्मेति ॥ ईशभेदेनार्थांतरवारणायांतर्गणिकेति । नन्वेकत्रघटेकल्पितायेऽनेकेघटास्तेषुस्ववृत्तिधर्मान
धिकरणघटज्ञानबाध्यभेदवत्सुव्यभिचारः । मैवं । आरोपितघटावृत्तिधर्मवत्त्वस्याधिष्ठानभूतेघटेऽसिद्धेः । ननुयत्किंचित्स्व
वृत्तिधर्मानाधारोक्तौघटत्वानधिकरणपटज्ञानाबाध्यभेदेनात्मज्ञानबाध्येनार्थांतरं । स्ववृत्त्यशेषधर्मानाधारोक्तौतवमतेब्रह्मणो
पिवाच्यत्वादिकेवलान्वयिधर्माधारत्वेनसाध्यासिद्धिः । मैवं । तादृशज्ञानबाध्यत्वानांसामान्याभावस्यसाध्यत्वान्नार्थांतरं ॥
स्ववृत्तीत्यादि ॥ स्वशब्देनघटादिःतदवृत्तिधर्माधिकरणंचैत्रःतत्प्रतियोगिकश्चैत्रज्ञानाबाध्योयश्चैत्रभेदःतदधिकरणंयोमैत्रः

घटाद्यवृत्तिधर्माधिकरणंचतत्प्रतियोगिकोमैत्रज्ञानावाध्यश्चयोमैत्रभेदःतदधिकरणं । एतेनघटादीनामात्मनःसकाशादात्मनां
चमिथोभेदःसिध्यति । नचाजडत्वमुपाधिः । उपाधिव्यतिरेकवतिजडेसाध्यव्यतिरेकानिश्चयात् ॥ जीवस्यंब्रह्मतइति ॥
नचात्रजीवत्वानधिकरणेत्यंपिसाध्येविशेषणंदत्वाजीवब्रह्मभिन्नात्मनोपिसाधनप्रसंगइतिवाच्यं । वाधात्तदसिद्धेः । जीवब्रह्म
जडानांतद्भेदानांचोभयसिद्धानांतात्विकत्वमात्रस्यसाधनान्नातिप्रसंगः । जीवाज्जडस्यभेदसिध्यर्थमस्यांदीतिविशेषणं । एवम
ग्रेपिवोध्यं ॥ ब्रह्मप्रतियोगिकेत्यादि ॥ आद्यमधिकरणांतंजीवस्यब्रह्मणःसकाशाद्भेदसिध्यर्थं अस्त्वाद्यनधिकरणमितिज
डात् आंतर्गणिकभेदवदितिजीवांतरात् । एवंचब्रह्मजडजीवांतरेभ्योभिन्नांज्जीवात्पृथिव्यांभेदःसत्यंतेनसिध्यति । द्वितीये
नास्त्वादीत्यनेनेश्वरस्यजडभेदः । तादृशादीश्वराद्भेदःपृथिव्यांसिध्यंतीतिपंचापिभेदायुगपत्सिध्यंतीत्यर्थः ॥ भेदहीनमिति ॥
नचमुक्त्यसहवृत्तित्वंजडत्वंचोपाधिः । व्यतिरेकहीनत्वात् । मुक्तिकालेसांध्याव्याप्तेश्च ॥ स्वाबाध्येति ॥ नचानात्मविष
यत्वमुपाधिः । व्यतिरेकहीनत्वात् ॥ घटसंसर्गेति ॥ नचकाल्पनिकाभावस्यकालत्रयवृत्तित्वसंभवेनसिद्धसाधनं । काल्प
निकस्यस्वरूपेणात्यंताभावप्रतियोगितयाएककालसंबंधस्यापितत्राभावात् । ननुघटसंसर्गानवच्छिन्नेतिवत्तादात्म्यानवच्छिन्ने
त्यपिविशेषणंदत्वापंचमाभावसाधनस्यापिप्रसंगइत्यतआह ॥ अत्रचेति ॥ समानाधिकरणेति ॥ मिथ्यात्वेनोभयसिद्धभे
दव्यावृत्तयेऽवाध्यांतंभेदविशेषणं ॥ ७ ॥ ७ ॥ भेदपंचकेऽनुमानानि ॥ २१ ॥ ७ ॥ सिद्धोभेदइति ॥ नचश्रुत्यादिषु

काल्पनिकभेदएवोच्यते । स्वतःप्रमाणश्रुत्यादिसिद्धस्यभेदस्यकाल्पनिकत्वायोगात् । सत्यत्वेबाधकाभावाच्च । अनुपदमेव
निरसिष्यमाणत्वाच्च ॥ [१५।१।१३] जीवत्वावच्छिन्नेति ॥ स्वप्रत्यक्षेणस्वस्मादीशस्यभेदसिद्धावपिपरजीवात्तदसिद्ध्यानानुवादःश्रुतिरि
[१५।१।१३] त्यर्थः ॥ नहिंस्यादित्यादीति ॥ एतच्चसर्वंव्याख्यातंमिथ्यात्वानुमानस्यागमबाधप्रस्तावे ॥ ७ ॥ भेदश्रुतेरनुवादकत्व
भंगः ॥ २२ ॥ ७ ॥ [१६।१।२] स्वर्गाद्यभावोक्तेरिति ॥ नचात्रदैनंदिनसर्गाद्यसंबंधप्रतिपादनेनावांतरमुक्तावप्युपपत्तिः । सामा
न्यतःसर्गप्रलयमात्रनिषेधश्रवणात् ॥ [१६।१।३] मायानिषेधाच्चेति ॥ नचमायाशब्दोमात्सर्यादिपरःनमूलमायापरः । मुख्यार्थहानेः ।
किमुतापरइतिकैमुत्येनसत्त्वादिराहित्योक्तेश्च ॥ [१६।१।५] शुद्धब्रह्मज्ञानफलत्वोक्तेश्चेति ॥ नचात्रसर्ववैषयिकसुखानांब्रह्मानंदेंत
र्भावकथनपरत्वान्नैतद्बलेननानाकामावाप्तिःशुद्धज्ञानफलं । तस्यापदार्थत्वादवाक्यार्थत्वाच्च ॥ [१६।१।५] त्वयापीति ॥ नचभूमवि
द्यावाक्योपक्रमोक्तप्राणविद्याफलमिदंनतुभूमविद्यायाइतिवाच्यं । भूमविद्याफलोक्त्यवसरेउक्तत्वात् । नचेदंभूमविद्यास्तुति
मात्रंनतुफलोक्तिरितिवाच्यं । नपश्योमृत्युंपश्यतिनरोगंनोतदुःखतांसर्वंहपश्यःपश्यतिसर्वमाप्नोतिसर्वशइतिसएकधाभवती
त्याद्युक्त्वासर्वग्रंथीनांविप्रमोक्षइत्यादिनोक्तानांमृत्युराहित्यादीनामप्यफलत्वापत्तेः ॥ [१६।१।७] परंज्योतिरिति ॥ नचात्रजक्षणप्रभृ
तीनामिवगर्भत्वेनत्वदभिमतभेदगर्भक्रीडादीनांपरममुक्तिफलत्वाभावइतिवाच्यं । इवशब्दाश्रवणात् । सउत्तमपुरुषइत्युक्त
व्या० १६६ मत्वस्यापितत्रोक्तस्यासिद्ध्यापाताच्च ॥ [१६।१।८] तदाविद्वानिति ॥ साम्यपदोदितभेदस्यकर्मक्षयरूपपरममुक्तिसमानकालीनत्वमु

 च्यते । नचपरमसाम्यमैक्यमेव । अशब्दार्थत्वात् ॥ [१६।१८] जुष्टमिति ॥ नचदेहान्यत्वमेवान्यशब्दार्थः । संकोचेमानाभावात् । 
॥ ६५ ॥ अन्यशब्दस्यान्यत्रैवप्रसिद्धेश्च । तथाचभेदज्ञानस्यशोकापायरूपमोक्षहेतुत्वमवगम्यते ॥ ७ ॥ ७ ॥ भेदश्रुतेर्व्यावहारिक
भेदपरत्वभंगः ॥ २२ ॥ ०७ ॥ [१६।१३] शब्दांतरादिभिरिति ॥ शब्दांतराभ्याससंख्यागुणप्रकरणांतरसंज्ञाभिः ॥ [१६।१३] एषएवेति ॥ जीवेश-
प्रबोधयत्युत्तिष्ठतिपदाभ्यांप्रबोधयिताउत्थाताचभिन्नःप्रतीयते ॥ [१६।१४] विरुद्धार्थेति ॥ विरुद्धार्थायेधातवःतेभ्योनिष्पन्नंयदाख्या २ । २४
तंतद्विशिष्टंयच्छब्दांतरंयजतिददातीत्यादितेभ्योयथायागदानेभिन्नेतथेत्यर्थः । द्वितीयस्यद्वितीयपादेचिंतितं । यजतिददाति
जुहोतीतिश्रूयते तत्रयागदानहोमानांभावनाःकिमभिन्नाविधीयंतेउतभिन्नावा । यद्यपिधातुभेदादाख्यातपदानिमिथःशब्दां
तरं तथापिप्रत्ययांशःसर्वत्रैकरूपः । तदर्थभावनातदभेदादभिन्ना । यदिहिधात्वर्थान्प्रतिगुणभूताभावनास्यात्ततस्तेषांधातुभे
देनभिन्नत्वाद्भावनापिताःप्रत्युपादीयमानाप्रतिधात्वर्थंभिद्येत । भावनाप्रधानत्वादाख्यातस्य । तांप्रत्युपादीयमानाधात्व
र्थाःसंहत्यैवतांविशिंषंति । यथारुणयाक्रीणातीत्यादावरुणिमादयःक्रयं । तदुक्तं । भावनाप्रत्ययार्थत्वात्तदेकत्वान्नभिद्यते । गु
णभूताहिधात्वर्थानतांभिद्युःकथंचनेति । तस्माद्यागदानादिधात्वर्थैरेकैवभावनावच्छिद्यतइतिनयागदानादिभावनाभेदइति
प्राप्तेसिद्धांतः । यदिधातुसमुदायात्प्रत्ययःश्रूयते द्वंद्वादिवसुप् यदिवाक्रीणातिरिवगुणादिभ्योविविक्तःश्रूयते । तदासर्वैर्धात्वर्थै ॥ ३३९ ॥
र्भावनाविशिष्येत प्रातिपदिकार्थैरिवसुवर्थः । क्रयइवारुणादिभिःप्रत्येकंतुधातुभ्यःप्रत्ययःश्रूयतइतिनैकभावनासंभवः । त

दुक्तं । प्रत्ययाशःसमानोपिप्रतिधातुप्रयोगतः । तत्तदर्थानुसारेणभावनाभेदमावहेत् । निष्पद्येतसमस्तेभ्योधातुभ्यःप्रत्ययो यदि । ततःसर्वविशिष्टास्यात्द्वंद्वोत्पन्नसुवर्थवत् । यदिचप्रत्ययःशुद्धःसर्वधातुपृथक्कृतः । श्रूयेतक्रयंवत्सर्वैर्विशेष्येतसधातुभि रिति ॥ [१६१।१४] नित्यंःपरोनित्योजीवइति ॥ नित्यशब्दाभ्यासःपरजीवौभिनत्ति । एकेननित्यशब्देनपरेशेनित्यत्वेबोधितेपुनस्तत्रैव नित्यत्वस्यैवबोधितस्यबोधनायोगात् । गुणांतरंविधातुंप्रत्यभिज्ञारूपपुनःश्रुतेरभेदकत्वादप्रत्यभिज्ञायमानेत्युक्तं । अधिकर णंतु । समिधोयजंतितनूनपातंयजति इडोयजतिबर्हिर्यजतिस्वाहाकारंयजतीतिपंचकृत्वःश्रुतयजतिनैकोयागउच्यतेपंचवा । तत्राख्यातभेदाभावाद्धातुभेदाभावाच्चैकएवयागः । तदुक्तं । प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वंप्रतिष्ठितं । तदेकत्वात्तदर्थोपिनभे दंप्रतिपद्यतइतिपूर्वःपक्षः । सिद्धांतस्तु । यद्येकमेवकर्मस्यात्तर्हितस्यपूर्ववाक्येनविहितत्वात्पुनर्विधानमनुपपन्नं । अतःपुनर्वि धिवशात्कर्मभेदः ॥ [१६२।२०] द्वासुपर्णेत्यादीति ॥ अत्रहिजीवेशगतयासंख्ययैवतयोर्भेदःसाधनीयः । विचारितंचैतत् । सप्तदशप्रा जापत्यान्पशूनालभतें अत्रकिंसप्तदशपशुद्रव्यकएकोयागःकिंवाएकैकपशुद्रव्यकाःसप्तदशयागाइति । तदर्थंविचार्यते । प्रा जापत्यानितिप्रकृत्याप्रजापतिदेवताभिधीयते तद्धितेनपशुर्द्रव्यं वहुवचनेनवहुत्वं । तत्रतद्धितार्थःपशुर्वहुत्वेनप्रथममन्वितः पश्चात्प्रजापतिनादेवतयासंबध्यतेपशुश्चपशुश्चपशुश्चतेषांप्रजापतिर्देवतेतितदावहुभिःपशुभिर्व्यासज्यैकादेवतासंवध्यतइतिद्रव्य देवतासंबंधैक्यादेकोयागोभवति किंवाप्रथमंप्रजापतिनान्वितःपश्चाद्वहुत्वेनसंवध्यतेप्रजापतिर्देवताऽस्येतिप्राजापत्यश्चप्राजाप त्यश्चप्राजापत्यश्चप्राजापत्यावहवइति तदाभिन्नैर्द्रव्यदेवतासंबंधैर्भिन्नाएवयागाःकल्प्यंते । तत्रप्राजापत्यशब्देनदेवतासंबंधोपस

र्जनद्रव्यमेवप्राधान्येनोच्यते यश्चप्रधानंतस्यैवार्थांतरेणवहुत्वेनसंवंधोनोपसर्जनस्यदेवतासंवंधस्य । ननुदेवताविशिष्टंद्रव्यम भिहितंविशिष्टेनैवरूपेणसंख्यान्वयिस्यान्नस्वरूपेण । न । द्वौत्रयइत्यत्रानैकांत्यात् । नहिद्वावित्यत्रद्वित्वविशिष्टेनरूपेणद्विवचना भिहितसंख्यान्वयः । तथासतिद्वावित्यत्रचत्वारःप्रतीयेरन् । एवंत्रयइत्यत्रनव । तस्माद्यथातत्रद्वित्वविशिष्टमपिद्रव्यंद्विशब्देनो क्तंस्वरूपेणद्विवचनाभिहितसंख्यायोगंप्रतिपद्यते तथात्रापितद्धिताभिहितंद्रव्यंस्वरूपेणैववहुत्वंप्रतिपद्यतेनसोपसर्जनं । तस्मा देकंकर्मसप्तदशपशुद्रव्यकमितिपूर्वपक्षयित्वासिद्धांतितं । स्वरूपेणैवसंख्यान्वयादेकयागत्वेतत्रप्रकृतिभूतादग्नीषोमीयपशोर्हृद यंजिह्वावक्षोयकृत्वृक्कौसव्यंदोरुभेपार्श्वेदक्षिणाश्रोणिर्गुदतृतीयमितिदैवतानीतिविहितस्यैकस्यैवएकपशुनिष्पन्नावदानगण स्यातिदेशतःप्राप्तस्यानुष्ठानेसप्तदशपशूनांप्राजापत्यत्वंनसंपादितंस्यात् । नचोपदेशेनातिदेशबाधः देवतासंवंधविशिष्टेपशुद्रव्ये सप्तदशसंख्यान्वयांगीकारेतिदेशोपदेशयोरवाधेनैवोपपत्तावतिदेशवाधकल्पनायोगात् । तस्मात्सप्तदशयागाइति ॥ अनश्नन्नि त्यादेर्भेदकस्यगुणांतरस्येति ॥ यथावैश्वदेव्यामिक्षावाजिभ्योवाजिनमित्यत्रपूर्वविहितस्यकर्मणःप्रबलगुणावरुद्धत्वात्तत्रस्व निवेशमलभमानःस्वात्मसंगतयेवाजिभ्योवाजिनमित्येतस्यविधेःकर्मांतरोत्पत्तिपरतांकल्पयन्वाजिनाख्योगुणोभेदकोभवति तथाऽत्तीत्यदनाख्यंगुणावरुद्धेजीवेऽनश्नन्नित्यस्यगुणस्यानिवेशादशनाख्योगुणःस्वनिवेशायजीवपरमात्मनोर्भेदमाचष्टे ॥ यतो वाचोनिवर्ततेइत्यादीति ॥ यथाकुंडपायिनामयनेश्रूयतेउपसद्भिश्चरित्वामासमग्निहोत्रंजुहृतीति । अत्रनित्याग्निहोत्रानुवादेन मासाख्यगुणोनविधातुंशक्यते । नित्याग्निहोत्रेउपसदामभावेनतद्विपरिवृत्तेरभावात् । तस्मादग्निहोत्रसंज्ञंकर्मांतरमभिधीयते

तथायतोवाचोनिवर्ततइत्यत्रजीवस्यासन्निहितत्वात्तत्रवाङ्मनसवृत्त्यविषयत्वविधानासंभवाद्यस्मिंस्तद्विधीयतेसजीवाद्भिन्नइति
१६।१७
सिध्यति ॥ जीवेशादीति ॥ यथाअथैषज्योतिरथैषविश्वज्योतिरेतेनसहस्रदंक्षिणेनयजेतेत्यत्रज्योतिरादिसंज्ञाभ्यःकर्मभेद
सिद्धिः । तदुक्तं । नामांतरश्रुतावर्थभेदस्तावत्प्रतीयते । बलवद्वाधकाच्चासावन्यथात्वंप्रपद्यते ॥ नचात्रबलवद्बाधकमस्तियेन
संज्ञानिमित्तोभेदोपोद्येतेति । तथाजीवेशसंज्ञाभ्यांतयोर्भेदःसिध्यति । ननुशब्दांतरादीनांप्रत्यक्षाक्लिसमकक्ष्यतयाभेदकत्वेपि
नतेषांतात्विकाभेदविरोधित्वं । मैवं । वेदतात्पर्यविषयस्यतात्विकत्वनियमेनभेदविरोध्यभेदस्यपारमार्थिकत्वानुपपत्तेः । ननु
कर्मभेदेप्रमाणत्वेनक्लृप्तानांशब्दांतरादीनांचचेतनभेदेप्रमाणत्वं । नह्यन्यभेदेप्रयोजकस्यान्यभेदप्रयोजकता । मैवं । विरुद्ध
धातुनिष्पन्नाख्यातरूपशब्दांतरयोगादिनायथानेकंकर्मेतिगम्यतेतथानेकश्चेतनइतिततएवावगम्यते । नहिवोधयत्युत्तिष्ठती
त्यत्रवोधयितोत्थाताचभिन्नइतिनप्रतीतिः । ननुविशेषणभेदाद्विशिष्टस्यभेदःप्रतीयतेनविशेष्यस्य । मैवं । प्रतीतस्यापिविशे
ष्यभेदस्यप्रत्यभिज्ञानादिनाऽभेदप्रमाणेनत्याज्यत्वात् । नचात्रभेदत्यागकारणंप्रत्यभिज्ञादिकमस्ति । प्रत्युतैषएवजीवमेतस्मा
ज्जीवइत्यप्रभिज्ञैवं । एतेनशब्दांतरस्यनकर्तृभेदकतेतिनिरस्तं ॥ ७ ॥ जीवेशाभेदेशब्दांतरादि ॥ २४ ॥ ७ ॥ अस्तिअन
श्नन्नित्युपपत्तिरिति ॥ ननुद्वितीयमुंडकेपुरुषएवेदंविश्वंब्रह्मैवेदंविश्वमिदंवरिष्ठमित्यभेदोक्तिसत्वात्तद्विरोधः । मैवं । एत
स्यइदंसर्वंयदयमात्मेतिश्रुत्यर्थेव्याख्यातत्वात् । नचतृतीयमुंडकगतेन परेव्ययेसर्वेएकीभवंति सयोहवैतत्परमंब्रह्मवेदब्रह्मैवभ
वतीत्यनेनविरोधइतिवाच्यं । एतस्याहंब्रह्मास्मीतिश्रुत्यर्थेव्याख्यास्यमानत्वात् । वस्तुतस्तुप्रथममुंडकेकस्मिन्नुभगवोविज्ञाते

सर्वमिदंविज्ञातंभवतीतिशौनकेनांगिरसंप्रतिपृष्टेपरापररूपेणद्वेविद्येअंगिराःप्रतिजज्ञे । तत्रइंद्राद्यवांतरार्थपरत्वेऋगाद्याएवा
परविद्याः उत्तमाक्षरपरत्वेतुताएवपरविद्याइत्युक्तस्यऋगाद्युत्तमत्वस्यसिद्ध्येतदर्थभूतस्योत्तमाक्षरस्यसर्वोत्तमत्वंप्रतिपादयितुं
सर्वकारणत्वमक्षरस्योक्तं । द्वितीयमुंडकेपिप्राणादिकारणत्वमुक्तं तृतीयमुंडकेतुद्वासुपर्णेत्याद्युक्तमितिसर्वस्याःमुंडकत्रयात्मि
कायाउपनिषदउत्तमाक्षरपरत्वेनभेदपरतयातन्मध्यस्थितस्यपुरुषएवेदमित्यस्याभिक्रमणादिवत्तदनुकूलत्वेनैवनेयत्वान्नतद्विरो
धः०। तृतीयस्यप्रथमपादेविचारितं । दर्शपूर्णमासयोःप्रयाजसमीपेश्रूयते अभिक्रामंजुहोतीति । अभिक्रम्यजुहोतीत्यर्थः ।
णमुल्प्रत्ययांतमभिक्रमणंनक्रियातोऽन्येनसंबद्धुमर्हतीतितस्यजुहोतिक्रियान्वयेस्थिते होमानुवादेनविधीयमानमभिक्रमणंकिं
प्राकरणिकसर्वहोमांगमुतप्रयाजहोमस्यैवेतिसंशयः । तदर्थंकिमवांतरप्रकरणमस्तिनवेति । तत्रांगभावनानामन्योन्याकांक्षा
रूपावांतरप्रकरणसत्त्वेंगानामन्योन्यांगांगितापत्त्याव्यवस्थापत्तेर्नावांतरप्रकरणंनामास्ति । तदभावेचसन्निधिमात्रेणाभिक्रम
णंप्रयाजांगंस्यात् । सचदुर्बलःप्रकरणादतोदर्शपूर्णमासभावनयासंबंधात्तदीयसकलहोमांगमभिक्रमणं । नन्ववांतरप्रकरणा
भावेप्यभिक्रामंजुहोतीतिवाक्येनैवप्रयाजांगमभिक्रमणंस्यात् । मैवं । जुहोतेःसाधारणत्वेनप्रयाजमात्रपरत्वाभावात् । नन्व
नुवादोयंससन्निहितंगामी प्रयाजाश्चसन्निहिताः । मैवं । बुद्धिविपरिवृत्तिरनुवादस्यापेक्षितानपाठप्रत्यासत्तिः । तथासत्यत्यं
तसन्निधानादुत्तमप्रयाजस्यैवाभिक्रमणमंगंस्यान्नसमिदादीनां । तस्माज्जुहोतिशब्देसंकोचाभावात्सर्वहोमांगमभिक्रमणमिति
प्राप्ते सिद्धांतः । भवेदेवंयद्यवांतरप्रकरणंनस्यात् । अस्तितुतत् । प्रयाजान्विधायत्रीन्प्रयाजानिष्ट्वासमानयतउपभृतइत्यने

नोपभृतःसकाशादर्धमाज्यंजुह्वांकर्तव्यमित्येवंरूपंसमानयनरूपंगुणंविधाय अभिक्रामंजुहोतीत्यभिक्रमणंविधाययोवैप्रयाजानांमिथुनंवेदसमिधोवह्वीरिवयजतितनूनपादेकइवेत्यादिप्रयाजानिष्ट्वाहवींष्यभिधारयतीत्यंतंप्रयाजपरामर्शदर्शनात् । नूनमेतावताप्रदेशेनप्रयाजाःसमाप्यंतइत्यवगमात्तन्मध्यपतितमभिक्रमणंतदतिक्रमेणान्यत्रनगच्छति । विद्यतेचांगभावनानामप्यविज्ञातप्रकारत्वात्कथमित्याकांक्षा । ननुतर्हिपरस्परांगांगितापत्तिः । मैवं । संदंशाभावात् । तदुक्तं॰। नविद्यतेतुसंदंशोयत्रवाचनिकैर्गुणैः । तत्रांगानांकथंभावःसन्नप्यविनियोजकः । निष्फलत्वेचसर्वेषांनविशेषोवगम्यते । कःशेषःकस्यशेषित्वमतःसर्वेप्रधानगमिति । तस्मात्संदंशाभावान्नाव्यवस्था ॥ [१६२।६] पदिन्यायेनेति ॥ व्याख्यातमेतन्नतुद्वितीयमस्तीतिश्रुत्यर्थे ॥ ७ ॥ ७ ॥
भेदश्रुतेःषड्विधतात्पर्येलिंगानि ॥ २९ ॥ ७ ॥ [१६२।१२] पर्यायस्येति ॥ ननुज्ञानानंदयोरात्मैक्येपियथापर्यायत्वादिकंनकल्पितानंदत्वादिधर्मात् तथात्मैक्ययोरपीतिचेन्मैवं । कल्पितेनैकतरपरिशेषाभावसंपादकेनवास्तवैकतरपरिशेषानिवृत्तेः॥ [१६२।१५] स्वरूपइति॥ प्रकाशमानेऽज्ञानायोगादित्यादिनानिरस्तमित्यर्थः ॥ [१६४।६] शून्यस्येति ॥ ननुतदवृत्तिधर्मानधिकरणत्वोपलक्षितस्वरूपमैक्यं शून्यंतुनिःस्वरूपमतोनतस्यैक्यत्वं । मैवं । स्वरूपत्वादिधर्महीनस्यैक्यस्यसस्वरूपत्ववच्छून्यस्यापिसस्वरूपत्वसौलभ्यात् ॥
[१६३।७] विशेषेति ॥ ननुविशेषनिषेधेपिनशेषाभ्यनुज्ञा । वायौननीलंरूपमित्यस्यगौरंप्रत्यननुज्ञातत्वात् । मैवं । विशेषनिषेधशेषाभ्यनुज्ञान्यप्रकारासंभवेतस्यतथात्वनियमात् । वाय्वादौतुनीरूपत्वरूपतृतीयप्रकारस्यापिसंभवात् । आकाशादिवत् । प्रकृ

तेतुतदवृत्तिधर्मानधिकरणत्वतद्वृत्तिधर्माधिकरणत्वाभ्यामन्यस्यप्रकारस्यादर्शनेनतदसंभवात् । अन्नैवतथेत्युक्तेत्वन्योन्याश्र
॥ ६८ ॥ यात् ॥ [१६३।९] तन्मात्रस्येति ॥ आत्मस्वरूपमात्रस्येत्यर्थः । ननुजीवावृत्तिधर्मानधिकरणत्वोपलक्षितात्मस्वरूपंपरैर्नांगीकृतमत ऐ. श्रु. उ.
स्तदेवमच्छास्त्रविषयः । मैवं । उक्तोपलक्षितत्वस्यात्मनिविशेषणत्वेउपलक्षणत्वेचतस्यसखंडत्वापातात् । ताभ्यांरहितस्यात्म २।२७
स्वरूपमात्रस्यत्वच्छास्त्राविषयत्वात् ॥ [१६३।१०] भेदएवेति ॥ अभेदःखंडयोरस्माकंनतुभेदःसाध्यइत्यस्यापिसुवचत्वात् ॥ ७ ॥ ७ ॥
ऐक्यस्वरूपभंगः ॥ २६ ॥ ७ ॥ [१६३।१९] विरुद्धाकारस्याविवक्षायामपीति ॥ अविवक्षामात्रेणवस्तुनोन्यथात्वाभावात् । ननु
त्यागोनामनाप्ययः । अप्ययस्यचरमसाक्षात्कारसाध्यत्वात् । किंतुब्रह्मानुभवाविषयत्वमित्यतआह ॥ [१६३।२०] नहीति ॥ सुवचंहि
सत्वशून्यत्वयोश्चित्त्वजडत्वयोश्चाविवक्षयासच्छून्याभेदानुभवंप्रतिचिज्जडाभेदानुभवंचप्रत्यविषयत्वमात्रेणसच्छून्ययोश्चिज्जड
योश्चाभेदसिद्धिरिति । ननुसच्छून्ययोश्चिज्जडयोर्विरुद्धाकारपरित्यागेआकारांतराभावः । असतोनिःस्वरूपत्वात् । जडस्य
चाध्यस्तरूपत्वात् । मैवं । सर्वज्ञत्वनिर्दुःखत्वादिधर्मग्राहकमानसिद्धाकारपरित्यागेब्रह्मण्यप्याकाराभावाच्चित्त्वादिप्रकारत्या
गेचिदाकारस्याप्यसंभवाज्जीवेप्रत्यक्षबाधितस्यब्रह्मगतपूर्णानंदाकारस्यापित्यक्तव्यत्वेनपूर्णानंदैक्यासिद्धेश्च । किंच विरुद्धा
कारसंत्यागोयद्यैक्यस्योपपत्तये । तर्ह्यैक्यंत्यजमुख्यस्यविरुद्धस्योपपत्तये । तच्चममापिसंमतमिति । ननुचित्त्वैक्येतवसंमताव ॥३४२॥
पिनतदाश्रयैक्येपिसंमतिः । मैवं । चितोपिचित्त्वाश्रयस्याभेदेनचित्त्वाश्रयैक्येपिममसंमतेः । नहिघटोघटत्वाश्रयाभिन्नइत्यु

क्तेघटांतरेणाभेदश्चायाति। येनेदंवाक्यंममासंमतार्थंस्यात् ॥ [१६५।१५] पुरोडाशकपालेनेति ॥ दर्शपूर्णमासयोःश्रूयंतेपुरोडाशकपालेन तुषानुपवपतीति । अत्रपुरोडाशकपालशब्देनपुरोडाशरूपविशेष्यान्विततयोपस्थितस्यतुषोपवापलक्षणशेषांतरेणाकांक्षाविरहात् अन्वयासंभवलक्षणस्यविनियुक्तविनियोगदोषस्यपरिहारायपुरोडाशकपालशब्दस्यवस्तुतःपुरोडाशश्रपणशेषत्वाधिष्ठानैककपालस्वरूपेलक्षणेतिवर्णितंचतुर्थाध्याये॥ [१६५।१७] इहत्विति ॥ जीवस्यापिचित्त्वेनचिदभेदस्यमयाप्यंगीकारादित्यर्थः ॥ [१६५।१८] अन्यथेति ॥ धर्मिग्राहकविरोधंस्योपजीव्यविरोधाभावे ॥ [१६५।१९] उत्पत्तिशिष्टेति ॥ वैश्वदेव्यामिक्षावाजिभ्योवाजिनमित्यत्रोत्पत्तिशिष्टामिक्षारूपगुणावरुद्धेयागेउत्पन्नशिष्टवाजिरूपगुणस्यानन्वयः । उत्पत्तिवाक्यविरोधादितियदुच्यतेमीमांसकैःतदपितवमतेनस्यादित्यर्थः ॥ [१६५।२४] एतेनैक्यश्रुतेरिति ॥ तत्त्वमस्यादिश्रुतेर्धर्मिग्राहकरूपत्वान्नतस्याःधर्मिग्राहकश्रुत्यंतरापेक्षेत्यर्थः ॥ [१६६।२०] एतेनाभेदंनोल्लिखंतीधीरिति ॥ भेदग्राहकंप्रत्यभेदग्राहकस्यानुपजीव्यत्वेन । अभेदंगृह्णन्ज्ञानभेदंगृह्णाति । भेदस्यांभेदंपूर्वकत्वात् । एवंचाभेदांशेसाभेदप्रतीतिःप्रमास्यात् । नतुभेदांशे । स्वापेक्ष्यवैशसात् । स्वोपजीव्यस्यनाशनादित्यर्थः ॥ [१६६।२२] बलादिति ॥ भेदश्रुतेर्बलवत्त्वात् ॥ ६ ॥ ६१॥ ऐक्यश्रुतेरुपजीव्यबाधः ॥ २७ ॥ ॥ [१६६।२३] एकस्मिन्निति ॥ दशमस्यचतुर्थपादेचिंतितं । अग्निष्टोमेउपावर्तध्वमित्यनेनमंत्रेणदर्भाभ्यांचस्तोत्रोपाकरणमस्ति । वाजपेयेश्रूयते रथघोषेणमाहेंद्रस्यस्तोत्रमुपाकरोति ।

तत्वमसि- २ । २८

तदिहकिंरथोदर्भयोर्निवर्तकोघोषोमंत्रस्य उतरथस्यघोषउभयोर्निवर्तकइतिसंशयेषष्ठीतत्पुरुषेपूर्वपदस्यलक्षणापत्त्याद्वंद्वएवाश्रयणीयः । एवंचद्रव्यत्वसामान्याद्रथोदर्भयोर्निवर्तकःशब्दत्वसामान्यात्घोषोमंत्रस्य । एवंचनावश्यंरथस्यैवघोषआदर्तव्यः । घोषस्याविशेषणाद्येनकेनचिद्घोषेणकार्यसिद्धेरितिपूर्वपक्षेयद्यपीतरेतरयोगद्वंद्वेपदद्वयमपिश्रुतिवृत्तंभवति तथापिरथघोषाभ्यामितिद्विवचनंप्राप्नोतीति । समाहारार्थेतुद्वेअपिपदेलक्षणार्थेस्यातां । तत्रपूर्वपदमात्रेलक्षणामंगीकृत्यषष्ठीसमासाश्रयणं । तस्माद्रथस्यघोषउपाकरणस्यसाधनं । सचप्राकृतसाधनंमंत्रदर्भौनिवर्तयतीति । उपाकरणंनामस्तोत्रपाठायोद्गातुःप्रेरणं ॥ [१६६।२३] तत्साहचर्यादिति ॥ वसंतादिभ्यष्ठगित्यत्रभाष्येतदधीतेतद्वेदेत्यधिकाराद्वसंतमधीतइत्यर्थासंभवाद्वसंतशब्देनवसंतसहचरितउच्यते । यत्रवसंतोवर्ण्यतेयोवावसंतेऽध्येयःसग्रंथोवसंतसाहचर्यात्ताच्छब्द्यंलभतइत्युक्तं ॥ [१६६।२५] तदाश्रितत्वादिति ॥ समर्थःपदविधिरित्यत्रसमर्थाधिकारस्यविधेयसामानाधिकरण्यान्निर्देशानर्थक्यमितिवार्तिकं । अस्यार्थःकैयटे विधिशब्दःकर्मसाधनउपात्तःतस्यसंबंधीसमासादिरर्थोवाच्यः । तत्समानाधिकरणंचसमर्थपदमुपात्तं । तत्रासमर्थानांसमासस्यानिवर्तितत्वात्समर्थवचनेननकिंचित्कृत्यं । तथाहि । समर्थानांयःसमासःससमर्थएवयोह्यसमर्थनांभार्याराज्ञःपुरुषोदेवदत्तस्येत्यादौसोपिनियमाभावान्निवृत्तएव । तस्यासमर्थस्याप्यनेनसमर्थग्रहणेननकिंचित्क्रियते । निवृत्तत्वात् । तदनेनपूर्वपक्षयित्वासिद्धांतितं । समर्थपदाश्रयत्वात्पदविधिरुपचारेणसमर्थपदेनोच्यते । एवंचकुद्धस्यराज्ञःपुरुषइत्यादौसमासोव्यावर्तितोभवंतिसमर्थवचनेनेति ॥ [१६७।१३] इग्यणइति ॥ इग्यणःसंप्रसारणमितिसूत्रेणयणःस्थानेयइग्वर्णःससंप्रसारणसंज्ञश्चेत् ष्यङःसंप्रसारणमित्यादौदोषः नहिअङ्गेयण

स्थानेइक्सिद्धोस्तिय:अङःसंप्रसारणमित्यनेनविधीयेतेत्यादिनावर्णसंज्ञापक्षंदूषयित्वायणःस्थानेइक्भवनरूपोयोवाक्यार्थःससं प्रसारणसंज्ञइतिद्वितीयंपक्षमुद्भाव्यतमपिवाक्यार्थस्यासत्त्वभूतस्यस्थानित्वाभावात् संप्रसारणस्येत्यादौदोषइतिसूचयित्वानैष दोषः यथाकाकाज्जातःकाकः श्येनाज्जातःश्येन एवंसंप्रसारणाज्जातंसंप्रसारणं· तथाचवाक्यार्थस्यासत्वरूपस्यस्थानित्वाद्यभा वेपिसंप्रसारणसंज्ञकार्थाज्जातोयइकारादिवर्णःसोपिसंप्रसारणसंज्ञकइतितस्यस्थानित्वाद्युपपत्तिरित्युक्तंमहाभाष्ये । ननुकाक त्वाभिसंबंधात्काकःतत्कथमुच्यतेकाकाज्जातःकाकइत्याशंक्य यदानुपजातजात्यभिव्यंजकसंस्थानविशेषःकाकोभवतिनिर्ज्ञातं चतस्यकाकाज्जन्मभवतितदैतदुक्तं "एवमिहापिसंप्रसारणाज्जातत्वाद्वर्णोपिताच्छब्द्यंलभतइत्युक्तंकैयटे ॥ धान्यमसीति ॥ दर्शपूर्णमासयोःपेषणार्थंदृषदिनिक्षिप्तानांतंडुलानामनुमंत्रणार्थं धान्यमसिधिनुहिदेवान् धिनुहियज्ञमित्यादिमंत्रःपठ्यते । अ स्तिचशाक्यांनामयनंनामसत्रं । तन्नतरसमांसमयाःसवनीयपुरोडाशाविहिताः । तत्रमांसमयपुरोडाशेऽस्मिन्मंत्रेतिदेशेनप्रा प्तेसंशयः किमत्रधान्यपदस्थानेतरसमित्यूहनीयंनवेति । तत्रप्रकृतौ तंडुलावस्थायांप्रयुज्यमानेऽस्मिन्मंत्रे धान्यशब्दस्यसतु षवचनस्यसमवेतार्थत्वाभावादसमवेतार्थस्यदेवस्यत्वासवितुरित्यादिमंत्रेसवित्रादिपदवदनूह्यत्वान्नैवमूहितव्यमितिप्राप्ते धान्य शब्दस्यद्रव्यप्रकाशनरूपदृष्टार्थकल्पनौचित्यात्तस्यचसतुषवाचिनोलक्षणयातत्प्रकृतिकतंडुलप्रकाशकत्वसंभवात्समवेतार्थतया तदूहितव्यमितिसिद्धांतितंनवमस्यप्रथमपादे । धान्याधीनत्वतोधान्यशब्दस्तंडुलेगोयथा । एवंजीवेतदितिगीरीशाधीनतया भवेत् । नन्वभेदेतात्पर्येवधृतेतन्निर्वाहायलक्षणावाहुल्यंनदोषः । मैवं । तात्पर्यस्यैवेदानींविचार्यमाणत्वात्तदवधारणस्या

सिद्धेः । अतएवान्यथातत्वमसीत्यादिवाक्यमबोधकंस्यादित्यादिनातात्पर्याभावमेवाविष्करोति ॥ अतिदेशोयमिति ॥ बहुगणवतुडतिसंख्येत्यत्रबहुगणादीनांसंख्यासंज्ञावाच्यत्वेदेकद्वित्रीत्यादिकायाःसंख्यायाःसंख्यापूर्वोद्विगुरित्यादिषुसंख्याप्रदेशेषुग्रहणंनस्यात् । कृत्रिमाकृत्रिमयोःकृत्रिमेकार्यसंप्रत्ययइतिन्यायेनकृत्रिमसंख्यासंज्ञानांबहुगणादीनामेवस्यादितिपूर्वपक्षयित्वानेदंसंज्ञाकरणंकिंत्वतिदेशोयं बहुगणवतुडतयःसंख्यावद्भवंतीतिपरिहृते ननुतर्हिसूत्रेवतिनिर्देशःकर्तव्यः नत्वंतरेणवतिमतिदेशोगम्यतइतिपुनराशंक्यांतरेणापिवतिमतिदेशोगम्यते तद्यथाअब्रह्मदत्तमित्यादिनापरिहृतं । ननुजहदजहल्लक्षणायांविशेषणांशत्यागेपिविशेष्यांशात्यागान्मुख्यार्थपरत्वेसंभवतिनतत्सहचरिताद्यर्थकजहल्लक्षणायुक्ता । तस्यांमुख्यार्थस्यसर्वथात्यागादित्याशंक्यनिराकरोति ॥ नचैवंमुख्यार्थत्यागइति ॥ तद्ब्रह्म त्वमंतर्यामीत्यर्थेमुख्यार्थत्यागाभावादित्याह ॥ अंतर्यामिणीति ॥ तवमतेनकोपितत्त्वमसीत्यस्यमुख्यार्थोस्तीतिभावः । ननुतथापिलक्षणापक्षेंतरंगत्वादजहल्लक्षणैवास्तु नतुजहल्लक्षणा बहिरंगत्वादतआह ॥ त्वद्रीत्येति ॥ नन्वेकत्वेपिबुद्धिस्थमुख्यार्थसंस्पर्शित्वादजहल्लक्षणैवयुक्तेत्यतआह ॥ किंचेति ॥ प्रकृतेशुद्धइति ॥ शुद्धस्यकथमप्यप्रकृतत्वेतत्पदलक्षणापितत्रनस्यादित्यर्थः ॥ शुद्धस्येति ॥ नहिवाचकमपिगोपदंगोपदावाच्यस्यापिवाचकंस्यादिति । तथाचपंदद्वयेपिलक्षणैवेत्यर्थः ॥ तदित्येकपदेति ॥ तत्त्वमसीत्यत्रमुख्यार्थत्वायतत्पदस्यप्रकृतचिन्मात्रपरत्वेतदैक्षत तत्तेजोसृजतेत्यादावपितत्पदस्यचिन्मात्रपरतायामीक्षतिसृजतीअमुख्यार्थौस्यातां चिन्मात्रेलक्षणाद्य

योगादित्यर्थः ॥ [१६८।२] प्रथमैकवचनेति ॥ सुपांसुलुगितिसूत्रेयत्सुत्वंतितत्सामिधेनीरन्वाहुः यस्मिन्तस्मिन्निंतिप्राप्तइत्यादिनास
प्तम्येकवचनस्यप्रथमैकवचनादेशइतिकाशिकायामुक्तत्वात्तद्वदत्रापिप्रथमैकवचनादेशइत्यर्थः ॥ [१६८।३] मीमांसकैरिति ॥ हविर्धा
नाख्यगृहंमध्येदक्षिणोत्तरप्रदेशयोःसोमाख्यहविर्धारणार्थंहविर्धानसंज्ञकेद्वेशकटेस्थाप्येते । तयोर्मध्येदक्षिणहविर्धानेसोमाभि
षवःक्रियते । तंत्रसामिधेन्यनुवचनंविधातुंउतयत्सुन्वंतीत्यादिवाक्यं । तत्रयत्तत्पदयोःसप्तम्यर्थकत्वंमीमांसकैरुक्तमित्यर्थः ॥
[१६८।४] हविर्धानइति ॥ हविर्धानसमीपेस्थित्वेत्यर्थः । अतएवतृतीयस्यसप्तमेउक्तंहविर्धानस्यहविर्धारणाद्यर्थत्वान्नप्रयोजनांतरापेक्षा
प्रकृतितत्स्वाहवनीयप्रत्यग्देशःसामिधेन्यंगत्वेनप्राप्तः सचदक्षिणस्योत्तरस्यवाहविर्धानस्यसमीपेभवतीतितन्नियममात्रंलाघवा
द्विधेयं । हविर्धानस्यत्वत्यंताप्राप्तमंगत्वमनपेक्षितंचनयुक्तंविधातुं । तस्मात्सोमाभिषवहविर्धानेसमीपदेशेस्थित्वासामिधेनी
रनुब्रूयादिति ॥ [illegible] न्यायंचेति ॥ अग्नीषोमीयपशुसंबंधिनःपाशस्यमंत्रेअदितिःपाशान्प्रमुमोक्तेतानितिबहुवचनस्यकर्मकारका
र्थतयासावकाशस्यैकत्वसंख्योपेतपाशाख्यप्रकृतिस्वारस्यायास्वारस्यमुक्तं मीमांसकैर्यथा । तथातत्त्वमाद्यनेकप्रातिपदिकानां
सर्वज्ञत्वादिकर्तृत्वादिविशिष्टरूपस्वार्थात्यागलक्षणस्वारस्यायतत्पदगतप्रथमायाःतृतीयाद्यर्थकत्वरूपमस्वारस्यंवक्तुंन्याय्यमित्य
र्थः । ननुप्रैतुहोतुश्चमसःप्रब्रह्मणःप्रयजमानस्यप्रोद्गातॄणामितिचमसाध्वर्यून्प्रत्यध्वर्योःप्रैषःश्रूयते । सदःसंज्ञकगृहमध्येहोत्राद
यःसोमस्यभक्षयितारःसंति । तेषांमध्येहोतारंप्रतिहोतृचमसःप्रैतुगच्छतु ब्रह्मणश्चमसोपिप्रैत्वित्याद्यर्थः । साम्नोयाद्वितीयाभ

क्तिरुद्गानाख्यासैकेनैवोद्गातृसंज्ञकेनर्त्विजाक्रियते । गानमात्रंतुप्रस्तोतृप्रतिहर्तृसंज्ञकाभ्यामपिक्रियते । एवंस्थितौप्रोद्गातॄणामित्यत्रबहुवचनस्वारस्यायोद्गानकर्त्रैकपुरुषवाचकस्योद्गातृशब्दस्यगानकर्तृत्वेनरूपेणाजहल्लक्षणयोद्गातृप्रस्तोतृप्रतिहर्तृपरत्वंकल्प्यते । उद्गात्रादीनांत्रयाणामेकस्तोत्रसंबंधात्सदसिसन्निधानभक्षवेलायांचव्यापृतत्वात्त्रयाणामपिभक्षोस्तीत्युक्तंतृतीयस्यपंचमे । तस्माद्विभक्त्यस्वारस्यमन्याय्यमित्यतआह ॥ [१६८।६] प्रोद्गातॄणामिति ॥ [१६८।६] विभक्त्यंतरइति ॥ एतच्चोपलक्षणं । गानकारिषुत्रिष्वपिकथंचिदवयवयोगेनवर्तमानंप्रातिपदिकंवहुवचनंचद्वयमपिश्रुत्यर्थंभवतीत्यपिवोध्यं ॥ [१६८।७] छंदोगेष्विति ॥ अपसुब्रह्मण्येष्वित्यर्थः । सुब्रह्मण्याख्यस्यर्त्विजःसदसिस्थितत्वाभावात्सदसिस्थितान्प्रतिभक्षणार्थंचमसानांनीयमानत्वान्नसुब्रह्मण्यस्यभक्षोस्तीतिवार्तिककारोमन्यते ॥ [१६८।७] दृष्टंचेति ॥ दर्शपूर्णमासयोःश्रुतंप्रयाजशेषेणहवींष्यभिघारयतीति । प्रयाजशेषाज्येनपुरोडाशादिहविषामभिघारणं किंहविषांसंस्कारउतप्रयाजशेषस्यप्रतिपत्तिरितिसंशयेद्वितीययाहविषांसंस्कार्यत्वेनप्राधान्यावगमात्तत्संस्कारःनतुशेषस्यप्रतिपत्तिः । तृतीयानिर्दिष्टस्यगुणत्वेनप्रतिपाद्यत्वायोगादितिप्राप्ते । प्रतिपत्तिरेवयुक्ताशेषशब्दस्यश्रवणात् । उपयुक्तशेषस्यहिद्रव्यस्यक्वचित्क्षारणरूपाप्रतिपत्तिरपेक्षितानतुहविःसंस्कारः । अंतःप्रयाजशेषंहविष्षुक्षारयेदितिवाक्यार्थकल्पनयाप्रयाजशेषस्यप्रतिपत्तिरेवग्राह्येतिचतुर्थस्यप्रथमपादेनिर्णीतं । यथावासक्तूनजुहोतीत्यत्रहोमेनसक्तूनांसंस्कार्यत्वासंभवाद्विभक्तिविपरिणामेनसक्तुभिर्जुहोतीतिवाक्यार्थमाश्रित्यप्रातिपदिकस्वारस्यमुक्तंनतुप्रातिपदिकेलक्षणाश्रिता तथा

त्रापि ॥ [१८८।१५] शरीरवाचिनामिति ॥ ननुशरीरिपर्यंतत्वंकिंतल्लक्षकत्वंवातत्रापिशक्तत्वंवाशरीरविषयवृत्त्यैवतत्प्रतिपादकत्वंवा । नाद्यः । मुख्यत्वानुपपादनात् । नद्वितीयः । शरीरवाचिनामित्यसाधारणपदेननिर्देशानुपपत्तेः । नतृतीयः । अन्यविषयवृत्तेरन्यत्रानुपयोगात् । मैवं । द्वितीयपक्षेदोषाभावात् । पामरप्रसिद्ध्याशरीरवाचिनामप्यभियुक्तप्रयोगेशरीरिपर्यंतंव्याप्रियमाणानांशरीरवाचिनामित्यसाधारणनिर्देशोपपत्तेः । अस्मिन्पक्षेपदद्वयमपिमुख्यार्थमेव ॥ [१६९।१] इतरेत्विति ॥ नन्वस्योपासनाप्रकरणस्थत्वाभावेनदृष्टांतवैषम्यं । मैवं । एतस्यैवोपासनाप्रकरणउत्कृष्टव्यत्वात् । ननुशकुनिसूत्रदृष्टांतेविद्यमानोपिभेदोनातदितिपदच्छेदेप्रयोजकःघटदृष्टांतस्तुनानित्यइतिपदच्छेदंविनोपपद्यतइतिवैषम्यमित्यतआह ॥ [१६९।४] नद्यंद्यखंडइति ॥ नन्वाचार्यवान्विद्वान्येनक्रमेणसतिसंपद्यतेसकीदृगित्याशंकायांसत्याभिसंधस्यार्थप्राप्तिरनृताभिसंधस्यानर्थप्राप्तिरितिवक्तुंस्तेनास्तेनदृष्टांतइतिनासौभेदानुगुणइत्यतआह ॥ [१६९।८] नचसत्यानृताभिसंधिमात्रमिति ॥ अनृताभिसंधोनृतेनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णाति सदह्यतइत्याद्येवदृष्टांतःस्यात् । ननुसत्यानृतोपपादनायस्तेनाद्युच्यते । मैवं । उपपादनंभेदेनैवक्रियतेततोभेददृष्टांतएवायं । ननुरोगग्रस्तस्यतन्निर्मोक्षेविश्रांतिवज्जाग्रत्स्वप्नावस्थयोःकरणव्यापारजनितश्रमापनुत्तयेजीवस्यस्वरूपावस्थानमित्यस्मिन्नर्थेशकुनिसूत्रदृष्टांतः । स्वमपीतोभवतीतितत्रैवंश्रुतेः । स्वस्वरूपेणब्रह्मणापीतःएकीभवतीत्यर्थः । तथाचाद्यदृष्टांतःकथमभेदाननुगुणइत्यतआह ॥ [१६९।९] आद्यखंडइति ॥ [१६९।१३] आत्मीयेति ॥ स्वशब्दस्यात्मीयार्थत्वादित्यर्थः । नन्वपीतशब्दस्यैकोयो

न्यायामृ० गरूढ्यभावेप्युपसर्गधातुप्रत्ययानांकयापिरीत्यैक्यार्थत्वमपिभविष्यतीत्यतआह ॥ ऐक्यार्थत्वइति ॥ सुप्तस्यब्रह्मैक्यागीकारे तरंगिणी
॥ ७२ ॥ श्रुतिसूत्राभ्यांस्वांगीकारेणचविरोधइत्याह ॥ प्राज्ञेनेति ॥ ननुजाग्रत्स्वप्नयोरिवस्फुटतरविक्षेपोनास्तीत्यभिप्रायेणस्वमपीतो
भवतीतिस्वरूपप्राप्त्युक्तिर्नत्वात्यंतिकाभेदाभिप्रायेण । अतोनश्रुत्यादिविरोधः । मैवं । एतदपेक्षयापरमात्मप्राप्तेरेवार्थत्वौ तत्वमसि.
चित्यात् । ननुस्पष्टभेदाभावाभिप्रायेणनानावृक्षरसदृष्टांतोतस्सोभेदविषयएव । नचास्पष्टभेदत्वस्यैकांतिकाभेदेनुपयोगः । २ । २८
स्पष्टभेदाभावेस्त्वैक्यस्यापिसंभाविततयाऐक्यसंभावनाजननद्वारेणोपयोगित्वादितिशंकांनिराकरोति ॥ नहिनानावृक्षरसा
इति ॥ तथाचविशेषदर्शनान्नैक्यसंभावनापीत्यर्थः । नदीसमुद्रदृष्टांतोस्पष्टभेदविषयत्वादभेदसंभावनार्थइत्येतन्निराकरोति
॥ नदीसमुद्रेति ॥ ननुमांशाणांतद्राशेश्चभेदोपलंभवज्जलेप्रक्षिप्तजलेननभेदउपलभ्यतेतआह ॥ ताएवापइति ॥ इंद्रःसज
लेवसिष्ठकमंडलौस्वकमंडलुजलंधारयित्वासुदासोराज्ञोयज्ञंप्रत्याहृतः । सनगतः । ततआगत्यवसिष्ठंजलंययाचेवसिष्ठस्तुता
एवापोदत्तवानित्यर्थः ॥ संसनदीनामिति ॥ एतच्चोपलक्षणं । गंगायमुनयोःप्रयागेसंगत्यप्राचींगत्योःपुनर्विभक्तयोरियंगं
गाइयंयमुनेतिगौडदेशेजनैर्व्यवह्रियमाणयोःसर्वसिद्धत्वात् ॥ समुद्रेत्विति ॥ समुद्रेपिनदीसंगमस्थलेऽल्पावृद्धिर्दृश्यतइति
समुद्रतीरवासिनांप्रवादः ॥ वाचस्पतिनापीति ॥ वाक्यान्वयादित्यधिकरणेवाचस्पत्येह्येवमुक्तं । मैत्रेयीब्राह्मणेयाज्ञवल्क्ये ॥ ३४६॥
नमुमुक्षुमैत्रेयींप्रतिवित्तसाध्यकर्माद्यसाध्यमोक्षंप्रतिज्ञानंसाधनं तच्चज्ञानंरागविषयेषुपतिपुत्रादिषुविरज्यात्मश्रवणादिनाभव

तीतिवक्तुमात्मनस्तुकामायसर्वंप्रियंभवतीत्यादिनाऽऽत्मोपाधिकमेवसर्वस्यापिप्रियत्वं नतुस्वाभाविकंस्वात्मातुस्वाभाविकप्रि यइत्युक्त्वा । आत्मावांअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइत्युक्तं । एवंचमैत्रेयीब्राह्मणस्यपरमात्मदर्शनपरत्वे स्थितेआत्मनस्तुंकामायसर्वंप्रियंभवतीतिभोक्तृजीवात्मनोपक्रमोनयुक्तइत्याशंकायां उत्क्रमिष्यतएवंभावादित्यौडुलोमिरिति सूत्रेणौडुलोम्याचार्यमतेनसमाधानमुक्तं । जीवोहिपरमात्मनोत्यंतभिन्नएवसन्देहेंद्रियमनोवुद्ध्युपधानसंपर्कात्कलुषस्तस्य जीवस्यपरमात्मध्यानादिसाधनानुष्ठानाद्देहेंद्रियादिभ्यउत्क्रमणकालेपरमात्मैक्योपपत्तेरिदमभेदेनोपक्रमणंभविष्यंतमभेदमुपा दायभेदकालेप्यभेदउक्तः ।ननुवस्तुतोभिन्नानामभेदोनदृष्टचरइतिचेन्न । नदीसमुद्रयोर्दृष्टत्वात् । यथाहुःपांचरात्रिकाः ॥ आमुक्तेर्भेदएवस्याज्जीवस्यपरमस्यच । मुक्तस्यतुनभेदोस्तिभेदहेतोरभावतइति । तदेतत्समाधानंकाशकृत्स्नस्याचार्यस्यमते स्थित्वादूष्यते नदीसमुद्रनिदर्शनात् । भिन्नानामभेदइतिनयुक्तं । तथाहि । कापुनर्नद्यभिमता । किंजलपरमाणवउततेषांसं स्थानभेदस्तदारब्धीवयवीवा । नाद्यः । नदीपाथःपरमाणूनांसमुद्रपाथःपरमाणुभ्यःपूर्वावस्थितेभ्योभेदएवनाभेदः । एवंस मुद्रादपितेषांभेदएव । नेतरौ । संस्थानभेदस्यवावयविनोवासमुद्रनिवेशेविनाशात्कस्यसमुद्रेणैकतेति ॥ इमार्विति ॥ नाना वृक्षरसनदीसमुद्रदृष्टांतौ ॥ अंतएवेति ॥ ननुसतिसंपद्येत्यस्यासन्नत्वान्नविदुरित्यनेनसत्संपत्त्यज्ञानमुच्यतेनंतुभेदज्ञानं । तथाचसत्संपत्तेर्ज्ञानपूर्वकत्वाभावात्तत्तद्वासनयातत्तद्व्याघ्रादिभावएवभवतीत्येवंपरौदृष्टांतौ । मैवं । सत्संपत्तेर्ज्ञानपूर्वकत्वा भावबोधकपदाभावात् । सत्संपत्तेरज्ञानमात्रेणसत्संपत्तिनिबंधनपूर्णानंदप्रकाशाभावस्यायोगात् । सतआगंत्यनविदुरित्यत्रतु

स्पष्टंभेदाज्ञानस्यव्याघ्रादिभावहेंतुत्वंप्रतीयतेतोनानावृक्षरसेपिभेदाज्ञानादेवव्याघ्रादिभावः ॥ १७०।१७ आद्येखंडइति ॥ ननुस्वप्नां
तमित्यादेःसुषुप्त्यवस्थायामेवजीवत्वविनिर्मुक्तंस्वदेवतारूपंदर्शयिष्यामीत्यनेनाभिप्रायेणोद्दालकेनावतारितत्वादीश्वराधीनस्व
परत्वाभावः । मैवं । उद्दालकोहारुणिःश्वेतकेतुंपुत्रमुवाचस्वप्नांतमेवसोम्यविजानीहीति । यत्रैतत्पुरुषःस्वपितिनामसतासोम्य
तदासंपन्नोभवति। स्वमपीतोभवतितस्मादेनंस्वपितीत्याचक्षतेस्वंह्यपीतोभवतीत्यंतेसुषुप्तिनिरूपणेदेवतादिरूपत्वादेस्त्वदुक्तस्या
प्रतीतेःप्रत्युतसतासोम्यंतदासंपन्नोभवतीत्यादिनेश्वराधीनत्वतद्भेदयोरेवप्रतीतेश्च ॥ १७०।१८ चतुर्थेचेति ॥ ननुजलादुत्थितानांवी
चीतरंगफेनबुद्बुदानांपुनस्तद्भावंगतानांविनाशोदृष्टोजीवानांप्रत्यहं स्वरूपतांगच्छतांमरणप्रलययोश्चनाशाभावःकथमित्येतदा
शंकायांतत्परिहारत्वेनोक्तस्यवृक्षशाखानिदर्शनस्यजीवाधिष्ठितंशरीरंजीवतितदपेतंचम्रियते नतुजीवोम्रियतइत्येवंपरत्वं । जी
वापेतंवावकिलेदंम्रियते नजीवोम्रियतइतिवाक्यशेषात् । अतोनेश्वराधीनत्वपरश्चतुर्थखंडः । मैवं । वृक्षादिदेहंवृक्षादिजीवो
यदन्वयएवान्वयसेयव्द्यतिरेकेचाजिहासितमपिजहातीतिवृक्षादिजीवस्यास्वातंत्र्यप्रतीतेः । ननुवृक्षाधिष्ठातुरेवान्वयव्यतिरे
काभ्यांवृक्षस्यजीवनमरणेप्रतीयेते । जीवशब्दश्रवणात् । १७०।२१ नतुतदतिरिक्तस्येश्वरस्येत्यतआह ॥ अनेनजीवेनेति ॥ जडस्य
मोदमानत्वासंभवात् मोदमानत्वलिंगेनप्रवेशकर्मणःचेतनत्वेऽवगतेप्रविष्टस्यवृक्षजीवाद्भिन्नत्वेनावगतस्येश्वरस्यवाचकोजीव
शब्दइत्यर्थः ॥ १७०।२२० एतस्यैवेति ॥ तंहोवाचयंवैसोम्यैतमणिमानंननिभालयसएतस्यैवसोम्यैषोणिम्नएवमहान्न्यग्रोधस्तिष्ठतीत्यात्थ

एवमेतमणिमानंननिभालयसेनपश्यसि एतस्याणिम्नःसंबंधेएषःमहान्न्यग्रोधएवंपरिदृश्यमानरूपेणतिष्ठतीत्यर्थः ॥ [१७०।३४] भावप्र
त्ययरहितेनेति ॥ ननुएषोणुरात्माचेतसावेदितव्यइत्यत्रभावप्रत्ययरहिताणुशब्दप्रयोगविषयेपीश्वरेएषोणिमेतिप्रयोगवद्धा
नास्वपितथावक्तुंशक्यं । मैवं । मुंडकेएषोणुरात्मेत्युक्तेःछांदोग्येऽणिमशब्दनिर्देशाभावंप्रत्यप्रयोजकत्वात् । तदिदमाह ॥
[१७१।१] निर्दिष्टतयेति ॥ सन्निहितप्रयोगविषयतेत्यर्थः ॥ [१७१।२] ननिभालयसइतीति ॥ न्यग्रोधफलांतर्गतधानाभेदनेकृतेसतिकिमत्र
पश्यसीतिपृष्टःश्वेतकेतुर्नकिंचनभगवइत्युत्तरितवान् । सतुधानांतर्गतंसूक्ष्मरूपंपरमेश्वरंनपश्यति । नतुधानाअपिनपश्यति ।
तासामण्व्यइवेमाधानाभगवःपश्यामीतिदृश्यतयोक्तेः ॥ [१७१।३] अष्टमइति ॥ ननुलौकिकमरणेयःसत्संपत्तिक्रमःसएवविदुषोपि ।
विशेषस्तुज्ञानाज्ञानकृतइत्येतमर्थंप्रतिपादयितुमन्वयव्यतिरेकाभ्यांसत्संपत्तिक्रमःकथ्यतइत्यवैयर्थ्यं । मैवं । सत्संपत्तिंवक्तु
मसत्संपत्तिकथनस्यविरुद्धत्वात् । तस्मात्स्वातंत्र्यशंकनास्पदमरणनिदर्शनेनेश्वराधीनत्वमेवोच्यते ॥ [१७१।७] नानुमानमिति ॥
ननुप्रधानादिनिराकरणमेवात्मशब्देनक्रियते । तत्रात्मशब्दस्यामुख्यत्वात् । नजीवस्य । तस्यात्मत्वेपिपरिच्छिन्नत्वाज्जगत्क
र्तृत्वासंभवइतिजीवव्युदासइतिमम द्युभ्वाधिकरणसिद्धांतः । मैवं । प्राणभृच्चेतिचकाराकृष्टस्यातच्छब्दादित्तिपूर्वसूत्रस्थस्यहे
तोःप्रकृतस्यत्यागेनाप्रकृतपरिच्छिन्नत्वादिहेतूपादानेप्रकृतहान्यादिदोषात् । ननुसेयंदेवतेमास्तिस्रोदेवताइत्यादौसदेवसोम्ये
त्यादिषुसदादिशब्दनिर्दिष्टंब्रह्मसेयंदेवतेतिशब्देनपरामृश्यतस्यजीवेनात्मनेतिसामानाधिकरण्याज्जीवाभेदःप्रतीयतेतआह ॥
[१७१।८] इमाइति ॥ ननुजीवाभेदादनिरुद्धोजीवाख्योतआह ॥ [१७१।१०] विष्णुरिति ॥ योगाद्विष्णुर्जीवःसंसारीतुरूढेरतआह॥ [१७१।११] जीवेपीति॥

[१७।१।१२] संसारिणइति ॥ नन्वस्मदादावसंभवेप्यत्रिवृत्कृतभूतारब्धलिंगशरीराभिमानिनोहिरण्यगर्भस्यनामरूपात्मकप्रपंचव्याकर णंभविष्यति । मैवं । जीवकोटिनिविष्टेहिरण्यगर्भेजगत्कर्तृत्वापरपर्यायस्यनामरूपव्याकरणस्यासंभवात् ॥ [१७।१।१३] तेजोवन्नानामिति ॥ तेजोवन्नानामीक्षणदेवतात्वादिनासजीवत्वेसिद्धेपुनःसंसारिप्रवेशोनयुक्तइत्यर्थः । नन्वव्याकृतभूतसृष्टौसाक्षात्कारणंब्रह्म । ब्रह्मांडादिसृष्टौतुनसाक्षात्कारणं किंतुस्वाभिन्नंजीवद्वारा । जीवाविष्टभौतिकानिप्रतिपरंपरर्थेतिवक्तुंजीवप्रवेशः । मैवं । तथासंतिजीवेनात्मनेत्येतावतापूर्णत्वादनुप्रविश्येत्यनुप्रवेशोव्यर्थः । तदिदमाह ॥ [१७।१।१४] पुनर्जीवप्रवेशेति ॥ [१७।१।१४] एकमेवेति ॥ एकमेवाद्वितीयमितिश्रुतिव्याख्यानेनव्याख्यातः ॥ [१७।१।१४] एकविज्ञानेनेति ॥ वाचारंभणमितिश्रुतिव्याख्यानावसरेसादृश्यप्राधान्याभ्यामेकविज्ञानेनसर्वविज्ञानंव्याख्यातं ॥ [१७।१।१५] इष्टापूर्तमिति ॥ अपामसोममममृताअभूम । अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतमित्यादिश्रुतितात्पर्यापरिज्ञानेनप्राप्तंयज्ञादीनांवरिष्ठत्वमिष्टापूर्तंमन्यमानावरिष्ठमितिश्रुत्यानिषिध्यतेयथातथैक्यमतत्त्वमसीत्यनेननिषिध्यते ॥ [१७।१।१७] देहेंद्रियादीन्प्रतीति ॥ ननुदेहेंद्रियादीनांजीवस्यैक्येनाध्यस्तत्वात्तान्प्रतिस्वातंत्र्याभिमानःसार्वलौकिकोवक्तुमशक्यः । यत्किंचित्प्रतिस्वातंत्र्यंतुनेश्वरलक्षणं । मैवं । सर्वान्प्रतीवैकैकंप्रतिस्वातंत्र्यस्यापीश्वरलक्षणत्वात् । ममदेहइत्यादिदेहादीन्प्रतिस्वातंत्र्यस्यसर्वैरप्यस्वतंत्रैरभिमन्यमानत्वाच्च ॥ [१७।१।१८] एवंचेति ॥ नचसमाभ्यधिकराहित्यमात्रेणभेदोपक्रम

त्वाभावः । अभेदेपितत्संभवादितिवाच्यं । अवरेषुसत्स्वेवसमाभ्यधिकराहित्यावगमात्तस्यभेदोपक्रमत्वात् । नचद्वितीया भावमात्रस्यैवोपक्रमः । द्वितीयाभावरूपद्वितीयस्यसत्त्वासत्त्वाभ्यांद्वितीयाभावमात्रोपक्रमत्वासिद्धेः ॥ अथसंपत्स्यतइति ॥ तस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंपत्स्यतइतिश्रुतिः । तस्य ज्ञानिनः तावच्चिरं तावान्विलंबः यावत्पर्यंतंप्रारब्धकर्मभ्यो नविमोचनंभवति प्रारब्धकर्मक्षयातिरिक्तोन्योविलंबहेतुर्नास्तीत्यर्थः । एवंशाखांतरेपिवाक्यानिभेदेतात्पर्यलिंगवंत्युदाहरणी यानि ॥ ७ ॥ ७ ॥ तत्त्वमसिवाक्यार्थः ॥ २८ ॥ ७ ॥ लक्षणांविनैवेष्टसिद्धिरित्याह ॥ किंचेति ॥ अंतर्यामिण्यहंशब्दस्य मुख्यत्वायतत्रतस्यश्रौतप्रयोगमप्याह ॥ अहंमनुरिति ॥ नन्वेतन्मंत्रद्रष्टरिवामदेवएवाहंशब्दोस्त्वित्यतआह ॥ नहीति ॥ ननुशास्त्रदृष्ट्यातूपदेशोवामदेववदितिन्यायेनवामदेवजीवचैतन्यस्यवस्तुतोब्रह्माभेदेनसूर्यादिभावउच्यतेऽतोनविरोधइत्यत आह ॥ अहमिति ॥ तथासतिवामदेवशब्देचिन्मात्रलक्षणापत्तावभवमित्युत्तमपुरुषायोगः ॥ अहंभूमिमिति ॥ चिन्मा त्रस्यसूर्यादिभवनसंभवेपिभूमिदानंनसंभवति । ननुचिन्मात्रस्यैवांतर्यामिणोपिभूमिदानंनसंभवतीत्यतआह ॥ भंगवानिति ॥ विष्णुर्व्यापनशीलःसर्वांतर्यामी । एकोविष्णुर्महद्भूतमितिस्मृतेः । प्रसिद्धंहींद्रायेंद्रेणराज्यंदत्तमिति । मंत्रवर्णोपि सखेविष्णो वितरंविक्रमस्वद्यौर्देहिलोकंवज्रायविष्कभे । हनावववृत्रंरिणचावसिंधूनिंद्रस्यंतुप्रसवेविसृष्टाइति । अस्यार्थोमाधवीये हेसखे विष्णोवितरमत्यंतंविक्रमस्वविक्रमंकुरु हेद्यौः त्वंवज्रायवज्रस्यविष्कभेविष्कंभायलोकंअवकाशंदेहि हेविष्णोत्वंचाहंचोभावपि

वृत्रमसुरंहनावहन्वःसिंधूनवृत्रावष्टब्धनदीरिणचावस्रावयावः तइमेविसृष्टाःसिंधवइंद्रस्यप्रसवंयंतुप्रेरणेगच्छंतु । तमिममर्थं संगृह्यश्लोकैःशौनकोदर्शयति । त्रीन्लोकानभिवृत्यैतान्वृत्रस्तस्थौस्वयात्विषा । तन्नाशकद्धंतुमिंद्रोविष्णुमभ्येत्यसोब्रवीत् । वृत्रंहनिष्येतिष्ठस्वविक्रम्याद्यममांतिके । उद्यतस्यतुवज्रस्यद्यौर्ददातुममांतरं । तथेतिविष्णुस्तच्चक्रेद्यौश्चास्यविवरंददौ । तदेतदखिलंप्रोक्तंसखेविष्णविवितिष्ठृचेति । तथाविश्वेत्ताविष्णुराभरदुरुक्रमस्त्वेषितः । शतंमहिषान्क्षीरपाकमोदनंवराहमिंद्रएमुषं । हेइंद्रत्वेषितःत्वयाप्रार्थितःउरुक्रमोविष्णुःविश्वापूर्णानि ता तानिंधनानिआहरत्इत्एव तानिकानि शतंअपरिमितान् महिषान्प्रशस्तान्पदार्थान्क्षीरपक्वमोदनंचआहरत् । इंद्रःभवान् एमुषंआमुषंआकारस्यएकारःछांदसः धनानांआमुषंवराहनामकमसुरं अविध्यंदितिशेषः । इत्यादिष्विंद्रायविष्णूराज्यादिदत्तवानिति । अस्येदमातुःसवनेषुसद्यइत्यत्रापीयंकथाश्रूयते । ततश्चांतर्यामिणोविष्णुत्वात्तस्यभूमिंद्रानादियुज्यते ॥ [१७३।७]ततश्चांतर्याम्यैक्यमिति ॥ नचात्राहमस्मीत्युत्तमपुरुषायोगः । अंतर्यामिणोपिप्रत्यक्त्वात्तत्परहंशब्दयोगेपिजीवपराहंशब्दयोगइवोत्तमपुरुषोपपत्तिः । अंतर्यामिभेदनिराकरणंश्रुतावदृष्टचरमितिशंकांनिराकरोति ॥ [१७३]तथाचेति ॥ ननुब्रह्मविदाप्नोतिपरमित्यादिनाशुद्धस्यब्रह्मणःप्रकृततयातस्मिन्नुपाधिकृतभेदस्यतात्विकत्वप्रसक्तौतन्निराकरणार्थत्वात्सयश्चायमित्यादेर्नांतर्याम्यैक्यपरत्वं । मैवं । ब्रह्मणिभेदनिराकरणस्याप्यंतर्यामिणिभेदनिराकरणतुल्यत्वात् ॥ [१७३।८]अन्यथेति ॥ अहंब्रह्मणोरभेदपरवाक्यानांजीवब्रह्माभेदपरत्वे ॥ [१७३।१०]सएनानिति ॥ अथयदुचैवास्मिंच्छव्यंकुर्वंतियदिचनार्चिषमेवाभिसंभवंत्यर्चिषोहरित्यारभ्यतत्पुरुषोमानवःसएनान्ब्रह्मगमयत्येषदेवपथोब्रह्मपथएतेनप्रतिपद्य

मानाइमंमानवमावर्तंनावर्तंतइत्यादिनाविरोधः । अस्मिन् ब्रह्मविदि । शव्यं शवसंबंधिकर्म । आशौचंकर्मकरणाकरणाभ्यां
१७२।१०
ब्रह्मविदांनोत्कर्षापकर्षौ किंतुब्रह्मविदोर्चिरादिमार्गेणगच्छंत्येवेतिश्रुत्यर्थः ॥ किंचेति ॥ अथहैनंगार्हपत्योनुशशासयएषआ
दित्येपुरुषोदृश्यतेसोहमस्मिसएवाहमस्मीतिसयएतमेवंविद्वानुपास्तेऽपहतेपापकृत्यांलोकीभवतीत्युपास्तिःश्रूयते । उपास्तिवा
क्यस्यचोपासनायाःकर्तव्यत्वेवस्तुतस्तथात्वेचनतात्पर्यमित्यर्थः । किंचब्रह्मविद्यार्थंसत्यकामाख्यस्यगुरोःकुलेवसंतंगुर्वनुज्ञया
ग्नीन्परिचरंतंगुरुणाबहुकालमनुपदिष्टविद्यत्वादनश्नंतमुपकोसलंप्रतिकृपालुभिरग्निभिरुक्तं यएषआदित्यइत्यादि । तत्रनवि
शिष्टचैतन्यरूपाणांगार्हपत्याद्यग्नीनांसूर्येणैक्यंसंभवति किंत्वंतर्याम्यैक्यमेव । ननूपासनाप्रकरणस्थादैक्यासिद्धावप्यनुपास
नाप्रकरणस्थात्यःप्रसिद्धःअसौआदित्यमंडलस्थःअसौपुरुषःपरिपूर्णःसहप्रसिद्धःपरिपूर्णएवाहमस्मीत्येवमर्थकाद्योसावितिवा
१७२।११ १७२।११
क्यादैक्यसिद्धिःस्यादतआह ॥ योसाविति ॥ वायुरनिलमिति ॥ पूषन्नेकर्षेयमसूर्यप्राजापत्यव्यूहरश्मीन्समूहतेजोयत्तेरू
पंकल्याणतमंतत्तेपश्यामीतिपूर्वेणचविरोधः । ननुपूषन्नित्याद्यमंत्रे हेपूषन्हेएकर्षेहेयमहेप्रजापतेरपत्यभूतेतिसूर्यंसंबोध्यसौर
किरणानामपसरणंप्राथ्यर्ततेतदैक्यज्ञानाय । वायुरनिलमित्यत्रतुमरणकालेवायुःप्राणःअनिलंबाह्यवायुंयात्वितिशेषः । अमृतं
आनंदात्मरूपंअहमस्मीतिपूर्वेणसंबंधः । अथवायुगमनानंतरंइदंप्रत्यक्षंशरीरंभस्मअंतेयस्यतत् पृथिवींयात्वितिशेषः इत्येवार्थ
१७२।१२
सत्त्वान्नपूर्वोत्तराभ्यांविरोधइत्यतआह ॥ नहीति ॥ अयंभावः । वायुरनिलमित्यादेरेकवाक्यतयान्वयेशरीरादेरैक्यं

स्यात् । भिन्नतयान्वयेतुवाक्यभेदोध्याहारादिदोषप्रसंगः । वायोर्बाह्यवायुंप्रतिगमनस्यशरीरस्यभस्मभावस्यचावश्यंभावित्वा त्प्रार्थनानुपपत्तिश्च । प्रकृतस्यासावित्यस्यवैयर्थ्यंच । तस्मात्हेपूषादिगुणमदीयात्रश्मीन्व्यूह तेजश्चसमूह । स्वरूपभूतंबाह्यंच मदीयंज्ञानंविस्तारयेतिर्थोक्तं । तथाचयत्तेरूपंकल्याणतमंतत्तेप्रसादादहंपश्यामि योसौप्रसिद्धःअसौअसुशब्दवाच्येप्राणेस्थि तःपुरुषःसएवंअहेयत्वजीवांतर्यामित्वाभ्यांनित्यसत्तामानाभ्यामहमस्मिशब्दाभिधेयस्तंचपश्यामीति ।॰नन्वेतद्युक्तंप्रत्यक्षत एवदेहस्यभस्मांतत्वदर्शनाद्देहनाशेचतदंतर्गतजीववन्मरणाद्यवश्यंभावादित्याशंकायामिदमुच्यतेवायुरनिलमित्यादि । तस्या र्थः । यद्यपीदंशरीरंभस्मांतंतथापितदंतर्गतस्यपरमेश्वरस्यनमरणादिदोषः । कुतः । अकारवाच्योविष्णुःनीडंस्थानमस्यसो निलः । अंनिलःपरमेश्वराश्रितोवायुरपि यदामृतःअथतदापरमेश्वरोमृतइतिकिंवक्तव्यमित्ययमर्थोस्यवाक्यस्यईशावास्यभा ष्यतट्टीकानुसारेणज्ञेयः ॥ १७२।१२ अग्नेनयेति ॥ हेअग्नेदेवविश्वानिसर्वाणिवयुनानिविद्वान्जानासित्वं अतःरायेमोक्षाख्यधनार्थंअ स्मान् सुपथाशोभनमार्गेणनय जुहुराणंकुटिलंएनःअस्मत्सकाशात्युयोधिवियोजय तेतुभ्यंभूयिष्ठांनमउक्तिंनमस्कारंविधेम एषातेअपचितिरित्यर्थः ॥ १७२।१३ चक्षुरिति ॥ अत्रमित्रादिदेवानांभेदेननिर्देशान्मंत्रस्यभेदपरत्वं । चित्रंदेवानामितिमंत्रस्यायमर्थः । देवानामनीकंसमूहरूपंचित्रंआश्चर्यकरंसूर्यस्यमंडलमुदगात्उदयाचलंप्राप्तमासीत् कीदृशंमित्रस्यमित्राद्युपलक्षितानांसर्वेषांच क्षुःप्रकाशकंउदयंप्राप्यवादिवंपृथिवींअंतरिक्षंचआप्राःस्वकीयेनतेजसाआसमंतात्प्रापूरणइतिधातोर्लङ्पुरुषव्यत्ययः अदादि

त्वाच्छपोलुक् । मंडलांतर्गतःसूर्याख्योनारायणःजगतांस्थावराणांचआत्माचैतन्यप्रदइति ॥ [१७२।१५] तद्योयोदेवानामिति ॥ नन्व
त्रदेवादिषुप्रबुद्धंपुरुषंनिर्धार्यसएवतदभवदितिब्रह्माभेदपरत्वेनब्रह्मभेदपरत्वाभावः । मैवं । ब्रहुमुक्तिरवोक्तुस्तदभावइतिभे
दस्यस्पष्टंप्रतीतेः । नचायंमिथ्याभेदः । स्वतःप्रमाणसिद्धस्यमिथ्यात्त्वानुपपत्तेः ॥ [१७२।१६] किंचात्रेति ॥ ब्रह्मवाइदमग्रआसीत्तदा
त्मानमेवावेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवत्तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्तथर्षीणामितिवाक्येप्रकृतंब्रह्म आत्मानमे
वब्रह्मत्वेनावेदित्यवगम्यते । नतुजीवःस्वात्मानंब्रह्मतयावेदिति । येनजीवब्रह्मैक्यपरमिदंवाक्यंस्यादित्यर्थः । ननुयोयोदेवा
नामितिजीवपरमर्षिवाक्यशेषानुसारेणब्रह्मशब्दःकार्यब्रह्मपरः । मैवं । तदाहुर्यद्ब्रह्मविद्ययासर्वंभविष्यंतोमनुष्यामनुष्यामन्यं
तेकिमुतद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदितिपूर्वकंडिकायां यस्यब्रह्मणोविज्ञानेनसर्वभवनरूपफलावाप्तिः तस्याकार्यस्यब्रह्मणःप्रकृ
तत्वात् । नहिकार्यब्रह्मविद्यायाःसार्वात्म्यंफलं । नचशुद्धब्रह्मणोबोधनिमित्तस्यसार्वात्म्यस्याभावात्तस्मात्तत्सर्वमभवदितिबो
धनिमित्तकसार्वात्म्यलक्षणफलस्यकीर्तनमयुक्तमितिवाच्यं । स्वस्यपूर्णत्वानुभवोद्रिक्तानंदात्सर्वात्मकत्वोपपत्तेः । ननुतथर्षी
णांतथामनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवःप्रतिपेदेऽहंमनुरभवंसूर्यश्चेतितदिदमप्येतर्हियएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभव
तीतिजीवपरवाक्यगताहंब्रह्मास्मीतिवाक्येनब्रह्मैक्यंसिद्धिःस्यादतआह ॥ [१७२।१८] यएवंवेदेति ॥ ननुतद्वाक्यइतिशब्दश्रवणेपिनो
पासाश्रीयतेतआह ॥ [१७३।१८] अथयोन्यामिति ॥ ननुयोयोदेवानांप्रत्यबुध्यतेतिपूर्ववाक्येनसवेदेत्युत्तरवाक्येचवेदनस्यनिर्देशान्मध्य

न्यायामृ० स्थितोपास्तिरपिज्ञानमेव । मैवं । लक्षणापत्तेः ॥ [१७२।१८] अनेनेति ॥ यएवंवेदाहंब्रह्मेत्यनेननैक्यसिद्धिः ॥ [१७२।१९] यद्वात्रेति ॥ ब्रह्मवाङ् तरंगिणी
॥ ७७ ॥ त्यादिवाक्यप्रकृतंब्रह्मअहंबृंहितःपूर्णोसीत्यात्मानमवेदित्यर्थसंभवेननततोजीवब्रह्मैक्यसिद्धिः ॥ [१७२।२०] अन्यथेति ॥ ब्रह्मशब्दस्यबृंह
णार्थत्वानंगीकारेप्रसिद्धब्रह्मार्थकत्वांगीकारे । ननुपरमतेउपासनायामर्थासत्त्वेपिभवन्मतेतस्यायमर्थोस्ति । अतोभेदोपास्ति अहंब्रह्मा.
निंदानुपपत्तिरतआह ॥ [१७२।२१] अथयोन्यामिति ॥ [१७२।२२] अन्यथेति ॥ भेदज्ञानिनिंदापरत्वेअदःशब्दास्मच्छब्दबोध्यविशिष्टयोर्भेद २ । २९
स्यसत्वेनतज्ज्ञानिनोनिंद्यत्वाभावात्ताभ्यांशब्दाभ्यांभागत्यागलक्षणयाचिन्मात्रमुपलक्ष्यतद्भेदज्ञानीनिंद्यतइत्यर्थवर्णनेपदद्वय
लक्षणादोषइत्यर्थः ॥ [१७२।२३] अन्यथेति ॥ अन्योसावहमन्यइतिप्रकारेणदेवतामुपास्तइत्यर्थकरणेअदःशब्दार्थसमकक्ष्यतयाहमर्थ
स्याप्युपास्तिंप्रतिविशेष्यतयालस्मिन्द्वेवतात्वायोगः ॥ [१७२।२४] व्यवहितेति ॥ अहंशब्दसन्निहितान्यइत्यस्ययइत्यत्रनयनात् ॥
[१७२।२४] यस्येति ॥ व्याख्यातमेतन्नतुतद्द्वितीयमस्तीतिश्रुत्यर्थनिरूपणे ॥ [१७३।५] सजीवएवंभवतीति ॥ ननुजीवभावस्यप्रागपिसिद्धतया
ब्रह्मवेदनसाध्यत्वानुपपत्तिः । मैवं । जीवोभवतीत्यस्यमरणादिदुःखाभावेतात्पर्यात् । नन्वेवमशाब्दोर्थःस्यादित्याशंक्यतवा
पिसममित्याह ॥ [१७३।१०] किंचत्वत्पक्षइति ॥ ननुकंठगतचामीकरादाविवारोपितब्रह्मत्वनिवृत्तिरेवब्रह्मत्वप्राप्तिरतआह ॥ [१७३।११] आरो
पितेति ॥ स्थानैक्येउदाहरणमाह ॥ [१७३।१४] अहीति ॥ मत्स्यैक्येनृपामहार्जनाश्च । सादृश्येकीटउदाहरणं ॥ [१७३।१७] सकृदिति ॥ गताः ॥ ३५१ ॥

कलाःपंचदशप्रतिष्ठादेवाश्चसर्वेप्रतिदेवतासु । कर्माणिविज्ञानमयश्चआत्मापरेव्ययेसर्वएकीभवंतीतिश्रुतौपंचदशकलाःप्रतिष्ठाः स्वमूलरूपंप्रतिगताःसर्वेदेवाःस्वमूलदेवताःप्रतिगताःकर्माणिनिवृत्तानि विज्ञानात्माचपरेणैकीभूतइत्यर्थकरणेवाक्यभेदादि दोषइत्यर्थः ॥ [१७।४।१३] अतोन्यदार्तमिति ॥ नचार्तशब्देनमिथ्येतिवाविनश्वरमितिवोच्यतेतोनविरोधइतिवाच्यं । आर्तोजिज्ञासु रर्थार्थीत्यादौदुःखिनीवमिथ्यादौतदप्रयोगात् ॥ [१७।४।१४] सम्मानादिति ॥ ननुसोविभेत्तस्मादेकाकीविभेतिसहायमीक्षांचक्रे यन्मद न्यन्नास्तिकस्मान्नुविभेमीति ततएवास्यभयंवीयायकस्माद्ध्यभेष्यत्द्वितीयाद्वैभयंभवतीतिश्रुतौद्वितीयमात्रदर्शनस्यैवसामान्य तोभयहेतुत्वाद्विशेषकल्पनायोगइत्यतआह ॥ [१७।४।१४] लोकइति ॥ अन्यथायन्मदन्यन्नास्तिकस्मान्नुविभेमीतिततएवास्यभयंवीयाये त्यत्रद्वितीयाभावस्यभयाभावहेतुत्वकथनमयुक्तंस्यात् । द्वितीयाभावस्यैवद्वितीयस्यभयहेतोःसत्त्वात् ॥ [१७।४।१५] उत्तरत्रेति ॥ सवै नैवरेमेतस्मादेकाकीनरमतइतिश्रुतेः ॥ [१७।४।१६] यदाह्येवैषइति ॥ नन्वल्पार्थकारशब्दस्वारस्यादपिशब्दार्थकोत्पदस्वारस्यादेतच्छब्दा र्थस्यप्रतियोगित्वेनानुपादानाच्चभेदमात्रनिषेधपरतयास्वगतभेदनिषेधपरत्वायोगः । मैवं । यदिन्यायेनमौस्त्विद्धावित्यादिलौ किकरीत्याचभेदप्रतियोगित्वेनैतस्मिन्नितिशब्दनिर्दिष्टस्यसन्निहितस्यैवान्वयेउदरशब्दयोरस्मन्मतेस्वारस्यात् ॥ [१७।४।१७] एकोदेवइति ॥ ननुनात्रांतर्याम्यैक्यंशक्यंवक्तुं । भूतशब्दस्यचेतनपरत्वाभावात् । भूतहिंसानिषेधवाक्यइवचेतनाधिष्ठितशरीरादेरेवभूतश ब्दवाच्यत्वादतआह ॥ [१७।४।१८] भूतशब्दस्येति ॥ नचचेतनेजनेरयोगः जनेरनेकविधत्वेनचेतनेपितत्संभवात् । ननुवैमत्यार्थत्वेभे

दशब्दस्यलक्षणापत्तिः । तस्यान्योन्याभावेरूढत्वादतआह ॥ [१७४।१०] जीवस्येति ॥ ऐक्यव्याख्यात्र्यास्मृत्यातद्विपर्ययोभेदोप्यर्थो व्याख्यातइतिभावः । ननुसर्वक्षेत्रेषुक्षेत्रज्ञंजीवंमांविद्धीत्येतदर्थकंक्षेत्रज्ञंचापिमांविद्धीत्यादिवाक्यमैक्यप्रमाणमतआह ॥ [१७४।१३] क्षेत्रज्ञंचापीति ॥ क्षेत्रज्ञस्यजीवात्पृथगुक्तेर्नक्षेत्रज्ञोजीवइत्याह ॥ [१७४।१६] प्रकृतश्चेति ॥ [१७४।२०] क्षेत्रज्ञइति ॥ क्षेत्रज्ञःशुद्धःपरमात्मा अविकर्तुर्जीवस्य मयारचिताः अनित्याः एताःविभूतीः आविर्हिताःतिरोहिताश्चविचष्टे प्रकटयति ॥ [१७५।१] शौक्रस्यावेति ॥ व्याख्यातमेतत् ॥ छ ॥ छ ॥ अहंब्रह्मास्मीत्यादिश्रुत्यर्थः ॥ २९ ॥ छ ॥ [१७५।४] अबाध्यत्वादीति ॥ जडस्याप्यबाध्यत्वात्तत्रहेतोरनैकांत्यमित्यर्थः ॥ [१७५।१३] साध्यवैकल्यादिति ॥ नन्वात्मत्वाधिकरणं द्रव्यत्वापरजात्यैककालेननाना । समानकालीनमूर्तमात्रसंयुक्तत्वात् गगनवदित्यत्रसाध्यसाधनवैकल्याभावइतिचेन्न । तथाप्यर्थांतरानिस्तारात् ॥ [१७६।५] चंद्रस्येति ॥ ननुचंद्रभेदादीनां पक्षसमत्वान्नदोषः । मैवं । कल्पिताकल्पितयोर्मुक्तिसंसारादीनांभेदस्यावश्यमंगीकार्यत्वात् । नचसव्यावहारिकः । अन्योन्याश्रयात् । स्वतःप्रामाण्यप्रमाणसिद्धस्यतात्विकत्वाच्च ॥ [१७६।१०] त्वन्मतेपीति ॥ नचस्वांतःपदेनस्वावयवातिरिक्तमुच्यतइति वाच्यं । स्वावयवभेदवत्तदतिरिक्तभेदसत्त्वेपिहेतूपपत्त्याऽप्रयोजकत्वात् ॥ [१७६।१२] इच्छादेरपीति ॥ नचेच्छादीनामेकांतःकरणपरिणामत्वेनतत्रापिसाध्यमस्तीतिवाच्यं । इच्छादीनामभेदेइच्छाद्वेषसुखदुःखादीनांसांकर्यप्रसंगात् ॥ [१७६।१३] अव्याप्यवृत्तिधर्मेति ॥ भेदप्रतियोगितावच्छेदकात्यंताभावस्यभेदरूपतयाऽव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकोभेदइत्यनेनभेदसमानाधिकरण

धर्मानवच्छिन्नप्रतियोगिताकोभेदइत्युक्तंभवति । एतस्यापिभेदःभेदप्रतियोगितावच्छेदकेनसमानाधिकरणोनभवतीतिफलितोर्थः । तथाचप्रतियोगितावच्छेदकासमानाधिकरणोभेदःस्वसमानाधिकरणीत्यंताभावप्रतियोगीत्यनेनप्रतियोगितावच्छेदकसामानाधिकरण्येसाध्यमानेवाधइत्यर्थः ॥ [१७७।४] स्वसमानाधिकरणात्यंताभावप्रतियोगिवृत्तीति ॥ संयोगात्यंताभावमादायात्यंताभावत्वेसाध्यमस्ति ॥ [१७७।५] त्रैकालिकेति ॥ प्रागभावत्वादावव्यभिचारायसत्यंतं । रूपात्यंताभावत्वादावव्यभिचारायाभावत्वेत्यादि ॥ [१७७।६२] मन्मतेपीति ॥ ननुशुक्तौशुक्तिभेदस्यासत्त्वान्नतस्मिन्नन्योन्याभावत्वमतःकथंतदादायसिद्धसाधनमितिवाच्यं । अन्योन्याभावइतिशब्दजन्यज्ञानविषयत्वादिरूपस्यान्योन्याभावत्वस्यारोपितान्योन्याभावेपिसत्त्वात् । संयुक्तान्योन्याभावमादायसिद्धसाधनाच्च ॥ [१७७।६] त्रैकालिकस्येति ॥ ननुमायाचित्संबंधस्यकालत्वेनसर्वकालस्थितेर्नमिथ्यात्वविरोधित्वं । मैवं । अस्तुयःकोपिकालःतथापितस्यनित्यत्वात्तत्संबंधिनोमिथ्यात्वस्यविरुद्धत्वात् ॥ [१७७।७] संयोगादिवदिति ॥ संयुक्तोन्योन्याभाववद्घटाद्यन्योन्याभावानामप्यव्याप्यवृत्तित्वमेवंसिध्यति नतुतेषांमिथ्यात्वमित्यर्थः ॥ छ ॥ छ ॥ ऐक्यानुमानभंगः ॥ ॥ ३० ॥ छ ॥ तस्मात्तत्तत्सदृशत्वेसतितततोन्यूनत्वमिति ॥ एतच्चजीवरूपस्यांशस्यलक्षणं । नतुपटाद्यंशस्यापि तेनस्थूलपटंप्रतिसूक्ष्मपटस्यनांशत्वापत्तिः ॥ छ ॥ छ ॥ अंशित्वेनैक्यसिद्धिभंगः ॥ ३१ ॥ छ ॥ स्वनेत्रगोलकादाविति ॥ ननुदर्पणाहतचक्षूरश्मीनामग्रावच्छेदेनसंबंधात्स्वनेत्रगोलकादीनामभिज्ञाप्रत्यभिज्ञायाःसन्निहितपूर्वकालएवसंभवति । मैवं ।

तत्कालएवाभिज्ञाप्रत्यभिज्ञयोःकुत्राप्यदर्शनात् ॥ नचभेदंभेदकंचेति ॥ अपीतत्वव्याप्यशंखत्वसाक्षात्कारेप्यपीताभेदसाक्षात्कारदर्शनाद्भेदमित्युक्तं । भेदसाक्षात्कारेसत्यभेदसाक्षात्कारःकुत्रापिनदृष्टइत्यर्थः ॥ अतिप्रसंगादिति ॥ घटकलशयोरैक्यज्ञानेपितदवच्छिन्नचैतन्यैक्याज्ञानाद्घटकलशयोर्भेदभ्रमःस्यात् ॥ विरोधाच्चेति ॥ सादृश्यस्यभेदगर्भत्वात्तेनाभेदसाधनेविरोधः ॥ विंबादर्वाचीनइति ॥ नचैक्यवादिनःप्रतिविंबस्यविंवादर्वाचीनत्वमसिद्धं । उपाध्यन्वयाद्यनुविधानेनतत्सिद्धेः । नचान्वयाद्यनुविधानंप्रतिविंवप्रत्यक्षउपक्षीणं । गेहांतर्गतजलस्थसूर्यप्रतिविंवाप्रत्यक्षेप्रकाशविशेषेणवहिष्ठैर्गेहांतर्गतजलेसूर्यप्रतिविंबानुमानात् ॥ एतेनैवेति ॥ आदर्शेभिन्नंमुखमित्येषाप्रथमजाबुद्धिरभिज्ञा । अनंतरंयत्स्वलक्षणंग्रीवास्थमुखंतथैवेदंदर्पणस्थमपिभातीतिजायमानंज्ञानंप्रत्यभिज्ञेत्यर्थः ॥ अभेदधीरेवेति ॥ अभेदेप्रत्यक्षानुमित्योरभावस्यकिंचित्स्वच्छताम्रादौप्रतीतेमुखच्छायामात्रेमुखसंस्थानविशेषाप्रतीत्याप्रत्यभिज्ञाभावस्यस्पष्टत्वादित्युक्तत्वात् ॥ च्छायादाविवेति ॥ ननुभेदबुद्धेःसोपपत्तिकत्वेसिद्धेप्रतिविंवस्यकारणांतरकल्पनं तस्मिंश्चसोपपत्तिकत्वमित्यन्योन्याश्रयः । मैवं । प्रतिविंवेकारणकल्पनाधीनस्यभेदबुद्धौसोपपत्तिकत्वस्यानुक्तत्वात् । किंतुवक्ष्यमाणरीत्याप्रत्यक्षानुमानागमसिद्धतयासोपपत्तिकभेदेसतिप्रतिविंवेकारणांतरमपिकल्प्यतइति ॥ नोपरक्तमिति ॥ नेक्षेतोद्यंतमादित्यंनास्तंयंतंकदाचन । नोपरक्तंनवारिस्थंनमध्यंनभसोगतमि

त्यत्रवारिस्थेसूर्यप्रतिविंवेसूर्यत्वाभावात्तत्रादित्यशब्दोगौणः ॥ [१८०।११] त्वत्पक्षेपीति ॥ ममादित्यशब्दवत्तववारिस्थशब्दोगौणः गगनस्थेसूर्येउद्यत्त्वोपरक्तत्वादिवद्वारिस्थत्वाभावात् । नचवारिस्थत्वेनोपस्थितगगनस्थसूर्यपरंवारिस्थपदमितिवाच्यं । लक्षणापत्तेरेव । भेदबुद्धेःसोपपत्तिकत्वमाह ॥ [१८०।१२] भेदस्त्विति ॥ एतस्यसिद्धइत्यनेनाग्रेतनेनसंवंधः ॥ तथापियत्स्व[१८०।१९]लक्षणेति ॥ ननुतत्तत्स्वलक्षणत्वेनारोपितत्वेपियावत्स्वलक्षणकत्वेनारोपितत्वानंगीकारेणगंधादिप्रतीत्यापादनमशक्यं । मैवं । प्रत्यभिज्ञयाऽभेदसिद्ध्युक्त्ययोगात् । यदिचकस्तूर्यादीत्यादिनाग्रेनिरसिष्यमाणत्वाच्च ॥ [१८१।३] मालिन्यवदिति ॥ नन्वारोपपूर्वप्रतीतधर्मविशिष्टस्यैवारोप्याश्रयत्वादेकारोपितविशिष्टेपरारोपः । मैवं । आरोपिताधिकसत्ताकस्यैवारोपाश्रयतावच्छेदकत्वात्रूप्यनिवृत्तावपिशुक्तित्वानिवृत्तिवदुपाध्यपगमेमालिन्यनिवृत्तावपिप्रतिविंवानिवृत्त्यापत्तेः ॥ [१८१।३] प्रतिमुखमेवेति ॥ नन्वविद्योपहितस्याविद्याश्रयत्ववद्दर्पणोपहितस्यदर्पणाश्रितत्वंसंभविष्यति । मैवं । अविद्योपहितस्याविद्यकत्वेनाविद्याश्रयत्वानवच्छेदकत्वाद्दर्पणोपहितत्वस्यापिदर्पणाश्रितत्वादिरूपत्वेनदर्पणाश्रितत्वंप्रत्यप्रयोजकत्वात् ॥ [१८१।४] मालिन्येति ॥ ननुसंसारउपहितवृत्तिः । तथाचोपधेयांशमादायसामानाधिकरण्यसंभवः । मैवं । उपहितवृत्तिधर्मस्योपधेयेऽसत्त्वात् । वृत्त्युपहितस्यदृश्यत्वांगीकारेणतदुपधेयेशुद्धेपिदृश्यत्वापत्तेः । संसारस्यशुद्धाश्रितमोक्षसामानाधिकरण्यमानेतुमाह ॥ [१८१।६] वृक्षस्येति ॥ उपाधिना उपाधिसंबंधेन । दर्पणस्थत्वादिरूपउपाधिसंवंधोमुखेनानुभूयते प्रत्युतप्रतिविंवएवानुभूयतेइत्याद्युक्तहेतुमेतेनेत्यनेनपरामृशति । संसा

रस्यमोक्षसामानाधिकरण्यमपिदवानिष्टमित्याह ॥ संसारस्यापीति ॥ वृक्षसंयोगवद्दुःखादिरूपःसंसारोपिशुद्धएवस्यात् । तथाचनित्यमुक्तत्वश्रुतिर्निर्विषयास्यात् । ननुसर्वसालक्षण्याभावेपिकिंचित्सालक्षण्यमात्रेणैवविंबप्रतिविंवयोरभेदोस्तु । अत एवकस्तूर्याविंबप्रतिविंवयोःसौरभतदभावाभ्यांनभेदानुमानमतआह ॥ यदिचेति ॥ एतेनेति ॥ उक्तप्रत्यक्षादिनाविंबप्रति विंवयोर्भेदस्यसिद्धत्वेन ॥ मुखद्वयेति ॥ स्वस्यमुखद्वयाभावादित्यर्थः । ननुस्वमुखस्यैवग्रहणमितिननियमः । उपाधिसन्नि हितमात्रस्यैवतथाग्रहणात् । मैवं । उपाधिप्रतिविंवतत्त्वातिरिक्तस्योपाधिसन्निहितत्वस्याभावात् ॥ अस्मिन्पक्षइति ॥ न न्वभिघातकानेकत्वेनचक्षुषोनेकाग्रतासंपत्त्याप्रत्यग्रंस्वाभिघातकावच्छिन्नमुखाग्राहकता अतोनेकमुखप्रतीतिः । मैवं । अने काग्रताशब्देनानेककिरणवत्त्वंवाऽनेकत्वंवा । नाद्यः । तस्योपाधिंविनैवसिद्धेः । नहिचक्षुषएकएवकिरणः । नांत्यः । वाधि तत्वात् ॥ दर्पणेति ॥ नचान्वयव्यतिरेकसिद्धोपाधिप्रावल्याद्विरुद्धरूपमुखप्रतीतिः । मैवं । स्वस्मिन्मुखांतरोत्पादकत्वान्य स्योपाधिप्रावल्यस्याभावात् ॥ अस्याइति ॥ चक्षुःपरिवृत्तिरूपप्रक्रियायाः ॥ विरलेति ॥ नचसर्वावच्छेदेनाभिघाताभावा दंतरेपिचक्षुःप्रवेशसंभवइतिवाच्यं । यथेच्छकल्पनायानिष्प्रमाणत्वात् ॥ अस्यामिति ॥ एतेनतवापिशिलादौप्रतिविंवमुत्प द्यतां अस्वच्छतयापरिहारस्तुममापिसमइतिनिरस्तं । स्वच्छतायाःप्रतिविंबोत्पत्तिंप्रतीवचक्षुःप्रतिघातंप्रत्यप्रयोजकत्वात् ॥ ॥३५४॥ प्रतिचंद्रादीति ॥ त्वन्मतेप्रतिचंद्रादिदर्शनस्यापिसमीचीनचंद्रादिदर्शनत्वात् । ननुयत्रसामान्यतंस्तद्दर्शनमात्रजन्यतातत्रे

ष्टापत्तिः । यत्रचोपाधिनिर्मुक्तज्ञानत्वेनविशेष्यजन्यतंतात्रापादकाभावः । मैवं । कपिलादीनामुपाधिकवलितत्वतद्विनिर्मु
क्तत्वलक्षणद्विरूपाभावात् । आदित्यमीक्षयेदित्यादावुपाधिविनिर्मुक्तेतिविशेषस्यक्काप्यभावात् ॥ अवच्छेदपक्ष[१८१।२२]इति ॥ यो
विज्ञानेतिष्ठन्यआत्मनितिष्ठन्नित्यादावंतर्यामित्वंश्रूयते । तच्चयद्यप्यवच्छेदपक्षेनसंभवति । घटावच्छिन्नाकाशेवाह्याकाशाद
र्शनात् । द्विगुंणीकृत्यवृत्त्यनुपपत्तेः । तथापिप्रतिविंवपक्षेसंभवतिजलप्रतिविंवितकाशेवाह्याकाशस्यापिदर्शनादित्यादिनात्र
ह्मणोंतर्यामित्वमुक्तं । तच्चप्रतिविंवाख्यव्यक्त्यंतरानंगीकारेनयुज्यते ॥ उपाधे[१८१।२३]रिति ॥ प्रतिविंवाख्यवस्त्वंतराभावात्कस्यप
क्षउपाधिःपतेत् ॥ प्रतिमुखेदर्पण[१८२।१३]स्थत्वस्येति ॥ ननुमुखप्रतिमुखयोरैक्यान्मुखस्यैतत्स्थत्वनिषेधेनप्रतिमुखस्यैवतत्स्थत्वनि
षेधः । मैवं । तयोरेकस्यासिद्ध्यान्योन्याश्रयात् ॥ नहिभूमा[१८२।१४]विति ॥ एवमादर्शेमुखंनेत्येतावताप्रतिमुखमपिनास्तीतिनसं
भवतीत्यर्थः । तस्मादित्युपसंहारः ॥ अन्य[१८२।१५]थेति ॥ तयोरभेदे ॥ किंचाना[१८२।१७]देरिति ॥ ननूपाध्यधीनत्वंह्युपाधौसत्येवसत्वं ।
तच्चनानादित्वविरोधि । अनाद्युपाधिनाऽनादिजीवस्यापितत्संभवात् । मैवं । उपाधेर्ब्रह्मातिरिक्तस्यकल्पिततयासादित्वाव
श्यंभावात् ॥ दधीन[१८२।१६]त्वइति ॥ विंवाधीनत्वेसतिविंवसदृशत्वं ॥ अत[१८२।१७]एवचोपमेति ॥ वहवःसूर्यकायद्वत्सूर्यस्यसदृशा
जले । एवमेवात्मकालेःकेपराद्मसदृशामताइत्यादिषुजीवस्यपरमेश्वरप्रतिविंवरूपोपमाक्रियतेयासासूत्रस्थचशब्दप्रदर्शितभेदे
सत्येवेश्वराधीनत्वंतत्सदृशत्वादिना । तत्रदृष्टांतःसूर्यकादिवदिति । यथासूर्यकस्यसूर्येणोपमाक्रियतेतद्वत् । नचभेदाध
सिद्धिः । पृथगुपदेशात् संध्येसृष्टिराहहि तद्गुणसारत्वादित्यादितत्सिद्धेः ॥ इदमुक्तंभवति । जीवोब्रह्मभिन्नः तत्प्रतिविंव

त्वात् । सामान्यव्याप्तौसूर्यकोदृष्टांतः ॥ [१८२।१२] भिन्नत्वेति ॥ अयंसौत्रचशब्दस्यार्थः । भिन्नत्वरूपसाध्यस्यतदधीनत्वादिरूपहे
तोश्चसूर्यकइवजीवेपिसत्वादुपसंक्रियते । ननुसूर्यकेउपाध्यधीनत्वमप्यस्ति जीवेतुतन्नास्तिनित्यत्वादतउक्तं ॥ [१८२।१३] नोपाधीति
॥ ७ ॥ ७ ॥ बिंबप्रतिबिंबैक्यभंगः ॥ ३२ ॥ ७ ॥ [१८३।२३] गतेःसुखदुःखाद्यनुभवसामानाधिकरण्योक्तेरिति ॥ नन्वात्म
निसुखदुःखाद्यनुभवस्याप्यौपाधिकत्वेनतत्सामानाधिकरण्यंगतेःस्वाभाविकत्वासाधकमितिचेन्न । ज्ञानत्ववत्सौषुप्तिकाज्ञाना
दिसाक्षित्ववत्सत्यस्यासत्यस्यवासुखादिभोक्तृत्वादेरप्यात्मन्येवस्वीकर्तव्यत्वादित्युक्तत्वात्कर्तृत्वाध्यासभंगे ॥ [१८३।२३] सएनानिति ॥
नन्वव्यापकस्यैवाव्यापकंप्रतिगमनं ब्रह्मचव्यापकमितिकथंतत्प्रतिगमनं । मैवं । विभोरप्याकाशादेःसर्वमूर्तक्रियाजन्यसंयो
गाश्रयत्वरूपतत्प्राप्यत्वात् । व्यापकस्यापीश्वरस्याचिंत्यशक्त्याणुत्वाच्च ॥ [१८३।१] तेनप्रद्योतेनैषइति ॥ नन्वेषइतिबुद्ध्युपहितस्यैव
परामर्शेनशुद्धात्मनिष्ठत्वंगतावनुक्तमितितदाशंक्यपरिहरति ॥ [१८३।३] नचश्रुतिरिति ॥ [१८३।४] तमुत्क्रामंतमिति ॥ नचप्राणाख्यांशेन
पश्चाद्गतावप्यंशांतरेणबुद्धेःप्रथममुत्क्रमणमितिवाच्यं । त्वन्मतेप्राणातिरिक्तस्यक्रियाशक्तियुक्तस्याभावात् ॥ [१८३।६] पुरुषमुपै
तीति ॥ व्यापकस्यापिप्राप्यत्वंतूक्तं ॥ [१८३।१४] कृतहान्यादीति ॥ ननुनकृतहान्यादिप्रसंगः । यद्बुद्ध्यवच्छिन्नेनयेनैवात्मनायत्कृतं
तदवच्छिन्नेनतेनैवभोजनात् । नह्यात्मनोनिरवयवस्यप्रदेशोस्ति । मैवं । गतिमतीबुद्धिर्यत्रात्मनिसंबध्यकर्तारमकरोत्ततोन्य
त्रगत्वातमेवात्मानमभिलक्ष्यतत्रभेदंकल्पयित्वातमात्मानंस्वोपहितंकृत्वातमेवात्मानंभोक्तारंकरोतीत्यत्रकृतहान्याद्युक्तेः ॥ क

[१८३।१४] तुर्भोक्तुरिति ॥ नन्ववच्छेद्यात्मनोवच्छेदकबुद्धेश्चैक्येवच्छिन्नभेदोवक्तुमशक्यः । मैवं । उक्तरीत्यागच्छंत्याबुद्ध्यावच्छिन्नस्य भिन्नत्वात् । अन्यथात्मनिगत्ययोगात् । तदेतदाह ॥ [१८३।१५] अभिन्नइति ॥ [१८३।२०] द्रव्यत्वेति ॥ घटत्वादावव्यभिचारायसाक्षात्पदं । नचव्यापकावृत्तित्वमुपाधिः । सत्तादौसाध्याव्यापकत्वात् । तस्यैथसाध्यत्वाच्च ॥ [१८३।२०] भूतेतरत्वेइति ॥ आकाशेकालदिशोरी श्वरेचाव्यभिचारायक्रमेणपदानि ॥ [१८३।२१] शब्देतरेति ॥ आकाशेश्वरयोरव्यभिचारायविशेषांतं । नचत्रिष्वप्यनात्मत्वमुपाधिः । धर्मिग्राहकमानसिद्धव्याप्त्यवेकालादौसाध्याव्याप्तेः । विशेषगुणसंस्काराणांचात्मवृत्तित्वं नतुमनोवृत्तित्वमतोनासिद्धिः ॥ [१८४।१] मनोवदिति ॥ मनसोमध्यमपरिमाणानंगीकारान्नतत्रसाध्याप्रसिद्धिः । नचजडत्वमुपाधिः । त्वन्मतेशुद्धात्मनोनिर्विषयत्वे नाज्ञानत्वादिरूपजडत्वस्यपक्षादव्यावृत्तेः ॥ [१८४।३] जातिसमवायादेरिति ॥ नचतद्वदेवगुणस्यव्याप्तिरपिस्यादितिवाच्यं । आ श्रयंविनान्यत्रवृत्तौदृष्टांतकरणात् । प्राभाकरैर्नीलपीतादीनांव्याप्त्यंगीकाराच्च ॥ [१८४।७] स्फटिकेति ॥ तस्यातिनिविडत्वेनतत्रावय वांतरप्रवेशस्यासंभावितत्वात् ॥ [१८४।८] नित्यःसर्वगतेति ॥ नचाकाशवत्सर्वगतः सवाएषमहानजआत्मेत्यादिविरोधः । तस्येश्वर त्वात् ॥ [१८४।९] नानादेहेति ॥ नचाशेषवाचिसर्वशब्दस्यदेहपरत्वेनसंकोचेमानाभावः । सर्वस्यापिक्रमेणजीवदेहत्वात् ॥ [१८४।१२] प्रत्यक्ष त्वादीति ॥ प्रत्यक्षगुणाश्रयत्वादणुत्वसाधनंयत्कृतंतदप्रयोजकं ॥ [१८४।१३] सर्वेषांभोगायतनानिस्युरिति ॥ ननुतवापीश्वरस्यव्यापक

त्वेनसर्वदेहानांतद्भोगजनकत्वापत्तिःसमाना । मैवं । संभोगप्राप्तिरितिचेन्न वैशेष्यादित्यादिनासूत्रकृतैवाचिंत्यशक्तिमत्त्वेनस
र्वगतस्यापितस्यभोगानापत्तेरुक्तत्वात् ॥ चैत्रभोगाद्धेतोरपीति ॥ नचजनकादृष्टनिरूपितात्मद्वारकसन्निकर्षादतिप्रसंगा
भावइतिवाच्यं । संबंधंविनादृष्टस्यजनकत्वस्याग्रहेणान्योन्याश्रयात् ॥ बुद्धेर्ज्ञानस्येति ॥ नचैवंयोजनायांव्युत्क्रमप्रसंगः ।
श्वेताश्वतरेबुद्धेर्गुणेनेत्यस्यानंतरं वालाग्रशतभागस्यशतधाकल्पितस्यच । भागोजीवइतिज्ञेयःसचानंत्यायकल्पतइत्युक्तेः ।
अणुत्वसाधकानेकश्रुतिस्मृत्यानुकूल्यादुक्तयोजनायायुक्तत्वात् । परिच्छेदार्थमुपसंहरति ॥ तस्मादिति ॥ ७ ॥ ७ ॥ जीवा
णुत्वं ॥ ३३ ॥ ७ ॥ नविद्याभीराभीरवगतिविभंत्साभिरबुधांजिगीषाभिःकिंतुस्ववचसिशुश्रुत्साभिरकृषि ॥ तरंगिण्याख्या
तांबुधजनघनस्सूक्तिसलिलैर्नयेत्पूर्णप्रज्ञोदितनिगमसिद्धांतजलधिं ॥ १ ॥ सद्योजातजटाजपावनसरिद्गोदावरीतीरतोगव्यू
तिर्वसतिःसतांकुलवतामंबांपुरीतत्रये । व्यासाख्याउपमन्युगोत्रजबुधास्तेष्वास्तयोमुद्गलस्तत्राजज्ञतयेमुरारिचरणाव्यासाभि
धानावुधाः ॥ २ ॥ तेभ्योजायतविश्वनाथइतियःसज्ज्ञानरत्नाकरस्तस्मादाविरभूत्सुरद्रुमयशाआचार्यनारायणः ॥ रामाचा
र्यइतीरितस्तदनुजोग्रस्तत्ववादांबुधेरातानीत्सतरंगिणीमिहपरिच्छेदोद्वितीयोपियः ॥ इतिश्रीमद्रामाचार्यविरचितायां
न्यायामृततरंगिण्यांद्वितीयःपरिच्छेदः ॥ २ ॥

॥ श्रीमन्न्यायामृततरंगिण्यांद्वितीयपरिच्छेदःसंपूर्णः ॥

 श्रीमद्धनुमद्भीमभध्वांतर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवायनमः ॥ सद्गुणंकरधृतवत्सद्गुणंदूरदोषमुरुदोषमप्यलं । 
पार्थसारथिमपार्थसारथिंनंदनंदनतिसाधनंनुमः ॥ १ ॥ निदिध्यासनमंगिश्रवणादिकमंगमित्येतदाक्षिपति ॥ [१११] नन्वेतदिति ॥
॥ १ ॥ विवरण[१११]इति ॥ नन्वपरोक्षफलोदयेनिदिध्यासनांगतैवश्रवणमननयोःकिंनस्यात् । त्रयाणामपिसन्निपत्योपकाराविशेषात् । 
दर्शपूर्णमासवत्समप्रधानत्वंवाकिंनस्यादिति । उच्यते । शक्तितात्पर्यविशिष्टशब्दावधारणंप्रमेयावगमंप्रत्यव्यवधानेनकरणं २ । १
भवति । प्रमाणस्यप्रमेयावगमंप्रतीत्याद्युक्तं ॥ [११२] मनननिदिध्यासनेति ॥ तत्रापिमननस्यचित्तैकाग्र्यायोग्यरूपासंभावनानि
रसनद्वारेणचित्तस्यप्रत्यगात्मैकाग्रवृत्तिहेतुत्वंनिदिध्यासनस्यतुविपरीतसंस्काररूपविपरीतभावनानिरसनद्वारातद्धेतुत्वं ॥ प्र
[११३] त्यगात्मेति ॥ प्रत्यगात्मप्रवणतालक्षणोयःसंस्कारः तेनपरिनिष्पन्नायाब्रह्मैकाग्र्यलक्षणावृत्तिः सैवकार्यं तद्वारेणेत्यर्थः ॥
[११३] इतीति ॥ फलंप्रत्यव्यवहितस्यकारणस्यविशिष्टशब्दावधारणस्यव्यवहितेमनननिदिध्यासनेइतिहेतोरित्यर्थः । शक्तितात्पर्य
विशिष्टशब्दावधारणरूपस्यश्रवणस्यब्रह्मानुभवंप्रतिसाक्षाद्धेतुत्वेनकरणत्वमित्युक्तंदूषयति ॥ विचार[११४]इति ॥ शाब्दज्ञानेश
ब्दस्यतज्ज्ञानस्यवासाक्षात्कारणत्वं नान्यस्य । ननुशक्त्यादीनांसंदेहादौसतिशाब्दज्ञानाभावेनविशिष्टस्यहेतुत्वेवाच्येविशेषण
स्यापिहेतुत्वेनव्यवधानद्वाराऽवघाततंडुलादेरिवकरणांतर्गतिरस्तीत्यतःकरणवदेवशेषित्वंभविष्यतीत्यतआह ॥ [११४] नचेति ॥ 
अस्तुवाकरणांतर्गतिःशक्त्याद्यवधारणस्यतथापिनतस्यशब्दवन्मंत्याद्यपेक्षयाशेषित्वमित्याह ॥ सन्निपात्य[११५]पीति ॥ प्रधानंप्र

तिसन्निपात्यंगस्यारादुपकारकांगानांचपरस्परमंगांगित्वाभावात् । अन्यथाऽवघातंप्रतिप्रयाजादेःशेषत्वंस्यादित्यर्थः । तद्वांन्नेयादिवत्त्रयाणामपिप्राधान्यमस्त्वित्यतआह ॥ [११६] हीषादेरिति ॥ सौभराख्येनसामविशेषेणतुष्टावन्नाद्येस्वर्गेचफलेजननीये सति हीषं ऊर्क ऊ इत्येषांसौराख्यसामसमाम्नयवयवानांसौभरेणवृष्टौजननीयायांहीषूइत्येतस्य अन्नाद्येजननीयेऊर्कइत्येतस्य स्वर्गेजननीयेऊंइत्येतस्यसौभरंप्रत्येवयथांगत्वं तथाशब्देनपरोक्षज्ञानेजननीयेशक्त्याद्यवधारणरूपविचारस्यांगत्वमपरोक्षज्ञानेशब्देनजननीयेमननादेरंगत्वमितिशब्दंप्रत्येवत्रयाणामंगत्वंवक्तुंयुक्तं । नतुपरस्परांगत्वं । अन्यथाहीषूइत्यादीनामपिपरस्परांगत्वंस्यात् ॥ [११६] भिन्नफलइति ॥ शब्देनजननीयइतिशेषः । स्याच्छब्दोनास्थायां । निदिध्यासनंप्रतिश्रवणादेरंगत्वस्यवक्ष्यमाणत्वात् । मौनिश्लोकादौशब्दाभावादाह ॥ [११०] शब्दज्ञानेवेति ॥ शक्त्यवधारणस्यविचारात्पूर्वभावित्वेनविचारानंतर्गतत्वात्तात्पर्यावधारणमेवतदंतर्गतमितिमत्वाह ॥ [११०] तात्पर्यविशिष्टेति ॥ [११११] अन्योन्याश्रयादिति ॥ तात्पर्यविषयशब्दार्थमज्ञात्वात्रतात्पर्यस्यग्रहीतुमशक्यत्वात्तात्पर्यज्ञानेशाब्दज्ञानापेक्षा तस्मिंश्चतात्पर्यज्ञानापेक्षेत्यन्योन्याश्रयः । नन्वेवमाकांक्षादिधियोपि निराकांक्षत्वादिभ्रमनिरासिकाएव नतुशाब्दधीहेतवइतिस्यात् । नस्यात् । निराकांक्षत्वादिज्ञानाभावेप्याकांक्षादिज्ञानंविना शाब्दज्ञानाभावस्यानुभवसिद्धत्वात् । ननुतात्पर्यज्ञानाहेतुत्वेकथंनानार्थेविनिगमना । अन्वयविशेषयोग्यतयेतिगृहाण । यत्तुग्राह्यसंशयविपर्ययोत्तरप्रत्यक्षेविशेषदर्शनमिवतात्पर्यसंशयोत्तरशाब्दज्ञानेतात्पर्यधीःकारणमिति तन्न । उभयत्रोभयस्यप्रतिबंधनिरासमात्रोपयोगित्वेनाहेतुत्वात् । तदिदमुक्तंप्रतिबंधनिरासेत्यादि । तात्पर्यभ्रमस्यप्रतिबंधकत्वंचकार्यबलान्मणिमं

त्रादिवत् । अतएवसाक्षादविरोधिनोज्ञानस्यजनकज्ञानविघटकतयैवप्रतिबंधकत्वमित्यादेरनवकाशः ॥ [११९३]बाह्यागमेपीति ॥ शब्दार्थस्यबाधितत्वेपितद्वक्तुस्तत्रतात्पर्यमबाधितमेव ॥ [११९३]दुष्टत्वेति ॥ ज्ञानरूपेषुज्ञानकरणेषुभ्रमरूपंदुष्टंप्रमारूपमदुष्टमित्यन्यत्रदृष्टाव्यवस्थानस्यात् । यादृच्छिकसंवादिलिंगविभ्रमस्यतुदुष्टत्वमेव । स्वव्यापकभ्रमहेतुत्वात् । तत्रप्रतीतस्यतदव्यापकत्वात् । ननुवेदेकुत्रचिदेवतात्पर्यभ्रमोबाह्यागमेतुकुत्रचिदेवतत्प्रमेति । मैवं । यत्रैवतद्भ्रमप्रमेतदंशएवतयोर्दुष्टत्वादुष्टत्वापातात् ॥ [११९५]करणीयेति ॥ करणंह्यवदानयागः । तस्यद्रव्यंव्रीह्यादि । तत्रावघातादेःशेषत्वंयथास्तितथाप्रकृतेनास्तीत्यर्थतात्पर्यावधारणंशब्दंप्रतिनंसन्निपात्यंगमित्यर्थः । यत्तुदृष्टांतेसर्वसाम्यंनापेक्षितमतोवघातवैषम्येपितात्पर्यावधारणंशब्दंप्रतिनसंनिपत्यांगमेवेति । तन्न । मीमांसकप्रक्रियालेशस्याप्यज्ञानेनोक्तत्वात् ॥ [११९५]सन्निपत्येति ॥ दृष्टार्थानिक्रियारूपाणिस्वकारकस्योत्पत्त्यादिकुर्वंति अदृष्टार्थानिसन्निपातीनितुस्वकारकेष्वतिशयमादधतितत्तदंगभावमनुभवंति तात्पर्यावधारणंत्वनुभयंकथंसन्निपातिस्यात् ॥ [११९६]अन्यथावघातादिरिति ॥ ननुविशिष्टयागप्रविष्टतयावघातस्यशेषित्वमिष्टमेव । असाधारण्येनशेषितातुन । असाधारण्येनफलोपकारत्वाभावादिति । न । श्रवणत्वेनश्रवणस्यशेषित्ववदवघातत्वेनावघातस्यप्रयाजादिशेषित्वस्यापाद्यमानत्वात् ॥ [११९७]एतेनेति ॥ प्रधानंप्रतिसन्निपत्योपकारकस्यप्रधानोपकारकांतरापेक्षयाशेषित्वेवघातादेःप्रयाजाद्यपेक्षयाशेषित्वापातेनेत्यर्थः । ननुप्रयाजादिकंयागस्यैवसहकारि मननादिकंतुशब्दस्सहकारिभूतस्यचित्तस्यसहकारीतिवैषम्यमित्यतआह ॥

[१।१८] सोमेयागेति ॥ सोममभिषुणोति आश्विनंगृह्णातीत्यादिनाविहितमभिषवग्रहणादिकंसोमयागेसन्निपात्यंगं । अतएवाभिषवा दिकंकरणभूतेशब्दस्थानीयेसोमयागे अतिशयाधायकंकरणांतर्गततात्पर्यावधारणस्थानीयं तत्प्रतिसोमयागसहकारिभूतायाः दीक्षणीयचित्तंस्थानीयांतरगमतएवतद्गतातिशयहेतुःप्रयाजप्रोक्षणादिमननादिस्थानीयमंगंस्यात् । नन्वभिषवादियुक्तसोम यागंप्रत्यंगस्यप्रयाजादेरभिषवादिकंप्रत्यपितदस्त्येवेतिवदंतंप्रत्याह ॥ [१।२०] गौणांगत्वमिति ॥ श्रुत्याद्यधिगम्येंगत्वेतद्विनापिकल्प नेऽतिप्रसंगः । शब्दादापरोक्ष्यंवदताशब्दत्रयाणामंगत्वंवक्तुंयुक्तमित्याह ॥ [१।२१] किंचेति ॥ [१।३४] अन्यथेति ॥ अनेकफलानिसाधय तैकेनतत्तत्फलेजनयितव्येऽपेक्षितानांसहकारिविशेषाणांपरस्परमंगांगिभावांगीकारइत्यर्थः । सौभरेण सौभरनामकेनसाम्ना । निधनं साम्नोंत्योवयवः । द्वितीयस्यचतुर्थेभिहितं । सौभरेपुरुषश्रुतेर्निधनेकामसंयोगः । ब्रह्मसामाख्यंस्तोत्रंप्रकल्प्यतदाश्रि तंसौभरंफलत्रयसाधनत्वेनयोवृष्टिकामइतिवाक्येनविधायवृष्ट्यादिसाधनंसौभरेनिधनसाधनत्वेनहीषादयोहीषादिवाक्येनविहि ताः । तत्रसंशयः । किंहीषादयोनिधनविशेषाःसौभरफलात्फलांतरार्थेनविधीयंतेउतसौभरस्यैवतत्तत्फलंसाधयतः तत्तन्नि धनमनियमेनपाठतःप्राप्तंनियम्यतइति । तदर्थंकिंवृष्टिकामादिशब्दोक्तपुरुषशेषत्वेनैतेसाक्षाद्विधीयंतेउतवृष्टिसाधनसौभरशे षत्वेनेति । तत्रवृष्टिकामादिशब्दैःपुरुषस्यश्रुतत्वात्तादर्थ्यमेवहीषादीनांचतुर्थ्याविज्ञायते । पुरुषशेषताचतदभिलषितफलसा धनतयेतिफलार्थत्वमेवैषां । वृष्टिकामशब्देनवृष्टिकामस्येच्छाविषयवृष्टिसाधनसौभरोक्तौलक्षणास्यात् । नचश्रुतिसंभवेसा युक्ता । तस्माद्धीषादयोगुणाःसौभरफलाद्वृष्ट्यादेर्भिन्नस्यहेतवइति । अत्राहुः । वृष्ट्यादीनिपूर्वोक्तान्येवविपरिवर्तमानानिप्रत्यभि

ज्ञायंतइतिनफलांतरावगमः । किंचहीषादिशब्दमात्रेफलांयविहितेसत्याश्रयापेक्षायानलावन्निधनमाश्रयोभवितुंयुक्तं । तस्या प्रकृतत्वात् । नापिसौभरं । प्रकृतत्वेप्यनेकावयवत्वान्नियमेननिधनसंबंधायोगात् । तथात्वेनिधनमित्यनर्थकंस्यात् । निधन स्यापिविधानेवाक्यभेदः । तस्माद्वृष्टिकामादिशब्दलक्षितेसौभरेनिधनत्वेनैवानियतप्राप्ताहीषादयोनियम्यंते । अथवालक्षणा पिनास्ति । नहियदेवफलस्यकारणंतस्यैवपुरुषशेषत्वंतदंगस्यापितद्वारेणास्तिपुरुषशेषिता । तथाचप्रयोगोदृश्यते । वासिष्ठा नांनाराशंसोद्वितीयःप्रयाजइति । सौभरांगभूतास्तद्वारेणवृष्टिकामादीनांपुरुषाणामनियमेनशेषभूताःप्राप्तास्तानेवप्रतियथाप्रा प्तरूपानियम्यंतइतिनलक्षणा । तदुक्तं । तस्मात्फलांतरार्थेननैवहीषादयोगुणाः । विधीयंतेनियम्यंतेतेयथाप्राप्तसौभरइति । एकस्यभिन्नभिन्नकार्यजननेऽपेक्षितानांभिन्नभिन्नसहकारिणांपरस्परमंगांगिभावेदूषणांतरमाह ॥ [२१] करणापूर्वेति ॥ यागेनक रणापूर्वेजननीयेऽवघातादिःसहकारी । परमापूर्वेतुजननीयेप्रयाजादिःसहकारी । नत्ववघातादिकंप्रतिप्रयाजादिःशेषः । त्व द्रीत्यातुस्यादित्यर्थः । करणापूर्वनामप्रधानमात्रेणजननीयापूर्वं । सांगेनतेनजननीयंतुपरमापूर्वमिति । ननुशब्दस्यपरोक्षज्ञा नंप्रतिहेतुत्वेतदुपच्छेदेनश्रवणस्यशब्दंप्रत्यंगत्वंस्यात्तदेवतुनास्तीत्यतआह ॥ [२१२] कृप्तंचेति ॥ एतेनयागेऽपूर्वभेदवत्प्रकृतेनकार्य भेदइतिनिरस्तं । नन्वकरणमपिप्रयाजादिकंप्रत्याज्यग्रहणादेरिवश्रवणंप्रतिमननादेरंगत्वंभविष्यतीत्यतआह ॥ [२१२] नचाकरण मपीति ॥ चतुर्जुह्वांगृह्णातिप्रयाजेभ्यस्तदित्यादेरिवात्रश्रुत्यादेरभावात् ॥ [२१३] लिंगंत्विति ॥ श्रुतस्यार्थस्यमंतव्यादिरूपतयाश्र वणस्यमननाद्युपकारकत्वरूपसामर्थ्यवन्मननध्यानयोःश्रोतव्यस्वाभावेनतयोस्तथासामर्थ्याभावाद्विपरीतंलिंगंसामर्थ्यं ॥ प्र

[३१३] करणमिति ॥ इतिकर्तव्यताकांक्षाप्रकरणं ॥ [३१३] श्रवणस्येति ॥ तात्पर्यावधारणरूपश्रवणस्यशाब्दप्रमारूपफलाहेतुत्वात् ॥ [३१४] स्थानेति ॥ स्थानंसादेश्यं । समाख्यायौगिकीसंज्ञा । ननुतात्पर्यावधारणरूपंश्रवणस्यशाब्दप्रमांप्रत्यहेतुत्वेनाप्रधानतयेति कर्तव्यतारूपाकांक्षाविरहेपितात्पर्यावधारणहेतोर्विचारस्यशांब्दप्रमाहेतुत्वादिकंस्यादित्यतआह ॥ [३१४] किंचेति ॥ मननादेःशाब्दज्ञानेऽहेतुत्वेनश्रवणंप्रतिमतयोःफलोपकार्यंगत्वमित्याह ॥ [३१६] यच्चोक्तमिति ॥ तत्रमननस्यनशांब्दज्ञानहेतुत्वं द्वाराभावादित्याह ॥ [३१६] सूक्ष्मेति ॥ चित्तैकाग्र्यस्यशाब्दज्ञानविशेषत्वेपिनतस्यमननसाध्यत्वं । किंत्वयुक्तत्वशंकानिवृत्तिरेवतत्साध्या । तद्रहिते अयुक्तत्वशंकारहिते ॥ [३१८] उक्तेति ॥ चित्तैकाग्र्यं ॥ [३१८] शंकेति ॥ असंभावनेत्यर्थः । अयुक्तत्वशंकानिवृत्तिस्तुमननद्वारा । तस्याःप्रतिबंधकाभावरूपत्वादितिभावः ॥ [३१९] मननविधेरिति ॥ चित्तैकाग्र्यस्यमननसाध्यतायामानंतराप्राप्तत्वात् ॥ [३१९] मतिरिति ॥ अयुक्तत्वशंकानिवर्तकत्वमेवमननेप्रतीयते । नतुचित्तैकाग्र्यहेतुत्वं । निदिध्यासनस्यापिनशाब्दधीहेतुत्वं । द्वाराभावादित्याह ॥ [३१९] निदिध्यासनस्येति ॥ [३११] रूप्येति ॥ ननुइयंशुक्तिरितिज्ञानानंतरंतद्रजततयाज्ञातमितिस्मृतेर्ज्ञानगोचरसंस्कारसत्त्वेपितद्रजतमितिस्मरणेनविपरीतसंस्कारनिवृत्तिस्तत्राप्यस्तीति । मैवं । रूप्यसंस्कारसत्त्वेनशुक्तिसाक्षात्कारवत्प्रपंचसंस्कारसत्त्वेपिब्रह्मसाक्षात्कारसंभवात् । तत्प्रवृत्तिनिदिध्यासनस्यद्वारमित्युक्तावेतस्यव्यधिकरणत्वात् ॥ [३११६] श्रवणसामर्थ्येति ॥ श्रुतार्थस्यैवमतस्यैवध्यातव्यत्वात् ॥ [३११३] निदिध्यासनस्येति ॥ फलसाधनस्यैवेतिकर्तव्यताकांक्षारूपप्रकरणं

फलसाधनंचनिदिध्यासनमेव ।ततस्तुतंपश्यतइतिवाक्यात् । ननुश्रवणमननेध्यानंप्रतिलिंगप्रकरणाभ्यांसन्निपात्यंगेइतिन युक्तं । तयोर्ध्यानंप्रतिफलोपकारकत्वसंभवादित्यतआह ॥ युक्तश्चेति ॥ अतएवेति ॥ स्वरूपोपकारस्यांतरंगत्वादेव । नवमे द्वितीयपादइतिशेषः । पार्वणहोमयोस्त्वप्रवृत्तिःसमुदायार्थसंयोगात्तदभीज्याहिदर्शपूर्णमासयोः । स्रुवेणपार्वणहो मौजुहोतीतितद्धितश्रुत्यापर्वदैवत्यौहोमौश्रुतौ । तौकिंविकृतिर्दृश्यतेनवेतिसंशयः तदर्थमिदंविचार्यते किंपर्वशब्दःकालव चनः कालोस्यदेवतातस्यचासंस्कार्यत्वादारादुपकारकौहोमौउताग्नेयादिसमुदायवचनः समुदायदैवत्यौहोमौतत्संस्कार्याविति। तत्रपृणातेर्दानकर्मणःपर्वशब्दः सच्चदीयतेस्मिन्नित्यधिकरणव्युत्पत्त्याकालेप्मुख्योभावव्युत्पत्त्याकर्मण्यपि । तत्रप्रकरणात्सा मवायिकत्वलाभाच्चकर्मवचनत्वमंगीकृत्यतत्संस्कारार्थताहोमयोः । तेषांचकर्मणांतंत्रेणाभिहितानामग्नीषोमयोरिवव्यासक्तं देवतात्वं । नैकैकशः । तेनसमुदायस्यदेवतात्वात् । तस्यचविकृतिस्वभावादतद्विकारत्वाच्चसौर्यादेस्तत्रहोमयोरप्रवृत्तिः । नहिसौर्यादयःसमुदायविकाराः । तदुक्तं । कालेशब्दस्यमुख्यत्वात्कालामाज्येहगम्यते । पृणातेर्दानकर्मत्वात्कर्मण्यपिचमुख्य तेति ॥ पाठरूपेति ॥ यथासान्नाय्यपात्रशुंधनक्रमाच्छुंधध्वमितिमंत्रस्यसान्नाय्यपात्रांगत्वं ॥ सन्निधानस्येति ॥ यथादर्श पूर्णमास्योःश्रूयतेहस्तावनिक्तेउलुपराजिंस्तृणातीति तत्रहस्तावनेजनंहस्तसंस्कारार्थंसत्करिष्यमाणसर्वांगंवा अनंतरोक्तो लुपराजिस्तरणांगंवेतिसंशयेआनंतर्यरूपसन्निधानात्तन्मात्रांगमितिप्राप्तेलिंगेनसर्वांगमितिसिद्धांतितंतृतीयस्यद्वितीये । आदि पदेनश्रुत्वामत्वेत्यादिकाश्रुतिःसन्निधानंचगृह्यते । श्रवणमननयोर्दृष्टद्वाराध्यानस्वरूपनिष्पादकतयाध्यानेसन्निपात्यंगत्वं

ध्यानस्यतुफलसंबंधेनप्राधान्यमित्यर्थेपाठसादृश्यलक्षणःसन्निधिरप्यस्तीत्याह ॥ [३।१६] श्रुत्वामत्वेति ॥ परोक्षनिश्चयंविनाध्यान
स्वरूपासिद्धेस्तत्रतयोःसन्निपातित्वमपि ॥ [३।३३] प्रमाकरणत्वमसिद्धमितीति ॥ ततस्तुतंपश्यतइतिवाक्येदर्शनमात्रश्रवणादि
तिभावः ॥ [३।३३] निदिध्यासनानंतरमिति ॥ अतएवध्यानभमानकमित्यतआहं ॥ [३।३४] अथवेति ॥ ७ ॥ ७ ॥ मननिदिध्या
सनयोर्विवरणोक्तश्रवणांगत्वभंगः ॥ १ ॥ ७ ॥ [३।४] परोक्षज्ञानेकामनाभावादिति ॥ परोक्षज्ञानिज्ञानंविनातत्कामनाया
अयोगेनतज्ज्ञानेसतितद्विषयस्यापिज्ञातत्वान्नतत्रेच्छासंभवतिसिद्धेइच्छाविरहात् ॥ [३।१२] स्वर्गादौनिध्यादाविति ॥ यत्तुस्वर्ग
निधिसाधनसाक्षात्कारेपिविचारस्येंद्रियसहकारित्वाद्धेतुत्वमेवेति । तन्न । न्यायानुसंधानादिनालौकिकेनांजनादिनापामरा
णामपिस्वर्गनिधिसाक्षात्कारसत्त्वात् ॥ [३।१३] प्रकृतविचारेति ॥ श्रुत्याद्यविरोधितदनुग्राहकन्यायानुसंधानरूपप्रकृतविचारः ॥
[३।१५] अपूर्वविधीति ॥ स्वर्गविजातीयेलौकिकसुखेयागविजातीयलौकिकक्रियाथाःहेतुत्वदर्शनाद्यागादिविधिरप्यपूर्वविधिर्नस्यात्
॥ [३।१८] अन्यथेति ॥ व्रीहीनवहंतीत्यत्रव्रीहिशब्दस्यव्रीहिमात्रपरत्वेहिवैतुष्यमात्रेऽवघातनियमइतिस्यात् तथाचावघातःपुरुषार्थः
स्यात् नतुक्रत्वर्थः । ननुव्रीहीनवहंतीत्यत्रव्रीहिशब्दोपूर्वद्रव्यंपरोतोनावघातस्यपुरुषार्थत्वंव्रीहित्वेनविदलनप्राप्तिरित्यतआह
॥ [३।२१] नचसामान्यइति ॥ ननूभयानुगतेसविशेषतथ्याप्रमेयतायांमानांतरप्राप्तिरस्त्येव सजातीयेप्राप्त्यापियत्रसजातीयांतरेनि
यमसंभवस्तदाकिंमुवाच्यमेकस्मिन्नेवात्मन्यवस्थाविशेषेणमानांतरप्राप्त्याविशेषांतरेनियमइतीत्यतआह॥ [३।२२] यत्रापूर्वीयेष्विति॥
यत्रयद्रूपेषुयदवस्थेषुभिन्नभिन्नावस्थयोःप्राप्तिनियमयोरुक्तौवैयधिकरण्यंभिन्नविषयत्वंस्यात् । तच्चांगीकारांनर्हं । ननुसीमा

नाधिकरण्यासंभवाद्वैयधिकरण्यमप्यवघातेप्रकृतेचाऽऽश्रवणीयमतआह ॥ संभवंतिव्रीहीति ॥ यद्रूपाणांयदवस्थानांव्रीही
णामपूर्वीयत्वंतत्रैवविदलनप्राप्तिरस्तिप्रकृतेतुनतथेत्यर्थः ॥ तथात्वइति ॥ अपूर्वीयेषुव्रीहिषुदलनस्यप्राप्तिश्चेद्वैरूप्यस्यतेनैव
सिद्धत्वादवघातनियमायोगः । अप्राप्तिश्चेत्सुतरांतदयोगः ॥ प्रसक्तिमात्रमिति ॥ तदन्वयितावच्छेदकसंबंधः । सचव्री
हिष्वपूर्वीयेष्वस्तिनिर्विशेषात्मनितुनकस्यापिसंबंधइतिवैषम्यं । ननुव्रीहिवैतुष्येसाधनांतरप्राप्तावपिनियमविषयेतद्वैतुष्यविशे
षेनतत्प्राप्तिरितिवैयधिकरण्यमतआह ॥ अवघातसाध्येति ॥ अपूर्वीयेष्ववघातसामान्यसाधनप्राप्तिमात्रेणसामानाधिक
रण्यं । निर्विशेषात्मनितुज्ञानसामान्यसाधनस्यवेदांतवाक्यभिन्नस्यप्राप्तिर्नेतिवैषम्यंग्रहणकवाक्यं संग्रहवाक्यं ॥ परिपूर्णा
र्थइति ॥ अस्मिन्पक्षेवेदांतवाक्यंनप्राप्तं तस्मिन्नपिपूर्यते ॥ कर्मविषयकेति ॥ ननूभयत्रस्मृत्यादेःस्वातंत्र्येणाप्रमाणतया
श्रुतितात्पर्यनिर्णायकत्वमेव । मैवं । श्रुतेरिवस्मृतेरपिधर्मादौप्रामाण्यात् । अन्यथास्मृत्यनुमितश्रुतेरपिश्रुत्यंतरतात्पर्यग्राह
कत्वंस्यात् । श्रुतिविरोधेस्मृतिर्दुर्बलेत्येवस्मृतेरस्वातंत्र्यं ॥ समुपबृंहयेदिति ॥ इतिहासादिनैवबृंहयेन्नतुतेनबृंहयेदेवेत्यर्थः
॥ मूलप्रमाणत्वेति ॥ स्मृतीनामपिश्रुतिमूलत्वात्ताभ्यःश्रुतमपिश्रुतिभ्यएवश्रुतमितिनानेनस्मृतिनिषेधः । श्रुतिवाक्ये
भ्यइतिपंचमीतुप्रयोजकत्वेपि । इतिपुराणंपंचमंवेदानांवेदमित्यादिवचनादेवश्रवणनियमादृष्टस्यकिंचिद्विषयाज्ञानहेतुभूता
यामंतःकरणशुद्धावुपयोगोवाशबलापरोक्षेवातद्विशेषेवा तंजन्याज्ञाननिवृत्तौवामोक्षीयानंदानुभवेवा । नाद्यइत्याह ॥ वि
प्रकीर्णेति ॥ नद्वितीयइत्याह ॥ आपरोक्ष्यस्येति ॥ नतृतीयइत्याह ॥ वेदजन्येति ॥ नचतुर्थइत्याह ॥ ज्ञानस्येति ॥

नपंचमइत्याह ॥ [४।१८]अन्यस्यचेति ॥ आनंदानुभवादेः । एतेनतमेवंवेदानुवचनेनेत्यादिश्रुतयज्ञादिजन्यादृष्टस्यनियमादृष्टस्य
चांतःकरणशुद्धावुपयोगइतिनिरस्तं । यज्ञादिकर्मणांज्ञानार्थत्वेपिनियमादृष्टस्यतथात्वेमानाभावात् ॥ [४।१८]नियमादृष्टसाध्य
स्येति ॥ अपिशब्दश्चशब्दार्थे ॥ ७ ॥ ७ ॥ श्रवणादिविधेर्विवरणोक्तनियमविधित्वभंगः ॥ २ ॥ ४ ॥ ज्ञानविध्य
[४।२२]भावादिति ॥ प्रमाणविषयपरतंत्रस्यज्ञानस्यपुमतंत्रत्वेनाविधेयत्वांगीकारात् ॥ [४।२३]शक्त्यसंभवादिति ॥ नचशुद्धेशक्त्यसं
भवेपिविशिष्टशक्तिरेवतद्बोधोपयोगिनीसैवावधारणीयेतिवाच्यं । शक्तितात्पर्ययोर्भिन्नविषयत्वापातात् । अन्यशक्त्यान्योप
स्थापनेलक्षणयाऽनवस्थापातेनविशिष्टशक्तेःशुद्धबोधानुपयोगितयातत्रशक्त्यवधारणस्यव्यर्थत्वाच्च ॥ [४।२५]अखंडार्थताहाने
रिति ॥ प्रकारोपलक्षितमपितदुपलक्षितत्वादिधर्मवदेवेत्यर्थः ॥ [५।१]उपक्रमादिरूपइति ॥ ननुपरमतेलिंगस्यप्रमाणत्वानभ्युप
गमेनप्रमाणेसतीत्येतदसिद्धमिति । न । यदेवानुमानेप्रमाणत्वेनाभिमतंपरेणतस्यैवात्रप्रमाणशब्देनाभिमतत्वात् । प्रमाणव
स्तुपरतंत्रस्यापिज्ञानविजातीयत्वेऽनुमित्यादिकमपिज्ञानंनस्यात् । नन्वनुमितेरपुंतंत्रत्वादस्तुज्ञानत्वमितिचेत्समंप्रकृतेपीत्याह
॥ [५।१]व्याप्तिज्ञानेति ॥ ननुव्याप्तिज्ञानापेक्षत्वमेवपुंतंत्रत्वमित्यतआह ॥ नहिपुंतंत्रइति ॥ ७ ॥ ७ ॥ परमतेश्रवणादिवि
ध्यनुपपत्तिः ॥ ३ ॥ ७ ॥ [५।३]रागप्राप्तेवाक्यार्थग्रहणइति ॥ वेदाध्ययनकालेवाक्यार्थज्ञानस्यप्रयोजनवत्त्वज्ञानात्तत्रेच्छा
॥ [५।३४]दर्शनश्रुतीनामिति ॥ साक्षात्कारएवदृशेःप्रयोगादित्यर्थः ॥ ७ ॥ ७ ॥ श्रोतव्यइत्याद्यादेरनुवादकत्वभंगः ॥ ४ ॥
॥ ७ ॥[५।२५]श्रवणविधिरेवेति ॥ श्रवणस्यविचारगर्भत्वात् ॥ [५।२६]श्रवणसाध्येति ॥ अपरोक्षज्ञानेसतितज्जन्यापरोक्षज्ञानकामना

यांश्रवणविध्यधीनविचारविधिः श्रवणविधौचसतिपरोक्षज्ञानमित्यन्योन्याश्रयः । नन्वधीतवेदस्यविदितपदपदार्थसंगतिकस्यापाततोजन्यमानंपरोक्षज्ञानंश्रवणंविनैवेतिनान्योन्याश्रयः । मैवं । अध्ययनोत्तरस्यविचारप्राग्भाविनोवेदार्थज्ञानस्यश्रवणफलत्वाच्छ्रवणविचारयोरत्यंतवैलक्षण्याच्छ्रवणविधिर्नविचारविधायकइत्याह ॥ किंचायमिति ॥ निर्णयात्मकोनिर्णयहेतुः ॥ अन्यथेति ॥ न्यायानुसंधानस्यकर्तव्यत्वंन्यायंविनानुपपन्नमितिन्यायग्रथनात्मकशास्त्रमारंभणीयं जिज्ञासासूत्रोक्तविचारस्यन्यायानुसंधानात्मकत्वाभावेतथाविधविचारस्यकर्तव्यता केनापिनोक्तेतिनन्यायग्रथनात्मकशास्त्रारंभसाधकंकिंचिदस्तीत्यर्थः ॥ इतरस्येति ॥ विचारस्यवेदापेक्षितन्यायानुसंधानरूपत्वेतस्यवेदंप्रतीतिकर्तव्यतारूपमंगत्वमित्यन्यथाश्रवणवदंगित्वमेवस्यात् ॥ मननाभेदप्रसंगादिति ॥ मननवदंगत्वप्रसंगइत्यपिबोध्यं । तथाचश्रवणविधिजिज्ञासासूत्रयोर्भिन्नविषयतयानमूलमूलिभावइतिभावः । ननुजिज्ञासासूत्रस्यश्रवणविधिविषयशक्तितात्पर्यावधारणात्मकश्रवणाक्षिप्तोपक्रमोपसंहारादितात्पर्यलिंगविचारमादायसमानविषयत्वमस्तीतिशंकते ॥ नन्वद्वितीयइति ॥ एवंसतिश्रवणस्यमननाभेदंनिरस्यति ॥ मननंत्विति ॥ वेदांतवाक्यनिष्ठमद्वितीयब्रह्मविषयकंयत्तात्पर्यंतस्यविचारितोपक्रमादिलिंगैर्यदवधारणंतच्छ्रवणमित्युक्तंभवति । तत्रचत्वदभ्युपगमविरोधइत्याह ॥ विवरणइति ॥ उक्तविधस्यश्रवणस्येतिकर्तव्यतात्वमेवायाति तच्चत्वदनभिमतमित्यर्थः । एतेनार्थाक्षिप्तविचारस्येतिकर्तव्यतात्वेपितात्पर्यावधारणरूपेश्रवणेउक्तस्यांगित्वस्यानपायइतिनिरस्तं । त्वदभिमतश्रवणस्यैवतद्रूपत्वेनाक्षेपासंभवात् ॥ श्रवणावृत्त्यैवेति ॥ उक्तसीरणादित्रितयान्यतमदृष्टमेवश्रवणफलंप्रकल्प्यदृष्टार्थानां

चफलसिद्धिपर्यंतमावृत्तेरर्थसिद्धत्वान्मननविधिंविनैवतत्सिद्धिरित्यर्थः ॥ [६।१०]त्रिविधस्यापीति ॥ श्रवणेयुक्तीरविधायमनने ताविदधतीतिस्मृतिर्मननेतदपेक्षांसूचयति । नचोक्तत्रिविधस्यापिमननस्यश्रवणानपेक्षितयुक्त्यपेक्षातोनस्मार्तीव्यवस्थायुक्ते त्यर्थः ॥ [६।११]श्रवणंयावदज्ञानमिति ॥ नचोक्तविधश्रवणमननयोर्विषयभेदः । येनश्रवणानिवर्तितशंकानिवर्तकंमननंस्यात् ॥ ॥ [६।१३]तर्हियुक्तायुक्तत्वेति ॥ न्यायरूपयुक्त्यनुसंधानकर्तव्यताबोधकमननविधेःन्यायग्रथनात्मकशास्त्रारंभकर्तव्यताबोधकस्य न्यायानुसंधानरूपविचारकर्तव्यताविधायकस्याद्यसूत्रस्यचसमानविषयत्वाद्युक्तोमननविधेराद्यसूत्रमूलभावोनतुश्रवणविधेरि त्यर्थः । एतेनतात्पर्यविषययुक्तायुक्तत्वादिसंशयनिवर्तकविचारापेक्षयातात्पर्यनिर्णायकश्रवणाक्षिप्तलिंगविचारस्याभ्यर्हितत्वे नतदाक्षेपकंश्रवणविधिरेवसूत्रमूलमितिनिरस्तं । विशिष्टतात्पर्यनिर्णयस्यमन्मतेश्रवणत्वेनतस्यतदाक्षेपकत्वायोगस्योक्तत्वात् । लिंगविचारस्यलिंग्यर्थत्वेनलिंगिनएवाभ्यर्हितत्वाच्च ॥ [६।१६]उक्तयुक्तीति ॥ मननेंतर्गतानामसंभावनानिरासिनीनां ॥ [६।१७]तेनैवेति ॥ श्रवणेनैवासंभावनानिरासेमननवैयर्थ्याच्च ॥ [६।१७]युक्त्यनुसंधानेपीति ॥ श्रुतपदप्रयोगेणसिद्धश्रवणभावेयुक्त्यनुप्रविष्टश्रव णलक्षणमव्याप्तंस्यादित्यर्थः । कौमुद्युक्तंलक्षणांतरंनिराकरोति ॥ [६।१८]नचकौमुदीति ॥ [६।२०]इष्टापत्तेरिति ॥ मननांतर्गतयुक्तीना मुक्तरूपेश्रवणेनंतर्भावात् ॥ [६।२१]विचारविधायकस्येति ॥ एतच्चमध्यमपक्षेपिदूषणंबोध्यं ॥ [६।२३]वेदांतश्रवणमिति ॥ शब्दशक्ति निर्णायकोयंःश्रुतिलिंगादिकोन्यायस्तदनुकूलश्चतर्कस्तद्वेदांतश्रवणंआगमार्थनिश्चयार्थोयोन्यायःयश्चतदनुकूलस्तर्कस्समंतव्यं इतिशब्देनभण्यतइत्यर्थः ॥ [६।२४]वेदशब्देति ॥ शुष्कतर्कस्यनिषेधेपिवैदिकतर्कस्यमीमांसंतंइत्यादिनावेदेनैवनियुक्तत्वात् ॥

संभावनेति ॥ तर्कैःकृतार्थस्यसंभावनायातन्मननमितिपूरणीयं । शब्दतात्पर्यतदर्थनिर्णायकयुक्तीनामनुसंधानेश्रवणमनने
इत्यस्मिन्नर्थेदूषणमाह ॥ विवरणइति ॥ अयमत्रटीकाविवरणादीनामभिप्रायः । आत्मैकत्वविद्याप्रतिपत्तयइत्यत्रभाष्येप्रति
पत्तिशब्दस्याप्त्यर्थत्वमभिसंधाय ननुनविद्यागवादिवत्तटस्थासिध्यतिकिंतुवेत्त्राश्रितावेद्यंप्रकाशयंत्येवोत्पद्यतेऽतंस्तस्याआप्तिर्न
संभवतीत्याशंक्यअत्रभाष्येविद्याशब्देनशक्तितात्पर्यविचारसहकृतशब्दजन्यंप्रत्यक्षरूपंप्रमाणज्ञानमभिधीयते. तच्चदूरदेशवर्त्या
भ्रमरीचफलसाक्षात्कारवदप्रतिष्ठितमेवप्रथममुत्पद्यतइत्याप्तिशब्देनविद्यायाःस्वविषयेणसहपुनरप्यापरोक्ष्यरूपाप्रतिष्ठोच्यते
तच्चापरोक्ष्यंब्रह्मात्मपरिभावनाप्रचयनिमित्ततदेकाग्रवृत्तिंप्रतिचित्तस्ययद्योग्यत्वं तद्रूपायाऽसंभावना तस्यांमननेननिवृत्तायां
शरीराद्यध्यासससंस्कारप्रचयरूपविपरीतभावनायांचनिदिध्यासनेननिवृत्तायांसम्यगापरोक्ष्यंभवतीतिपरिहृत्य । ननुशब्दगताया
अर्थगतायावाऽसंभावनाया विपरीतभावनायानिवर्तकेमनननिदिध्यासनेउच्यतांकिमर्थंचित्तैकाग्रवृत्त्ययोग्यत्वनिरासेनचित्त
स्यप्रत्यगात्मप्रवणसंस्कारनिष्पन्नतदेकाग्रवृत्तियोग्यत्वहेतूउच्येतेइत्याशंक्य यौक्तिकासंभावनाविपरीतभावनानिरासितर्काणांप्र
थमज्ञानेंतर्भूतत्वादित्यादिनापरिहृतं ॥ प्रथमज्ञानइति ॥ श्रवणे ॥ उक्त्वेति ॥ वक्ष्यमाणमभिसंधायेत्यर्थः । तेनविवरणवा
क्ययोःपौर्वापर्यव्यत्यासनिमित्तोविरोधोनाशंक्यः ॥ ब्रह्मात्मेति ॥ ब्रह्मणआत्मभावेनयापरिभावनातस्याःप्रचयोनिमित्तंय
स्याःसातथोक्ता एवंभूतायातदेकावृत्तिस्तांप्रतिचित्तस्ययद्योग्यत्वंतदसंभावनेत्यर्थः ॥ भावनाप्रचयेति ॥ भावनाप्रचयोहेतु
र्यस्यएवंभूतंयच्चित्तैकाग्र्यंतत्प्रतिहेतुतायाःमननस्योक्तत्वादित्यर्थः ।० अत्रभिन्नप्रस्थानतयाविवरणविरोधोकिंचित्करइतिकस्य

च्चिप्रलपितमयुक्तं । जिज्ञासासूत्रस्यश्रवणविधिमूलतायाविवरणोक्तायानिषिध्यमानत्वेनतत्रैवतद्विरोधस्योच्यमानत्वात् । अतएवाह ॥ जिज्ञासासूत्रस्येति ॥ समन्वयेऽविरोधादौचन्यायानुसंधानकर्तव्यत्वंविदधदाद्यसूत्रंसमन्वयांशेश्रवणविधि मूलकमविरोधेचमननविधिमूलकंस्यात् साधनाद्यंशेचानुभयमूलकंस्यादित्यपिवोध्यं । यत्तुसमन्वयोक्तविचारस्याभ्यर्हिततया श्रवणविधिमूलत्वोक्तिरिति । तन्न । समन्वयादप्यविरोधस्यपरपक्षदूषणपर्यवसायिनोवैतंडिकान्प्रत्यभ्यर्हिततरत्वात् ॥ मंतव्य श्चोपपत्तिभिरितीति ॥ शब्दसंबंधिनीनामर्थसंबंधिनीनांचोपपत्तीनांमननएवांतर्भावसंभवेनस्मृतिस्थोपपत्तिशब्दस्यशब्दा र्थविषयत्वेनावांतरभेदकल्पनेमानाभावात् । श्रवणमननयोर्भेदस्तुप्रकारांतरेणापिसंभवतीत्यर्थः ॥ उक्तस्येति ॥ नचास्यज्ञा नरूपतयाननुष्ठेयत्वमितिवाच्यं । ज्ञानस्याप्यनुष्ठेयतायावक्ष्यमाणत्वात् । श्रवणादितुल्यत्वाच्च ॥ के[७।११]वलमिति ॥ त्वन्मते तस्याश्रवणत्वात्तत्रश्रुतशब्दोगौणःस्यात् ॥ नि[७।१२]श्चितप्रामाण्यस्येति ॥ नचकृष्णलयवावघातस्येवताद्दशपुरुषंप्रतिमननविधिवा धइतियुक्तं । मुमुक्षुकर्तव्यत्वेननित्यवच्छ्रुतत्वात् । उक्तविधयान्यथाद्युपपत्तेश्च ॥ श्र[७।१४]वणनियमेनेति ॥ अनुमानादिप्राप्तिप क्षेपिवेदांतवाक्यस्यैवाप्राप्तस्यनियमविधिनापूरणादित्यर्थः ॥ अ[७।१५]न्यथेति ॥ सर्वस्मिन्नपिपक्षेवेदांतवाक्यस्यपूरणाभावे ॥ जि[७।१६]ज्ञासानामेति ॥ टीकास्थस्यश्रवणादिरूपाजिज्ञासाकर्तव्येत्युक्तमित्यादौश्रवणेपिजिज्ञासापदप्रयोगस्यातद्गुणसंविज्ञानबहु व्रीह्याश्रयणादिनागतिश्चंद्रिकायामुक्ता ॥ उत्तर[७।१७]क्रतुविधिप्रयुक्तइति ॥ ज्योतिष्टोमादिक्रतुविधयोयागादिकमनुष्ठापयंति । अनुष्ठानंचविचारसाध्यज्ञानंविनानसंभवतीतिक्रतुविधेःकर्मकांडविचाराक्षेपकत्वंयथातथातरतिशोकमितिशोकनिवृत्तिहेतुत्वे

नश्रुतमात्मज्ञानंमपिस्वसिद्धयेब्रह्मकांडविचारमाक्षिपेत् । कार्येणकारणाक्षेपसंभवात् । यत्तुविचारस्यवैधत्वसिद्ध्यर्थंविधिमूलत्वमेवावश्यवक्तव्यं । अन्यथाकर्मज्ञानादेवकर्मविचाराक्षेपेऽध्ययनविधेर्थौत्तरक्रतुविधीनांवातदाक्षेपकत्वोक्तिरयुक्तास्यात् । मननविधिमूलत्ववदतत्वज्ञाप्यंयमाक्षेपोवश्यंपरिहरणीयइति । तन्न । ज्ञानविधिव्यापारविषयत्वेनापिवैधत्वोपपत्तेः । अन्यथा विवरणमतेश्रवणविधेरपिनविचारविधायकत्वं किंतुतद्वाक्षेपकत्वमिति तस्यवैधत्वंनस्यात् । अध्ययनविधेर्ज्ञानार्थत्वेतुतस्यसाक्षाद्विचारविधायकत्वं । ममतेमननविधिस्तुसाक्षादेवविचारविधायकइतिवैषम्यं ॥ ७।२३ एकंस्यैवेति ॥ तरतिशोकमित्यादिज्ञानविधेः । ननुब्रह्मकांडविचारविधायकस्यश्रोतव्यइत्यादिविधेःसत्त्वेननाध्ययनविधेर्विचाराक्षेपकत्वंकल्प्यतेगौरवादित्यतआह ॥ ७।२४ अस्तिचेति ॥ ८।५ दृष्टफलत्वेनैवेति ॥ दृष्टफलानांफलपर्यंतमनुष्ठेयत्वात् ॥ ८।८ मुंडकेति ॥ मुंडकआथर्वणोपनिषत् । तदध्ययनेशिरोव्रतंविधिवद्यैस्तुचीर्णमितिशिरोव्रतस्यांगत्वंविहितं । कारीरी कारीरीप्रतिपादकोनुवाकः । तदध्ययनेभूभोजनस्यांगत्वं ॥ ८।९ तांचतुर्भिरिति ॥ तां इष्टकां मृत्खननार्थामभ्रिंव्रैणवींकुद्दालसदृशीं चतुर्भिः मंत्रैः । तेचदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांगायत्रेणछंदसाददेंगिरस्वत् । अभ्रिरसिनारिरसिपृथिव्याःसधस्थादग्निंपुरीष्यमंगिरस्वदाभरत्रैष्टुभेनत्वाछंदसाददेंगिरस्वत् । अभ्रिरसिनारिरसित्वयावयंसधस्थआग्निंशकेमखनितुंपुरीष्यंजागतेनत्वाछंदसाददेंगिरस्वत् । हस्तआध्यायसवितािबभ्रदभ्रिंहिरण्ययींतयाज्योतिरजस्रमिदग्निंखात्वानआभरानुष्टुभेनत्वाछंदसाददेंगिरस्वत् । इत्येवंरूपान्यायसुधायामुक्ताः ॥ ८।९ अर्थप्राप्तेति ॥ अभ्रेरभिघरणंविनामृत्खननंनायोगंतत्तदादानमन्यथानुपपत्तिप्राप्तमित्यर्थः ॥ ८।९ संख्येति ॥

यद्यपिलिंगापेक्षयाश्रुतेःशीघ्रत्वात्संख्याविशिष्टमंत्रयुक्तादानविधिरितिवार्तिकात्प्रतीयते । तथापिगुणार्थत्वमेवफलतइतितद
त्राभिमतं । तथैवन्यायसुधायांव्याख्यातं । यथोक्तं । आदानविध्यभावादरुणैकहायनीन्यायानुपपत्तेरर्थप्राप्तस्यचादानस्या
नुवाद्यत्वेनैकविधावितरेणविशेष्टुमशक्यत्वाल्लिंगतश्चैकैकस्यैवमंत्रस्यप्राप्तेःसंख्यानाकांक्षत्वात्समुच्चयासिद्धेःफलतोगुणार्थत्वमि
ति ॥ ७ ॥ श्रवणविधेर्विवरणोक्तविचारविधायकत्वभंगः ॥ ७ ॥ ९ ॥ श्रवणादीति ॥ श्रवणादेर्ज्ञानरूपत्वात्तस्यै
वविधेयत्वात्तव्यादयःश्रूयमाणाअर्हार्थाएवनविधायकाइत्याहुः ॥ स्वाध्यायस्येति ॥ सर्वशाखानामेकेनपुंसाध्येतुमशक्यत्वा
त्सर्ववेदांतप्रत्ययंब्रह्मनभवतीतिशंकायांतत्परिहारत्वेनस्वाध्यायस्यहितथात्वेनसमाचारेधिकारत्वाच्चेतिसूत्रं । तस्यार्थः स्वाध्या
योध्येतव्यइतिसामान्यविधिनावेदःकृत्स्नोधिगंतव्यःसरहस्योद्विजन्मनेतिस्मृत्याचहिशब्दसूचितयासर्वैःसर्वशाखोक्तकर्मानु
ष्ठानरूपसमाचाराच्चसर्वशाखाध्ययनमस्तिशाखाभेदस्त्वशक्तितइति । अत्रभाष्येसरहस्यइत्यादिनाध्ययनस्यार्थज्ञानपर्यंतत्वा
वगमादध्ययनविधेर्विचाराक्षेपकत्वमनुमतं । अत्रैवसूत्रेटीकायांअध्ययनंचतदुक्तार्थज्ञानार्थमेवेत्युक्तमित्यर्थः ॥ अध्ययनविधे
रिति ॥ वाक्यग्रहणंविनावाक्यार्थावधारणानुपपत्तेर्वेदार्थग्रहणकामस्यवेदाध्ययनंरागतःप्राप्तमतोध्ययनविधिवैयर्थ्यंतन्मा
भूत् ॥ उभयार्थतेति ॥ प्रत्यवायपरिहारोर्थज्ञानंचेत्युभयं ॥ पशुपुरोडाशेति ॥ चतुर्थस्यप्रथमेविचारितं आश्रयिष्ववि
शेषेणभावोप्यप्रतीयते । अग्नीषोमीयपश्वंगत्वेनपुरोडाशयागःश्रुतःअग्नीषोमीयस्यवपयाप्रचर्याग्नीषोमीयंपशुपुरोडाशंनिर्वपती
ति । अग्नीषोमीयपशुयागस्यदेवतास्मरणरूपसंस्कारंकुर्वन्पुरोडाशयागोग्नीषोमीयस्यसंन्निपत्योपकारकइतिदाशमिकसर्थसिद्ध

वत्कृत्यकिमयंपशुपुरोडाशयागः पशुदेवतायाःस्मरणरूपंसंस्कारंकुर्वन्दृष्टार्थएवउतादृष्टार्थोपीतिसंशयेएकंवाचोदनैकत्वादि
त्येकेनैवप्रयोजनेनविध्युपपत्तेःप्रयोजनद्वयंनाश्रयणीयमितिपूर्वपक्षेदेवतोद्देशेनत्यागरूपस्ययागस्योद्देशशिष्टार्थत्वेपित्यागांशेऽदृ
ष्टार्थत्वंविनानुपपत्तेरुभयार्थमितिसिद्धांतः ॥ श्रुतिर्बलादिति ॥ दध्नाजुहोति दध्नेंद्रियकामस्यजुहुयादितितृतीयाश्रुतिब
लात् ॥ क्रत्वर्थत्वेति ॥ चतुर्थस्यतृतीयेभिहितंएकस्यतूभयार्थत्वेसंयोगपृथक्त्वं । अग्निहोत्रेश्रूयते दध्नाजुहोति दध्नेंद्रियकाम
स्यजुहुयादिति । तत्रकिंफलार्थमेवदध्युतक्रत्वर्थमपीतिसंशयेफलवाक्येनदध्नःफलसंबंधविधायकेनतस्यहोमसंबंधविधानायो
गात्फलवाक्यापेक्षितदधिहोमसंबंधविधायकतयाहोमवाक्यस्यफलवाक्यैकवाक्यतयाहोमेदधिविधायकस्यवाक्यांतरस्याभा
वात्फलार्थमेवदधीतिप्राप्तेसिद्धरूपस्यदध्नःस्वतोऽननुष्ठेयस्यफलार्थत्वेनविधानायोगात्तदुपपत्तयेस्वतःसाध्यरूपक्रियाश्रयापेक्षा
यामपिप्रकरणेनैवहोमरूपाश्रयसंबंधलाभान्नतदर्थंदध्नाजुहोतीत्यस्यतदेकवाक्यतेतितेनपृथगेवक्रत्वर्थतयादधिविधानादुभया
र्थंदधीतिसिद्धांतः ॥ नित्यत्वंकाम्यत्वेति ॥ द्वितीयस्यचतुर्थेभिहितं । यावज्जीविकोभ्यासःकर्मधर्मःप्रकरणात् । यावज्जीवं
दर्शपूर्णमासाभ्यांयजेत दर्शपूर्णमासाभ्यांस्वर्गकामोयजेतेतिश्रूयते । तत्रयावज्जीववाक्येनस्वर्गकामवाक्योक्तेकाम्यप्रयोगेया
वज्जीवमभ्यासलक्षणोगुणोविधीयतइतिप्राप्ते गुणविधौजीवनशब्देनतत्सहचरितकालोलक्षणीयोजुहोतिशब्देनचाभ्यासः ।
अधिकारांतरचोदनायांश्रुत्यर्थस्यजीवनस्याधिकारिविशेषणत्वाद्यागस्यैवविधेयत्वान्नलक्षणा ततश्चवाक्यद्वयवशात्काम्यो 
नित्यश्चदर्शपूर्णमासइतिसिद्धांतः ॥ आवश्यकत्वादिति ॥ वीर्यवत्तरफलसाधनत्वेन ॥ प्रत्यवायेति ॥ तादृशफलासिद्धिरू

पःप्रत्यवायः ॥ एतेनेति ॥ अध्ययनविधेरवैयर्थ्यायेत्याद्युक्तेन ॥ ब्रह्मज्ञानफलस्यापीति ॥ सर्वेवेदाइत्यादिश्रुतेः ॥ ७ ॥
अध्ययनविधेर्नित्यत्वेपिविचारविधायकत्वं ॥ ७ ॥ ६ ॥ नन्वध्ययनविधेर्विचारविधायकत्वेजिज्ञासासूत्रंतन्मूलमेवस्या
न्नमननविधिमूलं । श्रवणादिविधिवैयर्थ्यंचेतिशंकांपरिहरिष्यन्श्रवणादिभेदांयतत्स्वरूपंतावदाह ॥ अस्माकंत्विति ॥
वेदार्थज्ञानार्थवेदविचारस्याध्ययनविधितःप्राप्तावपिब्रह्मज्ञानायवेदविचारस्यततोऽप्राप्तेर्मननंविधिर्युक्तः । यद्यपिब्रह्मणोवेदा
र्थत्वेनतज्ज्ञानायापिवेदविचारस्याध्ययनविधितःप्राप्तिरस्ति तथापिनब्रह्मत्वेनरूपेणतज्ज्ञानायतत्प्राप्तिरितिभावः ॥ प्रतिवा
क्यमिति ॥ ततएवश्रवणविधेरवैयर्थ्यं । अध्ययनविध्याक्षिप्तविचारेणकर्मब्रह्मकांडयोःकर्मब्रह्मपरत्वावगमस्यश्रवणफलत्वा
त् । तस्यचवाक्यार्थावधारणहेतूपक्रमादियुक्तिभिरर्थगतायुक्तत्वादिशंकानिवर्तिकाभिर्युक्तिभिश्चदृढीकरणंमननफलं । दृढी
कृतार्थस्यापरोक्ष्यायनिरंतरंध्यानंनिदिध्यासनमितिसर्वमवदातं ॥ एतच्चेति ॥ श्रवणादेरज्ञानादिनिवर्तकत्वं ॥ नन्निर्धारणा
र्थेनियमइति ॥ तन्निर्धारणार्थनियमस्तद्दृष्टेःपृथग्घ्यप्रतिबंधःफलंइतिसूत्रं । तस्यार्थः । ज्ञानार्थमुपासनंतच्चश्रवणमननाभ्या
मेवभविष्यति किंध्यानेनेतिशंकायामुच्यते । तन्निर्धारणेऽर्थेनियमःध्यानादेवार्थदर्शनं तथादृष्टेःश्रवणमननयोरज्ञानविपर्यय
रूपप्रतिबंधकनिवर्तनद्वाराब्रह्मदर्शनोपयोगइति ॥ ब्रह्मज्ञानोद्देश्यत्वादिति ॥ विचारविधावितिशेषः । उक्तंवचनव्यक्तौच
वेदार्थज्ञानस्यैवोद्देश्यत्वंनब्रह्मज्ञानस्येत्यर्थः ॥ कर्मकांडादिनेति ॥ कर्मकांडादिनाब्रह्मधीर्नह्यस्तीत्याद्यन्वयः ॥ अवांतर
कारणेति ॥ आत्मनआकाशःसंभूतइत्यादौ ॥ पदवर्णेति ॥ अन्यपरतयाप्रतीयमानज्योतिष्टोमादिवाक्यगतपदैर्वर्णैरुदा

त्तादिस्वरैः । आदिपदेनवर्णसंहिताःध्वन्यादिशब्दाश्चगृह्यंते ॥ आत्मेत्येवोपासीतेति ॥ उपासनायाजिज्ञासारूपत्वात् । एतेनसामान्यतःप्राप्तसाध्यसाधनभावमनादृत्यविशेषोपाधिनाऽप्राप्तसाधनत्वप्राप्तयेऽपूर्वविध्यंगीकारेज्योतिष्टोमादिवाक्यविचारेपितेनरूपेणतद्वाक्यार्थज्ञानंप्रत्यप्राप्तसाधनतासिद्धयेऽपूर्वविध्यंतरकल्पनापत्तिरितिनिरस्तं । कर्मकांडादिनाब्रह्मज्ञानस्य सामान्यतोप्यप्राप्तेः ॥ लिंगादिति ॥ सामर्थ्यरूपात् ॥ नियतविषयेति ॥ बहुशाखोक्तगुणानांज्ञेयत्वेपिस्वयोग्यायाःकतिपयगुणोपासनाया एवकर्तव्यत्वात् ॥ अदृष्टद्वारेणेति ॥ नचतयोर्निदिध्यासनांगत्वेमानाभावः । वस्तुतस्तुतंपश्यतइतिवाक्येनतदवगमात् ॥ तस्माज्ज्ञानरूपमपीति ॥ आज्यभागौयजतीतिवदिति ॥ चातुर्मास्येसाकमेधपर्वणिगृहमेधीयेष्टिरुक्ता मरुद्भ्योगृहमेधिभ्यःसर्वासांदुग्धेसायंचरुमिति । तत्रश्रूयते आज्यभागौयजतीति । तत्रप्रकृतितःप्राप्तयोराज्यभागयोः पुनर्वचनानर्थक्यमाशंक्यपंचमपक्षेणसमाधानंपूर्वपक्षेभिहितं परिसंख्येयमाज्यभागावेवेति । तेनैकस्यगृहमेधीयाख्यस्यशेषिणःप्रयाज्याद्याज्यभागाद्यनेकशेषप्राप्तावाज्यभागेतरेषांपरिवर्जनंभवति । एवमेकंब्रह्मज्ञानंप्रतिश्रुत्यनुमानयोःप्राप्तयोःश्रुतिग्रहणेनानुमानंपरिसंख्यायते ॥ तत्राखंडेति ॥ आज्यभागप्रयाजादीनांपरस्परमंगांगिभावानापत्त्याऽभ्यामखंडकरणोपकारंप्रतिहेतुत्ववदिहश्रुत्यनुमानाभ्यांस्वतंत्राभ्यामेकब्रह्मज्ञानजननाभावात् । गुणप्रधानभावेनतुताभ्यामेकज्ञानजननमिहानुमतमेवेतिनतत्परिसंख्यायते ॥ इत्यश्वाभिधानीमिति ॥ अश्वमेधेऽश्वगर्दभाभिधान्यौरज्जूवर्तेते तयोर्द्वयोर्ग्रहणे इमामगृभ्णन्रशनामृतस्येतिमंत्रोरशनाग्रहणप्रकाशनरूपसामर्थ्यात्प्राप्तः । सतु इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्तइत्यनेनगर्द

भाभिधान्यादानात्परिसंख्यायतेयथा तथाश्रुतिविचारस्यब्रह्मज्ञानसाधनत्वंप्राप्तमब्रह्मज्ञानात्परिसंख्यायते ॥ १०११६ श्रुत्यादिनेति ॥
इमामितिमंत्रस्योभयरज्जुग्रहणेप्राप्तिवच्छ्रुतिविचारस्यब्रह्मतदन्यज्ञानयोःप्राप्त्यभावाद्वैषम्यं ॥ १०११८ श्रवणादितीति ॥ परंपरया
१०१२१
हेतावपिपंचमीदर्शनात् ॥ ७ ॥ ७ ॥ स्वमतेश्रवणादिविधिसमर्थनं ॥ ७ ॥ ७ ॥ कुंठीभवंतीति ॥ जर्तिलयवाग्वाजुहु
यादित्यादिवदर्थवादाभवंतीत्यर्थः । बाधकंविनावैदिकलिङादीनामर्थवादत्वोक्तिरयुक्तेत्याह ॥ १०१२३ पत्न्यवेक्षितमिति ॥ जर्ति
लादिवाक्येषुबाधकंदशमाध्यायस्याष्टमपादेभिहितं । तथाहि । अग्निहोत्रेजर्तिलयवाग्वावाजुहुयाद्गवीधुकयवाग्वावेत्युक्त्वा
ऽनाहुतिर्वैजर्तिलाश्चगवीधुकाश्चेतिचोक्त्वापयसाग्निहोत्रंजुहुयादितिश्रुतं । तत्रजर्तिलादिवाक्यस्यविधित्वेऽनाहुतिवादोनर्थकः
स्यात् । तस्यहिषोडशिग्रहणवाक्यवद्विहितप्रतिषेधत्वाद्विकल्पःफलं तच्चानाहुतिवादंविनापिपयोवाक्यसद्भावात्सिद्धं तस्माद
नाहुतिवादस्तावज्जर्तिलादिनिंदाद्वारेणपयसःस्तुत्यर्थः । यदाचैवंतदाजर्तिलादिविधिरपितन्निंदाद्वारेणपयसःप्रशस्ततरत्वंज्ञाप
यन्नर्थवादइति । पत्न्यवेक्षितमित्यादौतुनकिंचिद्बाधकमितिभावः । तदिदंवक्ष्यति वृथैववैदिकलिङादेरस्वारस्यायुक्तेरिति ॥
१०१२५
भक्षेहीति ॥ तृतीयस्यद्वितीयेभिहितं । लिंगसमाख्याभ्यांभक्षार्थतानुवाक्यस्यास्तिभक्षानुवाकोभक्षेहिमाविशदीर्घायुत्वाये
त्यादिः । तत्रकश्चिदंशोभक्षणप्रकाशकउपहूतस्योपहूतोभक्षयामीत्यादिः कश्चिद्ग्रहणस्य अश्विनोस्त्वाबाहुभ्यांसख्यासमित्या
दिः । सख्यासंधारयामीत्यर्थः । कश्चिदवेक्षणस्य । अवख्येषमित्यादिः । तत्रकिंसर्वोप्ययंमंत्रोभक्षणेविनियोक्तव्यउतग्रहणादि
ष्वपियथासामर्थ्यंविभज्यविनियोक्तव्यइतिसंशये भक्षानुवाकसमाख्यावशाद्विहितभक्षणप्रकाशकांशैकवाक्यत्वाच्चसर्वोपिभ

क्षणेविनियोक्तव्यः । यद्यपिसख्यासमित्यादेर्ग्रहणादिप्रकाशनसामर्थ्यरूपंलिंगमस्ति ।तच्चवाक्यसमाख्याभ्यांबलवत् । तथापिमुख्यस्यग्रहणादेरर्थप्राप्तस्यावेद्गितत्वेनाक्रत्वर्थत्वात्तादर्थ्येनमंत्रस्यक्रत्वपूर्वानुपयोगितयानर्थक्यापत्तेरसंभवतिलिंगविनियोगेसवित्रादिपदाज्ञाभिन्नलक्षणयावाक्यशेषवशेनप्राक्कालवर्तिग्रहणादिविशिष्टचोदितभक्षार्थतायुक्ता । तदुक्तं । सर्वस्यभक्षणांगत्वंग्रहणादेरचोदनात् । अक्रत्वर्थोनमंत्रस्यद्वारीभवितुमर्हति । भक्षानुवाकसंज्ञाचभक्षणांगत्वबोधिनी । सामर्थ्यंचास्तिमंत्रस्यभक्षणेतद्विशेषणादिति । तस्मात्सर्वानुवाकोभक्षांगमितिप्राप्ते असतिग्रहणादौचोदितोभक्षोनशक्यतेकर्तुमित्यर्थात्तदपिकर्तव्यंभक्षणाच्चोदनयैवनचोदितमित्यपिवक्तुं तच्चास्मृतमशक्यमनुष्ठातुमितिस्मारकापेक्षत्वाद्भक्षद्वारेणचक्रतूपयोगत्वाच्छक्नोतिस्मारकंमंत्रंग्रहीतुं । एवंसंभवतिलैंगिकेविभज्यविनियोगेवाक्यसमाख्याभ्यामेकवाक्यत्वापादनेनभक्षार्थतासर्वस्यनयुज्यते । समाख्याचभक्षसंबंधमात्रंप्रतिपादयंती संबंधस्साक्षाद्वाग्रहणादिद्वारेणवोभयथाप्युपपत्तेर्नानुपपन्ना सम्यग्जरणपर्यंतंचभक्षणंस्वरसतोलोकसिद्धं । तादृशमेवद्रवद्रव्यस्यभक्षणमितिजरणमपिविधेयं तच्चासनविशेषव्यापारादिसाध्यमितियुक्तस्तत्रापिमंत्रविनियोगः । तस्माद्विभज्यविनियोगः । तदुक्तं । ग्रहणादौविभागेनविनियोगोस्यलिंगतः । वाक्यसंज्ञेहिनेशातेकर्तुंलिंगस्यबाधनं । ग्रहणादिवशात्त्रेणभक्षाद्यर्थेप्यचोदितं । तथापिचोदितार्थेनकर्तव्यत्वात्प्रकाश्यतइति । गुणाभिधानान्मंद्रादिरेकमंत्रस्यात्तयोरेकार्थसंयोगादित्युत्तराधिकरणेमंद्राभिभूतिरित्यादितृप्यत्वित्यंततृप्तौविनियोक्तव्यमुतवसुमद्गणादेकवाक्यंसत्तृप्तिविशिष्टंभक्षणमेवप्रकाशयतीति । पूर्ववल्लिंगात्तृप्तिप्रकाशनेप्राप्तेभिधीयते । तृप्तिर्भक्षातुनिष्पन्नानव्यापारांतरार्थिनी । तेनस्मृत्यनपेक्ष

त्वान्नमंत्रोत्रप्रयुज्यते । तस्मात्तृप्तौनविभज्यविनियोगइति ॥ अनुविद्ध[११।२६]पादिततयेति ॥ भक्षणेदृत्तेस्वयंमेवतदनुसिद्धत्वात् ॥ अवेक्ष[११।२६]णस्येति ॥ गृहीत्वावेक्षेसम्यग्जरणायभक्षयामीत्येवंग्रहणावेक्षणादीनांमनुष्ठेयत्वादत्राप्यवेक्षणशब्देनप्रियसंयोगइति कस्यचिन्मलपनंनिर्मूलं ॥ [११।१]एकश्रोत्रगतेति ॥ नचानभिमतवैमुख्यस्यैववुभुत्साप्रयत्नसाध्यतयाज्ञानंप्रतितयोरजनकत्वमिति वाच्यं । अनभिमतविषयवैमुख्येसत्यप्यभिमतविषयसांमुख्यंविनातदग्रहणस्यानुभवसिद्धत्वात् ॥ अविहित[११।२]स्यचेति ॥ तदुक्तंशाबरभाष्ये । नचाविहितमंगंभवतीति । नचात्रविद्याशब्देनोपासनेतिवाच्यं । विद्याशब्दस्यज्ञानेमुख्यत्वात् ॥ अति[११।५]सूक्ष्मेति ॥ ब्रह्मज्ञानादाविच्छादिविषयत्वंप्रामाणिकमत्रतुनतदित्येवाप्रामाणिकं ॥ [११।८]शास्त्रार्थेति ॥ अत्रसर्वत्रसाधनस्यैवपुंतंत्रत्वकल्पनंतुजल्पनमेव । अतएवाह ॥ [११।७]नामादिष्विति ॥ विध्यनुपपत्तेरुभयत्राप्यभावात् ॥ [११।९]प्रयत्नसाध्यत्वानुभवादिति ॥ अतदनुभवस्यानन्यथासिद्धत्वेनतदन्यथासिद्धिरसिद्धेत्यर्थः ॥ [११।११]प्रयत्नेति ॥ समाधेरप्रयत्नसाध्यत्वोक्त्याध्यानधारणयोःप्रयत्नसाध्यत्वमवगम्यते ॥ [११।१३]त्वन्मतेपीति ॥ नचात्रवृत्तिगुणएवविधेयइतियुक्तं । आवर्त्यमानानुष्ठेयत्वेतदावृत्तेर्विषयत्वात् । ग्रहाभ्यासवत् ॥ [११।१४]श्रवणमिति ॥ यत्तुवाक्यार्थप्रमित्युपयुक्ततात्पर्यनिर्णयद्वारोपक्रमादिलिंगविचाराद्यात्मकश्रवणादेरज्ञानादिविरोधितयास्मृत्यनुभवयोरुपपत्तिरिति । तन्न । लिंगविचारस्यज्ञानाज्ञानात्मकत्वेसंशयाद्यनिवर्तकत्वात् । ज्ञानस्यैवतन्निवर्तकत्वात् ज्ञानात्मकत्वेत्विष्टापत्तेः । तदिदमुक्तं श्रवणादीनांज्ञानातिरेकेणदुर्निरूपत्वस्योक्तत्वादिति ॥ विचार[११।१५]त्वेति ॥ ज्ञानानात्मकविचारत्वानुपपत्तेरित्यर्थः ॥ [११।१६]त्वथापीति ॥ श्रवणादौविधिमनंगीकुर्वतापि ॥ [११।१८]तस्याभिध्यानादिति ॥ योज

नरूपाच्छ्रवणात्तत्वभावरूपान्मननात्समुत्थंयद्ब्रह्मविषयंध्यानंततोमायाभूयोपिप्रारब्धतोभोगाययास्थितासापिनिवर्ततइत्यपरे
षांश्रुत्यर्थः । नचात्रसाक्षात्कारएवंनिवर्तकःतस्याश्रुतत्वात् । ध्यानात्पूर्वमपिसत्वाच्च ॥ विदिधात्विति ॥ विदेरमुख्यार्थ
त्वकल्पनंतुजल्पनमात्रं ॥ पुंतंत्रत्वेति ॥ पुमिच्छानुविधायित्वं ॥ वेदांतवाक्येति ॥ अनेनरूपेणज्ञानेचनमननविषयज्ञान
मायातीत्यर्थः ॥ कर्मकांडेपीति ॥ नचज्ञानजनकविचारएवकृतिसाध्यता । विचारस्यापिज्ञानानतिरेकस्योक्तत्वात् ॥
दृष्टफलत्वंइवेति ॥ पश्वादेर्दृष्टफलस्यानित्यत्वेपितथाविधस्यापिबंधध्वंसस्यनानित्यत्वंयथा तथास्वर्गादेर्यौगिकफलस्यानित्य
त्वेपितथाविधस्यापिबंधध्वंसस्यध्वंसत्वाच्छ्रुत्यादिवलाच्चनित्यत्वंभवतु ॥ ध्वंसत्वादिति ॥ नचत्वन्मतेनध्वंसमात्रंमुक्तिः ।
किंतुलोकांतरप्राप्तिरपि अतःतस्यानित्यत्वप्राप्तिरितिवाच्यं । श्रुतिवलाल्लोकांतरस्यापिनित्यत्वावगमात् । यत्रज्योतिरजस्रमि
त्यत्रामृतेलोकेअक्षितइति । सुकिंशुकंशल्मलिमित्यादौअमृतस्यलोकमित्युक्तेः । यथेहपुण्यजितोलोकःक्षीयतेएवमेवामुत्रपुण्य
जितोलोकःक्षीयतइतिश्रुतिस्तुकेवलपुण्यार्जितलोकविषया ॥ ज्ञानविधीति ॥ त्वन्मतेतत्वंपदार्थशोधकवाक्यस्यब्रह्मणीवे
त्यर्थः ॥ ७ ॥ ७ ॥ ज्ञानविधिसमर्थनं ॥ ७ ॥ ८ ॥ तद्वास्येतिवाक्येज्ञानस्यविशब्देनविशेषणेपिनिर्दुष्टत्वमेवलभ्यते नत्वा
परोक्ष्यमितिश्रुत्यंतरमाह ॥ तमसइति ॥ दृशेःसाक्षात्कारार्थकत्वादित्यर्थः ॥ उपदेशादिति ॥ तथाचलिंगाच्छब्दस्यसा
क्षात्कारहेतुत्वमवगम्यते ॥ वेदांतेति ॥ विचारितवेदांतजन्यापरोक्षज्ञानविषयीकृतवेदांतार्थकत्वंसुनिश्चितार्थत्वमित्यर्थः ॥

अपरोक्ष[१३।२२]ज्ञानेति ॥ चाक्षुषत्वादौव्यभिचारवारणायनिषेधद्वयांतर्भावः ॥ [१३।२४]तत्रापीति ॥ दशमादिपदैःसंख्यादिषूपस्थितेषुच
क्षुषासंसर्गबोधः ॥ [१३।१]अन्यथेति ॥ विचारितवेदांतजन्यापरोक्षज्ञानविषयीकृतवेदांतार्थकत्वस्यसुनिश्चितार्थशब्दार्थत्वेविचार
कर्तव्यतादेरर्चिरादिमार्गस्यातीतपुरीततनाडीवंशादीनांचवेदांतप्रतिपाद्यत्वेनापरोक्ष्यंस्यात् ॥ [१३।४]वक्ष्यमाणेति ॥ इंद्रियव्यापा
रविरहदशायांसंस्कारवांस्त्वमसीत्यादौविशेष्यस्यप्रत्यक्षत्वेपिविशेषणविशिष्टपरोक्षत्वमेवयथा । तथाविशेषणविशेष्ययोःप्रत्य
क्षत्वेपींद्रियव्यापाराभावेनायंघटइतिशब्दजज्ञानेपरोक्षत्वसंभवात् ॥ [१३।५]अज्ञानेति ॥ शब्दजन्यापरोक्षज्ञानानंतरमैक्यावरणा
निवृत्तौतस्यापरोक्षत्वं तदापरोक्ष्येचशब्दस्यतद्विषयकापरोक्ष्यहेतुत्वमित्यन्योन्याश्रयप्राप्तेरित्यर्थः ॥ [१३।६]स्वतोपरोक्षेति ॥ तत्व
मस्यादिवाक्येसत्यंताभावात् ज्योतिष्टोमादिवाक्येविशेष्याभावात् प्रत्यक्षत्वप्रयोजकाभावः ॥ [१३।५]वक्ष्यमाणेति ॥ तथाचतत्त्व
मादिवाक्यसंग्रहायविशेषणोपादानमसंगतमित्यर्थः ॥ [१३।१०]विशेषणेति ॥ दशमत्वरूपविशेषणविशिष्टे ॥ [१३।२३]वक्ष्यमाणपक्षेति ॥
तत्रचान्योन्याश्रयादिवक्ष्यते ॥ [१३।२४]तत्रचैतदिति ॥ धर्मवांस्त्वमसीत्यादिवाक्यजन्यमपरोक्षज्ञानंतद्विषयत्वेनतत्रधर्मवत्त्वादा
वपरोक्षत्वं धर्मवत्त्वादेरर्थस्यापरोक्षत्वेतद्विषयकस्योक्तवाक्यजज्ञानस्यापरोक्षत्वमित्यन्योन्याश्रयः ॥ [१३।२५]ज्ञानांतरेति ॥ अप
रोक्षरूपज्ञानांतरविषयत्वेनस्वर्गादेरपरोक्षत्वात्तत्रास्माकंस्वर्गादिवाक्यादपरोक्षधीप्रसंगः ॥ एवमेकपुरुषैककालयोर्योज्यं ॥
[१४।२]चाक्षुषादित्वेति ॥ चाक्षुषविषयकाणांस्मृत्यादीनांचाक्षुषत्वंस्पार्शनविषयकाणांस्पार्शनत्वमित्यादि । यत्तुयंशब्दमादाययस्य
बोद्धृत्वंतदभिन्नार्थावगाहित्वनिमित्तंतदर्थस्यसाक्षात्त्वमिति । तन्न । एवंहिबोद्धृभिन्नार्थविषयकज्ञानविषयत्वमित्युक्तंस्यात् ।

तस्यचधर्माभेदपरेपरमधर्मात्वमित्यादिवाक्यजज्ञानविषयेधर्मवदादौसत्त्वात् । अपरोक्षार्थविषयकत्वंशब्दस्यापरोक्षज्ञानहेतुत्वेतंत्रमित्यत्रदोषांतरमाह ॥ [१४।१८] किंचेति ॥ [१४।१९] वाक्यवैयर्थ्यादिति ॥ उपलक्षणमिदं । वाक्यजज्ञानात्प्रागवृत्तत्वाच्चेत्यपिज्ञेयं ॥ [१४।२१] तंत्रसंस्कारादेरिति ॥ तत्तादेर्विप्रकृष्टस्यापिसंस्कारादिनाविप्रकृष्टत्वसंपादने ॥ [१४।२१] अत्रापीति ॥ सन्निकृष्टस्याप्यावरणेनविप्रकर्षोस्ति । आवरणनिवृत्त्यासन्निकृष्टमितिशंकांवारयति ॥ [१४।२२] वृत्तेरिति ॥ [१४।२४] तस्येति ॥ विंवप्रतिविंवादेस्त्वन्मतेऐक्यसाक्षात्कारेसत्यपिभेदभ्रमानुवृत्तेरित्यर्थः ॥ [१४।२६] मनसैवेति ॥ एतस्यास्तृतीयायुक्तत्वेनवलवत्त्वात् ॥ [१४।२६] मनसेति ॥ मनसःकरणांतरसहकारितयानपृथक्करणत्वमित्यर्थः ॥ [१५।३] औपनिषदइत्यादीति ॥ तंत्रसाधुरितिसाध्वर्थतद्धितस्ययथाकथंचित्तदुपयोगेनसाधुत्वात् । परिच्छेदार्थमुपसंहरति ॥ [१५।५] तस्मादिति ॥ ७ ॥ ७ ॥ शाब्दप्रत्यक्षत्वभंगः ॥ ९ ॥ ७ ॥ सद्योजातजटाजपावनसरिद्गोदावरीतीरतोगव्यूतिर्वसतिरस्सतांकुलवतामंवापुरीतत्रये । व्यासाख्याउपमन्युगोत्रजबुधास्तेष्वास्तयोमुद्गलस्तत्राजज्ञतयेमुरारिचरणाव्यांसाभिधानाबुधाः ॥ १ ॥ तेभ्योजायतविश्वनाथइतियस्सज्ज्ञानरत्नाकरस्तस्मादाविरभूत्सुरद्रुमयशाआचार्यनारायणः । रामाचार्यइतीरितस्तदनुजोयस्तत्ववादांवुधेरातानीत्सतरंगिणीमिहपरिच्छेदस्तृतीयोपियः ॥ २ ॥ ॥ न्यायामृततरंगिण्यांतृतीयःपरिच्छेदःसंपूर्णः ॥ ३ ॥ ॥ ॥ ॥ ॥

॥ इतिश्रीमन्न्यायामृततरंगिण्यांतृतीयःपरिच्छेदः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ श्रीयुतीरण्यकेदृष्टंपुष्टमाभीरगोकुले । शुका
दिजुष्टंविधिनादिष्टंनौम्यक्षयंफलं ॥ १ ॥ श्रवणादिजनितसाक्षात्काराकिंकृतईश्वरप्रसादोमोक्षहेतुरित्येतदाक्षिपति ॥ नन्वे
तदिति ॥ वृत्तिनिवृत्तावितिति ॥ एतच्चोपलक्षणं । वृत्तेरज्ञानोपादानकत्वेनवृत्तिकालेऽज्ञानावश्यंकतयाप्रतियोगितद्ध्वंसयो
रेककालत्वापातइत्यपिबोध्यं ॥ निवृत्तिरिति ॥ ज्ञातत्वंवृत्तिः तयोपलक्षितआत्मामोहनिवृत्तिः । वृत्तिनिवृत्तौमोक्षनिवृत्तिं
परिहरति ॥ उपलक्षणेति ॥ नन्वविद्यानिवृत्तेरात्मान्यत्वेऽनिर्वाच्यत्वंस्यादित्याशंक्यसदसद्विलक्षणत्वमनिर्वाच्यत्वमितिमते
इष्टापत्तिरित्याह ॥ तत्रचेति ॥ नन्वविद्यानिवृत्तेरनिर्वाच्यत्वेऽविद्यातत्कार्यान्यतरत्वापत्त्यातस्याःज्ञाननिवर्त्यत्वंस्यादित्यत
आह ॥ अविद्यादीति ॥ अविद्यानिवृत्तौनिवृत्तिसामान्यस्यैवाभवात्तद्विशेषापादनमयुक्तमित्याह ॥ नचनिवृत्तेरिति ॥
प्रत्यपीपदन् प्रतिपादयामासुः । तस्मादात्मस्वरूपाऽविद्यानिवृत्तिस्तदतिरिक्तावेतिपक्षद्वयं । द्वितीयेप्यनिर्वाच्यावापंचमप्रका
रासत्यावेतिपक्षत्रयमित्युपसंहरति ॥ इतीति ॥ यत्किंचिद्विषयकवृत्त्युपलक्षितात्मनःसंसारकालेपिसत्त्वेनातिप्रसंगाच्छ्रव
णादिजन्यात्मविषयकवृत्त्युपलक्षितआत्माऽज्ञाननिवृत्तिरितिवाच्यं । तत्रचापसिद्धांतइत्याह ॥ आत्मेति ॥ नचात्रेति ॥
वृत्तेःपूर्वंमुक्तइतिव्यवहाराभावेपिपूर्णानंदप्रकाशरूपमुक्तिःस्यादेवपाकेनिवृत्तेपिपाचकस्यानिवृत्तिरितिपराभिमते पाचकत्वंकिं
पाककृत्याश्रयत्वंपाककर्तृत्वयोग्यत्वंवा आद्यआह ॥ पाककर्तृत्वमिति ॥ तथाचसनदृष्टांतइत्यर्थः । द्वितीयेयद्यपिदृष्टांते
तत्संभवति तथापिदार्ष्टांतिकेतन्नास्तीत्याह ॥ कर्तृत्वेत्यादि ॥ चिन्मात्रमिति ॥ तथाचप्रागपिमुक्तिःस्यात् ॥ नसाध्य

तेति ॥ नचोपलक्षणस्साध्यत्वेनैवतदुपलक्षितस्यसाध्यत्वमितिवाच्यं । परमपुरुषार्थेमोक्षेऔपचारिकपुरुषार्थत्वापातात् ॥ [३।९]इयंप्रक्रियेति ॥ अज्ञाननिवृत्तिभिर्ज्ञानाधिष्ठानमात्ररूपेत्येवंरूपाप्रक्रिया ॥ [३।१०]बिंबेति ॥ नचसोपाधिकभ्रमेउपाधिनिवृत्तिसहितंज्ञातमधिष्ठानमज्ञाननिवृत्तेरितिवाच्यं । नियामकाभावात् ॥ [३।११]नियामकेति ॥ एतत्प्रक्रियांविनाऽनुपपत्त्यभावादित्यर्थः । नन्वज्ञाननिवृत्तेरधिष्ठानातिरेकेविश्वमिथ्यात्वश्रुतिपर्यालोचनयानिवृत्तेरपिनिवृत्त्यापत्तिरतस्तदेवनियामकमित्यतआह ॥ [३।१२]विश्वमिथ्यात्वेति ॥ विश्वमिथ्यात्वश्रुतिर्ह्यज्ञाननिवृत्तेरधिष्ठानरूपत्वंनसाक्षाद्वक्ति । ज्ञानाद्विश्वनिवृत्तेरेवतदर्थत्वात् । किंतूक्तविधयानुपपत्त्यासाचान्यथाप्युपपन्ना । निषेधस्यविहितेतरनिषेधपरत्वादितिभावः ॥ [३।१३]कर्मनाशोपलक्षितस्येति ॥ उपलक्षणप्रागभावकालेपितदुपलक्षितस्वरूपमात्रस्यसत्त्वात् ॥ [३।१४]पूर्वस्मादिति ॥ ज्ञानात् ॥ [३।१५]आनंदाभिव्यक्तीति ॥ वृत्तावानंदाभिव्यक्तिरूपविशेषसत्त्वेतस्याअसाध्यत्वापातः ॥ [३।१६]याचसाध्येति ॥ नचानंदप्रकाशतिरोधायकाज्ञाननिवर्तकत्वेनवृत्तिःपुरुषार्थइतिवाच्यं । अज्ञाननिवृत्तेरात्ममात्रत्वादौदोषस्योक्तत्वात् ॥ [३।१७]अनिर्वाच्यस्याध्यस्तत्वेनेति ॥ अध्यासस्याज्ञानोपपादकत्वेनाज्ञाननिवृत्तिकालेप्यज्ञानसत्त्वापत्तिः ॥ [३।१८]अभावत्वेनेति ॥ भावरूपस्याध्यस्तस्याज्ञानोपादानत्वमित्यंगीकारे ॥ निवृत्तिःस्यादिति ॥ निवृत्तेरित्यनुषंगः । ननुज्ञाननिवर्त्यत्वाभावेपिप्रतिपन्नोपाधावित्यादिलक्षणंबाध्यत्वंनिवृत्तौभविष्यतीत्यतआह ॥ [३।१९]प्रतिपन्नेति ॥ तद्व्याप्यत्वात् । ज्ञाननिवर्त्यत्वव्याप्यत्वात् ॥ [३।२०]अभावद्वैतस्येति ॥ भावापेक्षयाऽभावस्यात्यंतगुरुत्वात् ॥ प्रागेवसिद्धइति ॥ क्वचित्त्वयंश्लोकःकिंचेयंप्रक्रियेत्यादिग्रंथात्पूर्वमेवपठ्यते । अत्रैवंतुयुक्तःपाठः ॥ ६ ॥ ६ ॥ अविद्यानि

वृत्तिभंगः ॥ ६ ॥ १ ॥ असत्यादिति ॥ कार्यकारणयोःसमसत्ताकत्वात् । एतेनभावाद्भावस्यैवासत्यात्सत्यस्योत्पत्तिरि
तिपरास्तं ॥ ननुचिन्मात्रंनिर्विशेषात्मप्रकाशकमतोनाज्ञाननाशकमित्यतआह ॥ नचनिर्विशेषइति ॥ ननुचैतन्येऽज्ञानसह
भावदर्शनाविरोधित्वमित्याशंक्यनिवृत्तावपितत्सहभावोस्तीत्याह ॥ अयमिति ॥ उक्तंचैतदिति ॥ तदज्ञाननाशकत्वेत
द्विषयकत्वंतंत्रंनतुतदन्याविषयकत्वविशेषितंतत् । घटपटसमूहालंबनाद्धटाज्ञाननिवृत्तिर्नस्यात् । अतएवघटादिवृत्तेश्चरमवृ
त्तेश्चावच्छिन्नानवच्छिन्नविषयतयाविशेषइतिकस्यचित्प्रलपितमपास्तं । त्वन्मतेप्रत्युतवृत्तेरज्ञानविरोधित्वमनुपपन्नमित्याह ॥
तन्निवर्तकत्वइति ॥ तरतिशोकमात्मवित् सोविद्याग्रंथिंविकिरतीहसोम्येत्यादिश्रुतिस्त्वज्ञानानुपादानकवृत्तिपक्षेप्युपपन्ना ।
आतंचनं क्षीरेदध्यादिप्रक्षेपः ॥ एतेनेति ॥ चिन्मात्रस्यैवाज्ञानविरोधित्वेवक्तव्येविशिष्टस्यतत्कल्पनेमानाभावेनेत्यर्थः ।
ननुवृत्तिमात्रसत्त्वेचिन्मात्रसत्त्वेवाऽज्ञाननिवृत्तिरेवतत्रमानमित्यतआह ॥ अपरोक्षेति ॥ वृत्तिर्वातत्प्रतिबिंबितचैतन्यंवा
निवर्तकमस्तु । तथापितद्विषयोदुर्निरूपइतिनंतस्याज्ञानत्वमित्यभिप्रेत्याह ॥ किंचेति ॥ नन्वात्मनोवृत्तिविषयत्वेपिचिदवि
षयत्वाददृश्यत्वमुपपत्स्यतइत्यतआह ॥ उक्तंचैतदिति ॥ घटादावपिवृत्तिभिन्नदृशोऽसिद्धिरित्युक्तं । वृत्तेरज्ञाननिवर्तकत्वे
तन्निवर्तकस्याभावात्तदनिवृत्त्यापत्त्याचितएवाज्ञाननिवर्तकत्वंवाच्यं । तत्राप्युक्तादोषाइत्यभिसंधायाह ॥ अपिचेति ॥
अतिप्रसंगेनेति ॥ क्षणिकत्वापत्तिरूपेण ॥ शुद्धेति ॥ ननुवृत्तिमादायैवब्रह्मणउपहितत्वेनशुद्धत्वाभावइतिचेन्मैवं । तथा ॥ ३७१ ॥
सतिवृत्तेःशुद्धब्रह्मविषयत्वंनस्यात् । वृत्त्युपधानमात्रेणब्रह्मणःसविशेषत्वात् । नन्वविद्यानिवृत्तिरूपंद्वितीयंकारणमस्तीत्यतआह

॥ तदन्यस्येति ॥ तस्यात्मान्यत्वेननिवृत्तत्वात् । आत्ममात्रत्वेतूक्तदोषादहेतुत्वं । नन्वविद्यानिवृत्तिर्वृत्तिरूपैवनचवृत्तिनिवृत्तिंप्रतिद्वितीयहेतोरलाभः । अवच्छेदभेदेननिवृत्तेरेवद्वितीयहेतुत्वात् । वृत्तिर्हिस्वनिवृत्तिंप्रतिप्रतियोगित्वेनोपादाननिवृत्तित्वेनहेतुः । अतएवक्षणोक्तक्षणिकत्वमपि कारणस्वरूपाभेदेप्येकस्यैवद्विरूपेणहेतुत्वात् । वृत्तिर्हिस्वनिवृत्तिंप्रतिस्वात्मरूपैव । मैवं । कार्यस्यस्वोपादानविरहरूपत्वादर्शनात् । नचेहैवतत्कल्पना । अन्यथासिद्धेः । प्रागभावस्यघटंप्रत्यनुपादानत्वात् । वृत्तिनिवृत्तावप्यात्मरूपत्वादिविकल्पप्रसराच्च । अविद्यानिवृत्तेरेवात्ममात्रत्वस्यवक्तुमुचितत्वाच्च । तस्माद्यत्किंचिदेतत् ॥७॥ ॥ ७ ॥ अविद्यानिवर्तकभंगः ॥ ७ ॥ २ ॥ परकीयेपीति ॥ अनेकभोग्यगृहादौ ॥ अपरकीयेपीति * ॥ चंद्रमंडलादौ ॥ ईश्वरादीनामिति ॥ नचहेयतयाऽज्ञातत्वेसतीतिविशेषणमितिवाच्यं । गौरवात् । नचनिषिद्धसुखेप्रवृत्त्यर्थंतत्रापितदावश्यकमितिवाच्यं । निषिद्धसुखेह्यपुरुषार्थत्वान्नप्रवृत्तिः । किंतुबलवदनिष्टाननुबंधित्वज्ञानादेस्तत्प्रयोजकस्याभावात् । येषांतुतदस्तितेप्रवर्ततएव ॥ उपलब्धमिति ॥ साक्षात्कृतं ॥ साधनेति ॥ स्रगादिसाधनजन्यत्वं ॥ सुखमहमिति ॥ स्वकीयत्ववदनित्यत्वादेरप्रार्थ्यमानत्वान्नतस्यपुरुषार्थकोटिनिवेशः । तन्मतेस्वरूपसुखतदुपलंभयोर्निर्विशेषाभेदेनस्वरूपसुखेउपलब्धत्वाभावाच्च ॥ सुखप्रकाशाभावेनेति ॥ सुखप्रकाशयोर्निर्विशेषाभावेएकतरपरिशेषापातादित्यर्थः ॥ दुःखाभावस्यास्फुरणादिति ॥ दुःखाभावत्वेनेत्यर्थः । एतेनदुःखाभावस्यात्मानतिरेके । सुखेस्फुरतिसोपिस्फुरत्येवेतिनिरस्तं । प्रमेयत्वादिनात

* मुद्रितमूले । सुखसाधनेपरकीयेप्यस्वकीयेइत्यनंतरं "पुरुषार्थत्वस्यापरकीयेप्यस्वकीये" इतित्रुटितः ।

त्स्फुरणस्याप्रयोजकत्वात् ॥ ७ ॥ ७ ॥ निर्विशेषसुखस्यपुरुषार्थत्वभंगः ॥ ७ ॥ ३ ॥ अज्ञानानुवृत्त्यापातादिति ॥
नचविनश्यदवस्थस्यसमवायिकारणंविनास्थितिर्दृष्टेतिवाच्यं । क्षणमात्रस्थितायपिबहुकालंतदभावात् । नचसतिप्रमाणेक्षण
मात्रमिवबहुकालमपिस्थितिरस्त्वितिवाच्यं । तस्याभावात् । संस्कारादेरज्ञानानुपादानकत्वेप्युपपत्तेः । अतएवाह ॥ सर्पा
दाविति ॥ उत्तरेणज्ञानेनेति ॥ नचप्रारब्धकर्मसहभावासहभावाभ्यांपूर्वोत्तरज्ञानयोर्विशेषइतिवाच्यं । ज्ञानस्यस्वप्राग
भावनिवर्तनइवाध्यस्तनिवर्तनेप्यन्यानपेक्षेतिवक्ष्यमाणत्वात् ॥ संस्कारस्त्विति ॥ अन्यथाऽविद्याऽसिद्धेः ॥ तत्रैवेति ॥
द्विचंद्रादिभ्रमहेतोरंगुल्यवष्टंभदोषस्यज्ञानानिवर्त्यत्वात् । देहादिभ्रमहेतोर्दोषस्यसंस्कारस्यतत्वज्ञाननाश्यत्वात् ॥ इंद्रो
मायाभिरिति ॥ एकस्यामविद्यायांमायाभिरितिबहुवचनस्यानेकाकारतात्पर्यकत्वात् ॥ श्रुतौचभूयोयोजनादित्यन्वय
इति ॥ ननुविशेषणांन्वयापेक्षयाविशेष्यान्वयोभ्यर्हितइतिचेन्न । सकृन्निवृत्तस्यभूयोनिवृत्त्ययोगेनतदन्वयेबाधात् । नचांतइ
तिव्यर्थं । परमात्मनोध्यानात् भूयइंद्रियवृत्तीनांयोजनात् ध्यानपरिपाकरूपेंतेसतितत्वसाक्षात्कारोत्थभगवत्प्रसादाद्विश्वमाया
निवृत्तिरित्यर्थोपपत्तेः ॥ ब्रह्मज्ञानस्येति ॥ आप्रायणं मरणपर्यंतं देहादेर्याऽनुवृत्तिस्तत्कारणैर्यज्ञादिकर्मभिर्ब्रह्मज्ञानस्यप्रति
बंधःक्रियते । कर्मणांप्राबल्याभिधानार्थंज्ञानस्येति । यत्तुकश्चिदाह । देहादिप्रतीत्यनुकूलाऽज्ञानस्यसूक्ष्मावस्थालेशइत्युच्यते ।
यथायागस्यसूक्ष्मावस्थाऽपूर्वं । तदुक्तंवार्तिके । तस्मात्फलेप्रवृत्तस्ययागादेःशक्तिमात्रकं । उत्पत्तौचापिपश्वादेरपूर्वंनततःपृथ
गिति । तदसत् । तादृशापूर्वांगीकारेश्रौतकारणाभावस्येवेहकस्यापितदाक्षेपकस्याभावात् । देहादेरनाद्यविद्यकत्वेनैवजीवन्मु

क्तिश्रुतेरुपपत्तेः । पूर्वज्ञानादनिवृत्तस्यलेशस्यतदनधिकविषयेणोत्तरज्ञानेनाप्यनिवृत्तेः ॥ भावेत्विति ॥ भक्तेरित्यनुषज्यते । प्रसादस्यमोचकत्वंतुमत्प्रसादात्तरिष्यसीत्यादिनाभगवताबहुकृत्वःप्रतिपादितं । ननुतावदेवास्यचिरंयावन्नविमोक्ष्येत् इतिश्रुत्याऽस्यात्यंतात्मतत्वसाक्षात्कारस्यप्रारब्धक्षयमात्रमपेक्षणीयंकैवल्यसंपत्त्यर्थमित्यर्थकयाज्ञानानंतरंप्रसादविलंबेनमोक्षविलंबाभावःउच्यतइतिचेन्मैवं । वंधकोभवपाशेनभवपाशाच्चमोचकइतिवचनात्परमेश्वरस्यैवमोचकत्वात् । लोकेचप्रसन्नस्यैवमोचकत्वात्प्रसन्नएवभगवान्मोचकः । अतएवोक्तश्रुतिर्ज्ञानानंतरंप्रारब्धक्षयातिरिक्तविलंबंनिषेधति । नत्वविलंबितंप्रसादं । अतएवाष्टादशेध्यायेभगवद्गीतायांप्रसादस्यमोचकत्वमुक्तं । अतएवनस्मृतीनामतत्परत्वं । श्रुत्याविरोधाभावात् । दृष्टैवतंमुच्यतइत्यादेस्तुमोचकप्रसादेनज्ञानानपेक्षेत्येवंपरत्वमन्यत्रव्याख्यातं ॥ ७ ॥ ७ ॥ जीवन्मुक्तिभंगः ॥ ७ ॥ ४ ॥ भेदभोगेति ॥ भेदेसत्यपितार्किकमतइवभोगाभावात्तारतम्याभावआनंदानुभवरूपभोगेसत्यपिमायिमतइवभेदाभावात्तदभावः ॥ ब्रह्मेशानादिभिरिति ॥ ब्रह्मेशानादिभिर्देवैर्यत्कैवल्यंप्राप्तुंनशक्यंततत्कैवल्यंयत्स्वभावःयस्यासाधारणधर्मःसकैवल्याश्रयोभावात् ॥ जगद्व्यापारवर्जमिति ॥ जगत्सर्जनादिव्यतिरिक्तसर्वसामर्थ्ययुक्तोभवतीति ॥ तदवश्येति ॥ प्रज्ञानंदादनुत्कृष्टेराजानंदेव्यभिचारवारणायतदवश्येति । समानंदेतद्वारणायतन्नियामकेति ॥ श्रोत्रियस्यचेति ॥ मानुषशतानंदपरिमितैकानंदयुक्तोमनुष्यगंधर्वोमुक्तोयथातथातावदानंदयुक्तःप्राप्तश्रोत्रफलोकामहतोमुक्तमनुष्यगंधर्वोपि ॥ असमाइति ॥ मनोजवेषुज्ञानादिष्वसदृशाः ॥ वृद्धिह्रासेति ॥ मुक्तेर्न्यूनाधिकत्वंभाक्तं कुतःब्रह्मादीनांमुमुक्षुषुअंतर्भावात् तेषांसाधनस्यन्यूना

धिकत्वात् । एवंसतिब्रह्मादीनांमुमुक्षुत्वंतर्भावोमुक्तिश्चेत्युभयसामंजस्यंभवति ॥ परतंत्रानंदत्वेति ॥ परतंत्रानंदत्वस्यसाक्षाद्व्याप्योधर्मोदेवानंदत्वादिः तेनसजातीयायोदेवांतरानंदः तत्प्रतियोगिकतारतम्यंदेवानंदइत्यर्थः ॥ सजातीयबंधेति ॥ निगडबंधादिनासजातीयोबंधः निगडबंधाद्यनंतरंतन्निवृत्तेराश्रयोदेवदत्तादिः तत्प्रतियोगिकतारतम्यवान्यज्ञदत्तादिः तन्निष्ठायथा निगडबंधनिवृत्तिः तथापक्षीभूतादेहादिरूपप्रकृतिबंधनिवृत्तिरुपतदाश्रयप्रतियोगितारतम्यवन्निष्ठेतिसाध्यार्थः ॥ प्रसिद्धमिति ॥ समानलोकनिवासापेक्षयातदंतःप्रवेशस्याभ्यर्हितत्वेनलोकेप्रसिद्धत्वात् श्रुतिस्मृत्योश्च ॥ सारूप्यादिमतीति ॥ सारूप्यादेर्भेदसामानाधिकरण्यनियमेनसारूप्यनियतसायुज्यस्यापिभेदनियतत्वात् ॥ भेदेसत्यपीति ॥ चंद्रमसईत्यादिषष्ठीश्रुत्याचंद्रचेदिभूभुगादिनाभेदेसत्यपिसायुज्योक्तेः ॥ तच्छब्देनेति ॥ सायुज्यशब्देन ॥ सालोक्यमिति ॥ अस्मिन्वाक्येसारूप्यानंतरंसायुज्येवक्तव्येवृद्धिमंत्रन्यायेनसंबंधार्थकोयोगशब्दःप्रयुक्तइतियोगशब्देननिर्दिश्यमानंसायुज्यंसंबंधरूपमेव ॥ संश्लेषमात्रमिति ॥ अभिव्यक्तप्रसादविशेषवदीश्वरसंबंधःसंश्लेषः । एतेनव्यापकेश्वरेणसंश्लेषस्यनित्यसिद्धत्वादपुमर्थत्वं । नचोत्क्रमणश्रुत्यालीकांतरस्थितालौकिकशरीरावच्छिन्नेश्वरेणयोगःसइतिवाच्यं । नतस्यप्राणाउत्क्रामंति अत्रब्रह्मसमश्नुतइतिश्रुतेर्मुक्तेःपारलौकिकत्वाभावात् । ब्रह्मलोकाद्यवाप्तेरेवोत्क्रमणगमनादिसाध्यत्वादितिनिरस्तं ॥ संसारिणीति ॥ एतच्चप्रकृतेऽप्रकृतेपिसंबध्यते ॥ संचेति ॥ कामकृतोपद्रवाभावःसत्यकामस्य । आप्तकामस्यमुक्तस्यावाप्तकामत्वेश्रुतिमाह ॥ सोश्नुतइ

त्यादि ॥ उक्तश्रुतेर्जीवन्मुक्तिविषयत्वमपाकरोति ॥ [१३।१४] अपरोक्षेति ॥ ननुछंदोध्येतर्यनुशिष्टःश्रोत्रियंशब्दएववाधकइत्यत
आह ॥ [१२।१५] श्रोत्रियत्वंचेति ॥ [१२।१७] प्रकृतेति ॥ श्रोत्रियशब्दस्यमनुष्यगंधर्वान्वितत्वे ॥ [१३।१७] एकवचनमिति ॥ मनुष्यगंधर्वाणांवहु
वचनेनप्रस्तुतत्वान्नतत्रतदन्वयः ॥ [१२।१७] चशब्दश्चेति ॥ उद्देश्यविधेययोरेकत्वेनसमुच्चेतव्याभावात् । ननूद्देश्यादेरेकत्वेपितदुप
स्थितिभेदाच्चशब्दोयुज्यतइत्यतआह ॥ [१२।१८] नहीति ॥ वसिष्ठादिशब्दैस्तदुपस्थितिभेदेपितत्रचशब्दार्थानन्वयात् ॥ [१३।१८] अप्रकृतेति ॥
मनुष्यगंधर्वादिभिन्नोयःकश्चित्संसारीश्रोत्रियपदेनबोध्यतइत्यंगीकारे ॥ [१३।१] मानुषादिभ्यइति ॥ मनुष्यगंधर्वश्रोत्रियेमानुषानं
दशतगुणितएवानंदोनतुमनुष्यगंधर्वानंदइत्यादिरूपमानंदावधारणंनस्यात् । श्रोत्रियस्यमनुष्यगंधर्वदेवगंधर्वादिष्वेकस्त्वेनदेव
गंधर्वश्रोत्रियादौश्रुतस्यमनुष्यगंधर्वानंदशतगुणितानंदादेरपिमनुष्यगंधर्वेवक्तव्यत्वात् । तस्यचविरुद्धत्वादित्यर्थः ॥ [१३।२] भिन्नश्चे
दिति ॥ मनुष्यगंधर्वश्रोत्रियस्यदेवगंधर्वादिश्रोत्रियस्यचभिन्नत्वेतत्रतत्रश्रोत्रियेमनुष्यानंदशतगुणितानंदएवमनुष्यगंधर्वसमी
पश्रुतश्रोत्रियस्यैवमनुष्यगंधर्वानंदशतगुणितानंदएवंगंधर्वसमीपश्रुतश्रोत्रियस्यैवेत्यादिव्यवस्थानसिध्यति । मानुषानंदशत
गुणितानंदप्रत्याधारत्वेनाकामहतत्वावृजिनत्वयुक्तएवश्रोत्रियउपादीयते । तथाविधस्यदेवगंधर्वश्रोत्रियस्यदेवगंधर्वादिश्रोत्रि
यस्यैवमनुष्यगंधर्वानंदशतगुणितानंदइत्याद्यवस्थापत्तेरित्यर्थः ॥ [१३।३] अकामहतत्वादेरिति ॥ आदिपदेनावृजिनत्वं ॥ [१३।३] अथेति ॥
मनुष्यगंधर्वपदाकामस्यदेवगंधर्वपदकामस्यश्रोत्रियस्यमनुष्यगंधर्वानंदशतगुणितानंदः । एवं देवगंधर्वपदाकामस्यआजान

जादिपदकामस्यमनुष्यगंधर्वानंदशतगुणितानंदः । एवमुत्तरत्रापीत्यानंदव्यवस्थासिध्यतीत्यर्थः ॥ [१३।१४] अश्रुतेति ॥ तत्पदकाम
त्वादिबोधकपदाभावात् । नन्वश्रुतमपियोग्यत्वादियुक्तंकल्प्यमित्यतआह ॥ [१३।१५] बाधश्चेति ॥ योग्यत्वमेवनास्तीत्यर्थः ॥ [१३।१६] तस्मा
दिति ॥ अमुक्तमनुष्यानंदापेक्षयाऽमुक्तमनुष्यगंधर्वाणांशतगुणितानंदःतेषांमध्येयःश्रोत्रियादिर्मुक्तोमनुष्यगंधर्वस्तस्यापिमुक्त
मनुष्यानंदशतगुणितानंदइतिश्रुतेरर्थः । अतएवैकवचनंसमंजसं । बहूनांमनुष्यगंधर्वाणांमध्येकदाचित्कश्चिन्मुच्यतइत्येवंसूच
नार्थत्वाच्च । तदिदमाह ॥ [१३।१७] मुक्तस्येति ॥ अतएवचशब्दोपिसंगच्छते । मुक्तामुक्तमनुष्यगंधर्वस्यैकत्वेप्यमुक्तत्वमुक्तत्वरूपाव
स्थाभेदेनतदवस्थितोद्देश्यभेदात् । अयंकुमारःसाधुर्युवाचेतिवत् । ननुविदितवेद्यानांबृहस्पतिशिष्याणांस्तुतिरूपोक्षण्वंतइति
मंत्रःकथंमुक्तपरोव्याख्यायतइत्यतआह ॥ [१३।१८] अक्षण्वंतइतीति ॥ साक्षात्कृतपरमात्मतत्वानामेवविदितवेद्यत्वात् मुक्तानामेवात्र
स्तुतिरतोस्यसूक्तस्यमुक्तविषयत्वं ॥ [१३।१९] ऋचांत्वइति ॥ यज्ञेब्रह्मणांगौणानांबहुत्वं ॥ [१३।१३] देवर्षिमनुष्यादिस्थेति ॥ मनुष्यज्ञानग
तंयदल्पशाखाश्रवणजन्यत्वंतदल्पतरगुणविषयत्वंविनानुपपन्नमित्यादिरूपार्थापत्तिः । ननुदेवादिदेहावच्छेदेनब्रह्मज्ञानंकिंतु
चरमदेहावच्छेदेनैवेतिदेवर्ष्यादीत्याद्ययुक्तमित्यतआह ॥ [१३।१५] चरमदेहोपीति ॥ चरमदेहोपिदेवादिरूपएव ॥ [१३।१७] लोकरीतीति ॥
लोकेभृतिग्राहिसेवकात्तदग्राहीसेवकोराजप्रियोदृष्टः ॥ [१३।१७] सिद्धेरिति ॥ मुक्तेः । [१३।२२] गतिरिति ॥ श्वेतद्वीपादिमुक्तिस्थाननिवा
सः ॥ [१४।१] दहरेति ॥ दहरविद्यायांसत्यकामत्वादयोक्षरविद्यायांप्रशासितृत्वादयोल्पगुणाउक्ताः ॥ [१४।२] भरन्यासेति ॥ रक्षिष्यत्ये
वेत्यादिविश्वासः ॥ [१४।३] स्वरूपइति ॥ भक्तिस्वरूपंकर्मापेक्षं । नंतुप्रतिपत्तिस्वरूपं । ननुभक्तिस्वरूपेकर्मावृत्तिभ्यामाधिक्येपिविश्वा

सोल्पःप्रतिपत्तौतुकर्मावृत्त्योरभावेपिविश्वासोभूयानितिदशरूप्यैकसुवर्णन्यायेनभक्तिप्रपत्त्योःसाम्यमित्याशंक्यनिराकरोति ॥
[१४।३]नचतयोरिति ॥ प्रपत्त्यपेक्षयाभक्तावेवविश्वासाधिक्यमित्याह ॥ [१४।४]विश्वासस्येति ॥ सकृद्भोजनेवहुघृतभोक्तुरपेक्षयावहुषु
भोजनेष्वल्पघृतभोक्तुरेववहुघृतभोक्तृत्ववदनेकभक्त्यावृत्तिष्वल्पाल्पविश्वासस्यापिसकृन्निवृत्तप्रतिपत्तिगतविश्वासापेक्षयाऽ
धिकत्वादित्यर्थः ॥ [१४।८]अंधेति ॥ अंधेनकृतेयागेआज्येक्षणाद्यंगवैकल्यंपंगुकृतेविष्णुक्रमणाद्यंगवैकल्यं ॥ [१४।११]कर्मणामिति ॥ अ
ल्पस्यकर्मणोऽल्पंफलंमहतोमहदित्येवंविशेषवेदनाभावेप्यल्पस्यकर्मणःस्वविषयेल्पफलेमहतोमहदितिविभागोनियमोभवति ॥
[१४।१२]स्थानसामान्यादिति ॥ यथाब्राह्मणकांडेप्रथमस्थानगतेनकर्मणामंत्रकांडेप्रथमस्थानगतस्यमंत्रस्यक्रमप्रमाणेनसंबंधस्तथा
ल्पफलंप्रत्यल्पमेवकर्मसाधनत्वेनसंवध्यते महत्फलंप्रतिमहदित्यर्थः । अपरोक्षज्ञानोत्तरमनुष्ठितानिविचित्रकर्माणिमोक्षेतरफ
लानि । मोक्षाहेतुत्वेसतिफलवत्त्वादितिसामान्यव्याप्तिकानुमानेनमोक्षेवैचित्र्यंसिध्यतीत्याह ॥ [१५।१]तस्यतावदेवेति ॥ विशेष
णासिद्धिंपरिहरति ॥ [१५।४]नापीति ॥ [१५।५]वैचित्र्यापातावेति ॥ तदंगीकारेत्विष्टापत्तिः । अर्थांतरंपरिहरति ॥ [१५।६]नापिफलेति ॥ वा
धान्नतत्सिद्धिः ॥ [१५।६]नित्यत्वादिति ॥ मोक्षानन्वयेपिफलत्वात् । विशेष्यासिद्धिंपरिहरति ॥ [१५।७]नापीश्वरेति ॥ लीलार्थं नि
ष्फलं । अपरोक्षज्ञानिकृतंकर्मलीलार्थं । सांसारिकभोगार्थमक्रियमाणज्ञानिकर्मत्वात् । ईश्वरकृतकर्मवत् । इत्यत्रविवक्षितस्या
विधिवद्धकृतत्वस्योपाधेःपक्षाद्व्यावृत्तिंवक्तुंज्ञानिनांकर्मविधिमाह ॥ [१५।११]आचार्यादित्यादि ॥ पक्षासिद्धिंपरिहरति ॥ [१५।१४]सूर्यादयइ

ति ॥ शुकशक्रसूर्यादयः ॥ यावदधिकारमिति ॥ यावदधिकारमवस्थितिराधिकारिकाणामितिसूत्रं ॥ भोगसामान्यएव साम्यमिति ॥ मुक्तभोगेईश्वरभोगगतभोगत्वसंदृशभोगत्वमस्तीत्यर्थः । नत्वीश्वरगतसामान्यभोगसंदृशोमुक्तभोगइत्यर्थः । विशेषान्यसामान्यस्याभावात् ॥ त्वन्मतेपीति ॥ मुक्तानामैश्वर्यभोगविशेषवत्त्वेजगद्व्यापारस्यापीश्वरगतत्वेनतद्वर्जनंमुक्तानांनस्यादित्यर्थः ॥ सातिशयत्वेपीति ॥ सातिशयस्येवापकृष्टस्यसमस्यविनाशदर्शनात्त्वत्पक्षेपिसस्यात् । श्रुतिबलात्तत्त्यागस्तुममापिसमइत्यर्थः ॥ उत्कर्षस्येति ॥ गंधाद्युत्कर्षस्य ॥ प्रकृतिमिति ॥ स्वभावं ॥ स्वभावजेति ॥ स्वभावस्यत्रैविध्याच्छ्रद्धात्रैविध्यमितिगम्यते ॥ हठापरपर्यायेति ॥ हठस्यकारणांतरापूर्वकत्वान्नानवस्था ॥ लिंगशरीराद्व्यानिवृत्तेरिति ॥ तथाचपितृत्वगंधर्वत्वादिकंनदेहाद्युपाधिकं किंतुस्वरूपकृतमितिगम्यतइत्यर्थः । मुक्तानांभोगानुपपत्तिनिरासाय अभावंबादरिराहह्येवमित्यधिकरणसिद्धजडाजडदेहवत्त्वंतेषांसाधयितुमाह ॥ पंचमुक्तस्येति ॥ अभावंबादरिरितिसूत्रसिद्धचिच्छरीरत्वंमुक्तानांसाधयति ॥ अस्तितांवदिति ॥ भावंजैमिनिर्विकल्पाम्नानादितिसूत्रसिद्धजडशरीरवत्त्वंसाधयति ॥ अस्तिचेति ॥ यथाजाग्रदवस्थायांदेहसद्भावेनभोगसंभवस्तथामुक्तावपिदेहसद्भावेनभोगोपपत्तिरित्येवमर्थकेनभावेजाग्रद्वदितिसूत्रेणसूचितंप्रमाणमाह ॥ स्वेच्छयावेति ॥ इंद्रियवत्त्वंतेषांसाधयति ॥ मोक्षधर्मेचेति ॥ शरीरमनुप्रविश्येति ॥ इतःपरंतत्प्रकाशयंतइतिशेषः । भाष्येतथापाठात् । एतद्भाष्यव्याख्यातंसूत्रमाह ॥ प्रदीपवदिति ॥ जीवस्यशरीरप्रवेशेपि

नदुःखानुभवप्राप्तिः । यतःसाधूनेवभोगाननुभवंतिप्रदीपवदितिसूत्रार्थः ॥ तन्निरुक्तंथ [१७।१६] भावादिति ॥ तदशीर्यताशारीति
तच्छरीरमभवदित्याद्युक्तविशरणरूपंतन्निरुक्तेः तस्मिन्मुक्तशरीरेऽभावादित्यर्थः । अतएवाह ॥ नहितानीति ॥ शरीरेसत्ये
वैलक्षण्यंमात्रेणशरीराभावोक्तौदृष्टांतमाह ॥ [१७।१७] कथंमन्यथेति ॥ तारतम्यसमर्थनमुपसंहरति ॥ [१७।१८] तुल्यादिति ॥ तत्प्रयोजन-
माह ॥ [१८।१] नियामकइति ॥ स्वयंनियच्छतिब्रह्मादिभ्योनियमयतिचेत्यर्थः । एतद्ग्रंथस्यब्रह्ममीमांसासंबंधित्वमुक्तमुपसंहरिष्यं
स्तदवधृतविशेषणवत्तयेष्टदेवतानमस्काररूपंमंगलंग्रंथसमाप्तावाचरति ॥ [१८।१] नमइति ॥ स्वस्यस्वातंत्र्येणकर्तृत्वस्याभावेपिपरा
धीनस्यतस्यसत्त्वादेतद्ग्रंथकरणेनभगवत्प्रीतिमाशास्ते ॥ [१८।२] मत्प्रेरकेणेति ॥ [१८।५] संगृहीतइति ॥ अनेनात्रोक्तन्यायानांमूलशास्त्रो
क्तत्वंसूचितं ॥ ७ ॥ मुक्तावपिब्रह्मादीनांतारतम्यसमर्थनं ॥ ७ ॥ ५ ॥ सद्योजातजटाजपावनसरिद्गोदावरीतीरतो
गव्यूतिर्वसतिस्संतांकुलवतामंवापुरीतत्रये । व्यासाख्याउपमन्युगोत्रजबुधास्तेष्वास्तयोमुद्गलस्तत्राजज्ञतयेमुरारिचरणाव्यासा
भिधानाबुधाः ॥ १ ॥ तेभ्योजायतविश्वनाथइतियस्सज्ज्ञानरत्नाकरस्तस्मादाविरभूत्सुरद्रुमयशाआचार्यनारायणः । रामा
चार्यइतीरितस्तदनुजोयस्तत्त्ववादांबुधेरातानीत्सतरंगिणीमिहपरिच्छेदश्चतुर्थोपियः ॥ २ ॥ इतिश्रीमद्रामाचार्यविरचिता
यांन्यायामृततरंगिण्यांचतुर्थःपरिच्छेदः ॥ ४ ॥ संपूर्णोयंग्रंथः ॥ ७ ॥

अयं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रणालये मुद्रयित्वा
प्रकाशितः ॥ शाकः १८३२, सन १९१०.

॥ श्रीमन्न्यायामृततरंगिणीसंपूर्णा ॥

श्रीमद्धनुमद्भीममध्वातर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवायनमः ॥ सद्गुणंकरधृतार्थसद्गुणंदूरदोषमुरुदोषमप्यलं ।
पार्थसारथिमपार्थसारथिंनंदनंदनमतिसाधनंनुमः ॥ १ ॥ निदिध्यासनमंगिश्रवणादिकमंगमित्येतदाक्षिपति ॥ [111]नन्वेतदिति ॥
विवरणइति[111] ॥ नन्वपरोक्षफलोदयेनिदिध्यासनांगत्वेश्रवणमननयोःकिंनस्यात् । त्रयाणामपिसन्निपत्योपकाराविशेषात् ।
दर्शपूर्णमासंवत्समप्रधानतांवाकिंनस्यादिति । उच्यते । शक्तितात्पर्यविशिष्टशब्दावधारणंप्रमेयावगमंप्रत्यव्यवधानेनकरणं
भवति । प्रमाणस्यप्रमेयावगमंप्रतीत्याद्युक्तं ॥ [112]मननंनिदिध्यासनेति ॥ तत्रापिमननस्यचित्तैकाग्र्यायोग्यरूपासंभावनानि
रसनद्वारेणचित्तस्यप्रत्यगात्मैकाग्रवृत्तिहेतुत्वंनिदिध्यासनस्यतुविपरीतसंस्काररूपविपरीतभावनानिरसनद्वारातद्धेतुत्वं ॥ प्र
[112]त्यगात्मेति ॥ प्रत्यगात्मप्रवणतालक्षणोयःसंस्कारः तेनपरिनिष्पन्नायांब्रह्मैकाग्र्यलक्षणावृत्तिः सैवकार्यं तद्द्वारेणेत्यर्थः ॥
[113]इतीति ॥ फलंप्रत्यव्यवहितस्यकारणस्यविशिष्टशब्दावधारणस्यव्यवहितेमननंनिदिध्यासनेइतिहेतोरित्यर्थः । शक्तितात्पर्य
विशिष्टशब्दावधारणरूपस्यश्रवणस्यब्रह्मानुभवंप्रतिसाक्षाद्धेतुत्वेनकरणत्वमित्युक्तंदूषयति ॥ [114]विचारइति ॥ शाब्दज्ञानेश
ब्दस्यतज्ज्ञानस्यवासाक्षात्कारणत्वं नान्यस्य । ननुशक्त्यादीनांसंदेहादौसतिशाब्दज्ञानाभावेनविशिष्टस्यहेतुत्वेवाच्येविशेषण
स्यापिहेतुत्वेनव्यवधानद्वाराऽवघाततंडुलादेरिवकरणांतर्गतिरस्तीत्यतःकरणवदेवशेषित्वंभविष्यतीत्यतआह ॥ [114]नचेति ॥
अस्तुवाकरणांतर्गतिःशक्त्याद्यवधारणस्यतथापिनतस्यशब्दवन्मत्याद्यपेक्षयाशेषित्वमित्याह ॥ [115]सन्निपात्यपीति ॥ प्रधानंप्र

तिसन्निपात्यंगस्यारादुपकारकांगानांचपरस्परमंगांगित्वाभावात् । अन्यथाऽवघातंप्रतिप्रयाजादेःशेषत्वंस्यादित्यर्थः । तद्व्या ग्नेयादिवत्त्रयाणामपिप्राधान्यमस्त्वित्यतआह ॥ ह्रीषादेरिति ॥ सौभराख्येनसामविशेषेणवृष्टावन्नाद्येस्वर्गेचफलेजननीये सति हीष् ऊर्क ऊं इत्येषांसौराख्यसामसमाहृयवयवानांसौभरेणवृष्टौजननीयायांहीषृइत्येतस्य अन्नाद्येजननीयेऊर्कइत्येतस्य स्वर्गेजननीयेऊइत्येतस्यसौभरमत्येवयथांगत्वं तथाशब्देनपरोक्षज्ञानेजननीयेशक्त्याद्यवधारणरूपविचारस्यांगत्वमपरोक्षज्ञा नेशब्देनजननीयेमननादेरंगत्वमितिशब्दंप्रत्येवंत्रयाणामंगत्ववक्तुंयुक्तं । नतुपरस्परांगत्वं. । अन्यथाहीषृइत्यादीनामपिपरस्प रांगत्वंस्यात् ॥ भिन्नफलइति ॥ शब्देनजननीयइतिशेषः । स्याच्छब्दोनास्थायां । निदिध्यासनंप्रतिश्रवणादेरंगत्वस्यवक्ष्य माणत्वात् । मौनिश्लोकादौशब्दाभावादाह ॥ शब्दज्ञानेवेति ॥ शक्त्यवधारणस्यविचारात्पूर्वभावित्वेनविचारानंतर्गतत्वा त्तात्पर्यावधारणमेवतदंतर्गतमितिमत्वाह ॥ तात्पर्यविशिष्टेति ॥ अन्योन्याश्रयादिति ॥ तात्पर्यविषयशब्दार्थमज्ञात्वात त्रतात्पर्यस्यग्रहीतुमशक्यत्वात्तात्पर्यज्ञानेशाब्दज्ञानापेक्षा तस्मिंश्चतात्पर्यज्ञानापेक्षेत्यन्योन्याश्रयः । नन्वेवमाकांक्षादिधियोपि निराकांक्षत्वादिभ्रमनिरासिकाएव नतुशाब्दधीहेतवइतिस्यात् । नस्यात् । निराकांक्षत्वादिज्ञानाभावेप्याकांक्षादिज्ञानंविना शाब्दज्ञानाभावस्यानुभवसिद्धत्वात् । ननुतात्पर्यज्ञानाहेतुत्वेकथंनानार्थेविनिगमना । अन्वयविशेषयोग्यतयेतिगृहाण । य चुग्राह्यसंशयविपर्ययोत्तरप्रत्यक्षेविशेषदर्शनमिवतात्पर्यसंशयोत्तरशाब्दज्ञानेतात्पर्यधीःकारणमिति तन्न । उभयत्रोभयस्यप्र तिबंधनिरासमात्रोपयोगित्वेनाहेतुत्वात् । तदिदमुक्तंप्रतिबंधनिरासेत्यादि । तात्पर्यभ्रमस्यप्रतिबंधकत्वंचकार्यबलान्मणिमं

त्रादिवत् । अतएवसाक्षादविरोधिनोज्ञानस्यजनकज्ञानविघटकतयैवप्रतिबंधकत्वमित्यादेरनवकाशः ॥ [११९३]बाह्यागमेपीति ॥
शब्दार्थस्यबाधितत्वेपितद्वक्तुस्तत्रतात्पर्यमबाधितमेव ॥ [११९३]दुष्टत्वेति ॥ ज्ञानरूपेषुज्ञानकरणेषुभ्रमरूपंदुष्टंप्रमारूपमदुष्टमित्य
न्यत्रदृष्टांव्यवस्थानस्यात् । यादृच्छिकसंवादिलिंगविभ्रमस्यतुदुष्टत्वमेव । स्वव्यापकभ्रमहेतुत्वात् । तत्रप्रतीतस्यतदव्याप
कत्वात् । ननुवेदेकुत्रचिदेवतात्पर्यभ्रमोबाह्यागमेतुकुत्रचिदेवतत्प्रमेति । मैवं । यत्रैवतद्भ्रमप्रमेतदंशएवक्तयोर्दुष्टत्वादुष्टत्वा
पातात् ॥ [११९५]करणीयेति ॥ करणंह्यवदानयागः । तस्यद्रव्यंव्रीह्यादि । तत्रावघातादेःशेषत्वंयथास्तितथाप्रकृतेनास्तीत्यर्थःता
त्पर्यावधारणंशब्दंप्रतिनसंन्निपात्यंगमित्यर्थः । यत्तुदृष्टांतेसर्वसाम्यंनापेक्षितमतोवघातवैषम्येपितात्पर्यावधारणंशब्दंप्रतिनसं
न्निपत्यांगमेवेति । तन्न । मीमांसकप्रक्रियालेशस्याप्यज्ञानेनोक्तत्वात् ॥ [११९५]सन्निपत्येति ॥ दृष्टार्थानिक्रियारूपाणिस्वकारकस्यो
त्पत्त्यादिकुर्वंति अदृष्टार्थानित्सन्निपातीनितुस्वकारकेष्वतिशयमादधतितत्तदंगभावमनुभवंति तात्पर्यावधारणंत्वनुभयंकथंसन्नि
पातिस्यात् ॥ [११९६]अन्यथावघातादिरिति ॥ ननुविशिष्टयागप्रविष्टतयावघातस्यशेषित्वमिष्टमेव । असाधारण्येनशेषितातुन ।
असाधारण्येनफलोपकारित्वाभावादिति । न । श्रवणत्वेनश्रवणस्यशेषित्ववदवघातत्वेनावघातस्यप्रयाजादिशेषित्वस्यापाद्य
मानत्वात् ॥ [११९७]एतेनेति ॥ प्रधानंप्रतिसन्निपत्योपकारकस्यप्रधानोपकारकांतरापेक्षयाशेषित्वेवघातादेःप्रयाजाद्यपेक्षयाशेषित्वा
पातेनेत्यर्थः । ननुप्रयाजादिकंयागस्यैवसहकारि मननादिकंतुशब्दस्सहकारिभूतस्यचित्तस्यसहकारीतिवैषम्यमित्यतआह ॥

सो[१।३८]मेयागेति ॥ सोममभिषुणोति आश्विनंगृह्णातीत्यादिनाविहितमभिषवग्रहणादिकंसोमेयागेसन्निपात्यंगं । अतएवाभिषवा
दिकंकरणभूतेशब्दस्थानीयेसोमयागे अतिशयाधायकंकरणांतर्गततात्पर्यावधारणस्थानीयं तत्प्रतिसोमयागसहकारिभूतायाः
दीक्षणीयश्चित्तंस्थानीयांतरंगमतएवतद्गतातिशयहेतुःप्रयाजप्रोक्षणादिमननादिस्थानीयमंगंस्यात् । नन्वभिषवादियुक्तसोम
यागंप्रत्यंगस्यप्रयाजादेरभिषवादिकंप्रत्यपितदस्त्येवेतिवदंतंप्रत्याह ॥ गौणां[१।२०]गत्वमिति ॥ श्रुत्यादिगम्येंगत्वेतद्विनापिकल्प
नेऽतिप्रसंगः । शब्दादापरोक्ष्यंवदंताशब्दत्रयाणामंगत्वंवक्तुंयुक्तमित्याह ॥ किं[१।२१]चेति ॥ अ[१।३४]न्यथेति ॥ अनेकंफलानिसाधय
तैकेनतत्तत्फलेजनयितव्येऽपेक्षितानांसहकारिविशेषाणांपरस्परमंगांगिभावांगीकारइत्यर्थः । सौभरेण सौभरनामकेनसाम्ना ।
निधनं साम्नोंत्योवयवः । द्वितीयस्यचतुर्थेभिहितं । सौभरेपुरुषश्रुतेर्निधनेकामसंयोगः । ब्रह्मसामाख्यंस्तोत्रंप्रकल्प्यतदाश्रि
तंसौभरंफलत्रयसाधनत्वेनयोवृष्टिकामइतिवाक्येनविधायवृष्ट्यादिसाधनेसौभरेनिधनसाधनत्वेनहीषादयोहीषादिवाक्येनविहि
ताः । तत्रसंशयः । किंहीषादयोनिधनविशेषाःसौभरफलात्फलांतरार्थेनविधीयंतेउतसौभरस्यैवतत्तत्फलंसाधयतः तत्तन्नि
धनमनियमेनपाठतःप्राप्तंनियम्यतइति । तदर्थंकिंवृष्टिकामादिशब्दोक्तपुरुषशेषत्वेनैतेसाक्षाद्विधीयंतेउतवृष्टिसाधनसौभरशे
षत्वेनेति । तत्रवृष्टिकामादिशब्दैःपुरुषस्यश्रुतत्वात्तादर्थ्यमेवहीषादीनांचतुर्थ्याविज्ञायते । पुरुषशेषताचतदभिलषितफलसा
धनतयेतिफलार्थत्वमेवैषां । वृष्टिकामशब्देनवृष्टिकामस्येच्छाविषयंवृष्टिसाधनंसौभरोक्तौलक्षणास्यात् । नचश्रुतिसंभवेसा
युक्ता । तस्माद्धीषादयोगुणाःसौभरफलाद्वृष्ट्यादेर्भिन्नस्यहेतवइति । अत्राहुः । वृष्ट्यादीनिपूर्वोक्तान्येवविपरिवर्तमानानिप्रत्यभि

ज्ञायंतइतिनफलांतरावगमः । किंचहीषादिशब्दमात्रेफलायविहितेसत्याश्रयापेक्षायानलावन्निधनमाश्रयोभवितुंयुक्तं । तस्या
प्रकृतत्वात् । नापिसौभरं । प्रकृतत्वेप्यनेकावयवत्वान्नियमेननिधनसंबंधायोगात् । तथात्वेनिधनमित्यनर्थकंस्यात् । निधन
स्यापिविधानेवाक्यभेदः । तस्माद्वृष्टिकामादिशब्दलक्षितेसौभरेनिधनत्वेनैवानियतप्राप्ताहीषादयोनियम्यंते । अथवालक्षणा
पिनास्ति । नहियदेवफलस्यकारणंतस्यैवपुरुषशेषत्वंतदंगस्यापितद्द्वारेणास्तिपुरुषशेषिता । तथाचप्रयोगोदृश्यंते । वासिष्ठा
नांनराशंसोद्वितीयःप्रयाजइति । सौभरांगभूतास्तद्द्वारेणवृष्टिकामादीनांपुरुषाणामनियमेनशेषभूताःप्राप्तास्तानेवप्रतियथाप्रा
प्तिरूपानियम्यंतइतिनलक्षणा । तदुक्तं । तस्मात्फलांतरार्थेननैवहीषादयोगुणाः । विधीयंतेनियम्यंतेतेयथाप्राप्तसौभरइति ।
एकस्यभिन्नभिन्नकार्यजननेऽपेक्षितानांभिन्नभिन्नसहकारिणांपरस्परमंगागिभावेदूषणांतरमाह ॥ [३।३] कर्णापूर्वेति ॥ यागेनक
रणापूर्वेजननीयेऽवघातादिःसहकारी । परमापूर्वेतुजननीयेप्रयाजादिःसहकारी । नत्ववघातादिकंप्रतिप्रयाजादिःशेषः । त्व
द्रीत्यातुस्यादित्यर्थः । कर्णापूर्वनामप्रधानमात्रेणजननीयापूर्वं । सांगेनतेनजननीयंतुपरमापूर्वमिति । ननुशब्दस्यपरोक्षज्ञा
नंप्रतिहेतुत्वेतदवच्छेदेनश्रवणस्यशब्दंप्रत्यंगत्वंस्यात्तदेवतुनास्तीत्यतआह ॥ [३।३] क्लृप्संचेति ॥ एतेनयागेऽपूर्वभेदवत्प्रकृतेनकार्य
भेदइतिनिरस्तं । नन्वकरणमपिप्रयाजादिकंप्रत्याज्यग्रहणादेरिवश्रवणंप्रतिमननादेरंगत्वंभविष्यतीत्यतआह ॥ [३।३] नचाकरण
मपीति ॥ चतुर्जुह्वांगृह्णातिप्रयाजेभ्यस्तदित्यादेरिवात्रश्रुत्यादेरभावात् ॥ [३।३] लिंगंत्विति ॥ श्रुतस्यार्थस्यमंतव्यादिरूपतयाश्र
वणस्यमननाद्युपकारकत्वरूपसामर्थ्यवन्मननध्यानयोःश्रोतव्यत्वाभावेनतयोस्तथासामर्थ्याभावाद्विपरीतंलिंगसामर्थ्यं ॥ प्र

[३१३]करणमिति ॥ इतिकर्तव्यताकांक्षाप्रकरणं ॥ [३१३]श्रवणस्येति ॥ तात्पर्यावधारणरूपश्रवणस्यशाब्दप्रमारूपफलाहेतुत्वात् ॥ [३१४]स्थानेति ॥ स्थानंसादेश्यं । समाख्यायौगिकीसंज्ञा । ननुतात्पर्यावधारणरूपश्रवणस्यशाब्दप्रमांप्रत्यहेतुत्वेनाप्रधानतयेति कर्तव्यतारूपाकांक्षाविरहेपितात्पर्यावधारणहेतोर्विचारस्यशाब्दप्रमाहेतुत्वादिकंस्यादित्यतआह ॥ [२१४]किंचेति ॥ मननादेःशाब्दज्ञानेऽहेतुत्वेनश्रवणंप्रतिमलयोःफलोपकार्यंगत्वमित्याह ॥ [३१६]यच्चोक्तमिति ॥ तत्रमननस्यनशाब्दज्ञानहेतुत्वं द्वाराभावादित्याह ॥ [३१७]सूक्ष्मेति ॥ चित्तैकाग्र्यस्यशाब्दज्ञानविशेषत्वेपिनतस्यमननसाध्यत्वं । किंत्वयुक्तत्वशंकानिवृत्तिरेवतत्साध्या । तद्रहिते अयुक्तत्वशंकारहिते ॥ [३१८]उक्तेति ॥ चित्तैकाग्र्यं ॥ [२१८]शंकेति ॥ असंभावनेत्यर्थः । अयुक्तत्वशंकानिवृत्तिस्तुमनन द्वारा । तस्याःप्रतिबंधकाभावरूपत्वादितिभावः ॥ [३१९]मननविधेरिति ॥ चित्तैकाग्र्यस्यमननसाध्यतायामानांतराप्राप्तत्वात् ॥ [२१९]मतिरिति ॥ अयुक्तत्वशंकानिवर्तकत्वमेवमननेप्रतीयते । नतुचित्तैकाग्र्यहेतुत्वं । निदिध्यासनस्यापिनशाब्दधीहेतुत्वं । द्वाराभावादित्याह ॥ [३१९]निदिध्यासनस्येति ॥ [३११]रूप्येति ॥ ननुइयंशुक्तिरितिज्ञानानंतरंतद्रजततथाज्ञातमितिस्मृतेर्ज्ञानगोचरसंस्कारसत्त्वेपितद्रजतमितिस्मरणेनविपरीतसंस्कारनिवृत्तिस्तत्राप्यस्तीति । मैवं । रूप्यसंस्कारसत्त्वेनशुक्तिसाक्षात्कारवत्प्रपंचसंस्कारसत्त्वेपिब्रह्मसाक्षात्कारसंभवात् । तत्प्रवृत्तिनिदिध्यासनस्यद्वारमित्युक्तावैयधिकरण्यत्वात् ॥ [३११]श्रवण सामर्थ्येति ॥ श्रुतार्थस्यैवमतस्यैवध्यातव्यत्वात् ॥ [३१२]निदिध्यासनस्येति ॥ फलसाधनस्यैवेतिकर्तव्यताकांक्षारूपप्रकरणं

फलसाधनंचनिदिध्यासनमेव ततस्तुतंपश्यतइतिवाक्यात् । ननुश्रवणमननेध्यानंप्रतिलिंगप्रकरणाभ्यांसन्निपात्यंगेइतिन
युक्तं । तयोर्ध्यानंप्रतिफलोपकारकत्वसंभवादित्यतआह ॥ युक्तश्चेति[३।१३] ॥ अतएवेति[३।१३] ॥ स्वरूपोपकारस्यांतरंगत्वादेवं ।
नवमे द्वितीयपादइतिशेषः । पार्वणहोमयोस्त्वप्रवृत्तिःसमुदायार्थसंयोगात्तदभीज्याहिदर्शपूर्णमासयोः । स्रुवेणपार्वणहो
मौजुहोतीतितद्धितश्रुत्यापर्वदैवत्यौहोमौश्रुतौ । तौकिंविकृतिर्दृश्यतेनवेतिसंशयः तदर्थमिदंविचार्यते । किंपर्वशब्दःकालव
चनः कालोस्यदेवतातस्यचासंस्कार्यत्वादारादुपकारकौहोमौउताग्नेयादिसमुदायवचनः समुदायदैवत्यौहोमौतत्संस्कार्याविति ।
तंत्रपृणातेर्दानकर्मणःपर्वशब्दः सचदीयतेस्मिन्नित्यधिकरणव्युत्पत्त्याकालेपिमुख्योभावव्युत्पत्त्याकर्मण्यपि । तत्रप्रकरणात्सा
मवायिकत्वलाभाच्चकर्मवचनत्वमंगीकृत्यतत्संस्कारार्थताहोमयोः । तेषांचकर्मणांतंत्रेणाभिहितानामग्नीषोमयोरिवव्यासक्तं
देवतात्वं । नैकैकशः । तेनसमुदायस्यदेवतात्वात् । तस्यचविकृतिस्वभावादतद्विकारत्वाच्चसौर्यादेस्तत्रहोमयोरप्रवृत्तिः ।
नहिसौर्यादयःसमुदायविकाराः । तदुक्तं । कालेशब्दस्यमुख्यत्वात्कालमाज्येहगम्यते । पृणातेर्दानकर्मत्वात्कर्मण्यपिचमुख्य
तेति ॥ पाठरूपेति[३।१५] ॥ यथासान्नाय्यपात्रशुंधनक्रमाच्छुंधध्वमितिमंत्रस्यसान्नाय्यपात्रांगत्वं ॥ सन्निधानस्येति[३।१५] ॥ यथादर्श
पूर्णमासयोःश्रूयतेहस्ताववनिक्तेउलुपराजिस्तृणातीति तत्रहस्तावधनेजनंहस्तसंस्कारार्थसत्करिष्यमाणसर्वांगंवा अनंतरोक्तो
लुपराजिस्तरणांगंवेतिसंशयेआनंतर्यरूपसन्निधानात्तन्मात्रांगमितिप्राप्तेलिंगेनसर्वांगमितिसिद्धांतितंतृतीयस्यद्वितीये । आदि
पदेनश्रुत्वामत्वेत्यादिकाश्रुतिःसन्निधानंचगृह्यते । श्रवणमननयोर्दृष्टद्वाराध्यानस्वरूपनिष्पादकतयाध्यानेसन्निपात्यंगत्वं

ध्यानस्यतुफलसंबंधेनप्राधान्यमित्यर्थेपाठसादृश्यलक्षणःसन्निधिरप्यस्तीत्याह ॥ [३।१६] श्रुत्वामत्वेति ॥ परोक्षनिश्चयंविनाध्यान स्वरूपासिद्धेस्तत्रतयोःसन्निपातित्वमपि ॥ [३।२२] प्रमाकरणत्वमसिद्धमितीति ॥ ततस्तुतंपश्यतइतिवाक्येदर्शनमात्रश्रवणादि तिभावः ॥ निदिध्यासनानंतरमिति ॥ अतएवध्यानभमानकमित्यतआह ॥ [३।२४] अथवेति ॥ ७ ॥ ७ ॥ मनननिदिध्या सनयोर्विवरणोक्तश्रवणांगत्वभंगः ॥ १ ॥ ७ ॥ परोक्ष[३।४]ज्ञानेकामनाभावादिति ॥ परोक्षज्ञानज्ञानंविनातत्कामनाया अयोगेनतज्ज्ञानेसतितद्विषयस्यापिज्ञातत्वान्नतत्रेच्छासंभवतिसिद्धेइच्छाविरहात् ॥ स्वर्गादौनिध्या[३।१२]दाविति ॥ यत्तुस्वर्ग निधिसाधनसाक्षात्कारेपिविचारस्येंद्रियसहकारित्वाद्धेतुत्वमेवेति । तन्न । न्यायानुसंधानादिनालौकिकेनांजनादिनापामरा णामपिस्वर्गनिधिसाक्षात्कारसत्त्वात् ॥ [३।१३] प्रकृतविचारेति ॥ श्रुत्याद्यविरोधितदनुग्राहकन्यायानुसंधानरूपप्रकृतविचारः ॥ [३।१४] अपूर्वविधीति ॥ स्वर्गेविजातीयेलौकिकसुखेयागविजातीयलौकिकक्रियायाःहेतुत्वदर्शनाद्यागादिविधिरप्यपूर्वविधिर्नस्यात् ॥ [३।१८] अन्यथेति ॥ व्रीहीनवहंतीत्यत्रव्रीहिशब्दस्यव्रीहिमात्रपरत्वेहिवैतुष्यमात्रेऽवघातनियमइतिस्यात् तथाचावघातःपुरुषार्थः स्यात् नतुक्रत्वर्थः । ननुव्रीहीनवहंतीत्यत्रव्रीहिशब्दोपूर्वद्रव्यपरोतोनावघातस्यपुरुषार्थत्वंव्रीहित्वेनविदलनंप्राप्तिरित्यतआह ॥ [३।२१] नचसामान्यइतिति ॥ ननूभयानुगतेसविशेषतयाप्रमेयतायांमानांतरप्राप्तिरस्त्येव सजातीयेप्राप्त्यापियत्रसजातीयांतरेनि यमसंभवस्तदाकिमुवाच्यमेकस्मिन्नेवात्मन्यवस्थाविशेषेणमानांतरप्राप्त्याविशेषांतरेनियमइतीत्यतआह ॥ [३।२२] यत्रापूर्वीयेष्विति ॥ यत्रयद्रूपेषुयदवस्थेषुभिन्नभिन्नावस्थयोःप्राप्तिनियमयोरुक्तौवैयधिकरण्यंभिन्नविषयत्वंस्यात् । तच्चांगीकारानर्हं । ननुसामा

नाधिकरण्यासंभवाद्वैयधिकरण्यमप्यवघातेप्रकृतेचाऽऽश्रवणीयमतआह ॥ [३।३३] संभवतिहीति ॥ यद्रूपाणांयदवस्थानांव्रीही णामपूर्वीयुत्वंतत्रैवविदलनप्राप्तिरस्तिप्रकृतेतुनतथेत्यर्थः ॥ [३।३४] तथात्वइति ॥ अपूर्वीयेषुव्रीहिषुदलनस्वप्राप्तिश्चेद्वैरूप्यस्यतेनैव सिद्धत्वादवघातेनियमायोगः । अप्राप्तिश्चेत्सुतरांतदयोगः ॥ [३।३५] प्रसक्तिमात्रमिति ॥ तदन्वयितावच्छेदकसंबंधः । सचव्री हिष्वपूर्वीयेष्वस्तिनिर्विशेषात्मनितुनकस्यापिसंबंधइतिवैषम्यं । ननुव्रीहिवैतुष्येसाधनांतरप्राप्तावपिनियमविषयेतद्वैतुष्यविशे षेनतत्प्राप्तिरितिवैयधिकरण्यमतआह ॥ [३।३६] अवघातसाध्येति ॥ अपूर्वीयेष्ववघातसामान्यसाधनप्राप्तिमात्रेणसामानाधिक रण्यं । निर्विशेषात्मनितुज्ञानसामान्यसाधनस्यवेदांतवाक्यभिन्नस्यप्राप्तिर्नेतिवैषम्यंग्रहणकवाक्यं संग्रहवाक्यं ॥ [४।१३] परिपूर्णा र्थइति ॥ अस्मिन्पक्षेवेदांतवाक्यंनप्राप्तं तस्मिन्नपिपूर्यते ॥ कर्मविप्रर्यकेति ॥ ननूभयत्रस्मृत्यादेःस्वातंत्र्येणाप्रमाणतया श्रुतितात्पर्यनिर्णायकत्वमेव । मैवं । श्रुतेरिवस्मृतेरपिधर्मादौप्रामाण्यात् । अन्यथास्मृत्यनुमितश्रुतेरपिश्रुत्यंतरतात्पर्यग्राह कत्वंस्यात् । श्रुतिविरोधेस्मृतिर्दुर्बलेत्येवस्मृतेरस्वातंत्र्यं ॥ [४।१४] समुपबृंहयेदिति ॥ इतिहासादिनैवबृंहयेन्नतुतेनबृंहयेदेवेत्यर्थः ॥ [४।१४] मूलप्रमाणत्वेति ॥ स्मृतीनामपिश्रुतिमूलत्वात्ताभ्यःश्रुतमपिश्रुतिभ्यएवश्रुतमितिनानेनस्मृतिनिषेधः । श्रुतिवाक्ये भ्यइतिपंचमीतुप्रयोजकत्वेपि । इतिपुराणंपंचमंवेदानांवेदमित्यादिवचनादेवश्रवणनियमाद्दष्टस्यकिंचिद्विषयाज्ञानहेतुभूता यामंतःकरणशुद्धावुपयोगोवाशबलापरोक्षेवातद्विशेषेवा तज्जन्याज्ञाननिवृत्तौवामोक्षीयानंदानुभवेवा । नाद्यइत्याह ॥ वि [४।१४] प्रकीर्णेति ॥ नद्वितीयंइत्याह ॥ [४।१५] आपरोक्ष्यस्येति ॥ नतृतीयइत्याह ॥ वेद[४।१६]जन्येति ॥ नचतुर्थइत्याह ॥ [४।१७] ज्ञानस्येति ॥

नपंचमइत्याह ॥ [४।१८]अन्यस्यचेति ॥ आनंदानुभवादेः । एतेनतमेवंवेदानुवचनेनेत्यादिश्रुतयज्ञादिजन्यांदृष्टस्यनियमादृष्टस्य
चांतःकरणशुद्धावुपयोगइतिनिरस्तं । यज्ञादिकर्मणांज्ञानार्थत्वेपिनियमादृष्टस्यतथात्वेमानाभावात् ॥ [४।२१]नियमादृष्टसाध्य
स्येति ॥ अपिशब्दश्चशब्दार्थे ॥ छ ॥ छ ॥ श्रवणादिविधेर्विकरणोक्तनियमविधित्वभंगः ॥ २ ॥ छ ॥ ज्ञानविध्य
[४।२२]भावादिति ॥ प्रमाणविषयपरतंत्रस्यज्ञानस्यपुमतंत्रत्वेनाविधेयत्वांगीकारात् ॥ [४।२३]शक्त्यसंभवादिति ॥ नचशुद्धेशक्त्यसं
भवेपिविशिष्टशक्तिरेवतद्धीधोपयोगिनीसैवावधारणीयेतिवाच्यं । शक्तितात्पर्ययोर्भिन्नविषयत्वापातात् । अन्यशक्त्यान्योप
स्थापनेलक्षणयाऽनवस्थापातेनविशिष्टशक्तेःशुद्धबोधानुपयोगितयातत्रशक्त्यवधारणस्यव्यर्थत्वाच्च ॥ [४।२४]अखंडार्थताहाने
रिति ॥ प्रकारोपलक्षितमपितदुपलक्षितत्वादिधर्मवदेवेत्यर्थः ॥ [५।६]उपक्रमादिरूपइति ॥ ननुपरमतेलिंगस्यप्रमाणत्वानभ्युप
गमेनप्रमाणेसतीत्येतदसिद्धमिति । न । यदेवानुमानेप्रमाणत्वेनाभिमतंपरेणतस्यैवात्रप्रमाणशब्देनाभिमतत्वात् । प्रमाणव
स्तुपरतंत्रस्यापिज्ञानविजातीयत्वेऽनुमित्यादिकमपिज्ञानंनस्यात् । नन्वनुमितेरपुंतंत्रत्वादस्तुज्ञानत्वमितिचेत्समंप्रकृतेपीत्याह
॥ [५।७]व्याप्तिज्ञानेति ॥ ननुव्याप्तिज्ञानापेक्षत्वमेवपुंतंत्रत्वमित्यतआह ॥ नहिपुंतंत्रे[५।८]इति ॥ छ ॥ छ ॥ परमतेश्रवणादिवि
ध्यनुपपत्तिः ॥ ३ ॥ छ ॥ [५।१३]शृंगप्राप्तेवाक्यार्थग्रहणइति ॥ वेदाध्ययनकालेवाक्यार्थज्ञानस्यप्रयोजनवत्त्वज्ञानात्तत्रेच्छा
॥ [५।२४]दर्शनेश्रुतीमामिति ॥ साक्षात्कारएवदृशेःप्रयोगादित्यर्थः ॥ छ ॥ छ ॥ श्रोतव्यइत्यास्यादेरनुवादकत्वभंगः ॥ ४ ॥
॥ छ ॥ [५।२५]श्रवणविधिरेवेति ॥ श्रवणस्यविचारगर्भत्वात् ॥ [५।२६]श्रवणसाध्येति ॥ अपरोक्षज्ञानेसतितज्जन्यापरोक्षज्ञानकामना

यांश्रवणविध्यधीनविचारविधिः श्रवणविधौचसतिपरोक्षज्ञानमित्यन्योन्याश्रयः । नन्वधीतुर्वेदस्यविदितपदपदार्थसंगतिकस्यापाततोजायमानंपरोक्षज्ञानंश्रवणंविनैवेतिनान्योन्याश्रयः । मैवं । अध्ययनोत्तरस्यविचारप्राग्भाविनोवेदार्थज्ञानस्यश्रवणफलत्वाच्छ्रवणविचारयोरत्यंतवैलक्षण्याच्छ्रवणविधिर्नविचारविधायकइत्याह ॥ किंचायमिति ॥ निर्णयात्मकोनिर्णयहेतुः ॥ अन्यथेति ॥ न्यायानुसंधानस्यकर्तव्यत्वंन्यायंविनानुपपन्नमितिन्यायग्रथनात्मकशास्त्रमारंभणीयं जिज्ञासासूत्रोक्तविचारस्यन्यायानुसंधानात्मकत्वाभावेतथाविधविचारस्यकर्तव्यता केनाप्निोक्तेतिनन्यायग्रथनात्मकशास्त्रारंभसाधकंकिंचिदस्तीत्यर्थः ॥ इतरस्येति ॥ विचारस्यवेदापेक्षितन्यायानुसंधानरूपत्वेतस्यवेदंप्रतीतिकर्तव्यतारूपमंगत्वमित्यन्यथाश्रवणवदंगित्वमेवस्यात् ॥ मननाभेदप्रसंगादिति ॥ मननवदंगत्वप्रसंगइत्यपिबोध्यं । तथाचश्रवणविधिजिज्ञासासूत्रयोर्भिन्नविषयतयानमूलमूलिभावइतिभावः । ननुजिज्ञासासूत्रस्यश्रवणविधिविषयशक्तितात्पर्यावधारणात्मकश्रवणाक्षिप्तोपक्रमोपसंहारादितात्पर्यलिंगविचारमादायसमानविषयत्वमस्तीतिशंकते ॥ मन्वद्वितीयइति ॥ एवंसतिश्रवणस्यमननाभेदंनिरस्यति ॥ मननंत्विति ॥ वेदांतवाक्यनिष्ठमद्वितीयब्रह्मविषयकंयत्तात्पर्यंतस्यविचारितोपक्रमादिलिंगैर्यदवधारणंतच्छ्रवणमित्युक्तंभवति । तत्रचत्वदभ्युपगमविरोधइत्याह ॥ विवरणइति ॥ उक्तविधस्यश्रवणस्येतिकर्तव्यतात्वमेवायाति तच्चत्वदनभिमतमित्यर्थः । एतेनार्थाक्षिप्तविचारस्येतिकर्तव्यतात्वेपितात्पर्यावधारणरूपेश्रवणेउक्तस्यांगित्वस्यानपायइतिनिरस्तं । त्वदभिमतश्रवणस्यैवतद्रूपत्वेनाक्षेपासंभवात् ॥ श्रवणावृत्त्यैवेति ॥ उक्तस्मरणादित्रितयान्यतमदृष्टमेवश्रवणफलंप्रकल्प्यदृष्टार्थानां

चफलसिद्धिपर्यंतमावृत्तेरर्थसिद्धत्वान्मननविधिंविनैवतत्सिद्धिरित्यर्थः ॥ त्रिविधस्यापीति ॥ श्रवणेयुक्तीरविधायमनने
ताविदधतीतिस्मृतिर्मननेतदपेक्षांसूचयति । नचोक्तत्रिविधस्यापिमननस्यश्रवणानपेक्षितयुक्त्यपेक्षातोनस्मार्ताव्यवस्थायुक्ते
त्यर्थः ॥ श्रवणंयावदज्ञानमिति ॥ नचोक्तविधश्रवणमननयोर्विषयभेदः । येनश्रवणानिवर्तितशंकानिवर्तकंमननंस्यात् ॥
॥ तर्हियुक्तायुक्तत्वेति ॥ न्यायरूपयुक्त्यनुसंधानकर्तव्यताबोधकमननविधेःन्यायग्रथनात्मकशास्त्रारंभकर्तव्यताबोधकस्य
न्यायानुसंधानरूपविचारकर्तव्यताविधायकस्याद्यसूत्रस्यचसमानविषयत्वाद्युक्तोमननविधेराद्यसूत्रमूलभावोनतुश्रवणविधेरि
त्यर्थः । एतेनतात्पर्यविषययुक्तायुक्तत्वादिसंशयनिवर्तकविचारापेक्षयातात्पर्यनिर्णायकश्रवणाक्षिप्तलिंगविचारस्याभ्यर्हितत्वे
नतदाक्षेपकश्रवणविधिरेवसूत्रमूलमितिनिरस्तं । विशिष्टतात्पर्यनिर्णयस्यमन्मतेश्रवणत्वेनतस्यतदाक्षेपकत्वायोगस्योक्तत्वात् ।
लिंगविचारस्यलिंग्यर्थत्वेनलिंगिनएवाभ्यर्हितत्वाच्च ॥ उक्तयुक्तीति ॥ मननांतर्गतानामसंभावनानिरासिनीनां ॥ तेनैवेति ॥
श्रवणेनैवासंभावनानिरासेमननवैयर्थ्याच्च ॥ युक्त्यनुसंधानेपीति ॥ श्रुतपदप्रयोगेणसिद्धश्रवणभावेयुक्त्यनुप्रविष्टश्रव
णलक्षणमव्याप्तंस्यादित्यर्थः । कौमुद्युक्तंलक्षणांतरंनिराकरोति ॥ नचकौमुदीति ॥ इष्टापत्तेरिति ॥ मननांतर्गतयुक्तीना
मुक्तरूपेश्रवणेनंतर्भावात् ॥ विचारविधायकस्येति ॥ एतच्चमध्यमपक्षेपिदूषणंबोध्यं ॥ वेदांतश्रवणमिति ॥ शब्दशक्ति
निर्णायकोथःश्रुतिलिंगादिकोन्यायस्तदनुकूलश्चतर्कस्तद्वेदांतश्रवणंआगमार्थनिश्चयार्थोयोन्यायःयश्चतदनुकूलस्तर्कस्समंतव्य
इतिशब्देनभण्यतइत्यर्थः ॥ वेदशब्देति ॥ शुष्कतर्कस्यनिषेधेपिवैदिकतर्कस्यमीमांसंतइत्यादिनावेदेनैवनियुक्तत्वात् ॥

संभावनेति[६।२६] ॥ तर्कैःकृतार्थस्यसंभावनायातन्मननमितिपूरणीयं । शब्दतात्पर्यतदर्थनिर्णायकयुक्तीनामनुसंधानेश्रवणमनने इत्यस्मिन्नर्थेदूषणमाह ॥ विवरणइति[६।२७] ॥ अयमत्रटीकाविवरणादीनामभिप्रायः । आत्मैकत्वविद्याप्रतिपत्तयइत्यत्रभाष्येप्रतिपत्तिशब्दस्याप्त्यर्थत्वमभिसंधाय ननुनविद्यागवादिवत्तटस्थासिध्यतिकिंतुवेत्त्राश्रितावेद्यंप्रकाशयंत्येवोत्पद्यतेऽतस्तस्याआप्तिर्न संभवतीत्याशंक्य अत्रभाष्येविद्याशब्देनशक्तितात्पर्यविचारसहकृतशब्दजन्यंप्रत्यक्षरूपंप्रमाणज्ञानमभिधीयते तच्चदूरदेशवर्त्या भ्रमरीचफलसाक्षात्कारवद्प्रतिष्ठितमेवप्रथममुत्पद्यतइत्याप्तिशब्देनविद्यायाःस्वविषयेणसहपुनरप्यापरोक्ष्यरूपाप्रतिष्ठोच्यते तच्चापरोक्ष्यंब्रह्मात्मपरिभावनाप्रचयनिमित्ततदेकाग्रवृत्तिंप्रतिचित्तस्ययद्योग्यत्वं तद्रूपायाऽसंभावना तस्यांमननेननिवृत्तायां शरीराद्यध्याससंस्कारप्रचयरूपविपरीतभावनायांचनिदिध्यासनेननिवृत्तायांसम्यगापरोक्ष्यंभवतीतिपरिहृत्य । ननुशब्दगताया अर्थगतायावाऽसंभावनायाविपरीतभावनायानिवर्तकेमनननिदिध्यासनेउच्यतांकिमर्थंचित्तैकाग्रवृत्त्ययोग्यत्वनिरासेनचित्तस्यप्रत्यगात्मप्रवणसंस्कारनिष्पन्नतदेकाग्रवृत्तियोग्यत्वहेतूउच्येतेइत्याशंक्य यौक्तिकासंभावनाविपरीतभावनानिरासितर्काणांप्रथमज्ञानेंतर्भूतत्वादित्यादिनापरिहृतं ॥ प्रथमज्ञानइति[७।१] ॥ श्रवणे ॥ उक्त्वेति[७।२] ॥ वक्ष्यमाणमभिसंधायेत्यर्थः । तेनविवरणवाक्ययोःपौर्वापर्यव्यत्यासनिमित्तोविरोधोनाशंक्यः ॥ ब्रह्मात्मेति[७।३] ॥ ब्रह्मणआत्मभावेनयापरिभावनातस्याःप्रचयोनिमित्तंयस्याःसातथोक्ता एवंभूतायातदेकावृत्तिस्तांप्रतिचित्तस्ययदयोग्यत्वंतदसंभावनेत्यर्थः ॥ भावनाप्रचयेति[७।४] ॥ भावनाप्रचयोहेतुर्यस्यएवंभूतंयच्चित्तैकाग्र्यंतत्प्रतिहेतुतायाःमननस्योक्तत्वादित्यर्थः । अत्रभिन्नप्रस्थानतयाविवरणविरोधोकिंचित्करइतिकस्य

चित्तलघितमयुक्तं । जिज्ञासासूत्रस्यश्रवणविधिमूलतायाविवरणोक्तायानिषिध्यमानत्वेनतत्रैवतद्विरोधस्योच्यमानत्वात् । अतएवाह ॥ जि[७।८]ज्ञासासूत्रस्येति ॥ समन्वयेऽविरोधादौचन्यायानुसंधानकर्तव्यत्वंविदधदाद्यसूत्रंसमन्वयांशेश्रवणविधि मूलकमविरोधेचमननविधिमूलकंस्यात् साधनाद्यंशेचानुभयमूलकंस्यादित्यपिबोध्यं । यत्तुसमन्वयोक्तविचारस्याभ्यर्हिततया श्रवणविधिमूलत्वोक्तिरिति । तन्न । समन्वयादप्यविरोधस्यपरपक्षंदूषणपर्यवसायिनोवैतंडिकान्प्रत्यभ्यर्हिततरत्वात् ॥ मंत[७।९]व्य श्चोपपत्तिभिरितीति ॥ शब्दसंबंधिनीनामर्थसंबंधिनीनांचोपपत्तीनांमननएवांतर्भावसंभवेनस्मृतिस्थोपपत्तिशब्दस्यशब्दा र्थविषयत्वेनावांतरभेदकल्पनेमानाभावात् । श्रवणमननयोर्भेदस्तुप्रकारांतरेणापिसंभवतीत्यर्थः ॥ उ[७।१०]क्तस्येति ॥ नचास्यज्ञा नरूपतयानानुष्ठेयत्वमितिवाच्यं । ज्ञानस्याप्यनुष्ठेयतायावक्ष्यमाणत्वात् । श्रवणादितुल्यत्वाच्च ॥ के[७।११]वलमिति ॥ त्वन्मते तस्याश्रवणत्वात्तत्रश्रुतशब्दोगौणःस्यात् ॥ निश्चि[७।१३]तप्रामाण्यस्येति ॥ नचकृष्णलयवावघातस्येवतादृशपुरुषंप्रतिमननविधिवा धइतियुक्तं । मुमुक्षुकर्तव्यत्वेननित्यवच्छ्रुतत्वात् । उक्तविधयान्यथाद्युपपत्तेश्च ॥ श्र[७।१४]वणनियमेनेति ॥ अनुमानादिप्राप्तिप क्षेपिवेदांतवाक्यस्यैवप्राप्त्यर्थंनियमविधिनापूरणादित्यर्थः ॥ अ[७।१५]न्यथेति ॥ सर्वस्मिन्नपिपक्षेवेदांतवाक्यस्यपूरणाभावे ॥ जि[७।१६]ज्ञासानामेति ॥ टीकास्थंस्वश्रवणादिरूपाजिज्ञासाकर्तव्येत्युक्तमित्यादौश्रवणेपिजिज्ञासापदप्रयोगस्यातद्गुणसंविज्ञानबहु व्रीह्याश्रयणादिनागतिश्चंद्रिकायामुक्ता ॥ उत्तर[७।१७]क्रतुविधिप्रयुक्तइति ॥ ज्योतिष्टोमादिक्रतुविधयोयागादिकमनुष्ठापयंति । अनुष्ठानंचविचारसाध्यज्ञानंविनानसंभवतीतिक्रतुविधेःकर्मकांडविचाराक्षेपकत्वंयथातथातरतिशोकमितिशोकनिवृत्तिहेतुत्वे

नश्रुतमात्मज्ञानमपिस्वसिद्ध्यर्थंब्रह्मकांडविचारमाक्षिपेत् । कार्येणकारणाक्षेपसंभवात् । यत्तुविचारस्यवैधत्वसिद्ध्यर्थंविधिमूलत्वमेवावश्यवक्तव्यं । अन्यथाकर्मज्ञानादेवकर्मविचाराक्षेपेऽध्ययनविधेर्वोत्तरक्रतुविधीनांवातदाक्षेपकत्वोक्तिरयुक्तास्यात् । मननविधिमूलत्वंवदतात्वयाप्ययमाक्षेपोवश्यंपरिहरणीयइति । तन्न । ज्ञानविधिव्यापारविषयत्वेनापिवैधत्वोपपत्तेः । अन्यथा विवरणमतेश्रवणविधेरपिनविचारविधायकत्वं किंतुतदाक्षेपकत्वमिति तस्यवैधत्वंनस्यात् । अध्ययनंनविधेर्ज्ञानार्थत्वेतुतस्यसाक्षाद्विचारविधायकत्वं । मममतेमननविधिस्तुसाक्षादेवविचारविधायकइतिवैषम्यं ॥ [८।२३] ऐकस्यैवेति ॥ तरतिशोकमित्यादिज्ञानविधेः । ननुब्रह्मकांडविचारविधायकस्यश्रोतव्यइत्यादिविधेःसत्त्वेननाध्ययनविधेर्विचाराक्षेपकत्वंकल्प्यतेगौरवादित्यतआह ॥

[८।२४] अस्तिचेति ॥ [८।१५] दृष्टफलत्वेनैवेति ॥ दृष्टफलानांफलपर्यंतमनुष्ठेयत्वात् ॥ [८।१८] मुंडकेति ॥ मुंडकआथर्वणोपनिषत् । तदध्ययने शिरोव्रतंविधिवद्यैस्तुचीर्णमितिशिरोव्रतस्यांगत्वंविहितं । कारीरी कारीरीप्रतिपादकोनुवाकः । तदध्ययनेभूभोजनस्यांगत्वं ॥ तांचतुर्भिरिति ॥ तां इष्टकां मृत्खननार्थामभ्रिंवैणवींकुद्दालसदृशीं चतुर्भिः मंत्रैः । तेचदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांगायत्रेणछंदसाददेंगिरस्वत् । अभ्रिरसिनारिरसिपृथिव्याःसधस्थादग्निंपुरीष्यमंगिरस्वदाभरत्रैष्टुभेनत्वाछंदसाददेंगिरस्वत् । अभ्रिरसिनारिरसित्वयावयंसधस्थआग्निंशकेमखनितुंपुरीष्यंजागतेनत्वाछंदसाददेंगिरस्वत् । हस्तआध्यायसविताबिभ्रदभ्रिंहिरण्ययींतयाज्योतिरजस्रमिदग्निंखात्वानआभरानुष्टुभेनत्वाछंदसाददेंगिरस्वत् । इत्येवंरूपान्यायसुधायामुक्ताः ॥ [८।१९] अर्थप्राप्तेति ॥ अभ्रेरभिधरणंविनामृत्खननायोगात्तदादानमन्यथानुपपत्तिप्राप्तमित्यर्थः ॥ [८।१९] संख्येति ॥

यद्यपिलिंगापेक्षयाश्रुतेःशीघ्रत्वात्संख्याविशिष्टमंत्रयुक्तादानविधिरिविवार्तिकात्प्रतीयते । तथापिगुणार्थत्वमेवफलतइतितद
त्राभिमतं । तथैवन्यायसुधायांव्याख्यातं । यथोक्तं । आदानविध्यभावादरुणैकहायनीन्यायानुपपत्तेरर्थप्राप्तस्यचादानस्या
नुवाद्यत्वेनैकविधावितरेणविशेष्टुमशक्यत्वाल्लिंगतश्चैकैकस्यैवमंत्रस्यप्राप्तेःसंख्यानाकांक्षत्वात्समुच्चयासिद्धेःफलतोगुणार्थत्वमि
ति ॥ ७ ॥ श्रवणविधेर्विवरणोक्तविचारविधायकत्वभंगः ॥ ७ ॥ ८ ॥ श्रवणादीति ॥ श्रवणादेर्ज्ञानरूपत्वात्तस्यै
वविधेयत्वात्तन्नादयःश्रूयमाणाअर्हार्थाएवनविधायकाइत्याहुः ॥ स्वाध्यायस्येति ॥ सर्वशाखानामेकेनपुंसाध्येतुमशक्यत्वा
त्सर्ववेदांतप्रत्ययंब्रह्मनभवतीतिशंकायांतत्परिहारत्वेनस्वाध्यायस्यहितथात्वेनसमाचारेधिकारत्वाच्चेतिसूत्रं । तस्यार्थः स्वाध्या
योध्येतव्यइतिसामान्यविधिनावेदःकृत्स्नोधिगंतव्यःसरहस्योद्विजन्मनेतिस्मृत्याचहिशब्दसूचितयासर्वैःसर्वशाखोक्तकर्मानु
ष्ठानरूपसमाचारश्चसर्वशाखाध्ययनमस्तिशाखाभेदस्त्वशक्तितइति । अत्रभाष्येसरहस्यइत्यादिनाध्ययनस्यार्थज्ञानपर्यंतत्वा
वगमादध्ययनविधेर्विचाराक्षेपकत्वमनुमतं । अत्रैवसूत्रेटीकायांअध्ययनंचतदुक्तार्थज्ञानार्थमेवेत्युक्तमित्यर्थः ॥ अध्ययनविधे
रिति ॥ वाक्यग्रहणंविनावाक्यार्थावधारणानुपपत्तेर्वेदार्थग्रहणकामस्यवेदाध्ययनंरागतःप्राप्तमतोध्ययनविधिर्वैयर्थ्यंतन्मा
भूत् ॥ उभयार्थतेति ॥ प्रत्यवायपरिहारोर्थज्ञानंचेत्युभयं ॥ पशुपुरोडाशेति ॥ चतुर्थस्यप्रथमेविचारितं आश्रयिष्वविं
शेषेणभावोर्थप्रतीयते । अग्नीषोमीयपश्वंगत्वेनपुरोडाशयागःश्रुतःअग्नीषोमीयस्यवपयाप्रचर्याग्नीषोमीयंपशुपुरोडाशंनिर्वपती
ति । अग्नीषोमीयपशुयागस्यदेवतास्मरणरूपसंस्कारंकुर्वन्पुरोडाशयागोग्नीषोमीयस्यसंन्निपत्योपकारकइतिदाशमिकमर्थसिद्ध

वत्कृत्यकिमयंपशुपुरोडाशयागः.. पशुदेवतायाःस्मरणरूपसंस्कारंकुर्वन्दृष्टार्थएवउतादृष्टार्थोपीतिसंशयेएकंवाचोदनेनैकत्वादि
त्येकेनैवप्रयोजनेनविध्युपपत्तेःप्रयोजनद्वयंनाश्रयणीयमितिपूर्वपक्षेदेवतोद्देशेनत्यागरूपस्ययागस्योद्देशशिष्टार्थत्वेपित्यागांशेऽदृ
ष्टार्थत्वंविनानुपपत्तेरुभयार्थमितिसिद्धांतः ॥ श्रुतिर्बलादिति ॥ दध्नाजुहोति दध्नेंद्रियकामस्यजुहुयादितितृतीयाश्रुतिब
लात् ॥ एकस्यैवंथत्वेति ॥ चतुर्थस्यतृतीयेभिहितंएकस्यतूभयार्थत्वेसंयोगपृथक्त्वं । अग्निहोत्रेश्रूयते दध्नाजुहोति दध्नेंद्रियकाम
स्यजुहुयात्इति । तत्रकिंफलार्थमेवदध्युतक्रत्वर्थमपीतिसंशयेफलवाक्येनदध्नःफलसंबंधविधायकेनतस्यहोमसंबंधविधानायो
गात्फलवाक्यापेक्षितदधिहोमसंबंधविधायकतयाहोमवाक्यस्यफलवाक्यैकवाक्यतयाहोमेदधिविधायकस्यवाक्यांतरस्याभा
वात्फलार्थमेवदधीतिप्राप्तेसिद्धरूपस्यदध्नःस्वतोऽननुष्ठेयस्यफलार्थत्वेनविधानायोगात्तदुपपत्तयेस्वतःसाध्यरूपक्रियाश्रयापेक्षा
यामपिप्रकरणेनैवहोमरूपाश्रयसंबंधलाभान्नतदर्थंदध्नाजुहोतीत्यस्यतदेकवाक्यतेतितेनपृथगेवक्रत्वर्थतयादधिविधानादुभया
र्थंदधीतिसिद्धांतः ॥ नित्यत्वंकाम्यत्वेति ॥ द्वितीयस्यचतुर्थेभिहितं । यावज्जीविकोभ्यासःकर्मधर्मःप्रकरणात् । यावज्जीवं
दर्शपूर्णमासाभ्यांयजेत दर्शपूर्णमासाभ्यांस्वर्गकामोयजेतेतिश्रूयते । तत्रयावज्जीववाक्येनस्वर्गकामवाक्योक्तेकाम्यप्रयोगेया
वज्जीवमभ्यासलक्षणोगुणोविधीयतइतिप्राप्ते गुणविधौजीवनशब्देनतत्सहचरितकालोलक्षणीयोजुहोतिशब्देनचाभ्यासः ।
अधिकारांतरचोदनायांश्रुत्यर्थस्यजीवनस्याधिकारिविशेषणत्वाद्यागस्यैवविधेयत्वान्नकापिलक्षणा ततश्चवाक्यद्वयवशात्काम्यो
नित्यश्चदर्शपूर्णमासइतिसिद्धांतः ॥ आवश्यकत्वादिति ॥ वीर्यवत्तरफलसाधनत्वेन ॥ प्रत्यवायेति ॥ तादृशफलासिद्धिरू

पःप्रत्यवायः ॥ एतेनेति ॥ अध्ययनविधेरवैयर्थ्यायेत्याद्युक्तेन ॥ ब्रह्मज्ञानफलस्यापीति ॥ सर्वेवेदाइत्यादिश्रुतेः ॥ ७ ॥
अध्ययनविधेर्नित्यत्वेपिविचारविधायकत्वं ॥ ७ ॥ ८ ॥ नन्वध्ययनविधेर्विचारविधायकत्वेजिज्ञासासूत्रंतन्मूलमेवस्या
न्नमननविधिमूलं । श्रवणादिविधिवैयर्थ्यंचेतिशंकांपरिहरिष्यन्श्रवणादिभेदायतत्स्वरूपंतावदाह ॥ अस्माकंत्विति ॥
वेदार्थज्ञानायवेदविचारस्याध्ययनविधितःप्राप्तावपिब्रह्मज्ञानायवेदविचारस्यतत्तोऽप्राप्तेर्मननविधिर्युक्तः । यद्यपिब्रह्मणोवेदा
र्थत्वेनतज्ज्ञानायापिवेदविचारस्याध्ययनविधितःप्राप्तिरस्ति तथापिनब्रह्मत्वेनरूपेणतज्ज्ञानायतत्प्राप्तिरितिभावः ॥ प्रतिवा
क्यमिति ॥ सतएवश्रवणविधेरवैयर्थ्यं । अध्ययनविध्याक्षिप्तविचारेणकर्मब्रह्मकांडयोःकर्मब्रह्मपरत्वावगमस्यश्रवणफलत्वा
त् । तस्यचवाक्यार्थावधारणहेतूपक्रमादियुक्तिभिरर्थगतायुक्तत्वादिशंकानिवर्तिकाभिर्युक्तिभिश्चदृढीकरणंमननफलं । दृढी
कृतार्थस्यापरोक्ष्यायनिरंतरंध्यानंनिदिध्यासनमितिसर्वमवदातं ॥ एतच्चेति ॥ श्रवणादेरज्ञानादिनिवर्तकत्वं ॥ तन्निर्धारणा
र्थनियमइति ॥ तन्निर्धारणार्थनियमस्तदृष्टेःपृथग्ध्यप्रतिबंधःफलंइतिसूत्रं । तस्यार्थः । ज्ञानार्थमुपासनंतच्चश्रवणमननाभ्या
मेवभविष्यति किंध्यानेनेतिशंकायामुच्यते । तन्निर्धारणेऽर्थनियमःध्यानादेवार्थदर्शनं तथादृष्टेःश्रवणमननयोरज्ञानविपर्यय
रूपप्रतिबंधकनिवर्तनद्वाराब्रह्मदर्शनोपयोगइति ॥ ब्रह्मज्ञानोद्देश्यत्वादिति ॥ विचारविधावितिशेषः । उक्तवचनव्यक्तौच
वेदार्थज्ञानस्यैवोद्देश्यत्वंनब्रह्मज्ञानस्येत्यर्थः ॥ कर्मकांडादिनेति ॥ कर्मकांडादिनाब्रह्मधीर्नस्त्यस्तीत्याद्यन्वयः ॥ अवांतर
कारणेति ॥ आत्मनआकाशःसंभूतइत्यादौ ॥ पदैर्वर्णैति ॥ अन्यपरतयाप्रतीयमानज्योतिष्टोमादिवाक्यगतपदैर्वर्णैरुदा

त्तादिस्वरैः । आदिपदेनवर्णसंहिताःध्वन्यादिशब्दाश्चगृह्यंते ॥ आत्मेत्येवोपासीतेति ॥ उपासनायाजिज्ञासारूपत्वात् ।
एतेनसामान्यतःप्राप्तसाध्यसाधनभावमनादृत्यविशेषोपाधिनाऽप्राप्तसाधनत्वप्राप्तयेऽपूर्वविध्यंगीकारेज्योतिष्टोमादिवाक्यवि
चारेपितेनरूपेणतद्वाक्यार्थज्ञानंप्रत्यप्राप्तसाधनतासिद्धयेऽपूर्वविध्यंतरकल्पनाप्रसक्तिरितिनिरस्तं । कर्मकांडादिनाब्रह्मज्ञानस्य
सामान्यतोप्यप्राप्तेः ॥ लिंगादिति ॥ सामर्थ्यरूपात् ॥ नियतविषयेति ॥ बहुशाखोक्तगुणानांज्ञेयत्वेपिस्वयोग्यायाःकति
पयगुणोपासनायाएवकर्तव्यत्वात् ॥ अदृष्टद्वारेणेति ॥ नचतयोर्निदिध्यासनांगत्वेमानाभावः । वस्तुतस्तुतंपश्यतइतिवा
क्येनतदवगमात् ॥ तस्माज्ज्ञानरूपमपीति ॥ आज्यभागौयजंतीतिवदिति ॥ चातुर्मास्येसाकमेधपर्वणिगृहमेधीये
ष्टिरुक्ता मरुद्भ्योगृहमेधिभ्यःसर्वासांदुग्धेसायंचरुमिति । तत्रश्रूयते आज्यभागौयजतीति । तत्रप्रकृतितःप्राप्तयोराज्यभागयोः
पुनर्वचनानर्थक्यमाशंक्यपंचमपक्षेणसमाधानंपूर्वपक्षेभिहितं परिसंख्येयमाज्यभागावेवेति । तेनैकस्यगृहमेधीयाख्यस्यशेषि
णःप्रयाज्याद्याज्यभागाद्यनेकशेषप्राप्तावाज्यभागेतरेषांपरिवर्जनंभवति । एवमेकब्रह्मज्ञानंप्रतिश्रुत्यनुमानयोःप्राप्तयोःश्रुतिग्र
हणेनानुमानंपरिसंख्यायते ॥ तंत्रांखंडेति ॥ आज्यभागप्रयाजादीनांपरस्परमंगांगिभावानापत्त्याऽभ्यामखंडकरणोपकारंप्र
तिहेतुत्ववदिहश्रुत्यनुमानाभ्यांस्वतंत्राभ्यामेकब्रह्मज्ञानजननाभावात् । गुणप्रधानभावेनतुताभ्यामेकज्ञानजननमिहानुमतमे
वेतिनतत्परिसंख्यायते ॥ इत्यश्वाभिधानीमिति ॥ अश्वमेधेऽश्वगर्दभाभिधान्यौरज्जूवर्तेते. तयोर्द्वयोर्ग्रहणे इमामगृभ्णनर
शनामृतस्येतिमंत्रोरशनाग्रहणप्रकाशनरूपसामर्थ्यात्प्राप्तः । सतु इमामगृभ्णनंरशनामृतस्येत्यश्वाभिधानीमादत्तइत्यनेनगर्द

भाभिधान्यादानात्परिसंख्यायतेयथा तथाश्रुतिविचारस्यब्रह्मज्ञानसाधनत्वंप्राप्तमब्रह्मज्ञानात्परिसंख्यायते ॥ श्रुत्यादिनेति ॥ इमामितिमंत्रस्योभयरज्जुग्रहणेप्राप्तिवच्छ्रुतिविचारस्यब्रह्मतदन्यज्ञानयोःप्राप्त्यभावाद्वैषम्यं ॥ श्रवणादितीति ॥ परंपरया हेतावपिपंचमीदर्शनात् ॥ ६ ॥ ६ ॥ स्वमतेश्रवणादिविधिसमर्थनं ॥ ६ ॥ ७ ॥ कुंठीभवंतीति ॥ जर्तिलयवाग्वाजुहु यादित्यादिवदर्थवादाभवंतीत्यर्थः । बाधकंविनावैदिकलिङादीनामर्थवादत्वोक्तिरयुक्तेत्याह ॥ पत्न्यवेक्षितमिति ॥ जर्ति लादिवाक्येषुबाधकंदशमाध्यायस्याष्टमपादेभिहितं । तथाहि । अग्निहोत्रेजर्तिलयवाग्वावाजुहुयाद्गवीधुकयवाग्वावेत्युक्त्वा ऽनाहुतिर्वैजर्तिलाश्चगवीधुकाश्चेतिचोक्त्वापयसाग्निहोत्रंजुहुयादितिश्रुतं । तत्रजर्तिलादिवाक्यस्यविधित्वेऽनाहुतिवादोनर्थकः स्यात् । तस्यहिषोडशिग्रहणवाक्यवद्विहितप्रतिषेधत्वाद्विकल्पःफलं तच्चानाहुतिवादंविनापिपयोवाक्यसद्भावात्सिद्धं तस्माद नाहुतिवादस्तावज्जर्तिलादिनिंदाद्वारेणपयसःस्तुत्यर्थः । यदाचैवंतदाजर्तिलादिविधिरपितन्निंदाद्वारेणपयसःप्रशस्ततरत्वंज्ञाप यन्नर्थवादइति । पत्न्यवेक्षितमित्यादौतुनकिंचिद्बाधकमितिभावः । तदिदंवक्ष्यति वृथैववैदिकलिङादेरस्वारस्यायुक्तेरिति ॥ भक्षेहीति ॥ तृतीयस्यद्वितीयेभिहितं । लिंगसमाख्याभ्यांभक्षार्थतानुवाक्यस्यास्तिभक्षानुवाकोभक्षेहिमाविशदीर्घायुत्वाये त्यादिः । तत्रकश्चिदंशोभक्षणप्रकाशकउपहूतस्योपहूतोभक्षयामीत्यादिः कश्चिद्ग्रहणस्य अश्विनोस्त्वाबाहुभ्यांसख्यासमित्या दिः । सख्यासंधारयामीत्यर्थः । कश्चिदवेक्षणस्य । अवख्येषमित्यादिः । तत्रकिंसर्वोप्ययंमंत्रोभक्षणेविनियोक्तव्यउतग्रहणादि ष्वपियथासामर्थ्यंविभज्यविनियोक्तव्यइतिसंशये भक्षानुवाकसमाख्यावशाद्विहितभक्षणप्रकाशकांशैकवाक्यत्वाच्चसर्वोपिभ

क्षणेविनियोक्तव्यः । यद्यपिसख्यासमित्यादेर्ग्रहणादिप्रकाशनसामर्थ्यरूपंलिंगमस्ति । तच्चवाक्यसमाख्याभ्यांबलवत् । तथा
पिमुख्यस्यग्रहणादेरर्थप्राप्तस्यावेदितत्वेनाकृत्वर्थत्वात्तादर्थ्येनमंत्रस्यकृत्वपूर्वानुपयोगितयानर्थक्यापत्तेरसंभवतिलिंगविनियो
गेसवित्रादिपदानामिवलक्षणयावाक्यशेषवशेनप्राक्कालवर्तिग्रहणादिविशिष्टचोदितभक्षार्थतायुक्ता । तदुक्तं । सर्वस्यभक्षणांग
त्वंग्रहणादेरचोदनात् । अकृत्वर्थोनमंत्रस्यद्वारीभवितुमर्हति । भक्षानुवाकसंज्ञाचभक्षणांगत्वबोधिनी । सामर्थ्यंचास्तिमंत्रस्य
भक्षणेतद्विशेषणादिति । तस्मात्सर्वानुवाकोभक्षांगमितिप्राप्ते असतिग्रहणादौचोदितोभक्षोनशक्यतेकर्तुमित्यर्थात्तदपिकर्तव्यं
भक्षणाच्चोदनयैवनचोदितमित्यपिवक्तुं तच्चास्मृतमशक्यमनुष्ठातुमितिस्मारकापेक्षत्वाद्भक्षद्वारेणचक्रतूपयोगत्वाच्छक्नोतिस्मा
रकंमंत्रंग्रहीतुं । एवंसंभवतिलैंगिकेविभज्यविनियोगेवाक्यसमाख्याभ्यामेकवाक्यत्वापादनेनभक्षार्थतासर्वस्यनयुज्यते । समा
ख्याचभक्षसंबंधमात्रंप्रतिपादयंती संबंधस्यसाक्षाद्वाग्रहणादिद्वारेणवोभयथाप्युपपत्तेर्नानुपपन्ना सम्यग्जरणपर्यंतंचभक्षणंस्व
रसतोलोकसिद्धं । तादृशमेवद्रवद्रव्यस्यभक्षणमितिजरणमपिविधेयं तच्चासनविशेषव्यापारादिसाध्यमितियुक्तस्तत्रापिमंत्रवि
नियोगः । तस्माद्विभज्यविनियोगः । तदुक्तं । ग्रहणादौविभागेनविनियोगोस्यलिंगतः । वाक्यसंज्ञेहिनेशातेकर्तुंलिंगस्यबाध
नं । ग्रहणादिवशात्त्रेणभक्षाद्यर्थेप्यचोदितं । तथापिचोदितार्थेनकर्तव्यत्वात्प्रकाश्यतइति । गुणाभिधानान्मंद्रादिरेकमंत्रस्या
त्तयोरेकार्थसंयोगादित्युत्तराधिकरणेमंद्राभिभूतिरित्यादितृप्यत्वित्यंतंतृप्तौविनियोक्तव्यमुतवसुमद्गणादेकवाक्यंसत्तृप्तिविशिष्टं
भक्षणमेवप्रकाशयतीति । पूर्वर्वाल्लिंगात्तृप्तिप्रकाशनेप्राप्तेभिधीयते । तृप्तिर्भक्षात्तुनिष्पन्नानव्यापारांतरार्थिनी । तेनस्मृत्यनपेक्ष

त्वान्नमंत्रोत्रप्रयुज्यते । तस्मात्तृप्तौनविभज्यविनियोगइति ।। अनुनिष्पादितत्तयेति ।। भक्षणेदत्तेस्वयमेवतदनुसिद्धत्वात् ।। अवेक्षणस्येति[१।१।३६] ।। गृहीत्वावेक्षेसम्यग्जरणायभक्षयामीत्येवंग्रहणावेक्षणादीनामनुष्ठेयत्वादत्राप्यवेक्षणशब्देनप्रियसंयोगइति कस्यचिन्प्रलपनंनिर्मूलं ।। एकश्रोत्रगतेति[१।१।१] ।। नचानभिमतवैमुख्यस्यैवबुभुत्साप्रयत्नसाध्यतयाज्ञानंप्रतितयोरजनकत्वमिति वाच्यं । अनभिमतविषयवैमुख्येसत्यप्यभिमतविषयसांमुख्यंविनातदग्रहणस्यानुभवसिद्धत्वात् ।। अविहितस्यचेति[१।१।२] ।। तदुक्तंशाबरभाष्ये । नचाविहितमंगंभवतीति । नचात्रविद्याशब्देनोपासनेतिवाच्यं । विद्याशब्दस्यज्ञानेमुख्यत्वात् ।। अति सूक्ष्मेति[१।१।५] ।। ब्रह्मज्ञानादाविच्छादिविषयत्वंप्रामाणिकमत्रतुनतदित्येषाप्रामाणिकं ।। शास्त्रार्थेति[१।१।५] ।। अत्रसर्वत्रसाधनस्यैवपुंतंत्रत्वकल्पनंतुजल्पनमेव । अतएवाह ।। नामादिष्विति[१।१।७] ।। विध्यनुपपत्तेरुभयत्राप्यभावात् ।। प्रयत्नसाध्यत्वानुभवादिति ।। अतदनुभवस्यानन्यथासिद्धत्वेनतदन्यथासिद्धिरसिद्धेत्यर्थः ।। प्रयत्नेति ।। समाधेःप्रयत्नसाध्यत्वोक्त्याध्यानंधारणयोःप्रयत्नसाध्यत्वमवगम्यते ।। त्वन्मतेपीति[१।१।१२] ।। नचात्रवृत्तिगुणएवविधेयइतियुक्तं । आवर्त्यमानानुष्ठेयत्वेतदावृत्तेर्विषयत्वात् । ग्रहाभ्यासवत् ।। श्रवणमिति[१।१।१४] ।। यत्तुवाक्यार्थप्रमित्युपयुक्ततात्पर्यनिर्णयद्वारोपक्रमादिलिंगविचारात्मकश्रवणादेरज्ञानादिविरोधितयास्मृत्यनुभवयोरुपपत्तिरिति । तन्न । लिंगविचारस्यज्ञानानात्मकत्वेसंशयाद्यनिवर्तकत्वात् । ज्ञानस्यैवतन्निवर्तकत्वात् ज्ञानात्मकत्वेत्विष्टापत्तेः । तदिदमुक्तं श्रवणादीनांज्ञानातिरेकेणदुर्निरूपत्वस्योक्तत्वादिति ।। विचारत्वेति[१।१।१५] ।। ज्ञानानात्मकविचारत्वानुपपत्तेरित्यर्थः ।। त्वयापीति[१।१।१६] ।। श्रवणादौविधिमनंगीकुर्वतापि ।। तस्याभिध्यानादिति[१।१।१८] ।। योज

नरूपाच्छ्रवणात्तत्वभावरूपान्मननात्समुत्थंयद्ब्रह्मविषयंध्यानंततोमायाभूयोपिप्रारब्धतोभोगात्वयांस्थितासापिनिवर्ततइतिपरेषांश्रुत्यर्थः। नन्वात्रसाक्षात्कारएवनिवर्तकःतस्यांश्रुतत्वात्। ध्यानात्पूर्वमपिसत्त्वाच्च ॥ [११।२१] विदिधास्विति ॥ विदेरमुख्यार्थत्वंकल्पनंतुजल्पनमात्रं ॥ [११।२२] पुंतंत्रत्वेति ॥ पुमिच्छानुविधायित्वं ॥ [१२।१४] वेदांतवाक्येति ॥ अनेनरूपेणज्ञानेचनमननविषयज्ञानमायातीत्यर्थः ॥ [१२।१२] कर्मकांडेपीति ॥ नचज्ञानजनकविचारएवकृतिसाध्यता । विचारस्यापिज्ञानानंतरिकस्योक्तत्वात् ॥ [११।१४] दृष्टफलत्वइवेति ॥ पश्चादेर्दृष्टफलस्यानित्यत्वेपितथाविधस्यापिवंधध्वंसस्यनानित्यत्वंयथा तथास्वर्गादेर्यौगिकफलस्यानित्यत्वेपितथाविधस्यापिवंधध्वंसस्यध्वंसत्वाच्छ्रुत्यादिवलाच्चनित्यत्वंभवतु ॥ [११।१४] ध्वंसत्वादिति ॥ नचत्वन्मतेनध्वंसमात्रंमुक्तिः । किंतुलोकांतरप्राप्तिरपि अतःतस्यानित्यत्वप्राप्तिरितिवाच्यं । श्रुतिवलाल्लोकांतरस्यापिनित्यत्वावगमात् । यत्रज्योतिरजस्रमित्यत्रामृतेलोकेअक्षितइति । सुकिंशुकंशल्मलिमित्यादौअमृतस्यलोकमित्युक्तेः । यथेहपुण्यजितोलोकःक्षीयतेएवमेवामुत्रपुण्यजितोलोकःक्षीयतइतिश्रुतिस्तुकेवलपुण्यार्जितलोकविषया ॥ [११।१६] ज्ञानविधीति ॥ त्वन्मतेतत्वंपदार्थशोधकवाक्यस्यब्रह्मणीवेत्यर्थः ॥ ७ ॥ ७ ॥ ज्ञानविधिसमर्थनं ॥ ७ ॥ ८ ॥ तद्धास्येतिवाक्येज्ञानस्यविशब्देनविशेषणेपिनिर्दिष्टत्वमेवलभ्यते नत्वापरोक्ष्यमितिश्रुत्यंतरमाह ॥ [११।१९] तमसइति ॥ दृशेःसाक्षात्कारार्थकत्वादित्यर्थः ॥ [१२।१९] उपदेशादिति ॥ तथाचलिंगाच्छब्दस्यसाक्षात्कारहेतुत्वमवगम्यते ॥ [१२।१९] वेदांतेति ॥ विचारितवेदांतजन्यापरोक्षज्ञानविषयीकृतवेदांतार्थकत्वंसुनिश्चितार्थत्वमित्यर्थः ॥

अपरोक्षज्ञानेति[१२।२३] ॥ चाक्षुषत्वादौव्यभिचारवारणायनिषेधद्वयांतर्भावः ॥ तत्रापीति[१२।२४] ॥ दशमादिपदैःसंख्यादिषूपस्थितेषुच
क्षुर्यसंसर्गबोधः ॥ अन्यथेति[१३।१] ॥ विचारितवेदांतजन्यापरोक्षज्ञानविषयीकृतवेदांतार्थकत्वस्यसुनिश्चितार्थशब्दार्थत्वेविचारं
कर्तव्यतादेरुधिरादिमार्गस्यातीतपुरीततनाडीवंशादीनांचवेदांतप्रतिपाद्यत्वेनापरोक्ष्यंस्यात् ॥ वक्ष्यमाणेति[१३।४] ॥ इंद्रियव्यापा
रविरहदशायांसंस्कारधीस्त्वमसीत्यादौविशेष्यस्यप्रत्यक्षत्वेपिविशेषणविशिष्टेपरोक्षत्वमेवयथा । तथाविशेषणविशेष्ययोःप्रत्य
क्षत्वेपींद्रियव्यापाराभावेनायंघटइतिशब्दजज्ञानेपरोक्षत्वसंभवात् ॥ अज्ञानेति[१३।५] ॥ शब्दजन्यापरोक्षज्ञानानंतरमैक्यावरणा
निवृत्तौतस्यापरोक्षत्वं तदापरोक्ष्येचशब्दस्यतद्विषयकापरोक्ष्यहेतुत्वमित्यन्योन्याश्रयप्राप्तेरित्यर्थः ॥ स्वतोपरोक्षेति[१३।६] ॥ तत्व
मस्यादिवाक्येसत्यंताभावात् ज्योतिष्टोमादिवाक्येविशेष्याभावात् प्रत्यक्षत्वप्रयोजकाभावः ॥ वक्ष्यमाणेति[१३।९] ॥ तथाचतत्त्व
मादिवाक्यसंग्रहायविशेषणोपादानमसंगतमित्यर्थः ॥ विशेषणेति[१३।१०] ॥ दशमत्वरूपविशेषणविशिष्टे ॥ वक्ष्यमाणपक्षेति[१३।२३] ॥
तत्रचान्योन्याश्रयादिवक्ष्यते ॥ तत्रचैतदिति[१३।२४] ॥ धर्मवांस्त्वमसीत्यादिवाक्यजन्यमपरोक्षज्ञानंतद्विषयत्वेनतत्रधर्मवत्त्वादा
वपरोक्षत्वं धर्मवत्त्वादेरर्थस्यापरोक्षत्वेतद्विषयकस्योक्तवाक्यजज्ञानस्यापरोक्षत्वमित्यन्योन्याश्रयः ॥ ज्ञानांतरेति[१३।२५] ॥ अप
रोक्षरूपज्ञानांतरविषयत्वेनस्वर्गादेरपरोक्षत्वात्तत्रास्मांकंस्वर्गादिवाक्यादपरोक्षधीप्रसंगः । एवमेकपुरुषैककालयोर्योज्यं ॥
चाक्षुषादित्वेति[१४।३] ॥ चाक्षुषविषयकाणांस्मृत्यादीनांचाक्षुषत्वंस्पार्शनविषयकाणांस्पार्शनत्वमित्यादि । यत्तुयंशब्दमादायस्य
बोद्धृत्वंतदभिन्नार्थावगाहित्वनिमित्तंतदर्थस्यसाक्षात्त्वमिति । तन्न । एवंहिबोद्धृभिन्नार्थविषयकज्ञानविषयत्वमित्युक्तंस्यात् ।

तस्यचधर्माभेदपरेपरमधर्मात्वमित्यादिवाक्यजज्ञानविषयेधर्मवदादौसत्त्वात् । अपरोक्षार्थविषयकत्वंशब्दस्यापरोक्षज्ञानहेतु त्वेतंत्रमित्यत्रदोषांतरमाह ॥ [१४।१६] किंचेति ॥ [१४।१९] वाक्यवैयर्थ्यादिति ॥ उपलक्षणमिदं । वाक्यजज्ञानात्प्रागिवृत्तत्वाच्चेत्यपिज्ञेयं ॥ [१४।२१] तत्रसंस्कारादेरिति ॥ तत्तन्दंविप्रकृष्टस्यापिसंस्कारादिनाविप्रकृष्टत्वसंपादने ॥ [१४।२१] अत्रापीति ॥ सन्निकृष्टस्याप्यावरणेनंवि प्रकर्षोस्ति । आवरणनिवृत्त्यासन्निकृष्टमितिशंकांवारयति ॥ [१४।२२] वृत्तेरिति ॥ [१४।२४] तस्येति ॥ विंबप्रतिविंबादेस्त्वन्मतेऐक्यसाक्षा त्कारेंसत्यपिभेदभ्रमानुवृत्तेरित्यर्थः ॥ [१४।३६] मनसैवेति ॥ एतस्यास्तृतीयायुक्तत्वेनवलवत्त्वात् ॥ [१४।३६] मनसेति ॥ मनसःकरणांतर सहकारितयानपृथंकरणत्वमित्यर्थः ॥ [१५।३] औपनिषदइत्यादीति ॥ तत्रसाधुरितिसाध्वर्थतद्धितस्ययथाकथंचित्तदुपयोगेनसा धुत्वात् । परिच्छेदार्थमुपसंहरति ॥ [१५।५] तस्मादिति ॥ ७ ॥ ७ ॥ शाब्दप्रत्यक्षत्वभंगः ॥ ९ ॥ ७ ॥ सद्योजातजटाजपावन सरिद्गोदावरीतीरतोगव्यूतिर्वसतिस्तांकुलवतामंवापुरीतत्रये. । व्यासाख्याउपमन्युगोत्रजबुधास्तेष्वास्तयोमुद्गलस्तत्राजज्ञतये मुरारिचरणाव्यासाभिधानाबुधाः ॥ १ ॥ तेभ्योजायतविश्वनाथइतियस्सज्ञानरत्नाकरस्तस्मादाविर्भूत्सुरद्रुमयशाआचार्य नारायणः । रामाचार्यइतीरितस्तदनुजोयस्तत्ववादांबुधेरातानीत्संतरंगिणीमिहपरिच्छेदस्तृतीयोपिवः ॥ २ ॥ ॥ न्याया मृततरंगिण्यांतृतीयःपरिच्छेदःसंपूर्णः ॥ ३ ॥

॥ इतिश्रीमन्न्यायामृततरंगिण्यांतृतीयःपरिच्छेदः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासजज्ञानलक्ष्मीहयग्रीवायनमः ॥ श्रीयुतारण्यकेद्दष्टंपुष्टमाभीरगोकुले । शुका
दिजुष्टंविधिनादिष्टंनौम्यक्षयंफलं ॥ १ ॥ वाक्यादिजनितसाक्षात्काराविष्कृतईश्वरप्रसादोमोक्षहेतुरित्येतदाक्षिपति ॥ नन्वे
तदिति ॥ वृत्तिर्विवृत्तावित्ति ॥ एतस्याः लक्षणं । वृत्तेरज्ञानोपादानकत्वेनवृत्तिकालेऽज्ञानावश्यकतयाप्रतियोगितद्ध्वंसंयो
रेककालत्वापातइत्यपिबोध्यं ॥ निवृत्तारेति ॥ ज्ञातत्वंवृत्तिः तयोपलक्षितंआत्मामोहनिवृत्तिः । वृत्तिनिवृत्तौमोक्षनिवृत्तिं
परिहरति ॥ उपलक्षणेति ॥ नन्वविद्यानिवृत्तेरात्मान्यत्वेऽनिर्वाच्यत्वंस्यादित्याशंक्यसदसद्विलक्षणत्वमनिर्वाच्यत्वमितिमते
इष्टापत्तिरित्याह ॥ तन्नचेति ॥ नन्वविद्यानिवृत्तेरनिर्वाच्यत्वेऽविद्यातत्कार्यान्यतरत्वापत्त्यातस्याःज्ञाननिवर्त्यत्वंस्यादित्यत
आह ॥ अविद्यादीति ॥ अविद्यानिवृत्तौनिवृत्तिसामान्यस्यैवाभावात्तद्विशेषापादनमयुक्तमित्याह ॥ नचनिवृत्तेरिति ॥
प्रत्यपीपदन् प्रतिपादयामासुः । तस्मादात्मस्वरूपाऽविद्यानिवृत्तिस्तदतिरिक्तावेतिपक्षद्वयं । द्वितीयेप्यनिर्वाच्यावापंचमप्रका
रासत्यावेतिपक्षत्रयमित्युपसंहरति ॥ इतीति ॥ यत्किंचिद्विषयकवृत्त्युपलक्षितात्मनःसंसारकालेप्यसत्त्वेनातिप्रसंगाच्छ्रव
णादिजन्यात्मविषयकवृत्त्युपलक्षितआत्माऽज्ञाननिवृत्तिरितिवाच्यं । तत्रचापसिद्धांतइत्याह ॥ आत्मेति ॥ नचात्रेति ॥
वृत्तेःपूर्वमुक्तइतिव्यवहाराभावेपिपूर्णानंदप्रकाशरूपमुक्तिःस्यादेवप्राकेनिवृत्तेपिपाचकस्यानिवृत्तिरितिपराभिमते पाचकत्वंकिं
पाककृत्याश्रयत्वंपाककर्तृत्वयोग्यत्वंवा आद्यआह ॥ पाककर्तृत्वमिति ॥ तथाचसनदृष्टांतइत्यर्थः । द्वितीयेयद्यपिदृष्टांते
तत्... ति तथापिदार्ष्टांतिकेतन्नास्तीत्याह ॥ कर्तृत्वेत्यादि ॥ चिन्मात्रमिति ॥ तथाचप्रागपिमुक्तिःस्यात् ॥ नसाध्य

